# श्रीनारदीयमहापुराणम्

# THE NĀRADĪYAMAHĀPURĀṆAM



राष्ट्रिय संस्कृत संस्थान
नई दिल्ली

खेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीनारदीयमहापुराणम्

# THE NĀRADĪYAMAHĀPURĀṆAM

देहलीस्थेन प्रो. डा. चारुदेवशास्त्रिणा प्रणीतया भूमिकया सनाथितम्
नागशरणसिंहसम्पादितश्लोकानुक्रमण्या सहितं



राष्ट्रिय-संस्कृत-संस्थानम्
५६-५७ इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली - ११००५८



डा. मुरली मनोहर जोशी
DR. MURLI MANOHAR JOSHI

मानव संसाधन विकास मंत्री
भारत
नई दिल्ली - ११० ००१
MINISTER OF
HUMAN RESOURCE DEVELOPMENT
INDIA
NEW DELHI-110 001

## सन्देशः

संस्कृतसाहित्ये सन्ति बहूनि ग्रन्थरत्नानि येषां पठनपाठनम् अनुसन्धानं च सहस्रेभ्यो वर्षेभ्यः राष्ट्रेऽस्मिन् निरन्तरं प्रवर्तमानम् आसीत्। वेदशास्त्रस्मृतिपुराणादिरूपं विशालकायं वाङ्मयं संस्कृते उपलभ्यमानमस्ति। तदेतत् वाङ्मयं प्रतिष्ठितैः विद्वद्भिः तदा तदा महता परिश्रमेण महता च धनव्ययेन अंशतः प्रकाशितमप्यासीत्। परन्तु गच्छता कालेन संस्कृत- मुद्रितपुस्तकानामुपलब्धिः पण्डितेभ्यः छात्रेभ्यः तथा सामान्यजनेभ्यः दुर्लभा जाता। अतः सुदुर्लभान् सुसम्पादितान् एतान् बहूपयोगिनः संस्कृतग्रन्थान् छायाचित्रद्वारकमुद्रणविधिमनुसृत्य पुनर्मुद्रयित्वा न्यूनतममूल्येन विक्रयणं कर्तुं काचित् महत्त्वपूर्णा योजना मानवसंसाधनविकासमन्त्रालयेन स्वीकृता तदङ्गभूत - राष्ट्रियसंस्कृतसंस्थानेन कार्यान्विता चासीत्। ऐषमः पुस्तकवर्षे विक्रीतचराणाम् एकपञ्चाशत् ग्रन्थानां मुद्रणं विधातुं संस्थानेन संकल्पितमस्ति।

अहमाशासे यत् दूरगामिना एतेनोपक्रमेण संस्कृतविद्वांसः, छात्राः संस्कृतप्रेमिणः सामान्यजनाश्च लाभान्विताः भवेयुः, संस्कृतनिष्ठं ज्ञानवैभवम् इतोऽपि अधिकतरं विशदायमानं च भवेत्। कामये यत् राष्ट्रियसंस्कृतसंस्थानं योजनायामस्यां भिन्नभिन्नान् महत्त्वपूर्णान् ग्रन्थान् प्रकाश्य संस्कृतस्य सेवां इतोऽप्यधिकं कुर्यादिति।

संस्कृत साहित्य में अनेक ग्रन्थरत्न विद्यमान हैं जिनका पठन-पाठन एवं अनुसन्धान इस राष्ट्र में सहस्रों वर्षों से चला आ रहा है। वेद, शास्त्र, स्मृति एवं पुराण जैसे विशाल ग्रन्थ संस्कृत वाङ्मय का अंग हैं। यह वाङ्मय समय-समय पर प्रतिष्ठित विद्वानों द्वारा परिश्रम एवं आर्थिक व्यय से अंशतः प्रकाशित भी हुआ है। किन्तु समय के साथ इन ग्रन्थों की मुद्रित पुस्तकें छात्रों, विद्वानो एवं सामान्यजनों को दुर्लभ होने लगी हैं। अतः इन दुर्लभ सुसम्पादित ग्रन्थों का पुनर्मुद्रण कर न्यूनतम मूल्य पर उपलब्ध कराने की योजना मानव-संसाधन-विकास-मंत्रालय एवं उसके अंगीभूत राष्ट्रिय-संस्कृत-संस्थान के द्वारा कार्यान्वित की गयी है। इस पुस्तक वर्ष में इक्यावन पुस्तकों का पुनर्मुद्रण संकल्पित है जो संस्थान के विक्रय विभाग में सम्प्रति अनुपलब्ध हो चुकी हैं।

मैं आशा करता हूँ कि इस दूरगामी उपक्रम से संस्कृत के विद्वान्, छात्र एवं संस्कृतप्रेमी सामान्यजन लाभान्वित होंगे तथा संस्कृत के ज्ञान वैभव का विस्तार होगा। साथ ही मैं यह भी कामना करता हूँ कि राष्ट्रिय संस्कृत संस्थान इस योजना में अन्य महत्त्वपूर्ण ग्रन्थों को भी प्रकाशित कर संस्कृत की श्रीवृद्धि करेगा।

(डॉ० मुरली मनोहर जोशी)

नई दिल्ली
09-04-02

# आमुखम्

सुविदितं विदुषां यत् पुराणानि प्राचीनभारतस्य इतिहास-विद्या-कला-स्थापत्य-शिल्प-साहित्यशास्त्रप्रभृतिविषयाणां ज्ञानस्य प्रथमसाधनभूतानि समाजे प्रतिष्ठितानि वर्तन्ते। यदपि पुराणविद्या महापुराणोपपुराणभेदेन द्विधा कल्प्यते तथापि वेदमार्गोपबृंहण-परत्वात् द्वयोरपि समानं महत्त्वं स्वीक्रियते। अस्माकं प्रत्नैः अष्टादशसंख्यानां पुराणग्रन्थनां संकेतभाषया इत्थं परिगणनं कृतम्।

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयं।

अनापल्लिंगकूस्कानि पुराणनिपृथक् पृथक्॥ इति।

तेन मद्वयमिति मात्स्य-मार्कण्डेये, भद्वयमिति भविष्यद्भागवते, ब्रत्रयमिति ब्रह्म-ब्रह्माण्ड-ब्रह्मवैवर्तानि, वचतुष्टयमिति वामन-विष्णु-वायु-वाराहपुराणानि, अ-अग्निपुराणं, ना-नारदीयं, प-पाद्मं, लिं-लैंगं, ग-गारुडं, कू-कौर्मं, स्क-स्कान्दं च पुराणम्। एकैकस्याप्यस्य संप्रदायानुगुणम् उपपुराणमपि दृश्यते। ऊनविंशतिशतके सर्वाण्यपि पुराणानि इतस्ततः प्रकीर्णाध्यायानि समग्रतया दुर्लभान्यासन्। तस्मिन् काले भारतीयवाङ्मयप्रकाशकाः केचन पुण्यकर्माणः पुराणानां अपि प्रकाशनं कृतवन्तः। तत्रापि मुम्बईस्थक्षेमराजप्रेसद्वारा प्रथमतः सम्यक् संशोधितं रूपं संस्कृतविदुषां साहाय्येन प्रकाश्यं नीतम्। प्रथमं पत्राकाररूपेण वाचनपठनसौकर्याय पुराणानां प्रकाशनमभूत्। महता प्रयासेन धनव्ययेन च प्रकाशितचराः ईदृशाः ग्रन्थाः कालान्तरे दुर्लभतां गताः। तेन च संस्कृताध्ययन-अनुसन्धानक्षेत्रे काठिन्यम् अनुभूयमानमासीत् भारतशासनान्तर्गतमानवसंसाधनविकास-मन्त्रालयस्य प्रकाशितचराणां दुर्लभानां च ग्रन्थानां पुन-र्मुद्रणात्मकपरियोजनायां पुनर्मुद्रिताः अपि इमे ग्रन्थाः कालक्रमेण भूयोऽपि दुर्लभतां गताः। अतः





द्वितीयवारमपि पुनर्मुद्रणं कारयित्वा पुस्तकानां सुलभता सम्पादनीया इत्येतत् मन्त्रालयस्य संकल्पमनु ग्रन्थरत्नस्यास्य पुनर्मुद्रणं प्रकाशनं च विधीयमानमस्ति।

सन्दर्भेऽस्मिन् अपेक्षितं मार्गदर्शनं तथा शुभसन्देशं च प्रदाय राष्ट्रियसंस्कृतसंस्थानं समेधितवद्भ्यः मानवसंसाधनविकासमन्त्रिवर्येभ्यः डा० मुरलीमनोहरजोशीमहाभागेभ्यः आधमर्ण्यं वहामि। संस्थानस्य अर्थसमितेः अध्यक्षेभ्यः निर्णयस्यास्य स्वीकारे सहकृतवद्भ्यः संस्थानस्य उपाध्यक्षेभ्यः श्री नी० गोपालस्वामी महोदयेभ्यः हार्दान् धन्यवादान् व्याहरामि। प्राशासनिकं साहाय्यं विधाय कार्यसाफल्याय सहकृतवत्यै मानवसंसाधनविकासमन्त्रालयस्य भाषाविभागे संयुक्तसचिवायै श्रीमत्यै बेलाबैनर्जीमहाभागायै तथा अन्येभ्यश्च तद्विभागीयाधिकारिभ्य धन्यवादान् व्याहरामि। संकल्पस्यास्य साकारतासम्पादने योग्यं प्रयासं कृतवन्तं संस्थानस्य शोधप्रकाशनविभागस्य सहायकनिदेशकं डा० प्रकाशपाण्डेयं तदनुयायिकार्यकर्तृगणं च साधुवादैः सम्भावयामि।

योग्ये काले सुन्दरं पुनर्मुद्रणं विधाय उपकृतवते नाग पब्लिशर्स इति मुद्रणालयस्य पतये श्री नरेन्द्र प्रतापाय साधुवादान् व्याहरामि। आशासे यत् भूयः कृतेन अनेन द्वितीयपुनर्मुद्रणप्रयत्नेन संस्कृतविद्वांसः संस्कृतच्छात्राः संस्कृतप्रेमिणश्च लाभान्विताः प्रेरिताश्च भवेयुः इति।

दिनाङ्कः
१०.४.२००२

संस्कृतसेवकः
वेम्पटिकुटुम्बशास्त्री
निदेशकः
राष्ट्रिय-संस्कृत-संस्थानम्, नवदेहली।

ओं नमः परमात्मने ।

नमः सहृशिष्याय भगवते कृष्णद्वैपायनाय व्यासाय ।

नागे[1] वै सौहृदोपेते श्रीले वह्न्यादराम्मम ।
भूयसो वा वरात्तस्मात्प्राणैषं भूमिकामिमाम् ॥ १ ॥

पुराणे दीर्घकान्तारे प्रवेशः सुधियां सुखम् ।
विविक्षूणां यथा सद्यः स्यादस्मिन्नारदीयके ॥ २ ॥

सारभूतमुपादेयं सम्यं चेतःप्रसादकम् ।
अत्र वाक्यं यदाकीर्णं सर्वं तत्समदर्शितम् ॥ ३ ॥

इहत्या हारिणीः सूक्तीः सकलाः संव्यपीपतम् ।
ताः विलासावमास्वाद्य सम्प्रेष्यन्ते सुमेधसः ॥ ४ ॥

कृता मया विनीतेन वासुदेवेन शास्त्रिणा ।
चार्वीयं भूमिका व्यासे ह्यर्प्यते मुनिपुङ्गवे ॥ ५ ॥

---

१. नागेन नारदीयपुराणस्य प्रकाशयिता श्रीनागशरणसिंहोऽभिप्रेतः । नाग इति पन्नगो भवतीति युज्यते तस्माद् उरो भीतिः ।

# भूमिका

## पुराणानां कर्ता

अष्टादशपुराणानां कर्ता सत्यवती सुत इति प्रथते प्रवादः। सत्यवतीसुतश्च पाराशरिर्भगवान् व्यासः। एवं सत्यपि नैकत्रापि पुराणे स भगवान् साक्षाद्वक्ता। सर्वमर्थजातं तच्छिष्यो लोमहर्षणः सूत एव प्रवक्ति सौतिर्वा। स्वयं तु तिरस्करिण्या तिरस्कृत इव परोक्ष एवास्ते शुश्रूषावताम्। प्रकृतमपि पुराणं नैमिषारण्ये सत्रासीनाः शौनकादयो महर्षयः सूतमुखाच्छृण्वन्ति। इदं चेह विपरीतमुक्तम्—सिद्धाश्रमे संनिहितं सूतमुपश्लिष्य विनीतवत्तत उपशृण्वन्ति न तु सूतस्तान्नैमिषारण्यस्थानुपैति। किंहेतुकोऽयं व्यतिक्रम इत्यपि चिन्त्यम्।

## वामनब्रह्माण्डयोः पुराणयोर्व्यासकर्तृकताया अनङ्गीकारः

वामनपुराणमधिकृत्येहापूर्वमीरितम्। वामनं हि व्यासेन नारदतो गृहीतमित्युदितम्—पुलस्त्येन समाख्यातं नारदाय महात्मने, ततो नारदतः प्राप्तं व्यासेन सुमहात्मना। व्यासात्तु लब्धवांश्चैतत्तच्छिष्यो लोमहर्षणः। स चाख्यास्यति विप्रेभ्यो नैमिषीयेभ्य एव च। एवं परम्पराप्राप्तं पुराणं वामनं शुभम्॰ (पू॰ १०५। १७-१९)॥ अष्टादशं ह्येतद् ब्रह्माण्डाख्यं सर्वप्रथमं ब्रह्मणा वसिष्ठायोपदिष्टमितीह विस्पष्टमुक्तम्। वस्तुतो व्यासस्तूपदेष्टेत्यपि व्यक्तमुदितम्। मया चेदं पुराणं वसिष्ठाय पुरोदितम्। तेन शक्तिसुतायोक्तं जातुकर्ण्याय तेन च। व्यासो लब्ध्वा ततश्चैतत्प्रभञ्जनमुखोदितम्। प्रमाणीकृत्य लोकेस्मिन्प्रावर्तयदनुत्तमम् (पू॰ १०९।३३-३४)॥ इति मूले स्थितम्। तेनास्य व्यासकर्तृकताऽपोहिता भवति। भूतार्थोऽयम् अर्थवादो वेत्यत्र पौराणिका निर्णयं निर्ब्रुवन्तु, न वयं विशिष्य वक्तुमीश्महे।

## पुराणान्यर्थवादप्रधानानि न

इह पुराणान्यर्थवादप्रधानानीति ग्रहीतृणां गर्हा। तथा चाह—समस्तकर्मनिर्मूलसाधनानि नराधमः। पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते (पू॰ १।५८-५९)॥

## पुराणपौर्वापर्यम्

केन क्रमेण पुराणानां निर्मितिरभूदित्यत्रोपलभ्यते कियानपि सङ्केतः। मार्कण्डेयात्पुराणात्परेणास्य नारदीयस्य निर्माणमभूदित्यसंशयम्। मार्कण्डेय पुराणोक्तं चरितत्रितयं द्विज। पठनीयं नवदिनं भुक्तिमुक्ती अभीप्सता (पूर्व॰ ११०। ३२-३३) इत्यत्रोक्तेः। पूर्वं श्रीमद्भागवतं पाश्चात्यं स्कान्दम् इत्यपि निश्चप्रचम्। स्कान्दे वैष्णवखण्डे श्रीमद्भागवतस्य माहात्म्यस्यानुकीर्तनात्। तदिदं नारदीये पूर्वभागे (१०४।३९) विस्पष्टमुदीरितम्। ब्रह्मवैवर्तकं दशममित्यपि सन्देहानाक्रान्तम्। शृणु वत्स प्रवक्ष्यामि पुराणं दशमं तव ब्रह्मवैवर्तकं नाम वेदभाग नुदर्शकम् (१०१।१)॥ इत्युक्तेः। ब्रह्माण्डं चाष्टादशमित्यपीह (१०९ / ३०) अनावृतम्। आदिश्च ब्राह्ममिति चाप्यभिव्यक्तम्। ब्राह्मं पुराणं तत्रादौ सर्वलोकहिताय वै। व्यासेन वेदविदुषा





समाख्यतं महात्मना (पू० ९२।३०) इति स्मरणात्।

### नारदोक्तः पुराणमहिमा

यस्मिञ्श्रुते श्रुतं सर्वं ज्ञाते ज्ञातं कृते कृतम्। पुराणमेकमेवासीत्सर्वकल्पेषु मानद । चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् (पू० ९२।२२) ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः। कालेना-ग्रहणं दृष्ट्वा पुराणस्य महामतिः (२३) ॥ हरि-र्व्यासरूपेण जायते च युगे युगे। चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा (२४) ॥ तदष्टादशधा कृत्वा भूर्लोके निदिशत्यपि। अद्यापि देवलोकेतु शतकोटि-प्रविस्तरम् (२५) ॥ अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते (२६) ॥

### नारदीयं पुराणमधिकृत्य सामान्यचिन्ता

नारदीयमिति समाख्या किंहेतुकेति विमृश्यते । सनकसनन्दनसनत्कुमारसनातना-श्चत्वारो मानसा ब्रह्मणः सुताः। तेषां सनकः प्रधानम्। स च प्रधानवक्ता नारदाय पुराणस्य प्रवक्ता। उक्तं च—गीतं सनकमुख्यैस्तु नारदाय महात्मने । पुराणं नारदीयाख्यमेतद् वेदार्थसं-मितम् (पू० ११३५-३६) ॥ एतावता नारदीयमिति समाख्या न सुघटा भवतीति शङ्क्यते। नारदाय प्रोक्तमेतन्न तु तमधिकृत्य कृतम्। सत्यम्। तस्येद-मिति विवक्षाया वृद्धाच्छे नारदीयमिति सिद्धेः सर्वमनवद्यम्।

केऽत्राधिकारिणः। केषामिदं पुराणं वाच्य-मित्यत्राह—सतामेव प्रवक्तव्यं गुह्याद् गुह्यतरं यतः (पू० ११४७)। ब्रह्मद्रोहपराणां च दम्भाचारयुता-त्मनाम्। जनानां बकवृत्तीनां न ब्रूयादिदमुत्तमम्। त्यक्तकामादिदोषाणां विष्णुभक्तिरतात्मनाम् पू० ११४८, ४९) ॥ सदाचारपराणां च वक्तव्यं मोक्षसाधनम् (५०)। मृषा शृणोति यो मूढो दम्भी भक्तिविवर्जितः । सोपि तद्वन्महाघोरे नरके पच्यतेऽक्षये (पू० ११७५) ॥

इह पुराणे पादाः सन्त्यध्यायाश्च। ते सप्तोत्तरं शतद्वयम्। पादानामध्यायानां च व्याप्यव्यापक-भावः। पादा अध्यायानभिव्याप्नुवन्ति न त्वध्यायाः पादान्यथाऽन्यत्र पाणिनीयाष्टकादिषु । तदिदं वैपरीत्यं किं कृतमिति न सुज्ञानम्। द्वयोर्भागयोश्च विभक्तमिदं पुराणम्। तत्र प्रथमः पूर्व इति समाख्यायते द्वितीयश्चोत्तरः। विभागे च को हेतु-रित्यपि दुरूनयम्। पूर्वभागो बृहदाख्यानक इति संज्ञायते। उत्तरभागश्च लघ्वाख्यानक इति नाभिधीयते । यथा पूर्वभागे बृंहीयांस्युपाख्या-नानि स्थितानि तथोत्तरस्मिन्नपि। उत्तरस्मिन्नपि रुक्माङ्गदस्य प्रजेशस्यातिदीर्घमाख्यानं संनिविष्ट-मास्ते। नापि विषयभेदो भेदकृदस्ति । इहापि व्रतोपवासतिथ्याश्रमादीनां प्राचुर्य्येणानुकीर्तनात्। किं च। उत्तरभागे मान्धाता प्रष्टा, वसिष्ठश्च प्रवक्तेत्यस्य नारदीयत्वं भज्यते। पुराणानुबन्धः स्वतन्त्रोऽयङ् ग्रन्थ इति प्रतीति र्जायमाना न वार्यते। द्वाववयवौ, एकोऽवयवीति प्रतीतेरनुदयात्।

### नारदीयपुराणानुक्रमणिका

अनुक्रमणिका नाम विषयावगाहे किमपि साचिव्यं करोति। तत्सचिवा क्रमते तत्र बुद्धि-रित्येषणीया सा। इह च नारदीय पुराणे पुराणका-रेणैव सा प्रणीतेति प्रियं नः। न ह्यस्माभिः प्रणीता

सा सुन्दरितरा प्रमाणतरा वा भवितुमर्हतीति सैवेहाक्षरशः समुद्दिश्यते प्रतिपाद्यप्रतिपत्तये। नारदेन सम्पृष्ट ऋषिः सनातनः स्माह—शृणु विप्र प्रवक्ष्यामि पुराणं नारदीयकम्। पञ्चविंशतिसाहस्रं बृहत्कल्पकथाश्रयम् (पू० ९७।।१) ।। सूतशौनकसंवादः सृष्टिसंक्षेपवर्णनम् । नानाधर्मकथाः पुण्याः प्रवृत्ते समुदाहृताः (२) ।। प्राग्भागे प्रथमे पादे सनकेन महात्मना। द्वितीये मोक्षधर्माख्ये मोक्षोपाय निरूपणम् (३) ।। वेदाङ्गानां च कथनं शुकोत्पत्तिश्च विस्तरात् । सनन्दनेन कथिता नारदाय महात्मने (४) ।। महातन्त्रे समुद्दिष्टं पशुपाशविमोक्षणम् । मन्त्राणां शोधनं दीक्षामन्त्रोद्धारश्च पूजनम् (५) ।। प्रयोगाः कवचं नामसहस्रं स्तोत्रमेव च। गणेशसूर्यविष्णूनां शिवशक्त्योरनुक्रमात् (६) ।। सनत्कुमारमुनिना नारदाय तृतीयके। पुराणलक्षणं चैव प्रमाणदानमेव च (७) पृथक् पृथक् समुद्दिष्टं दानकालपुरःसरम्। चैत्रादिसर्वमासेषु तिथीनां च पृथक् पृथक् (८) ।। प्रोक्तं प्रतिपदादीनां व्रतं सर्वाघनाशनम्। सनातनेन मुनिना नारदाय चतुर्थके (९) ।। पूर्वभागोऽयमुदितो बृहदाख्यानसञ्ज्ञितः। अस्योत्तरविभागे तु प्रश्न एकादशीव्रते (१०) ।। वसिष्ठेनाथ मान्धातुः संवादः परिकीर्तितः। रुक्माङ्गदकथा पुण्या मोहिन्युत्पत्तिकर्म च (११) ।। वसुशापश्च मोहिन्यै पश्चादुद्धरणक्रिया। गङ्गाकथा पुण्यतमा गयायात्रानुकीर्तनम् (१२) ।। काश्या माहात्म्यमतुलं पुरुषोत्तमवर्णनम् । यात्राविधानं क्षेत्रस्य बह्वाख्यानसमन्वितम् (१३) ।। प्रयागस्याथ माहात्म्यं कुरुक्षेत्रस्य तत्परम्। हरिद्वारस्य चाख्यानं कामोदाख्यानकं तथा (१४) ।। बद्रीतीर्थमाहात्म्यं कामाक्ष्यास्तथैव च। प्रभासस्य च माहात्म्यं पुष्कराख्यानकं ततः(१५)।। गौतमाख्यानकं पश्चाद् वेदपादस्तवस्ततः। गोकर्णक्षेत्रमाहात्म्यं लक्ष्मणाख्यानकं तथा (१६) ।। सेतुमाहात्म्यकथनं नर्मदातीर्थवर्णनम् । अवन्त्याश्चैव माहात्म्यं मथुरायास्ततः परम् (१७) ।। वृन्दावनस्य महिमा वसोर्ब्रह्मान्तिके गतिः। मोहिनीचरितं पश्चादेवं वै नारदीयकम् (१८)।।

## विष्णुशिवयोरभेदबुद्धिः

सन्ति वैष्णवानि पुराणानि सन्ति च शैवानि। एकत्र विष्णुः प्रधानमपरत्र शिवः। द्वये भक्ता वैष्णवाश्च शैवाश्च। उभये बहुलं विद्विषन्तीतरेतरम्। नारदीयमिदं पुराणंतु शिवे विष्णौ चैकत्वबुद्धिमुपदिशतीति विश्वस्मिञ्शान्तातिस्थापनायालम्। एकतामनुशासति कतिपयानि वाक्यानीह समुच्चीयन्ते—शिवस्वरूपी शिवभक्तिभाजाम्। यो विष्णुरूपो हरिर्भागवतानाम् (पू० २।२८)।। शिवेति नीलकण्ठेति शङ्करेति च यः स्मरेत्। सर्वभूतहितो नित्यं सोऽभ्यर्च्यो द्विजैः स्मृतः (पू० ३।५६) ।। व्याहरन्ति च नामानि हरेः शम्भो र्महात्मनः। रुद्राक्षालङ्कृता ये च ते वै भागवतोत्तमाः (पू० ५।६९) ।। हरिरूपधरं लिङ्गं लिङ्गरूपधरो हरिः। ईषदप्यन्तरं नास्ति भेदकृच्चानयोः कुधीः (पू० ६।४४) ।। अनादिनिधने देवे हरिशङ्करसंज्ञिते। अज्ञानसागरे मग्ना भेदं कुर्वन्ति पापिनः (पू० ६।४४) ।। हरिरूपो महादेवः शिवरूपी जनार्दनः।





इति लोकस्य नेता यस्तं नमामि जगद्गुरुम् (पू० ११।३०) ॥ देवतायतनं यस्तु कुरुते कारयत्यपि। शिवस्यापि हरेर्वापि तस्य पुण्यं फलं शृणु (पू० १३।१) ॥ मम मूर्त्यन्तरं शम्भुं राजन्मतोत्रैः स्वशक्तितः। स्तुहि...(पू० १६।७१) ॥ लोकवादोहि सुमहाञ्छम्भुर्नारायणप्रियः। हरिप्रियस्तथा शम्भु... (पू० ७६।१४०) ॥

### भक्तिः

पूज्येष्वनुरागो भक्तिरिति सामान्येन भक्तिलक्षणमाहुः। इह तु पुराणे वैविध्यमस्या उक्तं फलनानात्वं चाश्रुतम्। तदिदं सर्वं समस्य विन्यस्यते— परलोकफलं प्रेप्सुः कुर्यात्कर्माण्यतन्द्रितः। निवेद्य हरये भक्त्या तत्फलं ह्यक्षयं स्मृतम् (पू० ३।७३) ॥ न दानैर्न तपोभिर्वा यज्ञैर्वा बहुदक्षिणैः। भक्तिहीनैर्मुनिश्रेष्ठ तुष्यते भगवान् हरिः (पू० ४।७) ॥ मेरुमात्रसुवर्णानां कोटिकोटिः सहस्रशः। दत्ता चाप्यर्थनाशाय यतो भक्तिविवर्जिता(८) ॥ अभक्त्या यत्तपस्तप्तं केवलं कायशोषणम्। अभक्त्या यद्धुतं हव्यं भस्मनि न्यस्तहव्यवत् (९) ॥ अश्वमेधसहस्रं वा कर्म वेदोदितं कृतम्। तत्सर्वं निष्फलं ब्रह्मन्यदि भक्तिविवर्जितम् (११) ॥ हरिभक्तिः परा नृणां कामधेनूपमा स्मृता। तस्यां सत्यां पिबन्त्यज्ञाः संसारगरलं ह्यहो (१२) ॥ असूयोपेतमनसां भक्तिदानादि कर्म यत्। अवेहि निष्फलं ब्रह्मंस्तेषां दूरतरो हरिः (१३) ॥ भक्त्या सिध्यन्ति कर्माणि कर्मभिस्तुष्यते हरिः। तस्मिंस्तुष्टे भवेज्ज्ञानं ज्ञानान्मोक्षमवाप्यते (पू० ४।३२) ॥ भक्तिस्तु भगवद्भक्तसङ्गेन खलु जायते। तत्सङ्गः प्राप्यते पुम्भिः सुकृतैः पूर्वसञ्चितैः (पू० ४।३३)। विनापि महतां सेवां हरिभक्तिर्हि दुर्लभा (पू० २३।४६)। किं वै वेदै र्मखैः शास्त्रैः किं वा तीर्थनिषवणैः। विष्णुभक्तिविहीनानां किं तपोभिर्व्रतैरपि (पू० ३०।११-१२) ॥ चण्डालोपि मुनिश्रेष्ठ विष्णुभक्तो द्विजाधिकः। विष्णुभक्तिविहीनश्च द्विजो पि श्वपचाधमः(पू० ३४।४१)॥ सुलभं जाह्नवीस्नानं तथैवातिथिपूजनम्। सुलभाः सर्वयज्ञाश्च विष्णुभक्तिः सुदुर्लभा (पू० ३९।५२) ॥ किं तेषां कुलशीलेन विद्यया जीवितेन वा। येषां न जायते भक्तिर्जगद्धातरि केशवे (उ० ५३।६०) ॥ लोके स धन्यः स शुचिः स विद्वान् स एव वक्ता स च धर्मशीलः। ज्ञाता स दाता स च सत्यवक्ता यस्यास्ति भक्तिः पुरुषोत्तमाख्ये (उ० ५४।१२) ॥

### आचारप्राधान्यम्

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च (मनु०) इत्यृषयः स्मरन्ति। इहापि आचारः परमो धर्मः (पू० ४।२२) इत्युद्घोषितम्। अन्यच्चापि बहूक्तं तत् सङ्ग्रहेणोच्यते—यः स्वाचारपरिभ्रष्टः साङ्गवेदान्तगोपि वा। हरिभक्तिपरो वापि हरिध्यानपरोपि वा। भ्रष्टो यः स्वाश्रमाचारात् पतितः सोऽभिधीयते। (पू० ४।२४) ॥ वेदो वा हरिभक्तिर्वा भक्तिर्वापि महेश्वरे। आचारात्पतितं मूढं न पुनाति द्विजोत्तम (पू० ४।२५) ॥ यः स्वधर्मं परित्यज्य भक्तिमात्रेण जीवति। न तस्य तुष्यते विष्णुराचारेणैव तुष्यति (पू० १५।५३) ॥

### भागवतलक्षणम्

भगवान् भक्तिरस्येति भागवत इति शाब्दिकाः।

पुराणानि तु बहुविधं भागवतस्वरूपं वर्णयन्ति। अतः साकल्येन तत्स्वरूपप्रहायेहस्थानि कानिचित् पद्यानि संगृह्यन्ते—ये हिताः सर्वभूतानां गतासूया अमत्सराः। वशिनो निःस्पृहाः शान्तास्ते वै भागवतोत्तमाः (पू० ५।५०) ॥ कर्मणा मनसा वाचा परपीडां न कुर्वते। अपरिग्रहशीलाश्च ते वै भागवताः स्मृताः (५१) ॥ मातापित्रोश्च शुश्रूषां कुर्वन्ति ये नरोत्तमाः। गङ्गाविश्वेश्वरधिया ते वै भागवतोत्तमाः (५३) ॥ आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमाः। तुल्याः शत्रुषु मित्रेषु ते च भागवतोत्तमाः (६७) ॥ अन्येषामुदयं दृष्ट्वा येऽभिनन्दन्ति मानवाः। हरिनामपरा ये हि ते वै भागवतोत्तमाः (६१) ॥ शिवे च परमेशे च विष्णौ च परमात्मनि। समबुद्ध्या प्रवर्तन्ते ते वै भागवताः स्मृताः (७२) ॥

## उत्तमो गुरुः

सर्वेऽपि गुरवः पूज्या वन्द्याश्च। तथापि तेषां मध्ये पुराणस्य प्रवक्ता गुरुरुत्तम इत्याह—यः पुराणानि वदति धर्मयुक्तानि पण्डितः। संसारपाशविच्छेदकराणि स उत्तमः (पू० ६।६५-६६) ॥

## बौद्धनिन्दा

एकतः शाक्यमुनिर्बुद्धो विष्णोरवतारेष्वन्तःपात्यतेऽपरतस्तदनुगा निन्द्यन्त इति मिथो विसंवादिनी प्रवृत्तिः पुराणानाम्। इह च पुराणे इत्थम्भूता श्रूयते बौद्धनिन्दा—बौद्धालयं विशेद्यस्तु महापद्यपि वै द्विजः। न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तशतैरपि (पू० १५।५१) ॥ बौद्धाः पाखण्डिनः प्रोक्ता यतो वेदविनिन्दकाः (५२)।

## कलिवर्ज्यधर्माः

पाराशराः सुविस्तरेण कलिवर्ज्यान्याहुः। इहापि तान्युद्देशतोऽनुक्रान्तानि। तद्यथा—समुद्रयात्रा स्वीकारः कमण्डलुविधारणम्। द्विजानामसवर्णासु कन्यासूपयमस्तथा (पू० २४।१३) ॥ देवराच्च सुतोत्पत्ति र्मधुपर्के पशोर्वधः। मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा (१४) ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानं वराय च। नैष्ठिकं ब्रह्मचर्यं च नरमेधाश्वमेधकौ (१५) ॥ महाप्रस्थानगमनं गोमेधश्च तथा मखः। एतान्धर्मान्कलियुगे वर्ज्यान्याहुर्मनीषिणः (१६) ॥ नामांसो मधुपर्को भवतीति गृह्यकाराः। सोऽयमिहापोद्यते निदेशः। परिव्रज्यानिषेधस्त्वन्यत्र श्रुतः, वानप्रस्थनिषेधस्त्विहैव। नैष्ठिक ब्रह्मचर्यस्य निषेधे कोऽभिसन्धिः पुराणकारस्य। किं पुंसामसामर्थ्यमुतान्यत्किञ्चिदुत्प्रेक्ष्यते निमित्तम्।

## अविवाह्याः कन्याः

विवाहमनर्हा याः कन्या इह निर्दिष्टास्ताः संक्षिप्य ब्रूमः—रोगिणीं चैव वृत्ताक्षीं सरोगकुलसम्भवाम्। अतिकेशामकेशां च वाचालां नोद्वहेद् बुधः (पू० २६।५) ॥ कोपनां वामनां चैव दीर्घदेहां विरूपिणीम्। न्यूनाधिकाङ्गीमुन्मत्तां पिशुनां नोद्वहेद् बुधः (६) स्थूलगुल्फां दीर्घजङ्घां तथैव पुरुषाकृतिम्। श्मश्रुव्यञ्जनसंयुक्तां कुब्जां चैव नोद्वहेन्न च (७) ॥ सदा रोदनशीलां च पाण्डुराभां च कुत्सिताम्। कासश्वासादिसंयुक्तां निद्रा-





शीलां च नोद्वहेत् (१०) ॥ दीर्घनासां च कितवां तनूरुहविभूषिताम् । गर्विता बकवृत्ति च सर्वथा नोद्वहेद्बुधः (१२) ॥ अत्र सरोगकुलेन मनूक्तानि क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलान्यभिप्रेतानीति ज्ञेयम् । कोपनाथामनादीर्घदेहोन्मत्तापिशुनापुरुषाकृत्यादय इह स्मृतिव्यतिरिक्ता उदाहृताः । यश्च मानवेऽभ्रातृकाया उपयमने निषेध उक्तः स इह नास्ति इति विशेषः ।

## भारतमहिमा

क्षीरोदधेरुत्तरं यद्धिमाद्रेश्चैव दक्षिणम् । ज्ञेयं तद्भारतं वर्षं सर्वकर्मफलप्रदम् (पू० ३।४६) ॥ अत्र कर्माणि कुर्वन्ति त्रिविधानि तु नारद । तत्फलं भुज्यते चैव भोगभूमिष्वनुक्रमात् (४७) ॥ भारते तु कृतं कर्म शुभं वाऽशुभमेव वा । तत्फलं क्षयि विप्रेन्द्र भुज्यतेऽन्यत्र जन्तुभिः (४८) ॥ अद्यापि देवा इच्छन्ति जन्म भारतभूतले । सञ्चितं सुमहत्पुण्यमक्षय्यममलं शुभम् (४९) ॥ कदा लभामहे जन्म वर्षे भारतभूमिषु । कदा पुण्येन महता यास्यामः परमं पदम् (५०) ॥

## मोक्षदायिकाः पञ्च पुर्यः

अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका । पुरी द्वारवती ज्ञेयाः सप्तैता मोक्षदायिकाः (पू० २७।३५) ॥

## अतिथिपरिचर्या

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति (पू० २७।७२) ॥

## अतिथिलक्षणम्

अज्ञातगोत्रनामानम् अन्यग्रामादुपागतम् । विपश्चितोऽतिथिं प्राहु विष्णुवत् तम्प्रपूजयेत् (पू० २७।७३) ॥

## शूद्रेण ब्राह्मणस्य वधे दण्डः

ब्राह्मणं हन्ति यः शूद्रस्तं मुशल्यं विदुर्बुधा (पू० ३०।१८) ।

## प्राणायामश्चतुर्विधः

अगर्भश्च सगर्भश्च द्वितीयस्तु तयो वरः । जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वितः (पू० ३३।११९) ॥ रोचकः पूरकश्च कुम्भकः शून्यकस्तथा । एवं चतुर्विधः प्रोक्तः प्राणायामो मनीषिभिः (पू० ३३।१२४) । न गृह्णाति न त्यजति वायुमन्त बहिः-स्थितम् । विद्धि तच्छून्यकं नाम प्राणायामम्··· (पू० ३३।१२६) ॥

## सत्यस्य गरिमा

सत्येन धार्यते लोकः स्वः सत्येनैव गच्छति । अनृतं तमसो रूपं तमसा नीयते ह्यधः ( पू० ४३।८२) ॥ सत्येन सूर्यस्तपति शशी सत्येन राजते । सत्ये स्थिता क्षितिर्भूप सत्यं धारयते जगत् (उ० २३।८६) ॥ सत्येन वायुर्वहति सत्येन ज्वलते शिखी । सत्याधारमिदं सर्वं जगत् स्थावरजङ्गमम् (८७) ॥ न सत्याच्चलते सिन्धु र्न विन्ध्यो वर्धते नृप । न गर्भं युवती धत्ते वेलातीतं कदाचन (८८) ॥ सत्ये स्थिता हि तरवः फलपुष्पप्रदर्शिनः । दिव्यादि साधनं नृणां सत्याधारं महीपते (८९) ॥ अश्वमेधसहस्रेभ्यः सत्यमेव विशिष्यते (९०) ।

### भारतं वर्षम् इति नामधेये निमित्तम्

आसीत् (पुरा मुनिश्रेष्ठ (=नारद) भरतो नाम भूपतिः। आर्षभो यस्य नाम्नेदं भारतं खण्डमुच्यते (पू० ४८।४८।५) ॥ ऋषभो नृपतिस्तस्यापत्यम् आर्षभः। अन्यत्र तु दौष्यन्तिः शाकुन्तलेयो भरत एतद्देशनाम्नि हेतुभूत इति स्मर्यते।

### व्याकरणनिरूपणम्

पूर्वभागे (द्वापञ्चाशेऽध्याये सनन्दनकृतं संक्षिप्तं व्याकरणनिरूपणं स्थितम्। मनूचानः केन भवतीति नारदेन पृष्टः सनन्दनो वेदाङ्गानि शिक्षादीनि नामादेशमाचष्टे। तत्प्रसङ्गेन व्याकरणमपि मितेन सन्दर्भेण व्याकरोति, तत्र तत्र पाणिनीयसूत्रांशानुदाहरति भाष्यानुवादिनीः कारिकाश्चापि सङ्कलयति। सूत्रांशास्तावत्—लक्षणेत्थम्भूत० अभिरभागे, स्वामीश्वराधिपति० तुमर्थाद्भाव० द्वितीया च चतुर्थी चेष्टायां गतिकर्मणि इत्येवमादयः। कारिकाश्चापि—गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥ इति प्रभृतयः। अत्र व्याकरणसंक्षेपनिक्षेपः कस्य कृते कृतः। बालानामिति चेत्। न। ते ह्युपनीता गुरुमुपश्लिष्टा गुरुमुखाच्छिक्षां गृहीत्वा शैक्षाः सन्तो व्याकरणमपि सूत्रवार्तिकवृत्त्यात्मकं तत एवोपयोक्ष्यन्ते न तु सर्गप्रतिसर्गादि नानाविषयं पुराणमनुधाविष्यन्ते। प्रौढानां कृत इति चेत्तदपि न। इह सामान्यज्ञानमेवोपन्यस्तं न तु गभीरार्थः कश्चिद् व्याकृतः। सुप्तिङन्तानि पदानि निर्दशितानि, विभक्त्यर्थाश्च स्थूलोच्चयेनोच्चिताः, उदात्तादयो धातवश्च गणशोऽनुक्रान्ताः। तेन प्रौढानुपादेयेन बालमात्रोपयोगिनानेन सङ्ग्रहेण नार्थस्तेषाम्।

गौणे कर्मणि दुह्यादेरित्यादयः कारिकाः पुराणकारेण भाष्यार्थानुवाद इति न्यस्ताइति युक्तिमद्वचो भाति। नहि वार्तिकादीनां प्रणायकाः प्रतिभातसकलपदार्था वश्यवाचो महर्षयः स्वेन वाच्यमर्थं शब्दतोऽर्थतो वाऽन्यकृतेभ्यः सङ्ग्रहेभ्यः सङ्गृह्णीरन्, विशेषतो व्रतोपवासतीर्थाटनदानमाहात्म्यतपश्चरणपरेभ्यः पुराणेभ्यः।

इदं चात्रान्यद् विमृश्यम्। चर्करीतं च हु इ प्रोक्तः (पू० ५३।४४) इत्यत्र चर्करीतमित्यदादिगणमाह। वस्तुतश्चर्करीतमिति यङ्लुकमाह। यङ्लुगन्तमदादिषु द्रष्टव्यमिति च व्याकरणस्मृतिः। सोऽयमतिदेशः शब्लुगर्थम्। न तु वैयाकरणैरदादीनां चर्करीतमिति संज्ञा कृता। अत्र तु जनसामान्यस्य कृते कृतेयं संज्ञा संमोहायैव स्यात्। पुराणे च नैतदिष्टम्।

### किं परं तत्त्वम्, कश्चेश्वरः

तत्त्वं वस्तुत एकं तु शिवाख्यं चित्रशक्तिकम् (पू० ६३।४७)। इच्छाशक्तिर्यत्र न्यग्भूता क्रियाशक्तिर्विशिष्यते। ईश्वराख्यं तु तत् तत्त्वं प्रोक्तं सर्वार्थसाधकम् (पू० ६३।३२-३३) ॥ यत्र क्रिया हि न्यग्भूता ज्ञानाख्योद्रेकमश्नुते। तत्तत्वं चैव विद्याख्यं ज्ञानरूपं प्रकाशकम् (पू० ६३।३३-३४) ॥

### कार्तवीर्यस्य सेव्यत्वम्

पूर्वभागेऽस्मिन्पुराणे षट्सप्ततितमे सप्ततितमे चाध्याये त्रिपञ्चाशदुत्तरया श्लोकद्विशत्या महता

विस्तरेणोपवर्णिता हैहयराजस्य माहिष्मतीपतेः सहस्रबाहोः कार्तवीर्यस्य सेव्यत्वप्राप्तिकथा। सनत्कुमारोऽस्याः कथायाः कथकः, स च मुनेर्दत्तात्रेयात्साक्षाच्छ्रुतवानिति नास्या प्रवर्तयत्ये विषयोन्मेषः कश्चित् समस्ति। देवत्वमारोपितस्य कार्तवीर्यस्य माहात्म्यमिह न्यक्षेण न्यगादि, कवचं च तदीयं तन्त्रगोपितमाविरभावि। तस्य सर्वज्ञत्वं सर्वदत्वं कृतित्वं राजराजेश्वरत्वं च प्रकर्षेण प्रत्यपादि। तदिदमनितरसाधारणं देवत्वं तेन केन हेतुनाऽऽपेति तु नावाचि. केवलं दत्तात्रेयं समाराध्येत्येव संक्षिप्तं वचो न्यक्षेपि। तन्नालं शङ्कुकजनस्वान्तसमाधय इति किञ्चिद् भूयो वक्तव्यमासीत्पुराणकारेण। तन्नोक्तमिति दोषाय। इहैव कार्तवीर्यस्य चक्रावतारत्वमुक्तम्। तत्रापि कथन्ता नोक्ता। क्व किमुद्दिश्य कया विवक्षया च चक्रं सुदर्शनं तत्रावातरदित्यल्पैरप्यक्षरै र्नोदितो वृत्तान्तः।

## जलक्रीडा

पूर्वभाग एकोनाशीतितमेऽध्याये हरिहरयोर्मुनीनां रक्षसां च जलक्रीडां सप्रपञ्चमाह पुराणकारः। तत्र हरिहरयोर्नर्मालापोपि लेशतो लपितः। अस्मिन्नस्तोयकर्मणि विहायसि स्थितो मारुति र्नृत्यति नर्दति गायति विपञ्चीं च वादयति। तन्निशम्य निशाम्य च भवोपि गातुमुपक्रमते। ततो गोतमाद्यास्तालका भवन्ति, वायुज एव च गायकः। तद्गीतिमधुरिम्णा मोहमापन्ना हर्यादयः सर्वे स्व स्वं गान विजहति। हनूमतो गानेन किमप्यद्भुतं जायते। गोतमगृहे यत् किमपि शुष्कं दारुसंभूतमुपकरणमास्ते सर्वं तत् प्ररोहति। अत्रेदं मीमांस्यं किमुद्देश्यका जलक्रीडावर्णने प्रवृत्तिरेषा कवेः। मनुष्यवद् देवता अपि जलक्रीडाप्रिया नर्मालापकामुका इति स्वभावसाम्यं निदिदर्शयिषतीति चेन्नार्थोऽनया। तत्र लोकस्यानाकाङ्क्षा। वस्तुतस्तु जलक्रीडादिषु प्राकृतकर्मसु दैवतान्यपि रमन्त इति संभावनैव नोदेति मर्त्यानाम् इति न तत्र ते कुतुकिनः। तेन प्रयोजनवतीयं प्रवृत्तिरुताहो नेति विचिकित्स स्थिता भवति।

## शिवेन शिवायाः प्रसाधनम्

इह पुराणेऽनुदात्ताः प्राकृतानां कामुकानामौपयिक्यः का अपि दैवतचेष्टा उपवर्णितास्ता। प्रणतानां किमप्युद्वेजिका भवन्त्यनर्थिकाश्च। पूर्वभाग एकोनाशीतितमेऽध्याये उमया वारितेनापि शम्भुना कृतं तस्या धम्मिल्लरचनं व्यासेन वर्णितम्। तथा प्रवृत्तेन तेन नीवीबन्धोऽप्यारचित इत्यपि निगदितम्। तदिदं कस्मा अर्थायेति दुर्वेदम्। न हि सर्वा किंवदन्ती मङ्ग्राह्या भवति।

## भगवतो भवस्य सन्ध्योपासनम्

अत्रैवाध्याय इदमपरमपि विमृश्यम्। भगवतः शम्भोः प्राप्तकालं सन्ध्या-वन्दनमुक्तम्। तत्र चित्रीयमाणो विष्णुर्भगवन्तमनुयुङ्क्ते—सर्वैर्नमस्यते यस्तु सर्वैरेव समर्च्यते। हूयते सर्वयज्ञेषु स भवान् किं जपिष्यति॥ रचिताञ्जलयः सर्वे त्वामेवैकमुपासते।

स भवान् देवदेवेशः कस्मै विरचिताञ्जलिः ॥ नमस्कारादिपुण्यानां फलदस्त्वं महेश्वर। तव कः फलदो वन्द्यः को वा त्वत्तोऽधिकः, वद (पू० ७६।१६६-१६६) ॥ तत्र भवाम्भिवोऽव्याजमाह–ध्याये न किञ्चिद् गोविन्द नमस्येऽहं न कञ्चन। किन्तु नास्तिकजन्तूनां प्रवृत्त्यर्थमिदं मया। दर्शनीयं हरे चैतद् अन्यथा पापकारिणः। तस्माल्लोकोपकारार्थमिदं सर्वं कृतं मया (पू० ७६।२००-२०१)। ऋजूत्तरमिदं सदृशं तस्येशानस्य, आत्मनो विप्रलम्भकर्मिति च विसदृशम्। जपविडम्बनैषा कापेयमिव भवति। न हि परार्थेपि श्रद्धारिक्तेऽनुकरणे प्रवृत्तिमन्तो भवन्ति महान्तः, किमुत देवदेवो महादेवः। इत्यापातरमणीयः परिणतिविरसोऽयमुपन्यास इत्यवश्यमूरी करणीयमकामेनापि।

## सत्यहरिश्चन्द्रः

ऐक्ष्वाको हरिश्चन्द्रो नाम भूपतिरायोध्यको बभूव। कार्तस्वरेण लेख्यमस्योदात्तमतुलं चरितमिह न्यस्यते यथापुराणं साम्प्रतिकस्य राजकस्य प्रबोधनाय—श्रूयते किल राजासाद्धरिश्चन्द्रो वरानने। चाण्डालमन्दिरावासी भार्यातनयविक्रयी (उ० १४।५७) ॥ असत्य वचनादभीतो दुःखाद् दुःखान्तरं गतः। तस्य सत्येन सन्तुष्टा देवाः शक्रपुरोगमाः (५८) ॥ वरेण छन्दयाञ्चक्रु र्हरिश्चन्द्रं महीपतिम्। तेन सत्यवता चोक्ता देवा ब्रह्मपुरोगमाः ॥ यदि तुष्टा हि विबुधा वरं मे दातुमर्हथ (५९) ॥ एषा हि नगरी सर्वा सद्रुमा ससरीसृपा। सबालवृद्ध तरुणा सनारी सचतुष्पदा (६०) ॥ प्रयातु कृतपापापि स्वर्गति नगरी मम। अयोध्यापातकं गृह्य गन्ताहं नरकं ध्रुवम् (६१) ॥ एकाकी नहि गच्छामि परित्यज्य जनं क्षितौ। स्वर्गं विबुधशार्दूलाः सत्यमेतन्मयेरितम् (६२) ॥

## शिक्षानिरूपणोऽध्यायः

उत्तरस्मिन्भागेऽस्मिन्पुराण एकोनविंशोऽध्यायः शिक्षानिरूपण इति समाख्यायते। तत्र रुक्माङ्गदात्मजस्य धर्माङ्गदस्य शासनपद्धतिरुपवर्णिता लेशेन, तत्कृता धर्मं व्यवस्था च समासेन। सोभयी तादात्विकीं समाज ... ति चित्रार्पितामिवोपस्थापयतीति विविदिषाविषयः स्यात् सर्वस्यैतिह्यरसिकस्य जनस्येति मूलगतैरेवाक्षरैरिह समर्प्यते – तन्त्रं तदखिलं चक्रे नित्यं पितृवचःस्थितः (२६)। दुष्टनिग्रहणं चक्रे शिष्टानां परिपालनम्। अटनं सर्वदेशेषु वीक्षणं सर्वकर्म्मणाम् (२७)। वेवसंवीक्षण चक्रे तुलामानं दिने दिने। गृहे गृहे नराणां च चक्रे संरक्षणं नृपः (२९)। स्तनन्धयो क्वचित् बालः स्तनहीनो न रोदिति। श्वश्रूवं ध्वा न कुत्रापि प्ररोदित्यवमानिता (३०)।

## शाङ्करो महास्तवः

इह पुराणे तत्तद्देवताकानि नाना स्तोत्राणि स्थाने स्थाने प्रपठितानि। पूर्वभाग एकनवते ऽध्याये यो माहेश्वरः स्तवः प्रोक्तस्तस्योपमा न विद्यते। स नातिविस्तीर्ण इति शक्यः सर्वोपि निखिलेनोद्धतुं वैशद्यकरैष्टिप्पणैश्च योजयितुम्। सोऽनुक्रम्यते तावत्—धराम्बग्निमरुद्व्योममखेशेन्द्वर्कमूर्त्तये। सर्वभूतान्तरस्थाय शङ्कराय नमो

नमः (६१।२१९)॥ श्रुत्यन्तकृतवासाय श्रुतये श्रुतिजन्मने। अतीन्द्रियाय महसे शाश्वताय नमो नमः २२०) ॥ स्थूलसूक्ष्मविभागाभ्यामनिर्देश्याय शम्भवे। भवाय भवसंभूतदुःखहन्त्रे नमो नमः (२२१) ॥ तर्कमार्गातिदूराय तपसां फलदायिने। चतुर्वर्गवदान्याय सर्वज्ञाय नमो नमः (२२२)॥ आदिमध्यान्तशून्याय निरस्ताशेषभीतये। योगिध्येयाय महते निर्गुणाय नमो नमः (२२३)॥ विश्वात्मने विविक्ताय विलसच्चन्द्रमौलये। कन्दर्पदर्पनाशाय कालहन्त्रे नमो नमः (२२४)॥ विप्राशनाय विहरद्-वृषस्कन्धमुपेयुषे। सरिद्-दामसमाबद्धकपर्दाय नमो नमः (२२५)॥ शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने। पुरान्तकाय पूर्णाय पुण्यनाम्ने नमो नमः (२२६)॥ भक्ताय निजभक्तानां भुक्तिमुक्तिप्रदायिने। विवाससे निवासाय विश्वेषां पतये नमः २२७)॥ त्रिमूर्तिमूलभूताय त्रिनेत्राय त्रिशूलिने। त्रिधाम्ने धामरूपाय जन्मदाय नमो नमः (२२८)॥ देवासुरशिरोरत्नकिरीटारुणिताङ्घ्रये॥

सत्यं स्तवराजोऽयम्। परिवृत्त्यसहानि पदानि शब्दपरिपाकनिदर्शनानि। नेह पदमेकमप्यनपेक्षमप्रसङ्गि दभ्रापं परिहार्यं वा समस्ति। अनुप्रासेन मधुरता विरोधाभासेन च गुर्वर्थता किमपि निर्वर्तिता। शङ्करो नाम पराधिमूर्तिरपि संस्तदन्तर्वर्ति किमपि तत्त्वम्। स वेदान्तवेद्यो वेदान्तात्मा वेदान्तयोनिश्च। तेजःस्वरूपो प्यप्रकाशोऽव्यक्तो न व्यक्तिमुपैति। बहिः शुद्धोऽन्तः शुद्धः शुद्धानामन्तरात्मा च। न केवलं सेव्यः, सेवकोपीति निःसामान्यः। स्वयं दिग्वासा दिग्वासा नग्नो निःसाधनः, इतरस्मै जीवमात्राय वासं प्रयच्छति। यस्त्रिधामा त्रीणि धामानि त्रयो लोका धामानि आधारा यस्य स इत्यम्भूतोपि धामरूपः सर्वस्याधारभूतः। इदं चापरं व्यावर्तकं लक्षणमस्य। अयं कान्तायै दत्ताधंकलेवरः। इतरे सुरासुराः स्वस्य स्वस्य कान्तानामधीशाते नाम, तद्वल्लभाः सन्तोपि तत्स्वामिनः स्ववत्तत्र समाचरन्ति। श्रुतिरपि यं चकितमभिधत्ते स मानुषधियोऽगम्यः कथङ्कारं स्वरूपतः स्तूयेत।

### सृष्टिप्रारम्भकालः

सृष्टिप्रारम्भकालं जिज्ञासते जनः, न च जानाति। नारदीयं च तमित्थं ज्ञपयति—चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि (पू० ११०।४)।

### उपवासप्रतिषेधः

न हि यत्र तत्र काले देवो वोपवासविधिः श्रूयते। क्वाचित्कः प्रतिषेधोपीष्यते, तदाह—गुर्विणीनां गृहस्थानां क्षीणानां रोगिणां तथा (उ० २४।७५)। शिशूनां वलिगात्राणां न युक्तं समुपोषणम्। यज्ञभोगोद्यतानां च सद्ग्रामक्षितिसेविनाम (७६)॥

### राजगुणवर्णनम्

राज्ञि के के गुणा इष्यन्ते तांस्तान् रुक्माङ्गदो राजा स्वतनयाय धर्माङ्गदाय प्रश्नमुखेनोपदिशति। पुत्रदिदृक्षयोपक्रामन्तं रुक्माङ्गदं राजकपरिवृतो वश्यः सुतो धर्माङ्गदो दूरात्प्रतिगृह्णाति स्नेहेन परमेण च प्रणिपतति। तत्रावसरे स्नेहार्द्रचेताः पिता तस्य सर्वन्त्रानामयं पृच्छंस्तं कोमलमा-

मन्त्रयते । तद्यथा—कच्चित्पासि प्रजाः सर्वाः कच्चिद् दण्डयसे रिपून् । न्यायागतेन वित्तेन कोशं पुत्र बिभर्षि च (उ० १५।२१) ॥ कच्चिद् विप्रेष्वत्यधिका वृत्तिर्वत्तानपायिनी । कच्चित्त्वं कान्तशीलस्त्वं कच्चिद् वक्ता न निष्ठुरम् (२२) ॥ कच्चिद् वचनकर्तारस्तनयाश्च पितुः सदा (२३) । कच्चिद् वधूः श्वश्रू वाक्ये वर्तते क्वचित् । कच्चिद् विवादान् विप्रैस्तु समं नेक्षसे आत्मज (२४) ॥ कच्चिद् गावो न रुध्यन्ते विषये विविधैस्तृणैः । तुलामानानि सर्वाणि धान्यादीनां सदेक्षसे (२५) ॥ कुटुम्बिनं करैः पुत्र नात्यर्थमभिदूयसे । कच्चिन्न द्यूतपानादि वर्तते विषये तव (२६) ॥ कच्चिद् भिन्नरसैर्लोका भिन्नवाक्यैः पुरे तव । न दानैर्जीर्णं-वस्त्रैश्च नोपजीवन्ति मानवाः (२७) ॥ कच्चिच्चापररात्रेषु सदा निद्रां विमुञ्चसि (३०) । क्वचित्समर्थस्तनयः पितरं न हि याचते । न वर्णसङ्करो राज्ये केषां चिदभवत्पुनः (३१) ॥ न कञ्चुकविहीना तु भवेन्नारी सभर्तृका (३२) । गृहान्निष्क्रमणं स्त्रीणां मास्तु राज्ये मदीयके । मा सकेशा हि विधवा मास्त्वकेशा सभर्तृका (३३) ॥ मा सतीह सदाक्रोशी माऽऽरण्या नगराश्रयाः । सामान्यवृत्त्यदाता मे राज्ये वसतु निर्घृणः (३४) ॥ गोपालो नगराकाङ्क्षी निर्गुणस्तूपदेशकः । ऋत्विग्वा शास्त्रहीनश्च मा मे राज्ये वसेदिह (३५) ॥ यो हि निष्पादयेन्नीलीं नीलीरञ्जातिसेचकः । निर्वास्यौ तावुभौ पापौ यो वै मद्यं करोति च (३६) ॥

## कालिदासे नारदीयपद्यानुकारः

कुमारसम्भवे (३।७२) क्रोधं प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति । तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकारेति पठ्यते । तदिदमविकलं कुलपतिः कालिदासः पुराणादस्मादुज्जहारेतीदम्प्रथमं वेद्यन्ते काव्यं शुश्रुवांसो विद्वांसः । इहेत्थं स्थितः श्लोकः—कोपं विभो संहर संहरेति यावद् गिरः खे मरुतां बभूवुः । तावत् स वह्नि द्विजवाक्यसृष्टो भस्मावशेषां प्रमदां चकार (उ० ३५।८६) ॥ या चेहाल्पा शब्द परि वृत्ति विलोक्यते सा प्रकरणकारितेति कविमणितेः परकीयात्वं न पराकरोति ।

## पापवर्णकम्

अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् (उ० ४३।६१) ॥ पारुष्यमनृतं चापि पशुन्यं चापि सर्वशः । असंबद्ध-प्रलापश्च वाचिकं स्याच्चतुर्विधम् (६२) ॥ पर द्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् (६३) ॥

## तीर्थराजः समुद्रः

तावद् गर्जन्ति तीर्थानि माहात्म्यैः स्वैः स्वैः पृथक् पृथक् । यावन्न तीर्थराजस्य माहात्म्यं वर्ण्यते द्विजैः (उ० ५८।१६) ॥ पुष्करादीनि तीर्थानि प्रयच्छन्ति स्वकं फलम् । तीर्थराजः समुद्रस्तु सर्व-तीर्थफलप्रदः (१७) ॥

## कृष्णमाहात्म्यम्

कृष्ण इह परं तत्त्वमुक्तः । स खलु प्रकृतेः पुरुषस्य च नियन्ता, विश्वविधाता, संहर्तृ रुद्र





स्यापि संहर्ता व्यपदिष्टः (उ० ५८।४४)। यदन्यत्र कृष्णस्तु भगवान्स्वयमित्युक्तं तदिह शब्दान्तरैरूर्जिताश्रयैरित्यमुदाहृतम् — देवि सेर्वेऽवतारास्तु ब्रह्मणः कृष्णरूपिणः। अवतारी स्वयं कृष्णः सगुणो निर्गुणः स्वयम् (४६)॥

## ब्रह्माण्डोत्पत्तिवर्णनम्

सत्त्वरजस्तमांसि गुणा अत्र कृष्णतत्त्वस्य पुंसो देहभूता व्याहृताः, प्रकृतिश्च तच्छक्तिरु[1]-द्दिष्टा (उ० ५८।५०)। ब्रह्मविष्णु शिवाद्याश्चापि प्राकृता गुणनिर्मिता उदाहृताः (उ० ५८।४७)। या चेह जगतः प्रक्रिया समाश्रिता सा साङ्ख्यप्रक्रियातो भिन्नाऽभिन्ना च। साङ्ख्यवदिहापि निर्गुणः साक्षी पुरुषोऽभ्युपेयते (५१) इति साधर्म्यम्। गुणाश्च सत्त्वादयस्ततः पुरुषादात्मानं लेभिरे तेभ्यश्च महत्तत्त्वम् (५१-५२) इति च वैधर्म्यम्। महतस्तत्त्वात्पुरुष प्रेरितात् त्रिविधोऽहङ्कारो वैकारिकस्तैजसस्तामसश्चेति सम्बभूव। अत्र पुरुषप्रेरणा व्यतिरिक्तोक्ता। वैकारिकः सात्त्विकः, तैजसो राजस इत्यनर्थान्तरम्। वैकारिकान्मनो जज्ञे देवा वैकारिका दश (५४)। दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रका(५५) इति दिगाद्युत्पत्तिरत्र नूतनोक्ता। पूर्वत्र (पू० ६३।७०-७१) तैजसतो ज्ञानेन्द्रियाणि मनसा सहेत्युक्त्या विरुध्यते च। पूर्वत्र तामसात्तन्मात्राणामुत्पत्तिरुक्ता, इह तु शब्दस्य तथाभूता सेत्यभ्युपगत्य स्पर्शस्याकाशाज्जनिरुक्तेति विपरीतम्। एवं वायो रूपमित्याद्यपि विप्रलपितम्। आकाशादभवत्स्पर्शस्तस्माद्वायुरभूत् सति[2] (५७)। वायोरभूत् ततो रूपम् (५८) इत्यादि मूले स्थितम्। कालमायांशलिङ्गेभ्यः स्पर्शादिगुणेभ्योऽचेतनमण्डमजायत। समभूच्चेतनं जातं दरैण विशता सति (६०)। तस्मादण्डाद् विराड् जज्ञे सोऽशयिष्ट जलान्तरे। मुखादीन्यस्य जातानि विराजोऽवयवा अपि (६२)॥ अन्यत्राप्यापो नारायणस्यायनमुक्ताः। सङ्गृहीतः सार इत्युपरम्यते।

## ईश्वरस्वरूपम्

अनिर्देश्यं तु यद्वस्तु तन्निर्देष्टुं न च क्षमम् उपलक्षणमेतद्धि यन्निदेशनमीश्वरम् (उ० ५६। ३६)॥ शास्त्रं वेदाश्च सुभगे वर्णयन्ति यदीश्वरम् तत्सर्वं प्राकृतं विद्धि निर्देष्टुं शक्यमेव च (३७)। अनिर्देश्यं तु यद् देवि तन्नेतीति निषिध्यते। निषेधशेषः स विभुः कीर्तितः शरणागतैः (३८)॥ शास्त्रं नियामकं भद्रे सर्वेषां कर्मणां भवेत्। कर्मी तु जीवः कथित ईश्वरांशो विभुः स्वयम् (३९)॥

## गङ्गाया मर्त्यलोकेऽवतरणकालः

ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्याम्। हस्ते शैलावबातरवसो जाह्नवी मर्त्य-

---

१. तस्य शक्तिः परा विष्णोर्जगत्कार्यप्रवर्तिनी। भावाभावस्वरूपा सा विद्याविद्येति गीयते (पू० २।६)॥ यदा विश्वं महाविष्णोर्भिन्नमेव प्रतीयते। तदा ह्यविद्या संसिद्धा भवेद् दुःखस्य साधनम् (७)॥ ज्ञातृज्ञेयाद्युपाधिस्ते यदा नश्यति नारद। सर्वैकभावनाबुद्धिः सा विद्येत्यभिधीयते (८)॥

२. विरिञ्चिप्रमुखी मोहिन्यभिसंम्बोध्यते।

लोकम् (उ० ४०।२१) ।' हस्ते नक्षत्रे । क्षितिसुतो भौमो मङ्गलवासरः ।

### जह्नुना गङ्गायाः पानकालः

वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा। क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् (उ०।४१।३७) ॥

### दशहरा तिथिः

ज्येष्ठे मासि तु दशमी शुक्लपक्षस्य मोहिनि। हरते दश पापानि तस्माद् दशहरा स्मृता (उ० ६०।-१३) ॥ अयमर्थोऽद्यापि हरियाणाविषयवासिनां विदितः। आश्विने विजयादशम्यां रामलीलाऽभिनीयते लोके। तस्या अपि दशमीत्वसाधर्म्याद् दशहरेति रूढिः।

### तीर्थफलेऽभागिनः

अश्रद्दधानः पापार्तो नास्तिकाऽच्छिन्नसंशयः। हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः (उ० ६२।-१६) ॥

### तीर्थेष्वधिकारिणः

यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि भ्रमेच्च नाम। तीर्थेष्वलं यज्ञफलं हि यस्मात् प्रोक्तं मुनीन्द्रैरमलस्वभावैः (उ० ६२।२२) ॥ यस्येष्टियज्ञेष्वधिकारिताऽस्ति वरं गृहं गृहधर्माश्च सर्वे। एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा। सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वदन्ति केचित् (२३) ॥

### तीर्थे प्रतिग्रहनिन्दा

तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु न च। निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेद् द्विजः (उ० ६३।१२३-१२४) ॥

### पुष्करतीर्थमहिमा

पुष्करे दुर्लभं स्नानं पुष्करे दुर्लभं तपः (उ० ७१।४५) । पुष्करे दुर्लभं दानं पुष्करे दुर्लभा स्थितिः (४६) ।

### वेदपादस्तवः

इहोत्तरस्मिन्भागे त्रिसप्ततेऽध्याये जैमिनिप्रणीतो वेदपादस्तवो नाम महास्तवः स्थितः। चतुर्दशोत्तरेण शतेन पद्यैः पर्यवसितोऽयं स्तवः किमपि कामनीयकं धत्ते। प्रतिपद्यं चेह ऋगादिमन्त्रपादा अन्तर्गुम्फिताः सूत्रे मणिगणा इवेत्यस्यान्वर्थता स्तवान्तरेभ्यो विलक्षणता च। पादगुम्फनमिदमपूर्वां चातुरीं व्यनक्ति वेदे बह्वादरं च। नैकत्राप्यनन्वयो भाति कृतकृता वा स्फुरति, प्रक्षेपोऽयमिति बुद्धिर्वोदेति। ब्राह्मणान्यारण्यकान्युपनिषदश्च वेदव्यपदेशभाञ्जीति मतमाश्रित्य तत्रस्थाः पादा अपीह संगृहीताः। इत्यम्भूतेऽस्मिन्विचित्रे बृहति स्तवे स्यादेव कुतुकं जनस्य च महाजनस्य चेति तमिह निखिलेनोद्धरामः पादप्रदेशांश्च निर्दिशामः, टिप्पणं रौपयिकंश्च योजयामः—

अथानन्दार्णवे मग्नो दृष्ट्वा नृत्यं महेशितुः। जैमिनिर्वेदपादेन स्तवेनास्तौत् समाहितः (७३।२८)॥ विरिञ्चिविष्णुगिरिशप्रणताङ्घ्रिसरोरुहे ।। जगत्सूते नमस्तुभ्यं देवि काम्पिल्यवासिनि (७३।२९) ॥

विघ्नेशविधिमार्तण्डचन्द्रोपेन्द्रवन्दित । नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते (७३।३०) ॥ ब्रह्मणस्पत इत्यनेनैव ब्रह्मणां पतित्वस्यावगमे ब्रह्मणामिति गतार्थं तथा प्यार्षीयं शैली निवीनां त्वा निधिपति ऍहवामह इत्यादिषु शतशो मन्त्रेषु दर्शनात् । उमाकोमलहस्ताब्जसंभावितललाटकम् । हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम् (वा०सं० २।३३) (३१)॥ शिवं ब्रह्मादिदुर्दर्शं नरः कः स्तोतुमर्हति । दर्शनात्ते स्तुति.र्मे सा चाभ्राद् वृष्टिरिवाजनि (७३।३२) ॥ नमः शिवाय साम्बाय नमः शर्वाय शम्भवे (वा० सं० १६।२८) । नमो नटाय रुद्राय सदसस्पतये नमः (आश्व० श्रौ० ५।३।२२) (७३।३३) ॥ पादभिन्नाय लोकाय मौलिभिन्नाण्डभित्तये । भुजप्रान्तदिगन्ताय भूतानां पतये नमः (आश्व० श्रौ० १।४।६) (७३।३४) ॥ क्वणन्नूपुरयुग्माय विलसत्कृत्तिवाससे । फणीन्द्रमेखलायास्तु पशूनां पतये नमः (वा० सं० १६।१७) (७३।३५) ॥ कालकालाय सोमाय योगिने शूलपाणये । अस्थिभूषाय शुद्धाय जगतां पतये नमः (वा० सं० १६।१८) (७३।३६) ॥ अस्थि नामामङ्गलं भवति, अस्य तु भगवतः समुगंकरणं भूषणम् इति चित्रम् । पात्रे सर्वस्य जगतो नेत्रे सर्वदिवौकसाम् । गोत्राणां पतये तुभ्यं क्षेत्राणां पतये नमः (वा० सं० १६।१८) (७३।३७) ॥ पात्रे नेत्र इत्यल्पाक्षरे शोभने सानुप्रासे पदे । घनानां पतये तुभ्यमरण्यानां पतये नमः (वा० सं० १६।१८) । आत्माधिपतये तुभ्यं नमो मीढुष्टमाय च (वा० सं० १६।२९) (७३।३८) ॥ मीढ्वानिति प्रायेणेन्द्रनामसु प्रथते मेहनस्य वर्षणस्य कर्तृत्वात् । अष्टाङ्गायातिहृद्याय क्लिष्टभक्तेष्टदायिने । इष्टिघ्नाय सुतुष्टाय पुष्टानां पतये नमः (वा.सं. १६।१७)(७३।३९) । दक्षयागस्य विध्वंसक इतीष्टिघ्न इहोक्तः । अष्टाङ्गोऽष्टमूर्त्तिः । भूतार्कचन्द्रयज्वान इत्यष्टौ मूर्तयः । पञ्चभूताधिपतये कालाधिपतये नमः । नम आत्माधिपतये दिशां च पतये नमः (वा० सं० १६।१७) (४०) ॥ विश्वकर्त्रे महेशाय विश्वभर्त्रे पिनाकिने । विश्वहर्त्रेऽग्निनेत्राय विश्वरूपाय वै नमः (तै० आ० १०।१२।१) (४१) ॥ इहार्थवन्ति प्रत्येकं विशेषणानि भवन्ति । यो हि विश्वस्य कर्ता स सर्वस्येशः स्यादिति युज्यते नाम । धनुष्मान्सन् विश्वं रक्षति । अग्निनेत्र इति सर्वं संहरति । ईशान ते तत्पुरुष नमो घोराय ते सदा । वामदेव नमस्तेऽस्तु सद्योजाताय वै नमः (तै० आ० १०।४३।१) (७३।४२) ॥ भूतिभूषाय भक्तानां भीतिभङ्गप्रदायिने । नमो भगाय भर्गाय नमो रुद्राय मीढुषे (तै० आ० ३।७।८।४) (७३।४३) ॥ सहस्राम्बाय साम्बाय सहस्राभीषवे नमः । सहस्रबाहवे तुभ्यं सहस्राक्षाय मीढुषे (वा० सं० १६।८) (७३।४४) ॥ सुकपोलाय सोमाय सुललाटाय सुभ्रुवे । सुदेहाय नमस्तुभ्यं सुमृडीकाय मीढुषे (ऋ० १।१३६।६) (७३।४५) ॥ भवक्लेशनिमित्तोरु भयच्छेदकृते सदा । नमस्तुभ्यमषाढाय सहमानाय मीढुषे (तै० ब्रा० २।८।६।८) (७३।४६) ॥ अषाढाय सहमानायेति साभिप्राये विशेषणे । स्वयमषाढः परैरसोढोऽनभिभूतः परांश्च सहमानः परिभावयितेति युज्यतेऽस्य महेश्वरत्वम् । वन्देहं देवमानन्दसन्दोहं लास्यसुन्दरम् । समस्तजगतां नाथं सदसस्पतिमद्भुतम्

(ऋ० १।१८।६) (७३।४७) ॥ सुजङ्गं सुन्वरं क्षौमं रक्षोभूतक्षतिक्षमम् । यक्षेशेष्टं नमामीशमक्षरं परमं प्रभुम् (७३।४८) ॥ अर्द्धालिकमवस्त्रार्द्धमरुण्युत्पलदलस्रजम् । अर्धपुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गलम् (तै० आ० १०।१२।१)(७३।४९) ॥ सकृत्प्रणतसंसारमहासागरतारकम् । प्रणमामि तमीशानं जगतस्तस्थुषस्पतिम् (ऋ० १।८९।५) (७३।५०) ॥ धातारं जगतामीशं दातारं सर्वसम्पदाम् । नेतारं मरुतां वन्दे जेतारमपराजितम् (ऋ० १।११।२) (७३।५१) ॥ मरुतो देवाः । जयी न तु पराजयीत्याह । तं त्वामन्तकनेतारं वन्दे मन्दाकिनीधरम् । दधाति विदधद्यो मामिमानि त्रीणि विष्टपा (ऋ० ८।९१।५) ७३।५२) ॥ विष्टपा=विष्टपानि लोकान् । सर्वज्ञं सर्वगतं सर्वं कविं वन्दे तमीश्वरम् । यतश्च यजुषा सार्धमृचः सामानि जज्ञिरे (ऋ० १०।९०।९) (७३।५३) ॥ कविः क्रान्तदर्शनः, नातः क्रान्तदर्शनतरोऽन्यः । भवन्तं सुदृशं वन्दे भूतभव्य भवन्ति च । त्यजन्तीतर कर्माणि यो विश्वाभि विपश्यति (ऋ० ३।६२।९) (७३।५४)॥ हरं सुरनियन्तारं हरन्तमंहमानतः । यदाज्ञया जगत् सर्वं व्याप्य नारायणः स्थितः (७३।५५) ॥ तं नमामि महादेवं यन्नियोगादिदं जगत् । कल्पादौ भगवान् धाता यथापूर्वमकल्पयत् (ऋ० १०।१९०।३) (७३।५६) ॥ ईश्वरं तमहं देवं यस्य लिङ्गमहर्निशम् । यजन्ते सह भार्याभिरिन्द्रज्येष्ठा मरुद्गणाः (ऋ० १।२३।८) (७३।५७) ॥ नमामि तमिमं रुद्रं यमभ्यर्च्य सकृत्पुरा । अवापुः स्वं स्वमैश्वर्यं देवासः पूषरातयः (ऋ० १।२३।८) (७३।५८) ॥ पूषाः पुष्कला रातयो दानानि येषां ते पूषरातयो देवाः । तं वन्दे देवमीशानं यं शिवं हृदयाम्बुजे । सततं यतयः शान्ताः सञ्जानाना उपासते (ऋ०१०।१९१।२) (७३।५९) ॥ सञ्जानाना अनुकूलं वर्तमाना ऐकमत्ये स्थिताः । तदस्मै सततं कुर्मो नमः कमलकान्तये । उमाकुचपटोरस्क या ते रुद्र शिवा तनूः (वा० सं० १६)। (७३।६०) ॥ नमस्ते रुद्र भावाय नमस्ते रुद्र केलये नमस्ते रुद्र शान्त्यं च नमस्ते रुद्र मन्यवे (वा० सं० १६। )(७३।६१) ॥ वेदाश्वरथनिष्ठाभ्यां पादाभ्यां त्रिपुरान्तक । बाणकार्मुकयुक्ताभ्यां बाहुभ्यामुत ते नमः (वा० सं १६।१) (७३।६२) ॥ नमस्ते वासुकिज्याय विङ्किराय च शङ्कर । महते मेरुरूपाय नमस्ते अस्तु धन्वने (तै०सं० ४।५।१।१) (७३।६३)॥ 'नमः परशवे तेऽस्तु शूलायातुलरोचिषे । हयग्रीवात्मने तुभ्यमुतोत इषवे नमः (वा० सं० १६।४)(७३।६४)॥ सुरेतरवधूहारहारीणि हर यानि ते । अन्यान्यस्त्राण्यहं तूण इवं तेभ्योऽकरं नमः (ऋ० १०।८५।१७) (७३।६५) ॥ धराधरसुतालीलासरोजाहतबाहवे । तस्मै तुभ्यमघोराय नमो अस्मा अवस्य च (७३।।६६) ॥ रक्ष मामज्ञमक्षीणमशिक्षितमनन्यगम् । अनाथं दीनमापन्नं दरिद्र नीललोहित (वा० सं० १६।४७) (७३।६७) ॥ दुर्मुखं दुष्क्रियं दुष्टं रक्ष मामीश दुर्दशम् । आदृशा तमहं न त्वदन्यं विन्दामि राधसे (ऋ० ८।२४।१२) (७३।६८)। भवाख्येनाग्निना शम्भो रागद्वेषमदार्चिषा । दयालो दह्यमानानामस्माकमविता भव (ऋ० १।१८७।२) (७३।६९) ॥ परदारं परावासं परवस्त्रं पराश्रयम् । हर पाहि परान्नं मां पुरुणामन् पुरुष्टुत (ऋ० ८।९३।१७)





(७३।७०) ॥ पुरूणि बहूनि नामान्यस्येति पुरुनामा। छान्दसं णत्वम्। पुरुभिः स्तुतः पुरुस्तुतः। इहापि छान्दसं ष्टुत्वम्। लौकिकं यत्कृतं दुष्टंनविमानं सहामहे। देवेश तव दासेभ्यो भूरिदा भूरि देहि नः (ऋ० ४।३२।२०) (७३।७१) ॥ कुलोकानामयत्नानां गर्विणामीश पश्यताम्। अस्मभ्यं क्षेत्रमायुश्च वसु स्पार्हं तदाभर (ऋ० ८।४५।४०) (७३।७२) ॥ स्पार्हं स्पृहणीयम्। आभर आहर। याचत्रातो महतीं लज्जामस्मदीयां घृणानिधे। त्वमेव वेत्सि नस्तूर्णमिदं स्तोतृभ्य आभर (७३।७३) ॥ जाया माता पिता चान्ये मां द्विषन्त्यमितं कृशम्। देहि मे महतीं विद्यां राया विश्वपुषा सह (ऋ० ८।२६।७) (७३।७४) ॥ अरिष्टार्येषु सर्वेषु दृष्टार्थेष्वपि कर्मसु। मेरुधन्वन्नभक्तेभ्यो बलं देहि तनूषु नः (ऋ० ३।५३।१८) (७३।७५ ॥ लब्धानिष्टसहस्रस्य नित्यामिष्टवियोगिनः। हृद्रोगं मम देवेश हरिमाणं च नाशय (ऋ० १।५०।११) (७३।७६) ॥ ये ये रोगाः पिशाचा वा नरा देवाश्च मामिह। बाधन्ते देवताः सर्वा नि बाधस्व महीमभि (ऋ०८।६४।२) (७३।७७) ॥ त्वमेव रक्षितास्माकमन्यः कश्चिन्न विद्यते। तस्मात् स्वीकृत्य देवेश रक्षा णो ब्रह्मणस्पते (ऋ० १।१८।३) ७३।७८) ॥ रक्षेति सांहितिको दीर्घः। णः=नः। छान्दसं णत्वम्। स्वीकृत्य= आत्मीयान्नः कृत्वा। त्वमेवोमापते माता त्वं पिता त्वं पितामहः। त्वमायुस्त्वं मतिस्त्वं भ्रातोत नः सखा (ऋ० १०।१८६।२) (७३।७९) ॥ यतस्त्वमेव देवेश कर्ता सर्वस्य कर्मणः। ततः क्षमस्व तत्सर्वं यन्मया दुष्कृतं कृतम् (तै० आ० १०।१।८) (७३।८०) ॥ त्वत्समो न प्रभुत्वेन फल्गुत्वेन च मत्समः। ततो देव महादेव त्वमस्माकं तव स्मसि (ऋ० ८।९२।३२) (७३।८१) ॥ फल्गुत्वं निःसारता तुच्छत्वम्। सुस्मितं भस्मगौराङ्गं तरुणादित्यविग्रहम्। प्रसन्नवदनं सौम्यं गाये त्वा नमसा गिरा (ऋ० ८।४६।१७) (७३।८२) ॥ एष एव वरोऽस्माकं नृत्यन्तं त्वां सभापतिम्। लोकयन्तमुमाकान्तं पश्येम शरदः शतम् (ऋ० ७।६६-१६) (७३।८३) ॥ प्रयोगिणो महाभाग विद्वांसश्च बहुश्रुताः। भगवंस्त्वत्प्रसादेन जीवेम शरदः शतम् (ऋ० ७।६६।१६) (७३।८४) ॥ सदारा बन्धुभिः सार्धं त्वदीयं ताण्डवामृतम्। पिबन्तः का॰ ॰नेशानं नन्दाम शरदः शतम् (तै० आ० ४।४२।५)। (७३।८५) ॥ देवदेव महादेव त्वदीयाङ्घ्रिसरोरुहम्। कामं मधुमयं पीत्वा मोदाम शरदः शतम् (तै० आ० ४।४२।५) (७३।८६) ॥ कीटा नागाः पिशाचा वा ये वा के ना भवे भवे। तव दासा महादेव भवाम शरदः शतम् (तै० आ० ४।४२।५) (७३।८७) ॥ सभायामीश ते देव नृत्यवाद्यगलस्वनम्। श्रवणाभ्यां महादेव शृणुयाम शरदः शतम् (वा० सं० ३६।२४) (७३।८८) ॥ स्मृतिमात्रेण संसारविनाशनकराणि ते। नामानि खलु दिव्यानि प्रब्रवाम शरदः शतम् (वा० सं० ३६।२४) (७३।८९) ॥ इषुसन्धानमात्रेण दग्धत्रिपुर धूर्जटे। आधिभिर्व्याधिभिर्नित्यमजिताः स्याम शरदः शतम् (तै० आ० ४।४२।५) (७३।९०) ॥ चारुचामीकराभासं गौरीकुचपटीरसम्। कदा नु लोकयिष्यामि युवानं विश्पतिं कविम् (ऋ० ८।४४-

२६) (७३।९१) ॥ प्रमथेन्द्रावृतं प्रीतवदनं प्रियवाससम्। सेविष्ये कदा साम्बं सुभासं शुक्रशोचिषम् (ऋ० ८।२३।२०) (७३।९२) ॥ बह्वेनसं मामकृतपुण्यलेशं च दुर्मतिम्। स्वीकरिष्यति किं न्वीशो नीलग्रीवो विलोहितः (वा० सं० १६।७) (७३।९३) ॥ कालशूलानलासक्तं भीतं व्याकुलमानसम्। कदा नु द्रक्ष्यतीशो मां तुविग्रीवो अनानतः (ऋ० ८।६४।७) (७३।९४) ॥ तुविशब्दो बहुलवचनः। अनानतः = आनतो न भवति, नित्यमुन्नतः। गायका यूयमायात यदि रागादि लिप्सवः। धनदस्य सखायं तम् उपास्मै गायता नरः (ऋ० ९।११।१) (७३।९५)। स्वस्त्यस्तु सखि ते जिह्वे विद्यादातुरुमापतेः। स्तवमुच्चतरं ब्रूहि जयतामिव दुन्दुभिः (ऋ० १।२८।५) (७३।९६) ॥ चेतयाजन? शान्तस्त्वं नेदं वेदाखिलं जगत्। अस्य तृप्त्याखिलं शम्भो गौरो न तृषितः पिब (ऋ० १।१६।५) (७३।९७) ॥ सुगन्धि च सुखस्पर्शं कामदं सोमभूषणम्। गाढमालिङ्ग मच्चित्त योषा जारमिव प्रियम् (ऋ० ९।३२।५) (७३।९८) ॥ महामयूखाय महाभुजाय महाशरीराय महाम्बराय। महाकिरीटाय महेश्वराय महो महीं सुष्टुतिमीरयामि (ऋ०२।३३।८) (७३।९९) ॥ यथा कथञ्चिद्रचिताभिरीषत्प्रसन्नश्चारुभिरादरेण। प्रपूजयामि स्तुतिभिर्महेशमषाढमुग्रं सहमानमाभिः (ऋ० ६।१८।१) (७३।१००) ॥ नमः शिवाय त्रिपुरान्तकाय जगत्त्रयेशाय दिगम्बराय। नमोस्तु मुख्याय हराय भूयो नमो जघन्याय च बुध्नियाय (वा० सं०१६।३२) (७३।१०१) ॥ नमो विकाराय विकारिणे ते नमो भवायास्तु भवोद्भवाय। बहुप्रजात्यन्तविचित्ररूप यतः प्रसूता जगतः प्रसूतिः (तै० आ० १०।१।१) (७३।१०२) ॥ तस्मै सुरेशोरुकिरीटनानारत्नावृताष्टापदविष्टराय। भस्माङ्गरागाय नमः परस्मै यस्मात्पर नापरमस्ति किञ्चित् (तै० आ० १०।१०।३) (७३।१०३) ॥ सर्पाधिराजौषधिनाथयुद्धक्षुभ्यज्जटामण्डलगह्वराय। तुभ्यं नमः सुन्दरताण्डवाय यस्मिन्निदं सं च वि चैति सर्वम् (तै.आ०१०।१।१) (७३।१०४) ॥ मुरारिनेत्रार्चितपादपद्ममुमाङ्घ्रिलाक्षापरिरक्तपाणिम्। नमामि देवं वृषनीलकण्ठं हिरण्यवर्णं शुचिवर्णमारात् (ऋ० ५।२।३) (७३।१०५) ॥ अनन्तमव्यक्तमचिन्त्यमेकं हरन्तमाशाम्बरमम्बराङ्गम्। अजं पुराणं प्रणमामि रूपमणोरणीयान्महतो महीयान् (तै० आ० १०।१०।१)(७३।१०६) ॥ अन्तःस्थमात्मानमजं नदृष्ट्वा भ्रमन्ति मूढा गिरिगह्वरेषु। पश्चादुदग्दक्षिणतः पुरस्तादधः स्विदासी३दुपरि स्विदासी३त् (ऋ. १०।१२९।५) (७३।१०७) ॥ इमं नमामीश्वरमिन्दुमौलिं शिवं महानन्दमशोकदुःखम्। हृदम्बुजे तिष्ठति यः परात्मा यतश्च सर्वाः प्रदिशो दिशश्च (७३।१०८) ॥ रागादिकापट्यसमुद्भवेन भ्रान्तं भवाख्येन महाऽऽमयेन। विलोक्य मां पालय चन्द्रमौले भिषक्तमं त्वा भिषजां शृणोमि (ऋ० २।३३।४ (७३।१०९) ॥ दुःखाम्बुराशिं सुखलेशहीनमस्पृष्टपुण्यं बहुपातकं माम्। मृत्योः करस्थं भव भीतं भीतं पश्चात् पुरस्तादधरादुदक्तात् (ऋ० १०।८७।२१) (७३।११०) ॥ गिरीन्द्रजाचारुमुखावलोकसुशीतया देव तवैव दृष्ट्या। वयं दयापूरितयैव पूर्णा अपो न नावा दुरिता तरेम (ऋ० ६।६८।८) (७३।१११) ॥ अपारसंसारसमुद्रमध्ये निमग्न-

मुत्कोशमनल्परागम्। मामक्षमं पाहि महेश जुष्टमोजिष्ठया दक्षिणयेव रातिम् (ऋ० १।१६९।४) (७३।११२) ॥ स्मरन्पुरासंचितपातकानि खरं यमस्यापि मुखं यमारे। ।बभेमि मे देहि यथेष्टमायुर्यवि क्षितायुर्यवि वा परेतः (ऋ० १०।१६१।२) (७३।११३) ॥ सुगन्धिः सुन्दर भस्मगौरै रनन्तभोगैर्मृदुलैरघोरैः। इमं कदालिङ्गति मां पिनाकी स्थिरेभिरङ्गैः पुररूप उग्रः ( ) (७३।११४)॥ क्रोशन्तमीशं पतितं भवाब्धौ नाकुस्थमण्डूकमिवातिभीतम्। कदा नु मां रक्षति देवदेवो हिरण्यरूपः स हिरण्यसन्दृक् (ऋ० २।३५।१०) (७३।११५) ॥ नाकुर्वल्मीकम्। चारुस्मितं चन्द्रकलावतंसं गौरीकटाक्षारुहयुग्मनेत्रम्। आलोकयिष्यामि कदा नु साम्बमादित्यवर्णं तमसः परस्तात् (वा० सं० ३१।१८) (७३।११६) ॥ आगच्छतानादिमुमुक्षवो ये यूयं शिवं चिन्तयतान्तरेऽब्जे। ध्यायन्ति मुक्त्यर्थमसुं हि नित्यं वेदान्तविज्ञानसुनिश्चितार्थाः (तै० आ० १०।१०।३) (७३।११७) ॥ आयात यूयं भवतापितप्रार्थये कामं महेशं गिरिशं यजध्वम्। एवं पुराभ्यर्च्यं हिरण्यगर्भो भूतस्य जातः पतिरेक आसीत् (ऋ० १०।१२१।१) (७३।११८) ॥ एकायनं ते विपुलां श्रियं ते श्रीकण्ठमेनं सुकृता नमन्ताम्। श्रीमानयं श्रीपतिवन्द्यपादः क्षोणामुदारो धरुणो रयीणाम् (ऋ० १०।४५।५) (७३।११९) ॥ सुपुत्रकामा अपि ये मनुष्या युवानमेनं गिरिशं यजन्ताम्। यतः स्वयम्भूर्जगतो विधाता हिरण्यगर्भः समवर्तताग्रे (ऋ० १०।१२१।१) (७३।१२०) ॥ अलं किमवर्तैर्बहुभिः समीहितं समस्तमस्याश्रयणेन सिध्यति। पुरैनमाश्रित्य हि कुम्भसंभवो दिवा न नक्तं पलितो युवाऽजनि (ऋ०१।१४४।४)(७३।१२१)॥ अन्यत् परित्यज्य ममाक्षिभृङ्गाः सर्वं सदैवं शिवमाश्रयध्वम्। आमोदवानेष मृदुः शिवाय स्वादुष्किलायं मधुमाँ उतायम् (ऋ० ६।४७।१) (७३।१२२) ॥ भविष्यसि त्वं प्रतिमानहीनो विनिर्जिताशेषनरामरश्च। नमश्च ते वाणि महेशमेनं स्तुहि श्रुतं गर्तसदं युवानम् (ऋ० २।३३।११) (७३।१२३) ॥ यद्यन्मनश्चिन्तयसि त्वमिष्टं तत्तद् भविष्यत्यखिलं ध्रुवं ते। दुःखेन वृत्ति विषये कदा चिद् यस्या महे सौमनसाय रुद्रम् (ऋ० ५।४२।११) (७३।१२४) ॥ अज्ञानयोगादपचारकर्म यत्पूर्वमस्माभिरनुष्ठितं ते। तदेव सोढ्वा सकलं दयालो पितेव पुत्रान् प्रति नो जुषस्व (ऋ० ७।५४।२) (७३।१२५) ॥ संसाराख्य क्रुद्धसर्पेण तीव्रं रागद्वेषोन्मादलोभादिदन्तैः। दष्टं दृष्ट्वा मां दयालुः पिनाकी वेवस्त्राता त्रायतामप्रयुच्छन्(ऋ०१।१०६-७) (७३।१२६) ॥ इत्युक्त्वान्ते ये समाधेर्नमन्ते रुद्र त्वां ते यान्ति जन्माहिदष्टाः। सन्तो नीलग्रीवसूत्रात्मनाहं तत्त्वा यामि ब्रह्मणा वन्दमानः (ऋ० १।१२४।११) (७३।१२७) ॥ भवाधिभीषणज्वरेण पीडितान्महामयानशेषपातकालयानदूरकाललोचनान्। अनाथनाथ ते करेण भेषजेन कालहा उदू षु णो वसो महे मृशस्व शूर राधसे (ऋ० ८।७०।९) (७३।१२८) ॥ कालहा=कालघ्नेन। जयेम येन सर्वमेतदिष्टमष्टदिग्गणं भुवः स्थलं दिवःस्थलं नभःस्थलं च तद्गतम्। य एष सर्वदेवदानवप्रभुः सभापतिः स नो ददात तं रयिं पुरुं पिशङ्गसन्दृशम् (ऋ० २।४१।९) ७३।१२९) ॥ ऋचि पुरुम् इति नास्ति। नमो भवाय ते हराय भूतिभासितोरसे नमो भवाभि-





प्रभुः ॥ मेरुमध्ये स्थितो ब्रह्मा तद्वहिर्द्विजसत्तम ॥ ४१ ॥ भृगुरुवाच ॥ प्रजाविसर्गं विविधं मानसो मनसाऽसृजत् ॥ संरक्षणार्थं भूतानां सृष्टं प्रथ
मतो जलम् ॥ ४२ ॥ यत्प्राणाः सर्वभूतानां सृष्टं प्रथमतो जलम् ॥ यत्प्राणाः सर्वभूतानां वर्द्धते येन च प्रजाः ॥ ४३ ॥ परित्यक्ताश्च नश्यंति तेनेदं
सर्वमावृतम् ॥ पृथिवी पर्वता मेघा मूर्तिमंतश्च ये परे ॥ सर्वं तद्वारुणं ज्ञेयमापस्तस्तंभिरे पुनः ॥ ४४ ॥ भरद्वाज उवाच ॥ कथं सलिलमुत्पन्नं कथं
चैवाग्निमारुतौ ॥ कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ ४५ ॥ भृगुरुवाच ॥ ब्रह्मकल्पे पुरा ब्रह्मन् ब्रह्मर्षीणां समागमे ॥ लोकसंभवसंदेहः
समुत्पन्नो महात्मनाम् ॥ ४६॥ तेऽतिष्ठन्ध्यानमालंब्य मौनमास्थाय निश्चलाः ॥ त्यक्ताहाराः स्पर्द्धमाना दिव्यं वर्षशतं द्विजाः ॥४७॥ तेषां ब्रह्ममयी
वाणी सर्वेषां श्रोत्रमागमत् ॥ दिव्या सरस्वती तत्र संबभूव नभस्तलात् ॥ ४८ ॥ पुरास्तिमितमाकाशमनंतमचलोपमम् ॥ नष्टचंद्रार्कपवनं
प्रसुप्तमिव संबभौ ॥४९॥ ततः सलिलमुत्पन्नं तमसीव तमः परम्॥ तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः ॥५०॥ यथाभवनमच्छिद्रं निःशब्दमिव
लक्ष्यते॥तच्चांभसा पूर्यमाणं सशब्दं कुरुतेऽनिलः॥ ५१ ॥ तथा सलिलसंरुद्धे नभसोंऽतं निरंतरे॥ भित्त्वार्णवतलं वायुः समुत्पतति घोषवान् ॥५२ ॥
एषु वै चरते वायुरर्णवोत्पीडसंभवः ॥ आकाशस्थानमासाद्य प्रशांतिं नाधिगच्छति ॥ ५३ ॥ तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः॥
प्रादुरासीदूर्ध्वशिखः कृत्वा निस्तिमिरं तमः ॥५४॥ अग्निः पवनसंयुक्तः खं समाक्षिपते जलम् ॥ तदग्निवायुसंपर्काद्घनत्वमुपपद्यते॥५५॥ तस्याकाशं
निपतितः स्नेहात्तिष्ठति योऽपरः ॥ स संघातत्वमापन्नो भूमित्वमनुगच्छति ॥ ५६ ॥ रसानां सर्वगंधानां स्नेहानां प्राणिनां तथा ॥ भूमिर्यो
निरियं ज्ञेया यस्याः सर्वं प्रसूयते ॥ ५७ ॥ भरद्वाज उवाच ॥ य एते धातवः पंच रक्ष्या यानसृजत्प्रभुः ॥ आवृता यैरिमे लोका महाभूता
भिसंज्ञितैः॥५८॥ यदाऽसृजत्सहस्राणि भूतानां स महामतिः ॥ पश्चात्तेष्वेव भूतत्वं कथं समुपपद्यते ॥५९॥ भृगुरुवाच ॥ अमितानि महाप्टानि यांति
भूतानि संभवम् ॥ अतस्तेषां महाभूतशब्दोऽयमुपपद्यते ॥ ६० ॥ चेष्टा वायुः खमाकाशमूष्माग्निः सलिलं द्रवः ॥ पृथिवी चात्र संघातः शरीरं
पांचभौतिकम्॥६१॥ इत्यतः पंचभिर्युक्तैर्युक्तं स्थावरजंगमम् ॥ श्रोत्रे घ्राणो रसः स्पर्शो दृष्टिश्चेंद्रियसंज्ञिताः ॥ ६२ ॥ भरद्वाज उवाच ॥ पंचभिर्यदि
भूतैस्तु युक्ताः स्थावरजंगमाः ॥ स्थावराणां न दृश्यंते शरीरे पंच धातवः ॥६३॥ अनूष्मणामचेष्टानां घनानां चैव तत्त्वतः ॥ वृक्षाणां नोपलभ्यंते
शरीरे पंच धातवः॥६४॥न शृण्वंति न पश्यंति न गंधरसवेदिनः॥न च स्पर्शं हि जानंति ते कथं पंच धातवः ॥६५॥ अद्रवत्वादनग्नित्वादभूमि
त्वादवायुतः ॥आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम् ॥६६॥ भृगुरुवाच॥ घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ॥ तेषां पुष्पफलव्य

॥ ६८ ॥

क्तिर्नित्यं समुपपद्यते ॥६७॥ ऊष्मतो म्लायते पर्णं त्वक्फलं पुष्पमेव च ॥म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते ॥ ६८ ॥ वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्यते ॥ श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वंति पादपाः ॥ ६९ ॥ वल्ली वेष्टयते वृक्षान्सर्वतश्चैव गच्छति ॥ नह्यदृष्टश्च मार्गोऽस्ति तस्मात्पश्यंति पादपाः ॥ ७० ॥ पुण्यापुण्यैस्तथा गंधैर्धूपैश्च विविधैरपि ॥ अरोगाः पुष्पिताः संति तस्माज्जिघ्रंति पादपाः ॥ ७१ ॥ सुखदुःखयोर्ग्रहणाच्छिन्नस्य च विरोहणात् ॥ जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥ ७२ ॥ तेन तज्जलमादत्ते जरयत्यग्निमारुतौ ॥ आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ॥ ७३ ॥ जंगमानां च सर्वेषां शरीरे पंच धातवः ॥ प्रत्येकशः प्रभिद्यंते यैः शरीरं विचेष्टते ॥ ७४ ॥ त्वक् च मांसं तथास्थीनि मज्जा स्नायुश्च पंचमः ॥ इत्येतदिह संघातं शरीरे पृथिवीमये ॥ ७५ ॥ तेजो ह्यग्निस्तथा क्रोधश्चक्षुरूष्मा तथैव च ॥ अग्निर्जनयते यच्च पंचाग्नेयाः शरीरिणः ॥ ७६ ॥ श्रोत्रं घ्राणं तथास्यं च हृदयं कोष्ठमेव च ॥ आकाशात्प्राणिनामेते शरीरे पंच धातवः ॥ ७७॥ श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च॥इत्यापः पंचधा देहे भवंति प्राणिनां सदा॥७८॥प्राणात्प्रीणयते प्राणी व्यानाद्व्याय च्छते तथा ॥ ७९ ॥गच्छत्यपानोऽधश्चैव समानो हृद्यवस्थितः ॥ उदानादुच्छ्वसितीति पश्च ( प्रति ) भेदाच्च भाषते ॥ इत्येते वायवः पंच चेष्टयंतीह देहिनम् ॥८०॥ भूमेर्गंधगुणान्वेत्ति रसं चाद्भ्यः शरीरवान्॥तस्य गंधस्य वक्ष्यामि विस्तराभिहितान्गुणान्॥८१॥इष्टश्चानिष्टगंधश्च मधुरः कटुरेव च ॥ निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ ८२ ॥ एवं नवविधो ज्ञेयः पार्थिवो गंधविस्तरः ॥ ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना॥८३॥ शब्दः स्पर्शश्च रूपं च रसश्चापि गुणाः स्मृताः॥रसज्ञानं तु वक्ष्यामि तन्मे निगदतः शृणु॥८४॥रसो बहुविधः प्रोक्त ऋषिभिः प्रथितात्मभिः ॥ मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ॥ ८५ ॥ एष षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ शब्दः स्पर्शश्च रूपञ्च त्रिगुणं ज्योतिरुच्यते ॥ ८६ ॥ ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ॥ ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान् ॥ ८७ ॥ शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा ॥ कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदु दारुणः ॥ ८८ ॥ एवं षोडशविस्तारो ज्योतीरूपगुणः स्मृतः ॥ तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम् ॥ ८९ ॥ तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ॥ षड्जो ऋषभगांधारौ मध्यमो धैवतस्तथा ॥ ९० ॥ पंचमश्चापि विज्ञेयस्तथा चापि निषादवान् ॥ एष सप्तविधः प्रोक्तो गुण आकाशसंभवः ॥ ९१ ॥ ऐश्वर्य्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥ मृदंगभेरीशंखानां स्तनयित्नो रथस्य च ॥ ९२ ॥ एवं बहुविधाकारः शब्द आकाशसंभवः॥वायव्यस्तु गुणः स्पर्शः





स्पर्शश्च वहुधा स्मृतः ॥ ९३ ॥ उष्णः शीतः सुखं दुःखं स्निग्धो विशद एव च॥तथा खरो मृदुः श्लक्ष्णो लघुर्गुरुतरोऽपि च ॥ ९४ ॥शब्दस्पर्शौ तु विज्ञेयौ द्विगुणौ वायुरित्युत ॥ एवमेकादशविधो वायव्यो गुण उच्यते ॥ ९५ ॥ आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ॥ अव्याहतैश्चेतयते नवेति विषमा गतिः ॥ ९६ ॥ आप्यायंते च ते नित्यं धातवस्तैस्तु धातुभिः ॥ आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ॥ ९७ ॥ मूलमेते शरीरस्य व्याप्य प्राणानिह स्थिताः ॥ पार्थिवं धातुमासाद्य यथा चेष्टयते बली ॥ ९८ ॥ श्रितो मूर्द्धानमग्निस्तु शरीरं परिपालयेत् ॥ प्राणो मूर्द्धनि वाग्नौ च वर्तमानो विचेष्टते ॥ ९९ ॥ स जंतुः सर्वभूतात्मा पुरुषः स सनातनः ॥ मनो बुद्धिरहंकारो भूतानि विषयश्च सः ॥ १०० ॥ एवं त्विह स सर्वत्र प्राणैस्तु परिपाल्यते ॥ पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ १०१ ॥ वस्तिमूलं गुदं चैव पावकं समुपाश्रितः ॥ वहन्मूत्रं पुरीषं वाप्यपानः परिवर्तते ॥ १०२ ॥ प्रयत्ने कर्मनियमे य एकस्त्रिषु वर्तते ॥ उदान इति तं प्राहुरध्यात्मज्ञानकोविदाः ॥ १०३ ॥ संधिष्वपि च सर्वेषु संनिविष्टस्तथानिलः ॥ शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ १०४ ॥ बाहुष्वग्निस्तु विततः समानेन समीरितः ॥ रसान्धातूंश्च दोषांश्च वर्तयन्नति चेष्टते ॥ १०५ ॥ अपानप्राणयोर्मध्ये प्राणापानसमीहितः ॥ समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः ॥ १०६ ॥ आस्यं हि पायुपर्यंतमंते स्याद्गुदसंज्ञिते ॥ रेतस्तस्मात्प्रजायंते सर्वस्रोतांसि देहिनाम् ॥१०७॥ प्राणानां सन्निपाताच्च सन्निपातः प्रजायते ॥ ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ १०८ ॥ अग्निवेगवहः प्राणो गुदांते प्रतिहन्यते ॥ स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥१०९॥ पक्काशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्मृतः ॥ नाभिमूले शरीरस्य सर्वे प्राणाश्च संस्थिताः ॥ ११० ॥ प्रस्थिता हृदयात्सर्वे तिर्यगूर्द्ध्वमधस्तथा ॥ वहंत्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ॥ १११ ॥ एष मार्गोऽपि योगानां येन गच्छंति तत्पदम् ॥ जितक्लमाः समा धीरा मूर्द्धन्यात्मानमादधन् ॥ ११२ ॥ एवं सर्वेषु विहितप्राणापानेषु देहिनाम् ॥ तस्मिन्समिध्यते नित्यमग्निः स्थाल्यामिवाहितः ॥ ११३ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे द्वितीयपादे भृगुभरद्वाजसंवादे जगदुत्पत्तिवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ भरद्वाज उवाच ॥ यदि प्राणपतिर्वायुर्वायुरेव विचेष्टते ॥ श्वसित्याभाषते चैव ततो जीवो निरर्थकः ॥ १ ॥ य ऊष्मभाव आग्नेयो वह्निनैवोपलभ्यते ॥ अग्निर्जरयते चैतत्तदा जीवो निरर्थकः ॥ २ ॥ जंतोः प्रम्रियमाणस्य जीवो नैवोपलभ्यते ॥ वायुरेव जहात्येनमूष्मभावश्च नश्यति ॥३॥ यदि वायुमयो जीवः संश्लेषो यदि वायुना ॥ वायुमंडलवत्पश्येद्गच्छेत्सह मरुद्गणैः ॥ ४ ॥ संश्लेषो यदि वा तेन यदि तस्मात्प्रणश्यति ॥ महार्णवविमुक्तत्वादन्यत्सलिलभाजनम् ॥ ५ ॥ कूपे वा सलिलं दद्यात्प्रदीपं वा हुताशने ॥

॥ ६३ ॥

क्षिप्रं प्रविश्य नश्येत यथा नश्यत्यसौ तथा ॥ ६ ॥ पंचधारणके ह्यस्मिञ्छरीरे जीवितं कृतम् ॥ येषामन्यतराभावाच्चतुर्णां नास्ति संशयः ॥ ७ ॥
नश्यंत्यापो ह्यनाहाराद्वायुरुच्छ्वासनिग्रहात् ॥ नश्यते कोष्ठभेदार्थमग्निर्नश्यत्यभोजनात् ॥ ८ ॥ व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्यते ॥ पीडितेऽ
न्यतरे ह्येषां संघातो याति पंचताम् ॥ ९ ॥ तस्मिन्पंचत्वमापन्ने जीवः किमनुधावति ॥ किं खेदयति वा जीवः किं शृणोति ब्रवीति च ॥ १० ॥ एषा
गौः परलोकस्थं तारयिष्यति मामिति ॥ यो दत्त्वा म्रियते जंतुः सा गौः कं तारयिष्यति ॥ ११ ॥ गौश्च प्रतिग्रहीता च दाता चैव समं यदा ॥ इहैव विलयं
यांति कुतस्तेषां समागमः ॥ १२ ॥ विहगैरुपभुक्तस्य शैलाग्रात्पतितस्य च ॥ अग्निना चोपयुक्तस्य कुतः संजीवनं पुनः ॥ १३ ॥ छिन्नस्य यदि वृक्षस्य न
मूलं प्रतिरोहति ॥ जीवन्यस्य प्रवर्तंते मृतः क पुनरेष्यति ॥ १४ ॥ जीवमात्रं पुरा सृष्टं यदेतत्परिवर्तते ॥ मृता मृताः प्रणश्यंति बीजाद्बीजं प्रणश्यति
॥ १५ ॥ इति मे संशयो ब्रह्मन्हृदये परिधावति ॥ त निवर्तय सर्वज्ञ यतस्त्वामाश्रितो ह्यहम् ॥ १६ ॥ सनंदन उवाच ॥ एवं पृष्टस्तदानेन स भृगु
र्ब्रह्मणः सुतः ॥ पुनराह मुनिश्रेष्ठ तत्संदेहनिवृत्तये ॥ १७ ॥ भृगुरुवाच ॥ न प्राणाः सन्ति जीवस्य दत्तस्य च कृतस्य च ॥ याति देहांतरं प्राणी शरीरं
तु विशीर्यते ॥ १८ ॥ न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति ॥ समिधामग्निदग्धानां यथाग्निर्दृश्यते तथा ॥ १९ ॥ भरद्वाज उवाच ॥ अग्नेर्यथा
तस्य नाशात्तद्विनाशो न विद्यते ॥ इन्धनस्योपयोगांते स वाग्निर्नोपलभ्यते ॥ २० ॥ नश्यतीत्येव जानामि शांतमग्निमनिन्धनम् ॥ गतिर्यस्य प्रमाणं
वा संस्थानं वा न विद्यते ॥ २१ ॥ भृगुरुवाच ॥ समिधामुपयोगांते स चाग्निर्नोपलभ्यते ॥ नश्यतीत्येव जानामि शांतमग्निमनिंधनम् ॥ २२ ॥
गतिर्यस्य प्रमाणं वा संस्थानं वा न विद्यते ॥ समिधामुपयोगांते यथाग्निर्नोपलभ्यते ॥ २३ ॥ आकाशानुगतत्वाद्धि दुर्ग्राह्यो हि निराश्रयः ॥
तथा शरीरसंत्यागे जीवो ह्याकाशवत्स्थितः ॥ २४ ॥ न नश्यते सुसूक्ष्मत्वाद्यथा ज्योतिर्न संशयः ॥ प्राणान्धारयते ह्यग्निः स जीव उपधार्यताम् ॥
॥ २५ ॥ वायुसंधारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ तस्मिन्नष्टे शरीराग्नौ ततो देहमचेतनम् ॥ २६ ॥ पतितं याति भूमित्वमयनं तस्य हि क्षितिः ॥
जंगमानां हि सर्वेषां स्थावराणां तथैव च ॥ २७ ॥ आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति ॥ तेषां त्रयाणामेकत्वाद्द्वयं भूमौ प्रतिष्ठितम् ॥ २८ ॥
यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः ॥ अमूर्तयस्ते विज्ञेया मूर्तिमंतः शरीरिणः ॥ २९ ॥ भरद्वाज उवाच ॥ यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु ॥
जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ॥ ३० ॥ पंचात्मके पञ्चरतौ पञ्चविज्ञानसंज्ञके ॥ शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ ३१ ॥
मांसशोणितसंघाते मेदःस्नाय्वस्थिसंचये ॥ भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ ३२ ॥ यद्यजीवशरीरं तु पञ्चभूतसमन्वितम् ॥ शारीरे मानसे

दुःखे कस्तां वेदयते रुजम् ॥ ३३ ॥ शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत् ॥ महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ ३४ ॥ सर्वं पश्यंति यद्दृश्यं मनोयुक्तेन चक्षुषा ॥ मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति ॥ ३५ ॥ न पश्यति न चाघ्राति न शृणोति न भाषते ॥ न च स्पर्शमसौ वेत्ति निद्रावशगतः पुनः ॥ ३६ ॥ हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च कः ॥ इच्छति ध्यायति द्वेष्टि वाक्यं वाचयते च कः ॥ ३७ ॥ भृगुरुवाच ॥ तं पंचसाधारणमत्र किंचिच्छरीरमेको वहतेंऽतरात्मा ॥ स वेत्ति गंधांश्च रसाञ्छ्रुतीश्च स्पर्शं च रूपं च गुणांश्च येऽन्ये ॥ ३८ ॥ पंचात्मके पंचगुणप्रदर्शी स सर्वगात्रानुगतोंऽतरात्मा ॥ सवेत्ति दुःखानि सुखानि चात्र तद्विप्रयोगात्तु न वेत्ति देहम् ॥ ३९ ॥ यदा न रूपं न स्पर्शो नोष्मभावश्च पावके ॥ तदा शांते शरीराग्नौ देहत्यागेन नश्यति ॥ ४० ॥ आपोमयमिदं सर्वमापोमूर्तिः शरीरिणाम् ॥ तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ ४१ ॥ आत्मानं तं विजानीहि सर्वलोकहितात्मकम् ॥ तस्मिन्यः संश्रितो देहे ह्यब्बिंदुरिव पुष्करे ॥ ४२ ॥ क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ॥ तमोरजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ ४३ ॥ अचेतनं जीवगुणं वदंति स चेष्टते चेष्टयते च सर्वम् ॥ अतः परं क्षेत्रविदो वदंति प्रावर्तयद्यो भुवनानि सप्त ॥ ४४ ॥ न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्मुन इत्यबुद्धाः ॥ जीवस्तु देहांतरितः प्रयाति दशार्द्धतस्तस्य शरीरभेदः ॥ ४५ ॥ एवं भूतेषु सर्वेषु गूढश्चरति सर्वदा ॥ दृश्यते त्वग्र्या बुध्या सूक्ष्मया तत्त्वदर्शिभिः ॥ ४६ ॥ तं पूर्वापररात्रेषु युंजानः सततं बुधः ॥ लब्धाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ४७ ॥ चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ॥ प्रसन्नात्मात्मनि स्थित्वा सुखमानंत्यमश्नुते ॥ ४८ ॥ मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ॥ सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये ॥ ४९ ॥ असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः ॥ आत्मतेजोऽभिनिर्वृत्तान्भास्कराग्निसमप्रभान् ॥ ५० ॥ ततः सत्यं च धर्मं च तथा ब्रह्म च शाश्वतम् ॥ आचारं चैव शौचं च स्वर्गाय विदधे प्रभुः ॥ ५१ ॥ देवदानवगंधर्वा दैत्यासुरमहोरगाः ॥ यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ॥ ५२ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राणामसितस्तथा ॥ भरद्वाज उवाच ॥ चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ॥ ५३ ॥ स्वेदमूत्रपुरीषाणि श्लेष्मा पित्त सशोणितम् ॥ त्वन्तः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥ ५४ ॥ जंगमानामसंख्येयाः स्थावराणां च जातयः ॥ तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥ ५५ ॥ भृगुरुवाच ॥ न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत् ॥ ब्रह्मणा पूर्वसृष्टं हि कर्मणा वर्णतां गतम् ॥ ५६ ॥ कामभोगाः प्रियास्तीक्ष्णाः क्रोधताप्रियसाहसाः ॥ त्यक्तस्वकर्म रक्तांगास्ते द्विजाः क्षत्रतां गताः ॥ ५७ ॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ॥ स्वधर्मान्नानुतिष्ठंति ते द्विजा वैश्यतां गताः ॥ ५८ ॥

हिंसानृतपरा लुब्धाः सर्वकर्मोपजीविनः ॥ कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ ५९ ॥ इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः॥ ब्राह्मणा धर्मतन्त्रस्थास्तपस्तेषां न नश्यति ॥ ६० ॥ ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥ ब्रह्म चैव पुरा सृष्टं येन जानंति तद्विदः ॥६१॥ तेषां बहुविधास्त्वन्यास्तत्र तत्र द्विजातयः॥ पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ॥सा सृष्टिर्मानसी नाम धर्मतंत्रपरायणा ॥६२॥ भरद्वाज उवाच ॥ ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ॥ वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥६३॥ भृगुरुवाच ॥ जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ॥ वेदाध्ययनसंपन्नो ब्रह्मकर्मस्ववस्थितः ॥ ६४ ॥ शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ॥ नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥६५॥ सत्यं दानमथोऽद्रोह आनृशंस्यं कृपा घृणा ॥ तपस्यां दृश्यते यत्र स ब्राह्मण इति स्मृतः॥६६॥क्षत्रजं सेवते कर्म वेदाध्ययनसंगतः ॥ दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ ६७ ॥ विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः ॥ वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः ॥६८॥ सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ॥ त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥६९॥शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ॥ न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च ॥ ७० ॥ सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ॥ एतत्पवित्रं ज्ञानानां तथा चैवात्मसंयमः॥७१॥वर्ज्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुद्यतौ॥नित्यक्रोधाच्छ्रियं रक्षेत्तपो रक्षेत्तु मत्सरात्॥७२॥विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः॥७३॥यस्य सर्वे समारंभा निराशीर्बंधना द्विज ॥ त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥७४॥ अहिंस्रः सर्वभूतानां मैत्रायणगतश्चरेत्॥परिग्रहात्परित्यज्य भवेद्बुद्ध्या जितेंद्रियः ॥७५॥ अशोकस्थानमातिष्ठेदिह चामुत्र चाभयम् ॥ तपोनित्येन दांतेन मुनिना संयतात्मना ॥७६॥ अजितं जेतुकामेन व्यासंगेषु ह्यसंगिना ॥ इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः॥७७॥अव्यक्तमिति विज्ञेयं लिंगग्राह्यमतींद्रियम्॥अविश्रंभेण मंतव्यं विश्रंभे धारयेन्मनः॥७८॥मनः प्राणेन गृह्णीयात्प्राणं ब्रह्मणि धारयेत् ॥निर्वेदादेव निर्वाणं न च किंचिद्विचिंतयेत्॥७९॥सुखं वै ब्राह्मणो ब्रह्मन्निर्वेदेनाधिगच्छति॥शौचे तु सततं युक्तः सदाचारसमन्वितः॥८०॥स्वनुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम्॥सत्यं व्रतं तपः शौचं सत्यं विसृजते प्रजा ॥८१॥सत्येन धार्यते लोकः स्वः सत्येनैव गच्छति॥अनृतं तमसो रूपं तमसा नीयते ह्यधः॥८२॥तमोग्रस्ता न पश्यंति प्रकाशं तमसावृताः॥ सुदुष्प्रकाश इत्याहुर्नरकं तम एव च॥ ८३ ॥सत्यानृतं तदुभयं प्राप्यते जगतीचरैः ॥ तत्राप्येवंविधा लोके वृत्तिः सत्यानृते भवेत् ॥८४॥ धर्माधर्मौ प्रकाशश्च तमो दुःखसुखं तथा ॥ शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ॥ ८५ ॥ लोकसृष्टं प्रपश्यन्तो न मुह्यंति विचक्षणाः ॥ तत्र दुःखविमोक्षार्थं प्रयतेत





विचक्षणः ॥ ८६ ॥ सुखं ह्यनित्यं भूतानामिह लोके परत्र च ॥ राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ॥ ८७ ॥ तथा तमोभिभूतानां
भूतानां नश्यते सुखम् ॥ ८८ ॥ तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च । इह खल्वमुष्मिंश्च लोके वस्तुप्रवृत्तयः सुखार्थमभिधीयन्ते
नह्यतः परत्रापवर्गफलाद्विशिष्टतरमस्ति । स एव काम्यो गुणविशेषो धर्मार्थगुणारंभस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थमारंभाः ॥ भरद्वाज
उवाच ॥ यदैतद्भवताभिहितं सुखानां परमा स्थितिरिति ॥ ८९॥ न तदुपगृह्णीमो न ह्येषामृषीणां महति स्थितानाम् ॥ ९० ॥ अप्राप्य एष काम्य
गुणविशेषो न चैनमभिशीलयंति । तपसि श्रूयते त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति ॥ ९१ ॥ अपि
च भगवान्विश्वेश्वर उमापतिः काममभिवर्तमानमनंगत्वेन सममनयत् ॥ ९२ ॥ तस्माद्ब्रूमो न तु महात्मभिरंजयति गृहीतो न त्वेष तावद्विशिष्टो
गुणविशेष इति॥९३॥नैतद्भगवतः प्रत्येमि भवता तूक्तं सुखानां परमाः स्त्रिय इति लोकप्रवादो हि द्विविधः फलोदयः सुकृतात्सुखमवाप्यतेऽन्यथा
दुःखमिति ॥ ९४ ॥ भृगुरुवाच ॥ अत्रोच्यते अनृतात्खलु तमः प्रादुर्भूतं ततस्तमोग्रस्ता अधर्ममेवानुवर्तंते न धर्मं क्रोधलोभमोहहिंसानृता
दिभिरवच्छन्नाः खल्वस्मिँल्लोके नामुत्र सुखमाप्नुवंति विविधव्याधिरुजोपतापैरवकीर्यन्ते वधबन्धनपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपत
प्यंते वर्षवातात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरैर्दुःखैरुपतप्यंते बंधुधनविनाशविप्रयोगकृतैश्च मानसैः शोकैरभिभूयंते जरामृत्युकृतैश्चान्यै
रिति यस्त्वेतैः ॥९५॥ शारीरं मानसं नास्ति न जरा न च पातकम् ॥ नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम्॥९६॥नरके दुःखमेवाहुः सुखं
तत्परमं पदम् ॥ पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः ॥ ९७ ॥ पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥ इत्येतल्लोकनिर्माता धर्मस्य
चरितस्य च ॥ ९८ ॥ तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य च ॥ हुतेन शाम्यते पापं स्वाध्याये शांतिरुत्तमा ॥ ९९ ॥ दानेन भोगानित्याहुस्त
पसा स्वर्गमाप्नुयात् ॥ दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ॥ १००॥सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठते ॥ असद्भ्यो दीयते यत्तु तद्दानमिह
भुज्यते॥यादृशं दीयते दानं तादृशं फलमश्नुते ॥ १०१ ॥ भरद्वाज उवाच ॥ किं कस्य धर्मचरणं किं वा धर्मस्य लक्षणम् ॥ धर्मः कतिविधो वापि
तद्भवान्वक्तुमर्हति ॥१०२॥भृगुरुवाच॥स्वधर्माचरणे युक्ता ये भवंति मनीषिणः ॥ तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते॥१०३॥भरद्वाज उ० ॥ ॥ ७१ ॥
यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा॥तेषां स्वे स्वे समाचारास्तन्मे वक्तुमिहार्हसि॥१०४॥भृगुरुवाच ॥ पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता
धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः ॥१०५॥तत्र गुरुकुलवासमेव प्रथममाश्रममाहरंति सम्यगत्र शौचसंस्कारनियमव्रतविनियतात्मा उभे संध्ये

भास्कराग्निदैवतान्युपस्थाय विहाय तद्वचालस्यं गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतांतरात्मा त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषा
नित्यभिक्षाभैक्ष्यादिसर्वनिवेदितांतरात्मा गुरुवचननिदेशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात् ॥१०६॥ भवति चात्र श्लोकः॥गुरुं
यस्तु समाराध्य द्विजो वेदमवाप्नुयात्॥तस्य स्वर्गफलावाप्तिः सिद्ध्यते चास्य मानसम्॥इति गार्हस्थ्यं खलु द्वितीयमाश्रमं वदंति॥१०७॥तस्य सदा
चारलक्षणं सर्वमनुव्याख्यास्यामः। समावृतानां सदाचाराणां सहधर्मचर्यफलार्थिनां गृहाश्रमो विधीयते॥१०८॥धर्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमपे
क्ष्यागर्हितकर्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्मितेन वा अद्भिः सागरगतेन वा द्रव्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा
धनेन गृहस्थो गार्हस्थ्यं वर्तयेत् ॥१०९॥ तद्धि सर्वाश्रमणां मूलमुदाहरंति गुरुकुलनिवासिनः परिव्राजका येऽन्ये संकल्पितव्रतनियमधर्मानुष्ठायिन
स्तेषामप्यंतरा च भिक्षाबलिसंविभागाः प्रवर्तंते ॥११०॥ वानप्रस्थानां च द्रव्योपस्कार इति प्रायशः खल्वेते साधवः साधुपथ्योदनाः स्वाध्यायप्रसं
गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्यटंति ॥ १११ ॥ तेषां प्रत्युत्थानाभिगमनमनसूयावाक्यदानसुखसत्कारासनसुखशयनाभ्यवहारस
त्क्रिया चेति ॥११२॥ भवति चात्र श्लोकः ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ॥ स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ ११३ ॥
अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयंते निवापेन पितरो विद्याभ्यासश्रवणधारणेन ऋषयः अपत्योत्पादनेन प्रजापतिरिति ॥ ११४ ॥ श्लोकौ चात्र
भवतः॥ वात्सल्याः सर्वभूतेभ्यो वायोः श्रोत्रस्तथा गिरा ॥ परितापोपघातश्च पारुष्यं चात्र गर्हितम् ॥११५ ॥अवज्ञानमहंकारो दंभश्चैव विगर्हितः ॥
अहिंसा सत्यमक्रोधं सर्वाश्रमगतं तपः ॥ ११६ ॥ अपि चात्र माल्याभरणवस्त्राभ्यंगनित्योपभोगनृत्यगीतवादित्रश्रुतिसुखनयनस्नेहगमादर्शनानां
प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां विविधानामुपभोगः ॥११७॥ स्वविहारसंतोषः कामसुखावाप्तिरिति॥त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं
गृहाश्रमे॥स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात्॥११८॥उंछवृत्तिर्गृहस्थो यः स्वधर्मचरणे रतः॥त्यक्तकामसुखारंभः स्वर्गस्तस्य न दुर्लभः॥११९॥
वानप्रस्थाः खल्वपि धर्ममनुसरंतः पुण्यानि तीर्थानि नदीप्रस्रवणानि स्वभक्तेष्वरण्येषु मृगवराहमहिषशार्दूलवनगजाकीर्णेषु तपस्यंत अनुसंचरंति
॥१२०॥त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगा वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो भूपाषाणसिकताशर्करावालुकाभस्मशायिनः
काशकुशचर्मवल्कलसंवृतांगाः केशश्मश्रुनखरोमधारिणो नियतकालोपस्पर्शनाः शुष्कबलिहोमकालानुष्ठायिनः॥समित्कुशकुसुमापहारसंमार्जनलब्धवि
श्रामाः शीतोष्णपवनविष्टंभविभिन्नसर्वत्वचो विविधनियमयोगचर्यानुष्ठानविहितपरिशुष्कमांसशोणितत्वगस्थिभूता धृतिपराः सत्त्वयोगाच्छरीरमुद्व







हंते॥१२१॥यस्त्वेतां नियतचर्यां ब्रह्मर्षिविहितां चरेत्॥स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान्॥१२२॥परिव्राजकानां पुनराचारः तद्यथा॥विमुच्याग्निं
धनकलत्रपरिबर्हसंगेष्वात्मानं स्नेहपाशानवधूय परिव्रजंति॥समलोष्टाश्मकांचनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयः॥१२३॥अरिमित्रोदासीनानां तुल्यदर्शनाः
स्थावरजरायुजांडजस्वेदजानां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवायतनान्यनुसंचरंतो वा सार्थमुपेयुर्नगरं ग्रामं
वा न क्रोधदर्पलोभमोहकार्पण्यदंभपरिवादाभिमाननिर्वृत्तहिंसा इति ॥ १२४ ॥ भवंति चात्र श्लोकाः॥ अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ॥
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ १२५ ॥ कृत्वाग्निहोत्रं स्वशरीरसंस्थं शरीरमग्निं स्वमुखे जुहोति ॥ विप्रस्तु भैक्षोपगतैर्हविर्भिश्चिता
ग्निना संव्रजते हि लोकान् ॥ १२६॥ मोक्षाश्रमं यश्चरते यथोक्तं शुचिः स्वसंकल्पितयुक्तबुद्धिः॥ अनिंधनं ज्योतिरिव प्रशांतं स ब्रह्मलोकं श्रयते
द्विजातिः ॥ १२७ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे द्वितीयपादे भृगुभरद्वाजसंवादे ब्राह्मणाचारनिरूपणं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
भरद्वाज उवाच ॥ अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ॥ तमहं ज्ञातुमिच्छामि तद्भवान्वक्तुमर्हति ॥ १ ॥ ॥ भृगुरुवाच ॥ उत्तरे
हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ॥ पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥ २ ॥ तत्र ह्यपापकर्माणः शुचयोऽत्यंतनिर्मलाः ॥ लोभमोह
परित्यक्ता मानवा निरुपद्रवाः ॥ ३ ॥ स स्वर्गसदृशो देशः तत्र ह्युक्ताः शुभा गुणाः ॥ काले मृत्युः प्रभवति स्पृशंति व्याधयो न च ॥ ४ ॥ न
लोभः परदारेषु स्वदारनिरतो जनः ॥ नान्यो हि वध्यते तत्र द्रव्येषु च न विस्मयः ॥ ५ ॥ परो ह्यधर्मो नैवास्ति संदेहो नापि जायते ॥ कृतस्य
तु फलं तत्र प्रत्यक्षमुपलभ्यते ॥ ६ ॥ यानासनाशनोपेता प्रसादभवनाश्रयाः ॥ सर्वकामैर्वृताः केचिद्धेमाभरणभूषिताः ॥ ७ ॥ प्राणधारणमात्रं
तु केषांचिदुपपद्यते ॥ श्रमेण महता केचित्कुर्वंति प्राणधारणम् ॥ ८ ॥ इह धर्मपराः केचित्केचिन्नैष्कृतिका नराः ॥ सुखिता दुःखिताः
केचिन्निर्धना धनिनो परे ॥ ९ ॥ इह श्रमो भयं मोहः क्षुधा तीव्रा च जायते ॥ लोभश्चार्थकृतो नृणां येन मुह्यंत्यपंडिताः ॥ १० ॥ यस्तद्वेद
भयं प्राज्ञः पाप्मना न स लिप्यते ॥ सोपधे निकृतिः स्तेयं परिवादोऽभ्यसूयता ॥ ११ ॥ परोपघातो हिंसा च पैशुन्यमनृतं तथा ॥ एतान्संसेवते
यस्तु तपस्तस्य प्रहीयते ॥ १२ ॥ यस्त्वेतानाचरेद्विद्वान्न तपस्तस्य वर्द्धते ॥ इह चिंता बहुविधा धर्माधर्मस्य कर्मणः ॥ १३ ॥ कर्मभूमि ॥ ७२ ॥
रियं लोके इह कृत्वा शुभाशुभम् ॥ शुभैः शुभमवाप्नोति तथाशुभमथान्यथा ॥ १४ ॥ इह प्रजापतिः पूर्वं देवाः सर्षिगणास्तथा ॥ इष्ट
ष्टतपसः पूता ब्रह्मलोकमुपाश्रिताः ॥ १५ ॥ उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः ॥ इहस्थास्तत्र जायंते ये वै पुण्यकृतो जनाः ॥ १६ ॥

यदि सत्कारमिच्छंति तिर्यग्योनिषु चापरे ॥ क्षीणायुषस्तथा चान्ये नश्यन्ति पृथिवीतले ॥१७॥ अन्योन्यभक्षणासक्ता लोभमोहसमन्विताः ॥
इहैव परिवर्त्तन्ते न च यान्त्युत्तरां दिशम् ॥ १८ ॥ गुरूनुपासते ये तु नियता ब्रह्मचारिणः ॥ पंथानं सर्वलोकानां विजानंति मनीषिणः ॥ १९ ॥
इत्युक्तोऽयं मया धर्मः संक्षिप्तो ब्रह्मनिर्मितः ॥ धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ॥ २० ॥ भरद्वाज उवाच ॥ अध्यात्मं नाम यदिदं
पुरुषस्येह चिन्त्यते ॥ यदध्यात्मं यथा चैतत्तन्मे ब्रूहि तपोधन ॥ २१ ॥ भृगुरुवाच ॥ अध्यात्ममिति विप्रर्षे यदेतदनुपृच्छसि ॥ तद्व्याख्या
स्यामि ते तात श्रेयस्करतमं सुखम् ॥ २२ ॥ सृष्टिप्रलयसंयुक्तमाचार्यैः परिदर्शितम् ॥ यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यं च विंदति ॥२३ ॥
फललाभश्च तस्य स्यात्सर्वभूतहितं च तत् ॥ पृथिवी वायुराकाशमापो ज्योतिश्च पंचमम् ॥ २४ ॥ महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥
यतः सृष्टानि तत्रैव तानि यान्ति लयं पुनः ॥ २५ ॥ महाभूतानि भूतेभ्यः सागरस्योर्मयो यथा ॥ प्रसार्य च यथांगानि कूर्मः संहरते पुनः ॥
॥ २६ ॥ तद्वद् भूतानि भूतात्मा सृष्टानि हरते पुनः ॥ महाभूतानि पंचैव सर्वभूतेषु भूतकृत् ॥२७॥अकरोत्तेषु वै सम्यक् तं तु जीवो न पश्यति ॥
शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजम् ॥ २८ ॥ वायोः स्पर्शस्तथा चेष्टा त्वक्चैव त्रितयं स्मृतम् ॥ रूपं चक्षुस्तथा पाकस्त्रिविधं
तेज उच्यते॥२९॥रसाः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ॥ घ्रेयं घ्राणं शरीरं च एते भूमिगुणास्त्रयः ॥३०॥ महाभूतानि पंचैव षष्ठं च मन
उच्यते ॥ इन्द्रियाणि मनश्चैव विज्ञातान्यस्य भारत ॥३१॥सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ श्रोत्रं वै श्रवणार्थाय स्पर्शनाय च त्वक् स्मृता
॥३२ ॥ रसादानाय रसना गन्धादानाय नासिका ॥ चक्षुरालोकनायैव संशयं कुरुते मनः ॥३३॥ बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत्स्थितः ॥उर्द्ध्वं
पादतलाभ्यां यदवाक्चोदक्च पश्यति॥३४॥एतेन सर्वमेवेदं विभुना व्याप्तमन्तरम्॥ पुरुषैरिंद्रियाणीह वेदितव्यानि कृत्स्नशः॥३५॥तमो रजश्च सत्त्वं
च तेऽपि भावास्तदाश्रिताः ॥ एतां बुद्धिं नरो बुद्ध्वा भूतानामगतिं गतिम् ॥३६॥समवेक्ष्य शनैश्चैवं लभते शममुत्तमम्॥गुणैर्विनश्यते बुद्धिर्बुद्धेरेवेंद्रिया
ण्यपि ॥ ३७ ॥ मनःषष्ठानि भूतानि बुद्ध्यभावे कुतो गुणाः ॥ इति तन्मयमेवैतत्सर्वं स्थावरजंगमम् ॥ ३८ ॥ प्रलीयते चोद्भवति तस्मान्निर्दिश्यते
तथा ॥ येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥ ३९ ॥ जिघ्रति घ्राणमित्याहुः रसं जानाति जिह्वया ॥ त्वचा स्पर्शयति स्पर्शं बुद्धिर्विक्रियते
सकृत् ॥ ४० ॥ येन प्रार्थयते किंचित्तदा भवति तन्मनः ॥ अधिष्ठानात्तु बुद्धेर्हि पृथगर्थानि पंचधा ॥ ४१ ॥ इंद्रियाणीति तान्याहुस्तान्यदृश्यो
ऽधितिष्ठति ॥ पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्तते ॥४२॥ कदाचिल्लभते प्रीतिं कदाचिदनुशोचति॥न सुखेन न दुःखेन कदाचिदपि वर्तते ॥४३॥

एवं नराणां मनसि त्रिषु भावेषु वर्तते ॥ सेयं भावात्मिका भावांस्त्रीनेताननिवर्तते ॥ ४४ ॥ सरितां सागरो भर्ता वेलानामिव वारिधिः ॥ अतिभा
वगता बुद्धिर्भावैर्मनसि वर्तते ॥ ४५ ॥ वर्तमानो मुनिस्त्वेवं स्वभावमनुवर्तते ॥ इंद्रियाणि हि सर्वाणि प्रवर्तयति सा सदा ॥ ४६ ॥ प्रीतिः सत्त्वं रजः
शोकस्तमः क्रोधस्तु ते त्रयः॥ये ये च भावा लोकेऽस्मिन्सर्वे ष्वेतेषु वै त्रिषु॥४७॥इति बुद्धिगताः सर्वा व्याख्यातास्तव भावनाः॥इंद्रियाणि च सर्वाणि
विजेतव्यानि धीमता॥४८॥सत्त्वं रजस्तमश्चैव प्राणिनां संश्रिताः सदा॥त्रिविधा वेदनाश्चैव सर्वसत्त्वेषु दृश्यते ॥४९॥ सात्त्विकी राजसी चैव तामसी
चेति मानद॥सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः॥५०॥तमोगुणेन संयुक्तौ भवतो व्यावहारिकौ॥तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्॥५१॥
वर्तते सात्त्विको भाव इत्याचक्षीत तत्तथा॥अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः॥५२॥प्रवृत्तं रज इत्येव जानीहि मुनिसत्तम॥अथयन्मोहसंयुक्तमव्यक्त
विषयं भवेत् ॥ ५३ ॥ अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ प्रहर्षः प्रीतिरानंदः सुखं वा शान्तचित्तता॥५४॥कथंचिदभिवर्तन्त इत्येते सात्त्विका
गुणाः॥अतुष्टिः परितापश्च शोको लोभस्तथा क्षमा ॥ ५५ ॥ लिंगानि रजसस्तानि दृश्यंते देहहेतुभिः ॥ अपमानस्तथा मोहः प्रमादः स्वप्नतंद्रिते
॥ ५६ ॥ कथंचिदभिवर्तंते विविधास्तामसा गुणाः ॥ दूषणं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ५७ ॥ मनः स्वनियतं यस्य स [illegible] सुखी प्रेत्य
चेह च ॥ सत्त्वक्षेत्रज्ञयोरेतदन्तरं यस्य सूक्ष्मयोः ॥ ५८ ॥ सृजतेहि गुणानेक एको न सृजते गुणान् ॥ [illegible] मशकावुदुंबरो चापि संप्रयुक्तौ यथा सदा ॥
॥ ५९ ॥ अन्योन्यमेतौ स्यातां च सप्रयोगस्तथोभयोः ॥ पृथग्भूता प्रकृत्या तौ सप्रयुक्तौ च सर्वदा ॥ ६० ॥ यथा मत्स्यो जलं चैव संप्रयुक्तो
तथैव तौ ॥ न गुणा विदुरात्मानं स गुणान्वेत्ति सर्वशः ॥ ६१ ॥ परिद्रष्टा गुणानां तु संस्रष्टा मन्यते तथा ॥ इन्द्रियस्तु प्रदीपार्थं कुरुते बुद्धि
सत्तमैः ॥ ६२ ॥ निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवान् ॥ सृजते हि गुणान्सत्त्वं क्षेत्रज्ञः परिपश्यति ॥ ६३ ॥ संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रु
वम् ॥ आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन ॥ ६४ ॥ सत्त्वं मनः संसृजते न गुणान्वै कदाचन ॥ रश्मींस्तेषां स मनसा यदा सम्यङ्नियं
च्छति ॥ ६५ ॥ तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव॥त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ॥ ६६ ॥ सर्वभूतात्मभूस्तस्मात्स गच्छे
दुत्तमां गतिम् ॥ यथा वारिचरः पक्षी सलिलेन न लिप्यते ॥ ६७ ॥ एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ॥ एवं स्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः ॥
॥ ६८ ॥ अशोचन्नप्रहृष्यंश्च समो विगतमत्सरः ॥ [illegible] भावयुक्त्या प्रयुक्तस्तु स नित्यं सृजते गुणान् ॥ ६९ ॥ ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तंतुव
द्गुणाः ॥ [illegible] ॥ [illegible] न निवर्तंते निवृत्तिर्नोपलभ्यते ॥ ७० ॥ प्रत्यक्षेण परोक्षं तदनुमानेन सिद्ध्यति ॥ एवमेके व्यवस्यंति निवृत्तिरिति चापरे ॥७१॥

उभयं संप्रधार्यैतद्व्यवस्येत यथामति ॥ इतीमं हृदयग्रंथिं बुद्धिचिन्तामयं दृढम् ॥ ७२ ॥ विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥
मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः ॥७३॥ अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ महानद्या हि पारज्ञस्तप्यते न तरन्यथा॥७४॥
न तु तप्यति तत्त्वज्ञः कुलज्ञस्तु तरत्युत ॥ एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमम् ॥ ७५ ॥ एवं बुद्ध्वा नरः सर्वो भूतानामगतिं गतिम् ॥ अवेक्ष्य
च शनैर्बुद्ध्या लभते च शमं ततः ॥ ७६ ॥ त्रिवर्गो यस्य विदितः प्रेक्ष्य यश्च विमुंचति ॥ अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ७७॥
न चात्मा शक्यते द्रष्टुमिंद्रियेषु विभागशः ॥ तत्र तत्र विसृष्टेषु दुर्वापेष्वकृतात्मभिः॥७८॥एतद् बुद्ध्वा भवेद् बुद्धः किमन्यद् बुद्धलक्षणम् ॥विज्ञाय
तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥७९॥ न भवति विदुषां ततो भयं यदविदुषां सुमहद्भयं भवेत् ॥ नहि गतिरधिकास्ति कस्यचित्सति हि गुणे
प्रवदत्यतुल्यताम्॥८०॥यः करोत्यनभिसंधिपूर्वकं तच्च निर्दहति यत्पुराकृतम्॥नाप्रियं तदुभयं कुतः प्रियं तस्य तज्जनयतीह कुर्वतः॥८१॥ लोकमातुर
भिसूयते जनस्तस्य तज्जनयतीह कुर्वतः ॥ तत्र पश्य कुशलान्न शोचते जायते यदि भयं पदं सदा ॥८२ ॥ भरद्वाज उवाच॥ध्यानयोगं समाचक्ष्व
मह्यं तत्पदसिद्धये ॥ यज्ज्ञात्वा मुच्यते मर्त्यस्त्रिविधतापतः ॥ ८३ ॥ भृगुरुवाच॥ हंत ते संप्रवक्ष्यामि ज्ञानयोगं चतुर्विधम्॥ यं ज्ञात्वा शाश्वतीं
सिद्धिं गच्छन्तीह महर्षयः ॥ ८४ ॥ यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ॥ महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥ ८५ ॥ नावर्तंते पुन
श्चापि मुक्ताः संसारदोषतः ॥ जन्मदोषपरिक्षीणाः स्वभावे पर्यवस्थिताः ॥ ८६ ॥ निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्ता निष्परिग्रहाः ॥ असंगान्य
विवादीनि मनःशांतिकराणि च ॥ ८७ ॥ तत्र ध्यानेन संक्लिष्टमेकाग्रं धारयेन्मनः ॥ पिंडीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ॥ ८८ ॥
शब्दं न विंदेच्छ्रोत्रेण त्वचा स्पर्शं न वेदयेत् ॥ रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा ॥ ८९ ॥ घ्रेयाण्यपि च सर्वाणि जह्याद्ध्यानेन तत्त्व
वित् ॥ पंचवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ॥ ९० ॥ ततो मनसि संगृह्य पंचवर्गं विचक्षणः ॥ समादध्यान्मनो भ्रांतमिंद्रियैः सह पञ्चभिः ॥
॥ ९१ ॥ विसञ्चारि निरालम्बं पंचद्वारं चलाचलम् ॥ पूर्वे ध्यानपथे धीरः समादध्यान्मनस्त्वरा ॥ ९२ ॥ इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्य
यम् ॥ एष ध्यानपथः पूर्वो मया समनुवर्णितः ॥ ९३ ॥ तस्य तत्पूर्वसंरुद्ध आत्मपष्ठमनंतरम्॥ [illegible] समुद्भ्रांता विद्युदम्बुधरे यथा ॥ ९४ ॥
जलबिंदुर्यथा लोलः पर्णस्थः सर्वतश्चलः ॥ एवमेवास्य चित्तं च भवति ध्यानवर्त्मनि ॥ ९५ ॥ समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति ॥
पुनर्वायुपथं भ्रांतं मनो भवति वायुवत् ॥ ९६ ॥ अनिर्वेदो गतक्लेशो गततंद्रो ह्यमत्सरी ॥ समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥ ९७ ॥





विचारश्च वितर्कश्च विवेकश्चोपजायते ॥मुनेः समाधियुक्तस्य प्रथमं ध्यानमादितः ॥ ९८ ॥ मनसा क्लिश्यमानस्तु समाधानं च कारयेत् ॥
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् ॥ ९९ ॥ पांशुभस्मकरीषाणां यथा वै राशयश्चिताः ॥ सहसा वारिणा सिक्ता न यांति परिभावनाः ॥
॥१००॥ किंचित् स्निग्धं यथा च स्याच्छुष्कं चूर्णमभावितम् ॥ क्रमेण तु शनैर्गच्छेत्सर्वं तत्परिभावनम् ॥ १०१॥एवमेवेन्द्रियग्रामं शनैः शं पारि
भावयेत् ॥ संहरेत्क्रमशश्चैव सम्यक् तत्प्रशमिष्यति ॥१०२ ॥ स्वयमेव मनश्चैवं पंचवर्गं मुनीश्वर ॥पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति॥
॥१०३॥ न तत्पुरुषकारेण न च दैवेन केनचित् ॥ सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ॥ १०४ ॥ सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि ॥
गच्छंति योगिनो ह्येवं निर्वाणं तु निरामयम् ॥ १०५ ॥ सनंदन उवाच ॥ इत्युक्तो भृगुणा ब्रह्मन्भरद्वाजः प्रतापवान् ॥ भृगुं परमधर्मात्मा
विस्मितः प्रत्यपूजयत्॥१०६॥एष ते प्रसवो विद्वन् जगतः संप्रकीर्तितः॥निखिलेन महाप्राज्ञ किं भूयःश्रोतुमिच्छसि॥१०७॥इति श्रीबृहन्नारदीयपुराणे
द्वितीयपादे चतुश्चत्वारिंशत्तमोऽध्यायः ॥४४॥ सूत उवाच ॥ सनंदनवचः श्रुत्वा मोक्षधर्माश्रितं द्विजाः ॥ पुनः पप्रच्छ तत्त्वज्ञो नारदोऽध्यात्म
सत्कथाम् ॥ १ ॥ नारद उवाच ॥ श्रुतं मया महाभाग मोक्षशास्त्रं त्वयोदितम् ॥ न च मे जायते तृप्तिर्भूयोभूयोऽपि शृण्वतः ॥२ ॥ यथा संमुच्यते
जंतुरविद्याबंधनान्मुने ॥ तथा कथय सर्वज्ञ मोक्षधर्मं सदाश्रितम् ॥ ३ ॥ सनंदन उवाच ॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ यथा मोक्षमनु
प्राप्तो जनको मिथिलाधिपः ॥ ४ ॥ जनको जनदेवस्तु मिथिलाया अधीश्वरः ॥ और्ध्वदेहिकधर्माणामासीद्युक्तो विचिंतने ॥ ५ ॥ तस्य श्मशान
माचार्या वसति सततं गृहे ॥ दर्शयंतः पृथग्धर्मान्नानापाषंडवादिनः ॥ ६ ॥ स तेषां प्रेत्यभावे च प्रेत्य जातौ विनिश्चये आगमस्थः स भूयिष्ठ
मात्मतत्त्वेन तुष्यति ॥ ७ ॥ तत्र पंचशिखो नाम कापिलेयो महामुनिः ॥ परिधावन्महीं कृत्स्नां जगाम मिथिलामथ ॥ ८ ॥ सर्वसंन्यासधर्माणां
तत्त्वज्ञानविनिश्चये ॥ सुपर्यवसितार्थश्च निर्द्वंद्वो नष्टसंशयः ॥ ९ ॥ ऋषीणामाहुरेकं यं कामादवसितं नृषु ॥ शाश्वतं सुखमत्यंतमन्विच्छन्स सुदु
र्लभम्॥१०॥ यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्॥स मन्ये तेन रूपेण विस्मापयति हि स्वयम्॥११॥ आसुरेः प्रथमं शिष्यं यमाहुश्चिरजी
विनम्॥पंचस्रोतसि यः सत्रमास्ते वर्षसहस्रकम्॥१२॥पंचस्रोतसमागम्य कापिलं मंडलं महत्॥पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत्॥१३॥इष्टिमंत्रेण ॥ ७४ ॥
संयुक्तो भूयश्च तपसासुरिः॥क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं विबुधे देहदर्शनः॥१४॥यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते॥आसुरिर्मंडले तस्मिन्प्रतिपेदे तमव्ययम्॥
॥ १५ ॥ तस्य पंचशिखः शिष्यो मानुष्या पयसा भृतः ॥ ब्राह्मणी कपिली नाम काचिदासीत्कुटुम्बिनी ॥१६॥ तस्याः पुत्रत्वमागत्य स्त्रियाः स

*पिवति स्तनौ ॥ ततश्च कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् ॥१७॥*एतन्मे भगवानाह कापिलेयस्य संभवम् ॥ तस्य तत्कापिलेयत्वं सर्ववित्त्वमनु
त्तमम् ॥ १८ ॥ सामात्यो जनको ज्ञात्वा धर्मज्ञो ज्ञानिनं मुने ॥ उपेत्य शतमाचार्यान्मोहयामास हेतुभिः ॥ १९ ॥ जनकस्त्वभिसंरक्तः कापि
लेयानुदर्शनम् ॥ उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम्॥२० ॥तस्मै परमकल्याणं प्रणताय च धर्मतः॥ अब्रवीत्परमं मोक्षं यत्तत्सांख्यं विधी
यते ॥ २१ ॥ जातिनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत् ॥ कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् ॥२२ ॥ यदर्थं धर्मसंसर्गः कर्मणां च फलोदयः॥
तमनाश्वासिकं मोहं विनाशि चलमध्रुवम् ॥२३ ॥ दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ॥आगमात्परमस्तीति ब्रुवन्नपि पराजितः ॥ २४ ॥
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः ॥ आत्मानं मन्यते मोहात्तदसम्यक् परं मतम् ॥२५॥अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ॥अज
रोऽयममृत्युश्च राजासौ मन्यते यथा॥ २६ ॥ अस्ति नास्तीति चाप्येतत्तस्मिन्नसितलक्षणे ॥ किमधिष्ठाय तद् ब्रूयाल्लोकयात्राविनिश्चयम् ॥ २७ ॥
प्रत्यक्षं ह्येतयोर्मूलं कृतांत ह्येतयोरपि ॥ प्रत्यक्षो ह्यागमो भिन्नः कृतांतो वा न किंचन ॥ २८ ॥ यत्र तत्रानुमानेऽस्मिन्कृतं भावयतेऽपि च॥ अन्यो
जीवः शरीरस्य नास्तिकानां मते स्थितः॥ २९ ॥ रेतोवटकणीकायां घृतपाकाधिवासनम् ॥ जातिस्मृतिरयस्कांतः सूर्यकांतोंऽबुभक्षणम् ॥ ३० ॥
प्रेतभूतप्रियश्चैव देवता ह्युपयाचनम् ॥ मृतकर्मनिवृत्तिं च प्रमाणमिति निश्चयः ॥ ३१ ॥ नन्वेते हेतवः संति ये केचिन्मूर्तिसंस्थिताः ॥ अमू
र्तस्य हि मूर्तेन सामान्यं नोपलभ्यते ॥ ३२ ॥ अविद्या कर्म तृष्णा च केचिदाहुः पुनर्भवम् ॥ तस्मिन्नष्टे च दग्धे च चित्ते मरणधर्मिणि॥३३॥
अन्योऽस्माज्जायते मोहस्तमाहुः सत्त्वसंक्षयम् ॥ यदा सरूपतश्चान्यो जातितः श्रुततोऽर्थतः॥ ३४ ॥कथमस्मिन्स इत्येव संबंधः स्यादसंहितः ॥
एवं सति च का प्रीतिर्ज्ञानविद्यातपोबलैः ॥ ३५ ॥ यदस्याचरितं कर्म सामान्यात्प्रतिपद्यते ॥ अपि त्वयमिहैवान्यैः प्राकृतैर्दुःखितो भवेत् ॥३६॥
सुखितो दुःखितो वापि दृश्यादृश्यविनिर्णयः ॥ यथा हि मुशलैर्हन्युः शरीरं तत्पुनर्भवेत् ॥ ३७ ॥ वृथा ज्ञानं यदन्यच्च येनैतन्नोपलभ्यते ॥ ऋम
संवत्सरौ तिष्यः शीतोष्णोऽथ प्रियाप्रिये ॥ ३८ ॥ यथा तातानि पश्यति तादृशः सत्त्वसंक्षयः॥ जरयाभिपरीतस्य मृत्युना च विनाशितम् ॥३९॥
दुर्वलं दुर्वलं पूर्वं गृहस्येव विनश्यति ॥ इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ॥४०॥आनुपूर्व्यां विनश्यंति स्वं धातुमुपयाति च॥ लोक
यात्राविघातश्च दानधर्मफलागमे ॥ ४१ ॥ तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ इति सम्यङ् मनस्येते वहवः संति हेतवः ॥ ४२ ॥ एत
दस्तीति नास्तीति न कश्चित्प्रतिदृश्यते ॥ तेषां विमृशतामेव तत्सम्यगभिधावताम् ॥ ४३ ॥ क्वचिन्निवसते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ एवतु

थैरनर्थैश्च दुःखिताः सर्वजंतवः ॥ ४४ ॥ आगमैरपकृष्यंते हस्तिपैर्हस्तिनो यथा ॥ ४५ ॥ अर्थास्तथा हंति सुखावहांश्च लिहत एते बहवोपशुष्काः ॥ महत्तरं दुःखमभिप्रपन्ना हित्वामिषं मृत्युवशं प्रयांति॥४६॥ विनाशिनो ह्यध्रुवजीविनः किं किं बंधुभिर्मित्रपरिग्रहैश्च ॥ विहाय यो गच्छति सर्वमेव क्षणेन गत्वा न निवर्तते च ॥ ४७ ॥ भूव्योमतोयानलवायवोऽपि सदा शरीरं प्रतिपालयंति ॥ इतीदमालक्ष्य रतिः कुतो भवेद्विनाशिनाप्यस्य न शर्म विद्यते ॥ ४८ ॥ इदमनुपधिवाक्यमच्छलं परमनिरामयमात्मसाक्षिकम् ॥ नरपतिरभिवीक्ष्य विस्मितः पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ४९ ॥ जनक उवाच ॥ भगवन्यदि न प्रेत्य संज्ञा भवति कस्यचित् ॥ एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ ५० ॥ सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम॥अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति॥५१॥असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु॥कस्मै क्रियत कल्पेत निश्चयः कोऽत्र तत्त्वतः॥५२॥सनंदन उवाच ॥ तमसा हि मतिच्छन्नं विभ्रांतमिव चातुरम् ॥ पुनः प्रशमयन्वाक्यैः कविः पंचशिखोऽब्रवीत्॥५३॥ पंचशिख उवाच ॥ उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ॥ अयं ह्यपि समाहारः शरीरेंद्रियचेतसाम् ॥५४ ॥ वर्तते पृथगन्योन्यमप्युपाश्रित्य कर्मसु॥ धातवः पंचधा तोयं खे वायुर्ज्योतिषो धरा ॥ ५५ ॥ तेषु भावेन तिष्ठंति वियुज्यंते स्वभावतः ॥ आकाशं वायुरूष्मा च स्नेहो यश्चापि पार्थिवः ॥ ५६ ॥ एष पञ्चसमाहारः शरीरमपि नैकधा ॥ ज्ञानमूष्मा च वायुश्च त्रिविधः कायसंग्रहः॥ ५७ ॥ इंद्रियाणींद्रियार्थाश्च स्वभावश्चेतना मनः ॥ ॥ प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ॥ ५८ ॥ श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च॥इंद्रियाणीति पंचैते चित्तपूर्वंगमा गुणाः॥ ॥ ५९ ॥ तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा ॥ सुखदुःखेति यामाहुरदुःखासुखेति च ॥ ६० ॥ शब्दः स्पर्शश्च रूपं च मूर्त्यर्थमेव ते त्रयः ॥ एते ह्यामरणात्पंच सद्गुणा ज्ञानसिद्धये ॥ ६१ ॥ तेषु कर्माणि सिद्धिश्च सर्वतत्त्वार्थनिश्चयः ॥ तमाहुः परमं शुद्धं बुद्धिरित्यव्ययं महत्॥६२॥ इमं गुणसमाहारमात्मभावेन पश्यतः ॥ असम्यग्दर्शनैर्दुःखमनंतं नोपशाम्यति ॥ ६३ ॥ अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि ॥ वर्तते किमधिष्ठानात्प्रसक्ता दुःखसंततिः ॥ ६४॥ तत्र सम्यग्जनो नाम त्यागशास्त्रमनुत्तमम् ॥ शृणुयात्तच्च मोक्षाय भाष्यमाणं भविष्यति ॥६५॥त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम् ॥ नित्यं मिथ्याविनीतानां क्लेशो दुःखावहो मतः ॥ ६६ ॥ द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतानि च ॥ सुख त्यागे तपो योगं सर्वत्यागे समापना ॥ ६७ ॥ तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः ॥ विप्रहाणाय दुःखस्य दुर्गतिर्हि तथा भवेत् ॥ ६८ ॥ पंच ज्ञानेंद्रियाण्युक्ता मनःषष्ठानि चेतसि ॥ बलषष्ठानि वक्ष्यामि पंच कर्मेंद्रियाणि तु ॥ ६९ ॥ हस्तौ कर्मेंद्रियं ज्ञेयमथ पादौ गतींद्रियम् ॥ प्रज

नानंदयोमेढ्रो विसर्गो पायुरिंद्रियम् ॥ ७० ॥ वाक्च शब्दविशेषार्थमिति पंचान्वितं विदुः ॥ एवमेकादशैतानि बुद्ध्या त्ववसृजन्मनः ॥ ७१ ॥ कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसंग्रहे ॥ तथा स्पर्शे तथा रूपे तथैव रसगंधयोः ॥ ७२ ॥ एवं पंच त्रिका ह्येते गुणस्तदुपलब्धये ॥ येनायं त्रिविधो भावः पर्यायात्समुपस्थितः ॥ ७३ ॥ सात्त्विको राजसश्चापि तामसश्चापि ते त्रयः ॥ त्रिविधा वेदना येषु प्रसृता सर्वसाधिनी ॥ ७४ ॥ प्रहर्षः प्रीतिरानंदः सुखं संशान्तचित्तता ॥ अकुतश्चित्कुतश्चिद्वा चित्ततः सात्त्विको गुणः ॥ ७५ ॥ अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ॥ लिंगानि रजसस्तानि दृश्यंते हेत्वहेतुतः ॥ ७६ ॥ अविवेकस्तथा मोहः प्रमादः स्वप्नतंद्रिता ॥ कथंचिदपि वर्तंते विविधास्तामसा गुणाः ॥७७ ॥ इमां च यो वेद विमोक्षबुद्धिमात्मानमन्विच्छति चाप्रमत्तः ॥ न लिप्यते कर्मफलैरनिष्टैः पत्रं विषस्येव जलेन सिक्तम् ॥ ७८ ॥ दृढैर्हि पाशैर्विविधैर्विमुक्तः प्रजानिमित्तैरपि दैवतैश्च ॥ यदा ह्यसौ दुःखसौख्ये जहाति मुक्तस्तदाऽग्र्यां गतिमेत्यलिंगः ॥ ७९ ॥ श्रुतिप्रमाणागममंगलैश्च शेते जरामृत्युभयादतीतः ॥ क्षीणे च पुण्ये विगते च पापे तनोर्निमित्ते च फले विनष्टे ॥ ८० ॥ अलेपमाकाशमलिंगमेवमास्थाय पश्यंति महत्यशक्ता ॥ यथोर्णनाभिः परिवर्तमानस्तंतुक्षये तिष्ठति यात्यमानः ॥ ८१ ॥ तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्टमिवादिमृच्छन् ॥ यथा रुरुः शृंगमथो पुराणं हित्वा त्वचं वाप्युरगो यथा च ॥ ८२ ॥ विहाय गच्छन्ननवेक्षमाणस्तथा विमुक्तो विजहाति दुःखम् ॥ मत्स्यं यथा वाप्युदके पतंतमुत्सृज्य पक्षी निपतत्यशक्तः ॥ ८३ ॥ तथा ह्यसौ दुःखसौख्ये विहाय मुक्तः परार्द्ध्यां गतिमेत्यलिंगः ॥८४॥ इदममृतपदं निशम्य राजा स्वयमिह पंचशिखेन भाष्यमाणम् ॥ निखिलमभिसमीक्ष्य निश्चितार्थः परमसुखी विजहार वीतशोकः ॥८५॥ अपि च भवति मैथिलेन गीतं नगरमुपाहितमग्निनाभिवीक्ष्य ॥ न खलु मम हि दह्यतेऽत्र किंचित्स्वयमिदमाह किल स्म भूमिपालः ॥८६॥ इमं हि यः पठति विमोक्षनिश्चयं महामुने सततमवेक्षते तथा ॥ उपद्रवाननुभवते ह्यदुःखितः प्रमुच्यते कपिलमिवैत्य मैथिलः ॥८७॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे पञ्चचत्वारिंशत्तमोऽध्यायः ॥४५॥ सूत उवाच ॥ तच्छ्रुत्वा नारदो विप्रा मैथिलाध्यात्ममुत्तमम् ॥ पुनः पप्रच्छ तं प्रीत्या सनंदनमुदारधीः ॥ १ ॥ नारद उवाच ॥ आध्यात्मिकादित्रिविधं तापं नानुभवेद्यथा ॥ प्रब्रूहि तन्मुने मह्यं प्रपन्नाय दयानिधे ॥२॥ सनंदन उवाच ॥ तदस्य त्रिविधं दुःखमिह जातस्य पंडित ॥ गर्भे जन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥३॥ निरस्तातिशयाह्लादसुखभावैकलक्षणा ॥ भेषजं भगवत्प्राप्तिरेका चात्यंतिकी मता ॥४॥ तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पंडितैर्नरैः ॥ तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥ ५ ॥ आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥ शब्दब्रह्मागममयं परं ब्रह्म

विवेकजम् ॥ ६ ॥ मनुरप्याह वेदार्थं स्मृत्वायं मुनिसत्तमः ॥ तदेतच्छ्रूयतामत्र सुबोधं गदतो मम ॥ ७ ॥ द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च
यत् ॥ शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥८॥ द्वे विद्ये वेदितव्ये चेत्याह चाथर्वणी श्रुतिः ॥ परमा त्वक्षरप्राप्तिर्ऋग्वेदादिमया परा॥ ९॥
यत्तदव्यक्तमजरमनीहमजमव्ययम् ॥ अनिर्देश्यमरूपं च पाणिपादादिसंयुतम् ॥१०॥ विभुं सर्वगतं नित्यं भूतयोनिमकारणम् ॥ व्याप्यं व्याप्तं यतः
सर्वं तं वै पश्यंति सूरयः ॥११॥ तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकांक्षिभिः ॥ श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्॥१२॥ तदेव भगवद्वाच्यं
स्वरूपं परमात्मनः ॥ वाचको भगवच्छब्दस्तस्योद्दिष्टोऽक्षयात्मनः ॥ १३ ॥ एवं निगदितार्थस्य यत्तत्वं तस्य तत्त्वतः ॥ ज्ञायते येन तज्ज्ञानं परमन्य
त्त्रयीमयम् ॥ १४ ॥ अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज॥पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः॥१५॥ शुद्धे महाविभूत्याख्ये परे ब्रह्मणि
वर्त्तते ॥भगवन्भगवच्छब्दः सर्वकारणकारणे॥ १६॥ज्ञेयं ज्ञातेति तथा भकारोऽर्थद्वयात्मकः॥तेनागमयिता स्रष्टा गकारोऽयं तथा मुने॥ १६ ॥ ऐश्व
र्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ १७ ॥ वसंति तत्र भूतानि भूतात्मन्यखिलात्मनि ॥ सर्वभूते
ष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ १८ ॥ एवमेव महाशब्दो भगवानिति सत्तम ॥ परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ १९ ॥ तत्र पूज्यपदार्थोक्तिः
परिभाषासमन्वितः ॥ शब्दोऽयं नोपचारेण चान्यत्र ह्युपचारतः ॥ २० ॥ उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ वेत्ति विद्यामविद्यां च
स वाच्यो भगवानिति ॥ २१ ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ २२ ॥ सर्वाणि तत्र भूतानि
वसंति परमात्मनि ॥ भूतेषु वसनादेव वासुदेवस्ततः स्मृतः ॥ २३ ॥ खांडिक्यं जनकं प्राह पृष्टः केशिध्वजः पुरा ॥ नामव्याख्यामनंतस्य वासुदेवस्य
तत्त्वतः॥२४॥भूतेषु वसते सोंऽतर्वसंत्यत्र च तानि यत्॥धाता विधाता जगतां वासुदेवस्ततः प्रभुः॥२५॥स सर्वभूतप्रकृतिं विकारं गुणादिदोषांश्च मुने
व्यतीतः ॥ अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनांतरालम् ॥ २६ ॥ समस्तकल्याणगुणं गुणात्मको हित्वातिदुःखावृतभूतसर्गः ॥ इच्छागृही
ताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ २७ ॥ तेजोबलैश्वर्यमहावबोधं स्ववीर्यशक्त्यादिगुणैकराशिः ॥ परः पराणां सकला न यत्र
क्लेशादयः संति परावरेशे ॥ २८ ॥ स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ॥ सर्वेश्वरः सर्वनिसर्गवेत्ता समस्तशक्तिः पर
मेश्वराख्यः ॥ २९ ॥ स ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेव रूपम् ॥ संदृश्यते चाप्यवगम्यते च तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ ३० ॥
स्वाध्यायसंयमाभ्यां स दृश्यते पुरुषोत्तमः ॥ तत्प्राप्तिकारणं ब्रह्म तदेतत्प्रतिपद्यते ॥ ३१ ॥ स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् ॥

स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥ ३२ ॥ तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथापरम् ॥ न मांसचक्षुषा द्रष्टुं ब्रह्मभूतः स शक्यते ॥ ३३ ॥
॥ नारद उवाच ॥ भगवंस्तमहं योगं ज्ञातुमिच्छामि तं वद ॥ ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम् ॥ ३४ ॥ सनंदन उवाच ॥ केशिध्वजो
यथा प्राह खांडिक्याय महात्मने ॥ जनकाय पुरा योगं तथाहं कथयामि ते ॥ ३५ ॥ नारद उवाच ॥ खांडिक्यः कोऽभवद्ब्रह्मन्को वा केशिध्वजो
ऽभवत् ॥ कथं तयोश्च संवादो योगसंबन्धवानभूत् ॥ ३६ ॥ सनंदन उवाच ॥ धर्मध्वजो वै जनकस्तस्य पुत्रोऽमितध्वजः ॥ कृतध्वजोऽस्य भ्राताभू
त्सदाध्यात्मरतिर्नृपः ॥ ३७ ॥ कृतध्वजस्य पुत्रोऽभूद्धन्यः केशिध्वजो द्विजः ॥ पुत्रोऽमितध्वजस्यापि खांडिक्यजनकाभिधः ॥ ३७ ॥ कर्ममार्गे हि
खांडिक्यः स्वराज्यादवरोपितः ॥ पुरोधसा मंत्रिभिश्च समवेतोऽल्पसाधनः ॥ ३८ ॥ राज्यान्निराकृतः सोऽथ दुर्गारण्यचरोऽभवत् ॥ इयाज सोऽपि
सुबहून यज्ञाञ्ज्ञानव्यपाश्रयः ॥ ३९ ॥ ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमपि स्वयम् ॥ एकदा वर्तमानस्य यागे योगविदां वर ॥ ४० ॥ तस्य धेनुं
जघानोग्रः शार्दूलो विजने वने ॥ ततो राजा हतां ज्ञात्वा धेनुं व्याघ्रेण चर्त्विजः ॥ ४१ ॥ प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयताम् ॥ ते चोचुर्नवयंविद्मः
कशेरुः पृच्छ्यतामिति ॥ ४२ ॥ कशेरुरपि तेनोक्तस्तथेति प्राह नारद ॥ शुनकं पृच्छ राजेन्द्र नाहं वेद स वेत्स्यति ॥ ४३ ॥ स गत्वा तमपृ
च्छच्च सोऽप्याह नृपतिं मुने ॥ न कशेरुर्नचैवाहं न चान्यः सांप्रतं भुवि ॥ ४४ ॥ वेत्त्येक एव त्वच्छत्रुः खांडिक्यो यो जितस्त्वया ॥ स चाह तं
व्रजाम्येष प्रष्टुमात्मरिपुं मुने ॥ ४५ ॥ प्राप्त एव मया यज्ञे यदि मां स हनिष्यति ॥ प्रायश्चित्तं स चेत्पृष्टो वदिष्यति रिपुर्मम ॥ ४६ ॥ ततश्चावि
कलो योगो मुनिश्रेष्ठ भविष्यति ॥ इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः ॥ ४७ ॥ वनं जगाम यत्रास्ते खांडिक्यः स महीपतिः ॥ तमायांतं
समालोक्य खांडिक्यो रिपुमात्मनः ॥ ४८ ॥ प्रोवाच क्रोधताम्राक्षः समारोपितकार्मुकः ॥ खांडिक्य उवाच ॥ कृष्णाजिनत्वक्कवचभावेनास्मान्हनि
ष्यसि ॥ ४९ ॥ कृष्णाजिनधरे वेत्सि न मयि प्रहरिष्यति ॥ मृगानां वद पृष्ठेषु मूढ कृष्णाजिनं न किम् ॥ ५० ॥ येषां मत्वा वृथा चोग्राः प्रहिताः
शितसायकाः ॥ स त्वामहं हनिष्यामि न मे जीवन्विमोक्ष्यसे ॥ ५१ ॥ आततायस्यसि दुर्बुद्धे मम राज्यहरो रिपुः ॥ केशिध्वज उवाच ॥ खांडिक्य संशयं
प्रष्टुं भवंतमहमागतः ॥ ५२ ॥ न त्वां हंतुं विचार्यैतत्कोपं बाणं च मुंच वा ॥ ततः स मंत्रिभिः सार्द्धमेकांते सपुरोहितः ॥ ५३ ॥ मंत्रयामास
खांडिक्यः सर्वैरेव महामतिः ॥ तमूचुर्मंत्रिणो वध्यो रिपुरेष वशंगतः ॥ ५४ ॥ हतेऽत्र पृथिवी सर्वा तव वश्या भविष्यति ॥ खांडिक्यश्चाह तान्सर्वानेव

 मेव न संशयः॥५५॥हते तु पृथिवी सर्वा मम वश्या भविष्यति ॥ परलोकजयस्तस्य पृथिवी सकला मम ॥ ५६ ॥ न हन्मि चेल्लोकजयो मम 
॥ ७१ ॥ वयत्वसुंधरा ॥ परलोकजयोऽनंतः स्वल्पकालो महीजयः ॥५७॥ तस्मान्नैनं हनिष्येऽहं यत्पृच्छति वदामि तत् ॥ ततस्तमभ्युपेत्याह खांडिक्यो
जनको रिपुम् ॥५८॥ प्रष्टव्यं यत्त्वया सर्वं तत्पृच्छ त्वं वदाम्यहम् ॥ ततः प्राह यथावृत्तं होमधेनुवधं मुने ॥५९॥ ततश्च तं स पप्रच्छ प्रायश्चित्तं 
हि तद्व्रतम् ॥ स चाचष्ट यथान्यायं मुने केशिध्वजाय तत्॥६०॥ प्रायश्चित्तमशेषं हि यद्वै तत्र विधीयते॥विदितार्थः स तेनैवमनुज्ञातो महात्मना
॥ ६१ ॥ यागभूमिमुपागत्य चक्रे सर्वां क्रियां क्रमात् ॥ क्रमेण विधिवद्यागं नीत्वा सोऽवभृथाप्लुतः ॥६२॥ कृतकृत्यस्ततो भूत्वा चिंतयामास
पार्थिवः ॥ पूजिता ऋत्विजः सर्वे सदस्या मानिता मया ॥६३॥तथैवार्थिजनोऽप्यर्थैर्योजितोऽभिमतैर्मया ॥ यथाहं मर्त्यलोकस्य मया सर्वं विच
ष्टितम् ॥ ६४ ॥ अनिष्पन्नक्रियं चेतस्तथा न मम किं यथा ॥ इत्थं तु चिंतयन्नेव सस्मार स महीपतिः ॥ ६५ ॥ खांडिक्याय न दत्तेति मया वै
गुरुदक्षिणा ॥ स जगाम ततो भूयो रथमारुह्य पार्थिवः ॥६६॥ स्वायंभुवः स्थितो यत्र खांडिक्योऽरण्यदुर्गमम्॥खांडिक्योऽपि पुनर्दृष्ट्वा तमायान्तं
धृतायुधः ॥ ६७ ॥ तस्थौ हंतुं कृतमतिस्तमाह स पुनर्नृपः ॥ अहं तु नापकाराय प्राप्तः खांडिक्य मा क्रुधः॥६८॥ गुरोर्निष्कृतिदानाय मामवेहि
समागतम् ॥ निष्पादितो मया यागः सम्यक् त्वदुपदेशतः ॥६९॥ सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम् ॥ इत्युक्तो मंत्रयामास स भूयो
मंत्रिभिः सह ॥ ७०॥गुरोर्निष्कृतिकामोऽयं किमयं प्रार्थ्यतां मया ॥ तमूचुर्मंत्रिणो राज्यमशेषं याच्यतामयम् ॥७१॥ कृतिभिः प्रार्थ्यते राज्यमना
यासितसैनिकैः॥प्रहस्य तानाह नृपः स खांडिक्यो महामतिः ॥ ७२ ॥ स्वल्पकालं महीराज्यं मादृशैः प्रार्थ्यते कथम् ॥ एवमेतद्भवंतोऽत्र स्वार्थ
साधनमंत्रिणः ॥७३॥ परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः॥ इत्युक्त्वा समुपेत्यैनं स तु केशिध्वजं नृपम्॥७४॥उवाच किमवश्यं त्वं दास्यसि
गुरुदक्षिणाम् ॥ बाढमित्येव तेनोक्तः खांडिक्यस्तमथाब्रवीत् ॥ ७५ ॥ भवानध्यात्मविज्ञानपरमार्थविचक्षणः ॥ यदि चेद्दीयते मह्यं भवता गुरु
निष्क्रयः ॥ ७६ ॥ तत्क्लेशप्रशमायालं यत्कर्म तदुदीरय ॥ केशिध्वज उवाच ॥ न प्रार्थितं त्वया कस्मान्मम राज्यमकंटकम्॥ ७७ ॥राज्यलाभा
द्धि नास्त्यन्यत्क्षत्रियाणामतिप्रियम् ॥ खांडिक्य उवाच॥केशिध्वज निबोध त्वं मया न प्रार्थितं यतः॥७८॥राज्यमेतदशेषेण यन्न गृध्नंति पंडिताः॥ ॥ ७७ ॥
क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ॥ ७९ ॥ वधश्च धर्मयुद्धेन स्वराज्यपरिपंथिनाम् ॥ यत्राशक्तस्य मे दोषो नैवास्त्यपकृतं त्वया ॥ ८० ॥
बंधायैव भवत्येषा ह्यविद्या चाक्रमोज्झिता ॥ जन्मोपभोगलिप्सार्थमियं राज्यस्पृहा मम॥ ८१॥अन्येषां दोषजा नैव धर्ममेवानुरुध्यते ॥ न याच्ञा

क्षत्रबंधूनां धर्मायैतत्सतां मतम् ॥ ८२ ॥ अतो न याचित राज्यमविद्यांतर्गतं तव ॥ राज्यं गृध्नंति विद्वांसो ममत्वाकृष्टचेतसः ॥८३॥ अहंमानमहापानमदमत्ता न मादृशाः ॥ केशिध्वज उवाच ॥ अहं च विद्यया मृत्युं तर्तुकामः करोमि वै॥ ८४ ॥ राज्यं यज्ञांश्च विविधान्भोगे पुण्यक्षयं तथा ॥ तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम् ॥ ८५ ॥ श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनंदन ॥ अनात्मन्यात्मबुद्धिर्या ह्यस्वे स्वमिति या मतिः ॥ ८६ ॥ अविद्यातरुसंभूतं बीजमेतद्विधा स्थितम् ॥ पंचभूतात्मके देहे देही मोहतमोवृतः ॥ ८७ ॥ अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम् ॥ आकाशवाय्वग्निजलपृथिवीभिः पृथक् स्थिते ॥ ८८ ॥ आत्मन्यात्ममयं भावं कः करोति कलेवरे ॥ कलेवरोपभोग्यं हि गृहक्षेत्रादिकं च यत् ॥ ८९ ॥ अदेहे ह्यात्मनि प्राज्ञो ममेदमिति मन्यते ॥ इत्थं च पुत्रपौत्रेषु तद्देहोत्पादितेषु च ॥ ९० ॥ करोति पंडितः स्वाम्यमनात्मनि कलेवरे ॥ सर्वदेहोपभोगाय कुरुते कर्म मानवः ॥ ९१ ॥ देहं चान्यद्यदा पुंसस्सदा बंधाय तत्परम् ॥ मृण्मयं हि यथा गेहं लिप्यते वै मृदंभसा ॥ ९२ ॥पार्थिवोऽयं तथा देहो मृदंभोलेपनस्थितिः ॥ पंचभोगात्मकैर्भोगैः पंचभोगात्मकं वपुः ॥ ९३ ॥ आप्यायते यदि ततः पुंसो गर्वोऽत्र किंकृतः ॥ अनेकजन्मसाहस्रं संसारपदवीं व्रजन् ॥ ९४ ॥ मोहश्रमं प्रयातोऽसौ वासनारेणुगुंठितः ॥ प्रक्षाल्यते यदा सौम्य रेणुर्ज्ञानोष्णवारिणा ॥ ९५ ॥ तदा संसारपांथस्य याति मोहश्रमः शमम् ॥ मोहश्रमे शमं याते स्वच्छांतःकरणः पुमान् ॥ ९६ ॥ अनन्यातिशयाबाधः परं निर्वाणमृच्छति ॥ निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ॥ ९७ ॥ दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥ जलस्य नाग्निना संगः स्थालीसंगात्तथापि हि ॥ ९८ ॥ शब्दोद्रेकादिकान्धर्मान्करोति हि यथा बुधः ॥ तथात्मा प्रकृतेः संगादहंमानादिदूषितः ॥ ९९ ॥ भजते प्राकृतान्धर्मानन्यस्तस्तेभ्यो हि सोऽव्ययः ॥ तदेतत्कथितं बीजमविद्याया मया तव ॥ १०० ॥ क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥ ॥१०१॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६॥ सनंदन उवाच॥ एतदध्यात्ममानाढ्यं वचः केशिध्वजस्य सः ॥ खांडिक्योऽमृतवच्छ्रुत्वा पुनराह तमीरयन् ॥ १ ॥खांडिक्य उवाच ॥ तद् ब्रूहि त्वं महाभाग योगं योगविदुत्तम ॥ विज्ञातयोगशास्त्रार्थस्त्वमस्यां निमिसंततौ ॥ २ ॥ केशिध्वज उवाच ॥ योगस्वरूपं खांडिक्य श्रूयतां गदतो मम ॥ यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥३ ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ बंधस्य विषयासंगि मुक्तेर्निर्विषयं तथा ॥ ४ ॥ विषयेभ्यः समाहृत्य विज्ञानात्मा बुधो मनः ॥ चिंतयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥ ५ ॥ आत्मभावं नयेत्तेन तद्ब्रह्मध्यापनं मनः ॥विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥ ६ ॥





आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ॥ तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥ ७ ॥ एवमत्यंतवैशिष्ट्ययुक्तधर्मोपलक्षणम् ॥ यस्य
योगः स वै योगी मुमुक्षुरभिधीयते ॥८॥ योगयुक् प्रथमं योगी युंजमानोऽभिधीयते ॥ विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् ॥ ९ ॥
यद्यंतरायदोषेण दूष्यते नास्य मानसम् ॥ जन्मांतरैरभ्यसनान्मुक्तिः पूर्वस्य जायते ॥ १० ॥ विनिष्पन्नसमाधिस्तु मुक्तिस्तत्रैव जन्मनि ॥
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥ ११ ॥ ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् ॥ सेवेत योगी निष्कामो योगितां स्वमनो नयन्
॥१२॥ स्वाध्यायशौचसंतोषतपांसि नियमान्यमान् ॥ कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः॥१३॥ एते यमाश्च नियमाः पंच पञ्च प्रकीर्तिताः॥
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥ १४ ॥ एवं भद्रासनादीनां समास्थाय गुणैर्युतः ॥ यमाख्यैर्नियमाख्यैश्च युंजीत नियतो यतिः ॥
॥१५॥ प्राणाख्यमवलंबस्थमभ्यासात्कुरुते तु यत् ॥ प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥ १६ ॥ परस्परेणाभिभवं प्राणापानौ यदा
निलौ ॥ कुरुतः सद्विधानेन तृतीयः संयमात्तयोः ॥ १७ ॥ तस्य चालंबनवतस्थूलं रूपं द्विपत्पते ॥ आलंबनमनंतस्य योगिनोऽभ्यसतः स्मृतम् ॥
॥ १८॥ शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ॥ कुर्य्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ १९ ॥ वश्यता परमा तेन जायते निश्चला
त्मनाम् ॥ इंद्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥ २० ॥ प्राणायामेन पवनैः प्रत्याहारेण चेंद्रियैः ॥ वशीकृतैस्ततः कुर्यात्स्थिरं चेतः शुभा
श्रये ॥ २१ ॥ खांडिक्य उवाच ॥ कथ्यतां मे महाभाग चेतसो यः शुभाश्रयः ॥ यदाधारमशेषं तु हंति दोषसमुद्भवम् ॥ २२ ॥ केशिध्वज
उवाच ॥ आश्रयश्चेतसो ज्ञानिन् द्विधा तच्च स्वरूपतः ॥ रूपं मूर्तममूर्तं च परं चापरमेव च ॥ २३ ॥ त्रिविधा भावना रूपं विश्वमेतत्त्रिधोच्यते ॥
ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥ २४ ॥ कर्मभावात्मिका ह्येका ब्रह्मभावात्मिकापरा ॥ उभयात्मिका तथैवान्या त्रिविधा भावभा
वना ॥२५॥ सनकाद्या सदा ज्ञानिन् ब्रह्मभावनया युताः ॥ कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥२६ ॥ हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका
द्विधा ॥ अधिकारबोधयुक्तेषु विद्यते भावभावना ॥ २७ ॥ अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ॥ विश्वमेतत्परं चान्यद्भेदभिन्नदृशां नृप ॥ २८ ॥
प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ॥ वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥२९ ॥ तच्च विष्णोः परं रूपमरूपस्याजनस्य च ॥विश्वस्वरूप
वैरूप्यलक्षणं परमात्मनः ॥३० ॥ न तद्योगयुजा शक्यं नृप चिंतयितुं यतः ॥ ततः स्थूलं हरे रूपं चिंत्यं यच्चक्षुगोचरम् ॥ ३१ ॥ हिरण्यगर्भो भग
वान्वासवोऽथ प्रजापतिः ॥ मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥ ३२ ॥ गन्धर्वा यक्षदैत्याश्च सकला देवयोनयः ॥ मनुष्याः पशवः शैला

समुद्राः सरितो द्रुमाः ॥ ३३ ॥ भूप भूतान्यशेषाणि भूतानां ये च हेतवः ॥ प्रधानादिविशेषांताश्चेतनाचेतनात्मकम् ॥ ३४ ॥ एकपादं द्विपादं च
बहुपादमपादकम् ॥ मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥ ३५ ॥ एतत्सर्वमिदं विश्वं जगदेतच्चराचरम् ॥ परब्रह्मस्वरूपस्य विष्णोः शक्तिसम
न्वितम् ॥ ३६ ॥ विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ॥ अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ ३७ ॥ येयं क्षेत्रज्ञशक्तिः सा
वेष्टिता नृप कर्मजा ॥ असारभूते संसारे प्रोक्ता तत्र महामते ॥ ३८ ॥ संसारतापानखिलानवाप्नोत्यनुसंज्ञितान् ॥ तया तिरोहितत्वात्तु शक्तिः क्षेत्रज्ञ
संज्ञिता ॥ ३९ ॥ सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते ॥ अप्राणवत्सु स्वल्पल्पा स्थावरेषु ततोऽधिका ॥ ४० ॥ सरीसृपेषु तेभ्योऽन्याप्यतिशक्त्या
पतत्रिषु ॥ पतत्रिभ्यो मृगास्तेभ्यः स्वशक्त्या पशवोऽधिकाः॥४१॥ पशुभ्यो मनुजाश्चातिशक्त्या पुंसःप्रभाविताः॥तेभ्योऽपि नागगंधर्वयक्षाद्या देवता
नृप ॥ ४२ ॥ शक्रः समस्तदेवेभ्यस्ततश्चातिप्रजापतिः ॥ हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः ॥ ४३ ॥ एतान्यशेषरूपाणि तस्य रूपाणि
पार्थिव॥यतस्तच्छक्तियोगेन युक्तानि नभसा यथा॥४४॥द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते॥अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः॥४५॥
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः॥नहि स्वरूपरूपं वै रूपमन्यद्धरेर्महत्॥४६॥समस्तशक्तिरूपाणि तत्करोति जनेश्वर॥देवतिर्यङ्मनुष्यादिचे
ष्टावंति स्वलीलया॥४७॥जगतामुपकाराय तस्य कर्मनिमित्तजा॥चेष्टा तस्याप्रमेयस्य व्यापिन्यविहितात्मिका ॥४८॥तद्रूपं विश्वरूपस्य चिंत्यं योग
युजा नृप ॥ तस्य ह्यात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम् ॥ ४९ ॥ यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ॥ तथा चित्तस्थितो विष्णुर्योगिनां
सर्वकिल्बिषम्॥५०॥ तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः ॥ कुर्वीत संस्थितं साधु विज्ञेया शुद्धलक्षणा ॥५१॥ शुभाश्रयः सचित्तस्य सर्वगस्य
तथात्मनः॥त्रिभावभावनातीतो मुक्तये योगिनां नृप॥५२॥ अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः॥अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः
॥५३॥मूर्तं भगवतो रूपं सर्वापाश्रयनिस्पृहः ॥ एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते॥५४॥तत्र मूर्तं हरे रूपं यादृक् चिंत्यं नराधिप ॥तच्छ्रूयतां
मनाधारे धारणा नोपपद्यते ॥ ५५ ॥ प्रसन्नचारुवदनं पद्मपत्रायतेक्षणम् ॥ सुकपोलं सुविस्तीर्णं ललाटफलकोज्ज्वलम् ॥ ५६ ॥ समकर्णांसविन्य
स्तचारुकर्णोपभूषणम् ॥ कम्बुग्रीवं सुविस्तीर्णश्रीवत्सांकितवक्षसम् ॥ ५७ ॥ वलित्रिभंगिना मुग्ननाभिना चोदरेण वै ॥ प्रलंबाष्टभुजं विष्णुमथ
वापि चतुर्भुजम् ॥ ५८ ॥ समस्थितोरुजघनं सुस्थिरांघ्रिकरांबुजम् ॥ चिंतयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ ५९ ॥ किरीटचारुकेयूरकट
काविविभूषितम् ॥ शार्ङ्गशंखगदाखड्गप्रकाशवलयांचितम् ॥ ६० ॥ चिंतयेत्तन्मयो योगी समाधायात्ममानसम् ॥ तावद्यावद् दृढीभूता तत्रैव नृप

धारणा ॥ ६१ ॥ वदतस्तिष्ठतो यद्वा स्वेच्छया कर्म कुर्वतः ॥ नापयाति यदा चित्तात्सिद्धां मन्येत तां तदा ॥ ६२ ॥ ततः शंखगदाचक्रशार्ङ्गादि रहितं बुधः ॥ चिंतयेद्भगवद्रूपं प्रशांतं साक्षसूत्रकम् ॥ ६३ ॥ सा यदा धारणा तद्वदवस्थानवती ततः ॥ किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥६४॥ तदेकावयवं चैवं चेतसा हि पुनर्बुधः ॥ कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥ ६५ ॥ तद्रूपप्रत्यये चैकसंनतिश्चान्यनिःस्पृहा ॥ तद्ध्यानं प्रथमैरंगैः षड्भिर्निष्पाद्यते नृप ॥ ६६ ॥ तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ॥ मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥ ६७ ॥ विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ॥ प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥ ६८ ॥ क्षेत्रज्ञकरणीज्ञानं करणं तेन तस्य तत् ॥ निष्पाद्य मुक्तिकार्यं वै कृतकृत्यो निवर्तते ॥ ६९ ॥ तद्भावभावनापन्नस्ततोऽसौ परमात्मनः ॥ भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥७०॥ विभेदजनके ज्ञाने नाशमात्यंतिकं गते ॥ आत्मनो ब्रह्मणाभेदं संमतं कः करिष्यति ॥ ७१ ॥ इत्युक्तस्ते मया योगः खांडिक्य परिपृच्छतः ॥ संक्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव ॥ ७२ ॥ खांडिक्य उवाच ॥ कथितो योगसद्भावः सर्वमेव कृतं मम ॥ तवोपदेशात्सकलो नष्टश्चित्तमलो मम ॥ ७३ ॥ ममेति यन्मया प्रोक्तमसदेतन्न चान्यथा ॥ नरेंद्र गदितुं शक्यमपि विज्ञेयवेदिभिः ॥ ७४ ॥ अहं ममेत्यविद्येयं व्यवहारस्तथानयोः ॥ परमार्थस्त्वसंलाप्यो वचसां गोचरो न यः ॥ ७५ ॥ तद्गच्छ श्रेयसे सर्वं ममैतद्भवता कृतम् ॥ यद्विमुक्तिपरो योगः प्रोक्तः केशिध्वजाव्ययः ॥ ७६ ॥ सनंदन उवाच ॥ यथार्हपूजया तेन खांडिक्येन स पूजितः ॥ आजगाम पुरं ब्रह्मंस्ततः केशिध्वजो नृपः ॥७७॥ खांडिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये ॥ विशालामगमत्कृष्णे समावेशितमानसः ॥ ७८ ॥ स तत्रैकांतिको भूत्वा यमादिगुणसंयुतः ॥ विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥ ७९ ॥ केशिध्वजोऽपि मुक्त्यर्थं स्वकर्मक्षपणोन्मुखः ॥ बुभुजे विषयान्कर्म चक्रे चानभिसंधितम् ॥ ८०॥ स कल्याणोपभोगैश्च क्षीणपापोऽमलस्ततः ॥ अवाप सिद्धिमत्यंतत्रितापक्षपणीं मुने ॥ ८१ ॥ एतत्ते कथितं सर्वं यन्मां त्वं परिपृष्टवान् ॥ तापत्रयचिकित्सार्थं किमन्यत्कथयामि ते ॥८२॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे द्वितीयपादे सप्तचत्वारिंशत्तमोऽध्यायः ॥४७॥ नारद उवाच॥ श्रुतं मया महाभाग तापत्रयचिकित्सनम्॥ तथापि मे मनो भ्रांतं न स्थितिं लभतेंऽजसा॥१॥ आस्मन्व्यतिक्रमं ब्रह्मन्दुर्जनाचरितं कथम् ॥ सोढुं शक्येत मनुजैस्तन्ममाख्याहि मानद ॥२॥ सूत उवाच॥तच्छ्रुत्वा नारदेनोक्तं ब्रह्मपुत्रः सनंदनः ॥ उवाच हर्षसंयुक्तः स्मरन्भरतचेष्टितम् ॥३॥ सनंदन उवाच ॥अत्र ते कथयिष्यामि इतिहासं पुरातनम् ॥ यं श्रुत्वा त्वन्मनो भ्रांतमास्थानं लभते भृशम् ॥ ४ ॥ आसीत्पुरा मुनिश्रेष्ठ भरतो नाम भूपतिः ॥ आर्षभो यस्य नाम्नेदं भारतं खण्डमु

च्यते ॥ ५ ॥ स राजा प्राप्तराज्यस्तु पितृपैतामहं क्रमात् ॥ पालयामास धर्मेण पितृवद्रंजयन् प्रजाः ॥ ६ ॥ ईजे च विविधैर्यज्ञैर्भगवंतमधोक्षजम् ॥
सर्वदेवात्मकं ध्यायन्नानाकर्मसु तन्मतिः ॥ ७ ॥ ततः समुत्पाद्य सुतान्विरक्तो विषयेषु सः ॥ मुक्त्वा राज्यं ययौ विद्वान्पुलस्त्यपुलहाश्रमम् ॥ ८ ॥
शालग्रामं महाक्षेत्रं मुमुक्षुजनसेवितम् ॥ तत्रासौ तापसो भूत्वा विष्णोराराधनं मुने ॥ ९ ॥ चकार भक्तिभावेन यथालब्धसपर्यया ॥ नित्यं प्रातः
समाप्लुत्य निर्मलेऽम्भसि नारद ॥१०॥ उपतिष्ठद्रविं भक्त्या गृणन्ब्रह्माक्षरं परम् ॥ अथाश्रमे समागत्य वासुदेवं जगत्पतिम् ॥ ११ ॥ समाहृतैः
स्वयं द्रव्यैः समित्कुशमृदादिभिः॥ फलैः पुष्पैस्तथा पत्रैस्तुलस्याःस्वच्छवारिभिः॥१२॥पूजयन्प्रयतो भूत्वा भक्तिप्रसरसंप्लुतः ॥सचैकदा महाभागः
स्नात्वा प्रातः समाहितः ॥ १३॥ चक्रनद्यां जपंस्तस्थौ मुहूर्तत्रयमंबुनि॥अथाजगाम तत्तीरं जलं पातुं पिपासिता ॥ १४ ॥ आसन्नप्रसवा ब्रह्मन्नेकैव
हरिणी वनात् ॥ ततः समभवत्तत्र पीतप्राये जले तया ॥१५॥ सिंहस्य नादः सुमहान् सर्वप्राणिभयंकरः॥ ततः सा सिंहसन्नादादुत्प्लुता निम्नगातटम्
॥ १६ ॥ अत्युच्चारोहणेनास्या नद्यां गर्भः पपात ह ॥ तमुह्यमानं वेगेन वीचिमालापरिप्लुतम् ॥ १७ ॥ जग्राह भरतो गर्भात्पतितं मृगपोतकम् ॥
गर्भप्रच्युतिदुःखेन प्रोत्तुंगाक्रमणेनच॥१८॥मुनीन्द्र सा तु हरिणी निपपात ममार च॥हरिणीं तां विलोक्याथ विपन्नां नृपतापसः॥१९॥ मृगपोतं समा
गृह्य स्वमाश्रममुपागतः ॥ चकारानुदिनं चासौ मृगपोतस्य वै नृपः ॥ २० ॥ पोषणं पुष्यमाणश्च स तेन ववृधे मुने ॥ चचाराश्रमपर्यंतं तृणानि
गहनेषु सः ॥ २१ ॥ दूरं गत्वा च शार्दूलत्रासादभ्याययौ पुनः ॥ प्रातर्गत्वातिदूरं च सायमायात्यथाश्रमम् ॥ २२ ॥ पुनश्च भरतस्याभूदाश्रमस्यो
टजांतरे ॥ तस्यतस्मिन्मृगे दूरसमीपपरिवर्तिनि ॥ २३ ॥ आसीच्चेतः समासक्तं न तथा ह्यच्युते मुने ॥ विमुक्तराज्यतनयः प्रोज्झिताशेषबांधवः
॥ २४ ॥ ममत्वं स चकारोच्चैस्तस्मिन्हरिणपोतके ॥ किं वृकैर्भक्षितो व्याघ्रैः किं सिंहेन निपातितः ॥ २५ ॥ चिरायमाणे निष्क्रांते तस्यासीदिति
मानसम् ॥प्रीतिप्रसन्नवदनः पार्श्वस्थे चाभवन्मृगे ॥ २६ ॥समाधिभंगस्तस्यासीत्तन्ममत्वाकृष्टमानसः ॥कालेन गच्छता सोऽथ कालं चक्रे महीपतिः
॥ २७ ॥ पितेव सास्रं पुत्रेण मृगपोतेन वीक्षितः ॥ मृगमेव तदाद्राक्षीत्त्यजन्प्राणानसावपि॥२८॥मृगो बभूव स मुने तादृशीं भावनां गतः ॥ जाति
स्मरत्वादुद्विग्नः संसारस्य द्विजोत्तम ॥ २९ ॥ विहाय मातरं भूयः शालग्राममुपाययौ ॥ शुष्कैस्तृणैस्तथा पर्णैः स कुर्वन्नात्मपोषणम् ॥ ३० ॥ मृग
त्वहेतुभूतस्य कर्मणो निष्कृतिं ययौ ॥ तत्र चोत्सृष्टदेहोऽसौ जज्ञे जातिस्मरो द्विजः ॥३१॥ सदाचारवतां शुद्धे योगिनां प्रवरे कुले ॥ सर्वविज्ञान
संपन्नः सर्वशास्त्रार्थतत्त्ववित् ॥ ३२ ॥ अपश्यत्स मुनिश्रेष्ठः स्वात्मानं प्रकृतेः परम् ॥ आत्मनोऽधिगतज्ञानादेवादीनि महामुने॥ ३३ ॥सर्वभूतान्यभे

देन ददर्श स महामतिः ॥ न पपाठ गुरुप्रोक्तं कृतोपनयनः श्रुतम् ॥ ३४ ॥ न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥ उक्तोऽपि बहुशः किंचि ज्जडं वाक्यमभाषत ॥ ३५ ॥ तदप्यसंस्कारगुणं ग्रामभाषोक्तिसंयुतम् ॥ अपध्वस्तवपुः सोऽपि मलिनांबरधृङ् मुने ॥ ३६ ॥ क्लिन्नदंतांतरः सर्वैः परिभूतः स नागरैः ॥ संमानेन परां हानिं योगर्द्धेः कुरुते यतः ॥ ३७ ॥ जनेनावमतो योगी योगसिद्धिं च विंदति ॥ तस्माच्चरेत वै योगी सतां धर्ममदूषयन् ॥ ३८ ॥ जना यथावमन्येयुर्गच्छेयुर्नैव संगतिम् ॥ हिरण्यगर्भवचनं विचिंत्येत्थं महामतिः ॥ ३९ ॥ आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने ॥ भुंक्ते कुल्माषवटकान् शाकं वन्यफलं कणान्॥४०॥यद्यदाप्नोति स बहूनत्ति वै कालसंभवम् ॥पितर्युपरते सोऽथ भ्रातृभ्रातृव्यबांधवैः ॥ ४१ ॥ कारितः क्षेत्रकर्मादि कदन्नाहारपोषितः ॥ सरूक्षपीनावयवो जडकारी च कर्मणि ॥ ४२ ॥ सर्वलोकोपकरणं बभूवाहारवेतनः ॥ तं तादृशमसंस्कारं विप्राकृतिविचेष्टितम् ॥ ४३ ॥ क्षत्ता सौवीरराज्यस्य विष्टियोग्यममन्यत ॥ स राजा शिबिकारूढो गंतुं कृतमतिर्द्विज ॥ ४४ ॥ बभूवेक्षुमतीतीरे कपिलर्षेवराश्रमम् ॥ श्रेयः किमत्र संसारे दुःखप्राये नृणामिति ॥ ४५ ॥ प्रष्टुं तं मोक्षधर्मज्ञं कपिलाख्यं महामुनिम् ॥ उवाह शिबिकामस्य क्षत्तुर्वचनचोदितः ॥ ४६ ॥ नृणां विष्टिगृहीतानामन्येषां सोऽपि मध्यगः ॥ गृहीतो विष्टिना विप्र सर्वज्ञानैकभाजनम् ॥ ४७ ॥ जातिस्मरोऽसौ पापस्य क्षयकाम उवाह ताम् ॥ ययौ जडगतिस्तत्र युगमात्रावलोकनम् ॥ ४८ ॥कुर्वन्मतिमतां श्रेष्ठस्ते त्वन्ये त्वरितं ययुः ॥ विलोक्य नृपतिः सोऽथ विषमं शिबिकागतम् ॥ ४९ ॥ किमेतदित्याह समं गम्यतां शिबिकावहाः॥ पुनस्तथैव शिबिकां विलोक्य विषमां हसन् ॥ ॥ ५० ॥ नृपः किमेतदित्याह भवद्भिर्गम्यतेऽन्यथा ॥ भूपतेर्वदतस्तस्य श्रुत्वेत्थं बहुशो वचः ॥ शिबिकावाहकाः प्रोचुरयं यातीत्यसत्वरम्॥५१॥ राजोवाच॥किं श्रांतोऽस्यल्पमध्वानं त्वयोढा शिबिका मम॥किमायाससहो न त्वं पीवा नासि निरीक्ष्यसे॥५२॥ ब्राह्मण उवाच॥नाहं पीवा न चैवोढा शिबिका भवतो मया॥नश्रांतोऽस्मि न चायासो वोढान्योऽस्ति महीपते॥५३॥राजोवाच॥प्रत्यक्षं दृश्यते पीवा त्वद्यापि शिबिका त्वयि॥श्रमश्च भारोद्वहने भवत्येव हि देहिनाम्॥५४॥ब्राह्मण उवाच॥प्रत्यक्षं भवता भूप यद्दृष्टं मम तद्वद॥बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम्॥५५॥त्वयोढा शिबिका चेति त्वय्यद्यापि च संस्थिता॥मिथ्या तदप्यत्र भवान् शृणोतु वचनं मम ॥५६॥ भूमौ पादयुगं चाथ जंघे पादद्वये स्थिते ॥ ऊरू जंघाद्वयावस्थौ तदाधारं तथोदरम्॥५७॥वक्षस्थलं तथा बाहू स्कंधौ चोदरसंस्थितौ॥स्कंधाश्रितेयं शिबिका ममाधारोऽत्र किंकृतः ॥५८॥ शिबिकायां स्थितं चेदं देहं त्वदुपलक्षितम् ॥ तत्र त्वमहमप्यत्रेत्युच्यते चेदमन्यथा ॥ ५९ ॥ अहं त्वं च तथान्ये च भूतैरुह्याश्च पार्थिव ॥ गुणप्रवाहपतितो भूतवर्गोऽपि

यात्ययम् ॥६०॥ कर्मवश्या गुणाश्चैते सत्त्वाद्याः पृथिवीपते ॥ अविद्यासंचितं कर्म तच्चाशेषेषु जंतुषु ॥६१॥ आत्मा शुद्धोऽक्षरः शांतो निर्गुणः प्रकृतेः परः ॥ प्रवृद्ध्यपचयौ न स्त एकस्याखिलजंतुषु ॥ ६२ ॥ यदा नोपचयस्तस्य नचैवापचयो नृप ॥ तदापि वालिशोऽसि त्वं कया युक्त्या त्वयेरितम् ॥ ६३ ॥ भूपादजंघाकट्यूरुजठरादिषु संस्थिता॥ शिविकेयं यदा स्कंधे तदा भारः समस्त्वया॥ ६४ ॥ तथान्यजंतुभिर्भूप शिविकोढा न केवलम् ॥ शैलद्रुमगृहोत्थोऽपि पृथिवीसंभवोऽपि च ॥ ६५ ॥ यथा पुंसः पृथग्भावः प्राकृतैः करणैर्नृप ॥ सोढव्यः सुमहान्भारः कतमो नृप ते मया ॥६६॥यद्द्रव्यो शिविका चेयं तद्द्रव्यो भूतसंग्रहः॥भवतो मेऽखिलस्यास्य समत्वेनोपबृंहितः ॥६७॥ सनंदन उवाच ॥ एवमुक्त्वाऽभवन्मौनी स वहञ्शिविकां द्विजः ॥ सोऽपि राजाऽवतीर्योर्व्यां तत्पादौ जगृहे त्वरन् ॥ ६८ ॥ राजोवाच ॥ भो भो विसृज्य शिविकां प्रसादं कुरु मे द्विज ॥ कथ्यतां को भवानत्र जाल्मरूपधरः स्थितः ॥६९॥ यो भवान्यदपत्यं वा यदागमनकारणम् ॥ तत्सर्वं कथ्यतां विद्वन्मह्यं शुश्रूषवे त्वया॥७०॥ ब्राह्मण उवाच ॥ श्रूयतां कोऽहमित्येतद्वक्तुं भूप न शक्यते॥ उपयोगनिमित्तं च सर्वत्रागमनक्रिया॥७१ ॥सुखदुःखोपभोगौ तु तौ देहाद्युपपादकौ॥ धर्माधर्मोद्भवौ भोक्तुं जंतुर्देहादिमृच्छति॥७२॥सर्वस्यैव हि भूपाल जंतोः सर्वत्र कारणम्॥धर्माधर्मौ यतस्तस्मात्कारणं पृच्छ्यते कुतः॥७३॥राजोवाच ॥ धर्माधर्मौ न संदेहः सर्वकार्येषु कारणम्॥ उपभोगनिमित्तं च देहाद्देहांतरागमः ॥७४॥ यत्त्वेतद्भवता प्रोक्तं कोऽहमित्येतदात्मनः॥वक्तुं न शक्यते श्रोतुं तन्ममेच्छा प्रवर्तते॥७५॥योऽस्ति योऽहमिति ब्रह्मन्कथं वक्तुं न शक्यते॥आत्मन्येव न दोषाय शब्दोऽहमिति यो द्विज॥७६॥ब्राह्मण उवाच॥ शब्दोऽहमिति दोषाय नात्मन्येवं तथैव तत् ॥ अनात्मन्यात्मविज्ञानं शब्दो वा श्रुतिलक्षणः ॥ ७७॥ जिह्वा ब्रवीत्यहमिति दंतौष्ठतालुकं नृप ॥ ॥ एतेनाहं यतः सर्वे वाङ्निष्पादनहेतवः ॥ ७८ ॥ किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ॥ तथापि वागहमेवक्तुमित्थं न युज्यते ॥ ७९ ॥ पिंडः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ॥ ततोऽहमिति कुत्रैनां संज्ञां राजन्करोम्यहम् ॥ ८० ॥ यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥ न देहोऽहमयं चान्ये वक्तुमेवमपीष्यते ॥ ८१ ॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः ॥ तदा हि को भवान्कोऽहमित्येतद्विफलं वचः ॥८२॥ त्वं राजा शिविका चेयं वयं वाहाः पुरःसराः ॥ अयं च भवतो लोको न सदेतन्नृपोच्यते ॥८३॥वृक्षाद्दारु ततश्चेयं शिविका त्वदधिष्ठिता ॥ क्व वृक्षसंज्ञा वै तस्या दारुसंज्ञाथवा नृप ॥ ८४ ॥ वृक्षारूढो महाराजो नायं वदति ते जनः ॥ न च दारुणि सर्वस्त्वां ब्रवीति शिविकागतम्॥८५॥शिविकादारुसंघातो रचनास्थितिसंस्थितः॥अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिविका त्वया॥८६॥एवं छत्रं शलाकाभ्यः पृथग्भावो विमृ





श्यताम् ॥ क्क जातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥ ८७ ॥ पुमान्स्त्री गौरजा वाजी कुंजरो विहगस्तरुः॥ देहेषु लोकसंज्ञेयं विज्ञेया कर्महे
तुषु ॥ ८८ ॥ पुमान्न देवो न नरो न पशुर्न च पादपः ॥ शरीराकृतिभेदास्तु भूपते कर्मयोनयः॥८९॥ वस्तु राजेति यल्लोके यच्च राजभटात्मकम्॥
॥ तथान्यच्च नृपेत्थं तन्न सत्यं कल्पनामयम् ॥९०॥यस्तु कालांतरेणापि नाशसंज्ञामुपैति वै ॥ परिणामादिसंभूतं तद्वस्तु नृप तच्च किम् ॥ ९१ ॥
त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः ॥ पत्न्याः पतिः पिता सूनोः कस्त्वं भूप वदाम्यहम् ॥९२॥ त्वं किमेतच्छिरः किं तु शिरस्तव तथो
दरम् ॥ किमु पादादिकं त्वेतन्नैव किं ते महीपते ॥९३॥समस्तावयवेभ्यस्त्वं पृथग्भूतो व्यवस्थितः ॥ कोऽहमित्यत्र निपुणं भूत्वा चिंतय पार्थिव
॥ ९४ ॥ एवं व्यवस्थिते तत्त्वे मयाहमिति भावितुम् ॥ पृथक्कृचरणनिष्पाद्यं शक्यं तु नृपते कथम् ॥ ९५ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे
बृहदुपाख्याने द्वि० पा०ष्टचत्वारिंशोऽध्यायः ॥४८॥सनंदन उवाच ॥ निशम्य तस्येति वचः परमार्थसमन्वितम् ॥ प्रश्रयावनतो भूत्वा तमाह नृप
तिर्द्विजम् ॥१॥राजोवाच ॥भगवन्यत्त्वया प्रोक्त परमार्थमयं वचः ॥श्रुते तस्मिन्भ्रमंतीव मनसो मम वृत्तयः ॥ २ ॥ एतद्विवेकविज्ञानं यदि शेषेषु
जंतुषु॥भवता दर्शितं विप्र तत्परं प्रकृतेर्महत्॥३॥नाहं वहामि शिबिकां शिबिका मयि न स्थिता॥शरीरमन्यदस्मत्तो येनेयं शिबिका धृता॥४॥गुण
प्रवृत्तिर्भूतानां, प्रवृत्तिः कर्मचोदिता ॥ प्रवर्तंते गुणाश्चैते किं ममेति त्वयोदितम्॥५॥एतस्मिन्परमार्थज्ञ मम श्रोत्रपथं गते ॥ मनो विह्वलतामेति पर
मार्थार्थितां गतम् ॥६॥ पूर्वमेव महाभाग कपिलर्षिमहं द्विज ॥ प्रष्टुमभ्युद्यतो गत्वा श्रेयः किंत्वत्र संशये ॥ ७ ॥ तदंतरे च भवता यदिदं वाक्यमी
रितम् ॥तेनैव परमार्थार्थं त्वयि चेतः प्रधावति ॥८॥ कपिलर्षिर्भगवतः सर्वभूतस्य वै किल ॥ विष्णोरंशो जगन्मोहनाशाय समुपागतः ॥ ९ ॥
स एव भगवान्नूनमस्माकं हितकाम्यया ॥ प्रत्यक्षतामनुगतस्तथैतद्भवतोच्यते ॥ १० ॥ तन्मह्यं मोहनाशाय यच्छ्रेयः परमं द्विज ॥ तद्वदाखिल
विज्ञानजलवीच्युदधिर्भवान् ॥ ११ ॥ ब्राह्मण उवाच ॥ भूयः पृच्छसि किं श्रेयः परमार्थेन पृच्छसि ॥ श्रेयांसि परमार्थानि ह्यशेषाण्येव भूपते ॥
॥१२॥देवताराधनं कृत्वा धनसंपदमिच्छति॥पुत्रानिच्छति राज्यं च श्रेयस्तस्यैव तन्नृप॥१३॥विवेकिनस्तु संयोगः श्रेयोऽसौ परमात्मना॥कर्मयज्ञा
दिकं श्रेयः स्वर्लोकफलदायि यत् ॥ १४ ॥ श्रेयःप्रधानं च फले तदेवानभिसंहिते ॥ आत्मा ध्येयः सदा भूप योगयुक्तैस्तथा परैः ॥ १५ ॥ श्रेय
स्तस्यैव संयोगः श्रेयो यः परमात्मनः ॥ श्रेयांस्येवमनेकानि शतशोऽथ सहस्रशः ॥१६॥ संत्यत्र परमार्थास्तु न त्वेते श्रूयतां च मे ॥ धर्मोऽयं त्यजते
किं तु परमार्थो धनं यदि ॥ १७ ॥ व्ययश्च क्रियत कस्मात्कामप्राप्त्युपलक्षणः ॥ पुत्रश्चेत्परमार्थाख्यः सोऽप्यन्यस्य नरेश्वर ॥ १८ ॥ परमार्थभूतः

सोऽन्यस्य परमार्थो हि नः पिता ॥ एवं न परमार्थोऽस्ति जगत्यत्र चराचरे ॥ १९ ॥ परमार्थो हि कार्याणि करणानामशेषतः ॥ राज्यादिप्राप्तिर त्रोक्ता परमार्थतया यदि ॥ २० ॥ परमार्था भवंत्यत्र न भवंति च वै ततः ॥ ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ॥ २१ ॥ परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥ यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ॥ २२ ॥ तत्कारणानुगमनाज्जायते नृप मृन्मयम् ॥ एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः ॥ २३ ॥ निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥ अनाशी परमार्थस्तु प्राज्ञैरभ्युपगम्यते ॥ २४ ॥ यत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥ तदेवाफलदं कर्म परमार्थो मतो मम ॥ २५ ॥ मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ॥ ध्यानमेवात्मनो भूप परमार्थार्थशब्दितम् ॥ २६ ॥ भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥ परमार्थात्मनोर्योगः परमार्थ इतीष्यते ॥ २७ ॥ मिथ्यैतदन्यद्द्रव्यं हि नैतद्द्रव्यमयं यतः ॥ तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः ॥ २८ ॥ परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥ एको व्यापी समः शुद्धो निर्गुण प्रकृतेः परः ॥ २९ ॥ जन्मवृद्ध्यादिरहित आत्मा सर्वगतो नृप ॥ परिज्ञानमयो सद्भिर्नामजात्यादिभिर्विभुः ॥ ३० ॥ न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति ॥ तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत् ॥ ३१ ॥ विज्ञानं परमार्थोऽसौ वेत्ति नोऽतथ्यदर्शनः ॥ वेणुरंध्रविभेदेन भेदः षड्जादिसंज्ञितः ॥ ३२ ॥ अभेदो व्यापिनो वायोस्तथा तस्य महात्मनः ॥ एकत्वं रूपभेदश्च बाह्यकर्मप्रवृत्तिजः ॥ ३३ ॥ देवादिभेदमध्यास्ते नास्त्येवाचरणो हि सः ॥ शृण्वत्र भूप प्राग्वृत्तं यद्गीतमृभुणा भवेत् ॥ ३४ ॥ अवबोधं जनयतो निदाघस्य द्विजन्मनः ॥ ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः ॥ ३५ ॥ विज्ञात तत्त्वसद्भावो निसर्गादेव भूपते ॥ तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनयः पुरा ॥ ३६ ॥ प्रादादशेषविज्ञानं स तस्मै परया मुदा ॥ अवाप्तज्ञान तत्त्वस्य न तस्याद्वैतवासना ॥ ३७ ॥ स ऋभुस्तर्कयामास निदाघस्य नरेश्वर ॥ देविकायास्तटे वीर नागरं नाम वै पुरम् ॥ ३८ ॥ समृद्धमति रम्यं च पुलस्त्येन निवेशितम् ॥ रम्योपवनपर्यंतं स तस्मिन्पार्थिवोत्तम ॥ ३९ ॥ निदाघनामायोगज्ञस्तस्य शिष्योऽभवत्पुरा ॥ दिव्यं वर्षसहस्रं तु समतीतेऽस्य तत्पुरम् ॥ ४० ॥ जगाम स ऋभुः शिष्यं निदाघमवलोकितुम् ॥ स तस्य वैश्वदेवांते द्वारालोकनगोचरः ॥ ४१ ॥ स्थित स्तेन गृहीतार्थो निजवेश्म प्रवेशितः ॥ प्रक्षालितांघ्रिपाणिं च कृतासनपरिग्रहम् ॥ ४२ ॥ उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम् ॥ ऋभुरुवाच ॥ भो विप्रवर्य भोक्तव्यं यदत्र भवतो गृहे ॥ ४३ ॥ तत्कथ्यतां कदन्नेषु न प्रीतिः सततं मम ॥ निदाघ उवाच ॥ सक्तुयावकव्रीहीनामपूपानां च मे गृहे ॥ ४४ ॥ यद्रोचते द्विजश्रेष्ठ तावद्भुंक्ष्व यथेच्छया ॥ ऋभुरुवाच ॥ कदन्नानि द्विजैतानि मिष्टमन्नं प्रयच्छ मे ॥ ४५ ॥ संयावपायसादीनि

चेक्षुका रसवंति च ॥ निदाघ उवाच ॥ गृहे शालिनि मद्गेहे यत्किंचिदति शोभनम् ॥ ४६ ॥ भोज्येषु साधनं मिष्टं तेनास्यान्नं प्रसाधय ॥ इत्युक्ता तेन सा पत्नी मिष्टमन्नं द्विजस्य तत् ॥ ४७ ॥ प्रसाधितवती तद्वै भर्तुर्वचनगौरवात् ॥ तं भुक्तवंतमिच्छातो मिष्टमन्नं महामुनिम् ॥४८॥ निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः ॥ निदाघ उवाच ॥ अपि ते परमा तृप्तिरुत्पन्ना पुष्टिरेव वा ॥४९॥ अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥ क्व निवासी भवान्विप्र क्व वा गंतुं समुद्यतः ॥५०॥ आगम्यते च भवता यतस्तच्च निवेद्यताम् ॥ ऋभुरुवाच ॥ क्षुधितस्य च भुक्तेऽन्ने तृप्तिर्ब्रह्मन्विजायते ॥५१॥ न मे क्षुधा भवेत्तृप्तिः कस्मान्मां द्विज पृच्छति ॥ वह्निना पार्थिवेनादौ दग्धे वै क्षुत्समुद्भवः ॥ ५२ ॥ भवत्यंभसि च क्षीणे नृणां तृष्णासमुद्भवः ॥ क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज ॥५३॥ ततः क्षुत्संभवाभावात्तृप्तिरस्त्येव मे सदा ॥ मनसः स्वस्थता तुष्टिश्चित्तधर्माविमौ द्विज ॥ ५४ ॥ चेतसो यस्य यत्पृष्टं पुमानेभिर्न युज्यते ॥ क्व निवासस्तवेत्युक्तं क्व गंतासि च यत्त्वया ॥५५॥ कुतश्चागम्यते त्वेतत्त्रितयेऽपि निबोध मे ॥ पुमान्सर्वगतो व्यापीत्याकाशवदयं यतः ॥५६॥ कुतः कुत्र क्व गंतासीत्येतदप्यर्थवत्कथम् ॥ सोऽहं गंता न चागंता नैकदेशनिकेतनः ॥ ५७ ॥ त्वं चान्ये च न च त्वं त्वं नान्ये नैवाहमप्यहम् ॥ मिष्टान्नं मिष्टमित्येषा जिह्वा सा मे कृता तव ॥५८॥ किं वक्ष्यतीति तत्रापि श्रूयतां द्विजसत्तम ॥ मिष्टमेव यदामिष्टं तदेवोद्वेगकारणम् ॥ ५९ ॥ अमिष्टं जायते मिष्टं मिष्टादुद्विजते जनः ॥ आदिमध्यावसानेषु किमन्नं रुचिकारणम् ॥६०॥ मृण्मयं हि मृदा यद्वद्गृहं लिप्तं स्थिरीभवेत् ॥ पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥ ६१ ॥ यवगोधूममुद्गादि घृतं तैलं पयो दधि ॥ गुडः फलानीति तथा पार्थिवाः परमाणवः ॥ ६२ ॥ तदेतद्भवता ज्ञात्वा मिष्टामिष्टविचारि यत् ॥ तन्मनः शमनालंबि कार्यं साम्यं हि मुक्तये ॥ ६३ ॥ इत्याकर्ण्य वचस्तस्य परमार्थाश्रितं नृप ॥ प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ॥ ६४ ॥ प्रसीद मद्धितार्थाय कथ्यतां यस्त्वमागतः ॥ नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ॥६५॥ ऋभुरुवाच ॥ ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज ॥ इहागतोऽहं दास्यामि परमार्थं सुबोधितम् ॥ ६६ ॥ एक एवमिदं विद्धि न भेदि सकलं जगत् ॥ वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ ६७ ॥ ब्राह्मण उवाच ॥ तथेत्युक्त्वा निदाघेन प्रणिपातपुरःसरम् ॥ पूजितः परया भक्त्यानिच्छितः प्रययौ विभुः ॥ ६८ ॥ पुनर्वर्षसहस्रांते समायातो नरेश्वर ॥ निदाघज्ञानदानाय तदेव नगरं गुरुः ॥ ६९ ॥ नगरस्य बहिः सोऽथ निदाघं दृष्टवान्मुनिम् ॥ महाबलपरीवारे पुरं विशति पार्थिवे ॥७०॥ दूरस्थितं महाभागं जनसंमर्दवर्जकम् ॥ क्षुत्क्षामकण्ठमायांतमरण्यात्ससमित्कुशम् ॥ ७१ ॥ दृष्ट्वा निदाघं स ऋभुरुपागत्याभिवाद्य च ॥ उवाच कस्मादेकांते स्थीयते भवता द्विज ॥ ७२ ॥

॥ निदाघ उवाच ॥ भो विप्र जनसंमर्दो महानेष जनेश्वरे ॥ प्रविवक्षौ पुरे रम्ये तेनात्र स्थीयते मया ॥ ७३ ॥ ऋभुरुवाच ॥ ॥ नराधिपोऽत्र कतमः कतमश्चेतरो जनः ॥ कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥७४॥ निदाघ उवाच ॥ योऽयं गजेंद्रमुन्मत्तमद्रिशृंगसमुच्छ्रयम् ॥ अधिरूढो नरेन्द्रोऽयं परितो यस्तथेतरः ॥७५॥ ऋभुरुवाच ॥ एतौ हि गजराजानौ दृष्टौ हि युगपन्मया ॥ भवता निर्विशेषेण पृथग्वेदोपलक्षितौ ॥७६॥ तत्कथ्यतां महाभाग विशेषो भवतानयोः ॥ ज्ञातुमिच्छाम्यहं कोऽत्र गजः को वा नराधिपः ॥७७॥ निदाघ उवाच ॥ गजोयोऽयमधो ब्रह्मन्नुपर्यस्यैष भूपतिः ॥ वाह्यवाहकसंबंधं को न जानाति वै द्विज ॥७८॥ ऋभुरुवाच ॥ ब्रह्मन्यथाहं जानीयां तथा मामवबोधय ॥ अधः सत्त्वविभागं किं किं चोर्द्धमभिधीयते ॥७९॥ ब्राह्मण उवाच ॥ इत्युक्त्वा सहसारुह्य निदाघः प्राह तं ऋभुम् ॥ श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥८०॥ उपर्यहं यथा राजा त्वमधःकुंजरो यथा ॥ अवबोधाय ते ब्रह्मन्दृष्टांतो दर्शितो मया ॥८१॥ ऋभुरुवाच ॥ त्वं राजेव द्विजश्रेष्ठ स्थितोऽहं गजवद्यदि ॥ तदेवं त्वं समाचक्ष्व कतमस्त्वमहं तथा ॥८२॥ ब्राह्मण उवाच ॥ इत्युक्तः सत्वरस्तस्य चरणावभिवंद्य सः ॥ निदाघः प्राह भगवन्नाचार्यस्त्वमृभुर्मम ॥ ८३ ॥ नान्यस्याद्वैतसंस्कारसंस्कृतं मानसं तथा ॥ यथाचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥८४॥ ऋभुरुवाच ॥ तवोपदेशदानाय पूर्वशुश्रूषणात्तव ॥ गुरुस्तेऽहमृभुर्नाम निदाघं समुपागतः ॥ ८५ ॥ तदेतदुपदिष्टं ते संक्षेपेण महामते ॥ परमार्थसारभूतं यत्तदद्वैतमशेषतः ॥ ८६ ॥ ब्राह्मण उवाच ॥ एवमुक्त्वा ददौ विद्यां निदाघं स ऋभुर्गुरुः ॥ निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥ ८७ ॥ सर्वभूतान्यभेदेन ददृशे स तदात्मनः ॥ तथा ब्रह्मततो मुक्तिमवाप परमां द्विजः ॥८८॥ तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबांधवः ॥ भव सर्वगतं ज्ञानमात्मानमवनीपते ॥८९ ॥ सितनीलादिभेदेन यथैकं दृश्यते नभः ॥ भ्रांतदृष्टिभिरात्मापि तथैकः सन्पृथक्पृथक् ॥९०॥ एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत् ॥ सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहः ॥९१ ॥ सनंदन उवाच ॥ इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥ स चापि जातिस्मरणाववोधस्तत्रैव जन्मन्यपवर्गमाप ॥ ९२ ॥ परमार्थाध्यात्ममेतत्तुभ्यमुक्तं मुनीश्वर ॥ ब्राह्मणक्षत्रियविशां श्रोतॄणां चापि मुक्तिदम् ॥९३॥ यथा पृष्टं त्वया ब्रह्मंस्तथा ते गदितं मया ॥ ब्रह्मज्ञानमिदं शुद्धं किमन्यत्कथयामि वै ॥९४॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वि०पा०एकोनपञ्चाशत्तमोध्यायः ॥ ४९ ॥

सूत उवाच ॥ श्रुत्वा सनंदनस्येत्थं वचनं नारदो मुनिः ॥ असंतुष्ट इव प्राह भ्रातरं तं सनंदनम् ॥ १ ॥ नारद उवाच ॥ भगवन्सर्वमाख्यातं यत्पृष्टं भवतो मया ॥ तथापि नात्मा प्रीयेत शृण्वन्हरिकथां मुहुः ॥ २ ॥ श्रूयते व्यासपुत्रस्तु शुकः परमधर्मवित् ॥ सिद्धिं सुमहतीं प्राप्तो निर्वि





ण्णोऽवांतरं बहिः ॥३॥ ब्रह्मन्पुंसस्तु विज्ञानं महतां सेवनं विना ॥ न जायते कथं प्राप्तो ज्ञानं व्यासात्मजः शिशुः ॥ ४ ॥ तस्य जन्मरहस्यं मे कर्म
चाप्यस्य शृण्वते॥समाख्याहि महाभाग मोक्षशास्त्रार्थविद्वान्॥५॥सनंदन उवाच॥ शृणु विप्रप्रवक्ष्यामि शुकोत्पत्तिं समासतः॥यां श्रुत्वा ब्रह्मतत्त्वज्ञो
जायते मानवो मुने ॥६॥ न हायनैर्न पलितैर्न वित्तेन न बंधुभिः ॥ ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥७॥ नारद उवाच ॥ अनूचानः
कथंब्रह्मन्पुमान्भवति मानद ॥ तन्मे कर्म समाचक्ष्व श्रोतुं कौतूहलं मम ॥ ८ ॥ सनंदन उवाच ॥ शृणु नारद वक्ष्यामि ह्यनूचानस्य लक्षणम् ॥
यज्ज्ञात्वा सांगवेदानामभिज्ञो जायते नरः ॥ ९॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ॥ छंदःशास्त्रं षडेतानि वेदांगानि विदुर्बुधाः॥१० ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ वेदाश्चत्वार एवैते प्रोक्ता धर्मनिरूपणे ॥ ११ ॥ सांगान्वेदान्गुरोर्यस्तु समधीते द्विजोत्तमः ॥ सोऽनूचानः
प्रभवति नान्यथा ग्रंथकोटिभिः ॥ १२ ॥ नारद उवाच ॥अंगानां लक्षणं ब्रूहि वेदानां चापि विस्तरात्॥ त्वमस्मासु महाविज्ञः सांगेष्वेतेषु मानद
॥ १३ ॥सनंदन उवाच ॥ प्रश्नभारोऽयमतुलस्त्वया मम कृतो द्विज ॥ संक्षेपात्कथयिष्यामि सारमेषां सुनिश्चितम् ॥ १४ ॥ स्वरः प्रधानः शिक्षायां
कीर्तितो मुनिभिर्द्विजैः ॥ वेदानां वेदविद्भिस्तु तच्छृणुष्व वदामि ते ॥ १५ ॥ आर्चिकं गाथिकं चैव सामिकं च स्वरान्तरम् ॥ कृतांते स्वरशास्त्राणां
प्रयोक्तव्य विशेषतः ॥ १६ ॥ एकांतरः स्वरो ह्यृक्षु गाथासुद्व्यंतरः स्वरः ॥ सामसु त्र्यंतरं विद्यादेतावत्स्वरतोऽन्तरम् ॥ १७ ॥ ऋक्सामयजुरंगानि
ये यज्ञेषु प्रयुंजते॥ अविज्ञानाद्धि शिक्षायास्तेषां भवति विस्वरः ॥ १८ ॥मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो
यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् ॥ १९ ॥ उरः कंठः शिरश्चैव स्थानानि त्रीणि वाङ्मये ॥ सवनान्याहुरेतानि साम याप्यर्द्धतोंऽतगम
॥२०॥ उरः सप्तविचारं स्यात्तथा कंठस्तथा शिरः ॥ न च शक्तोऽसि व्यक्तस्तु तथा प्रावचना विधिः ॥ २१ ॥ कठकालापवृत्तेषु तैत्तिगह्वरकेषु च ॥
ऋग्वेदे सामवेदे च वक्तव्यः प्रथमः स्वरः ॥ २२॥ऋग्वेदस्तु द्वितीयेन तृतीयेन च वर्तते ॥ उच्चमध्यमसंघातः स्वरो भवति पार्थिवः॥२३॥ तृतीय
प्रथमक्रुष्टा कुर्वंत्याह्वरकान् स्वरान् ॥ द्वितीयाद्यास्तु मद्रांतास्तैत्तिरीयाश्चतुःस्वरान् ॥२४॥प्रथमश्च द्वितीयश्च तृतीयोऽथ चतुर्थकः ॥ मंद्रः क्रुष्टो मुनी
श्वर एतान्कुर्वंति सामगाः॥२५॥द्वितीयप्रथमावेतौ नांडिभाल्लविनौ स्वरौ ॥ तथा शातपथावेतौ स्वरौ वाजसनेयिनाम्॥२६॥एते विशेषतः प्रोक्ताः ॥ ८३ ॥
स्वरा वै सार्ववैदिकाः ॥ इत्येतच्चरितं सर्वं स्वराणां सार्ववैदिकम् ॥ २७॥सामवेदे तु वक्ष्यामि स्वराणां चरितं यथा॥ अल्पग्रंथं प्रभूतार्थं सामवेदांगमु
त्तमम् ॥२८॥तानरागस्वरग्राममूर्च्छनानां तु लक्षणम् ॥ पवित्रं पावनं पुण्यं यथा तुभ्यं प्रकीर्तितम् ॥ २९ ॥ शिक्षामाहुर्द्विजातीनामृग्यजुःसामलक्ष

णम् ॥ सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः ॥३०॥ताना एकोनपंचाशदित्येतत्स्वरमंडलम् ॥ षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा॥३१॥ पंचमो धैवतश्चैव निषादः सप्तमः स्वरः ॥ षड्जमध्यमगांधारास्त्रयो ग्रामाः प्रकीर्तिताः ॥ ३२ ॥ भूर्लोकाज्जायते षड्जो भुवर्लोकाच्च मध्यमः ॥ स्वर्गाच्चैव गांधारो ग्रामस्थानानि त्रीणि हि ॥ ३३ ॥ स्वराणां च विशेषेण ग्रामरागा इति स्मृताः ॥ विंशतिर्मध्यमग्रामे षड्जग्रामे चतुर्दश ॥ ३४ ॥ तानान्पंचदशेच्छंति गांधारे सामगायिनाम् ॥ नदी विशाला सुमुखी चित्रा चित्रवती सुखा ॥ ३५ ॥ बला चाप्यथ विज्ञेया देवानां सप्त मूर्छनाः ॥ आप्यायिनी विश्वभृता चंद्रा हेमा कपर्दिनी ॥ ३६ ॥ मैत्री च बार्हती चैव पितॄणां सप्त मूर्छनाः ॥ षड्जे तूत्तरमंद्रा स्यादृषभे चाभिरूढता ॥ ३७ ॥ अश्वक्रांता तु गांधारे तृतीया मूर्च्छना स्मृता ॥ मध्यमे खलु सौवीरा हृषिका पंचमे स्वरे ॥३८॥ धैवते चापि विज्ञेया मूर्छना तूत्तरा मता ॥ निषादे रजनीं विद्यादृषीणां सप्त मूर्छनाः॥३९॥उपजीवंति गंधर्वा देवानां सप्त मूर्छनाः॥पितॄणां मूर्च्छनाः सप्त तथा यक्षा न संशयः॥४०॥ऋषीणां मूर्छनाः सप्त यास्त्विमा लौकिकाः स्मृताः ॥ षड्जः प्रीणाति वै देवानृषीन्प्रीणाति चर्षभः॥४१॥पितॄन् प्रीणाति गांधारो गंधर्वान्मध्यमः स्वरः ॥ देवान्पितॄनृषींश्चैव स्वरः प्रीणाति पंचमः ॥४२॥ यक्षान्निषादः प्रीणाति भूतग्रामं च धैवतः ॥ गानस्य तु दशविधा गुणवृत्तिस्तु तद्यथा ॥ ४३ ॥ रक्तं पूर्णमलंकृतं प्रसन्नं व्यक्तं विकुष्टं श्लक्ष्णं समं सुकुमारं मधुरमिति गुणास्तत्र रक्तं नाम वेणुवीणास्वराणामेकीभावं रक्तमित्युच्यते पूर्णं नाम स्वरश्रुतिपूरणाच्छंदः पादाक्षरं संयोगात्पूर्णमित्युच्यते अलंकृतं नामोरसि शिरसि कंठयुक्तमित्यलंकृतं प्रसन्नं नामापगतागद्गदनिर्विशंकं प्रसन्नमित्युच्यते व्यक्तं नाम पदपदार्थप्रकृतिविकारागमनोपकृत्तद्धितसमासधातुनिपातोपसर्गस्वरलिंगं वृत्तिवार्त्तिकविभक्त्यर्थवचनानां सम्यगुपपादनं व्यक्तमित्युच्यते विकुष्टं नामोच्चरुच्चारितं व्यक्तपदाक्षरं विकुष्टमित्युच्यते श्लक्ष्णं नाम द्रुतमविलंबितमुच्चनीचप्लुतसमाहारहेलतालोपनयादिभिरुपपादनाभिः श्लक्ष्णमित्युच्यते समं नामावापनिर्वापप्रदेशे प्रत्यंतरस्थानानां समासः सममित्युच्यते सुकुमारं नाम मृदुपदवर्णस्वरकुहरणयुक्तं सुकुमारमित्युच्यते मधुरं नाम स्वभावोपनीतललितपदाक्षरगुणसमृद्धं मधुरमित्युच्यते एवमेतैर्दशभिर्गुणैर्युक्तं गानं भवति॥१॥भवन्ति चात्र श्लोकाः ॥ शंकितं भीषणं भीतमुद्घुष्टमनुनासिकम् ॥ काकस्वरं मूर्द्धगतं तथा स्थानविवर्जितम् ॥ ४४ ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् ॥ व्याकुलं तालहीनं च गीतिदोषाश्चतुर्दश ॥ ४५ ॥ आचार्याः सममिच्छंति पदच्छेदं तु पंडिताः ॥ स्त्रियो मधुरमिच्छंति विकुष्टमितरे जनाः ॥४६॥ पद्मपत्रप्रभः षड्ज ऋषभः शुकपिंजरः ॥ कनकाभस्तु गांधारो मध्यमः कुंदसन्निभः ॥४७॥ पंचमस्तु भवेत्कृष्णः पीतकं धैवतं विदुः ॥ निषादः सर्ववर्णः स्यादित्येताः स्वरवर्णताः ॥ ४८ ॥ पंचमो





मध्यमः षड्ज इत्येते ब्राह्मणाः स्मृताः ॥ ऋषभो धैवतश्चापीत्येतौ वै क्षत्रियावुभौ ॥ ४९ ॥ गांधारश्च निषादश्च वैश्यावर्द्धेन वै स्मृतो ॥ शूद्रत्वं
विधिनार्द्धेन पतितत्वान्न संशयः ॥५०॥ ऋषभो मूर्छितवर्जितो धैवतसहितश्च पंचमो यत्र ॥ निपतति मध्यमरागे स निषादं षाड्वं विद्यात्॥५१॥
यदि पंचमो विरमते गांधारश्चांतरस्वरो भवति ॥ ऋषभो निपादसहितस्तं पंचममीदृशं विद्यात् ॥५२ ॥ गांधारस्याधिपत्येन निपादस्य गतागतैः॥
धैवतस्य च दौर्बल्यान्मध्यमग्राम उच्यते ॥ ५३ ॥ ईषत्पृष्टो निपादस्तु गांधारश्चाधिको भवेत् ॥ धैवतः कंपितो यत्र स षड्ग्राम ईरितः ॥ ५४ ॥
अंतरस्वरसंयुक्तः काकलिर्यत्र दृश्यते ॥ तं तु साधारितं विद्यात्पंचमस्थं तु कैशिकम् ॥ ५५ ॥ कैशिकं भावयित्वा तु स्वरैः सर्वैः समंततः ॥यस्मा
तु मध्यमे न्यासस्तस्मात्कैशिकमध्यमः ॥ ५६ ॥ काकलिर्दृश्यते यत्र प्राधान्यं पंचमस्य तु ॥ कश्यपः कैशिकं प्राह मध्यमग्रामसंभवम् ॥ ५७ ॥
गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम् ॥ वेति वाद्यस्य संज्ञेयं गंधर्वस्य प्ररोचनम् ॥ ५८ ॥ यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः ॥ यो
द्वितीयः स गांधारस्तृतीयस्त्वृषभः स्मृतः ॥ ५९ ॥ चतुर्थः षड्ज इत्याहुः पंचमो धैवतो भवेत् ॥ षष्ठो निपादो विज्ञेयः सप्तमः पंचमः स्मृतः ॥६०॥
षड्जं मयूरो वदति गावो रंभंति चर्षभम् ॥ अजाविके तु गांधारं क्रौंचो वदति मध्यमम् ॥ ६१ ॥ पुष्पसाधारणे काले कोकिला वक्ति पञ्चमम ॥
अश्वस्तु धैवतं वक्ति निषादं वक्ति कुंजरः ॥ ६२॥ कंठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः ॥ गांधारस्त्वनुनासिक्य उरसो मध्यमः स्वरः ॥६३॥
उरसः शिरसः कंठादुत्थितः पंचमः स्वरः ॥ ललाटाद्धैवतं विद्यान्निषादं सर्वसन्धिजम् ॥६४ ॥ नासा कंठमुरस्तालुजिह्वादंतांश्च संश्रितः॥षड्भिः सं
जायते यस्मात्तस्मात्षड्ज इति स्मृतः ॥ ६५ ॥ वायुः समुत्थितो नाभेः कंठशीर्षसमाहतः ॥ नर्दत्यृषभवद्यस्मात्तस्मादृषभ उच्यते ॥ ६६ ॥ वायुः
समुत्थितो नाभेः कंठशीर्षसमाहतः ॥ वाति गंधवहः पुण्यो गांधारस्तेन हेतुना ॥ ६७ ॥ वायुः समुत्थितो नाभेरुरो हृदि समाहतः ॥ नाभिप्राप्तो
मध्यवर्ती मध्यमत्वं समश्नुते ॥ ६८ ॥ वायुः समुत्थितो नाभेरुरोहृत्कंठकाहतः ॥ पंचस्थानोत्थितस्यास्य पंचमत्वं विधीयते ॥ ६९ ॥ धैवतं
च निषादं च वर्जयित्वा तु तावुभौ ॥ शेषान्पंच स्वरांस्त्वन्ये पंचस्थानोत्थितान्विदुः ॥ ७० ॥ पंचस्थानस्थितत्वेन सर्वस्थानानि धार्यते ॥ ॥ ८४ ॥
अग्निगीतस्वरः षड्ज ऋषभो ब्रह्मणोच्यते ॥ ७१ ॥ सोमेन गीतो गांधारो विष्णुना मध्यमः स्वरः ॥ पंचमस्तु स्वरो गीतस्त्वयैवेति निधारय ॥
॥ ७२ ॥ धैवतश्च निषादश्च गीतौ तुंबुरुणा स्वरौ ॥ आद्यस्य दैवतं ब्रह्मा षड्जस्याप्युच्यते बुधैः ॥ ७३ ॥ तीक्ष्णदीप्तप्रकाशत्वादृषभस्य हुताशनः॥
गावः प्रणीते तुष्यंति गांधारस्तेन हेतुना॥७४॥ श्रुत्वा चैवोपतिष्ठंति सौरभेया न संशयः ॥ सोमस्तु पंचमस्यापि दैवतं ब्रह्मराट् स्मृतम ॥ ७५ ॥

निह्रासो यस्य वृद्धिश्च ग्राममासाद्य सोमवत् ॥ अतिसंधीयते यस्मादेतान्पूर्वोत्थितान्स्वरान् ॥ ७६ ॥ तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते ॥ निषीदंति स्वरा यस्मान्निषादस्तेन हेतुना ॥ ७७ ॥ सर्वांश्चाभिभवत्येष यदादित्योऽस्य दैवतम् ॥ ७८ ॥ दारवी गात्रवीणा च द्वे वीणे गानजातिषु ॥ ७९ ॥ सामनी गात्रवीणा तु तस्यास्त्वं शृणु लक्षणम् ॥ गात्रवीणा तु सा प्रोक्ता यस्यां गायंति सामगाः ॥ ८० ॥ स्वरव्यंजनसंयुक्ता अंगुल्यंगुष्ठरंजिता ॥ हस्तौ तु संयतौ धार्यौ जानुभ्यामुपरिस्थितौ ॥ ८१ ॥ गुरोरनुकृतिं कुर्याद्यथान्या न मतिर्भवेत् ॥ प्रणवं प्राक्प्रयुंजीत व्याहृतीस्तदनंतरम् ॥८२॥ सावित्रीं चानुवचनं ततो वै गानमारभेत् ॥ प्रसार्य चांगुलीः सर्वा रोपयेत्स्वरमंडलम् ॥८३ ॥ न चांगुलीभिरंगुष्ठमंगुष्ठेनांगुलीः स्पृशेत् ॥ विरला नांगुलीः कुर्यान्मूले चैतां न संस्पृशेत् ॥ ८४ ॥ अंगुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेत् ॥ मात्राद्विमात्रवृद्धानां विभागार्थं विभागवित् ॥ ८५ ॥ अंगुलीभिर्द्विमात्रं तु पाणेः सव्यस्य दर्शयेत् ॥ त्रिरेखा यस्य दृश्येत सिद्धिं तत्र विनिर्दिशेत् ॥ ८६ ॥स पर्व इति विज्ञेयः शेषमंतरमंतरम् ॥ पर्वांतरं सामसु च ऋक्षु कुर्यात्तिलांतरम् ॥ ८७ ॥ स्वराग्न्मध्यमपर्वसु सुनिविष्टं निवेशयेत् ॥ न चात्र कंपयेत्किंचिदंगस्यावयवं बुधः ॥ ८८ ॥ अधस्तनं मृदं न्यस्य हस्तमात्रे यथाक्रमम् ॥ अभ्रमध्ये यथा विद्युद्दृश्यते मणिसूत्रवत् ॥ ८९ ॥ पृपच्छेदविवृत्तीनां यथा वालेषु कर्तरी ॥ कूर्मोऽगानि च संहृत्य चेतोदृष्टिं दिशन्मनः ॥ ९०॥स्वस्थः प्रशांतो निर्भीको वर्णानुच्चारयेद्बुधः ॥ नासिकायास्तु पूर्वेण हस्तं गोकर्णवद्धरेत् ॥ ९१ ॥ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिंतयेत् ॥ सम्यक्प्रचारयेद्वाक्यं हस्तेन च मुखेन च ॥ ९२ ॥ यथैवोच्चारयेद्वर्णांस्तथैवेनां समापयेत् ॥ नात्याहन्यान्न निर्हण्यान्न प्रगायेन्न कंपयेत् ॥ ९३ ॥ समं सामानि गायेत व्योम्नि स्वेन गतिर्यथा ॥ यथा सुचरतां मार्गो मीनानां नोपलभ्यते॥९४॥ आकाशे वा विहंगानां तद्वत्स्वरगता श्रुतिः॥ यथा दधिनि सर्पिः स्यात्काष्टस्थो वा यथाऽनलः॥९५॥प्रयत्नेनोपलभ्येत तद्वत्स्वरगता श्रुतिः॥स्वरात्स्वरस्य संक्रामं स्वरसंधिमनुल्बणम्॥९६॥अविच्छिन्नं समं कुर्यात्सूक्ष्मच्छायातपोपमम्॥अनागतमतिक्रांतं विच्छिन्नं विषमाहतम्॥९७॥ तन्वंतमस्थितातं च वर्जयेत्कर्षणं बुधः॥ स्वरः स्थानाच्युतो यस्तु स्वं स्थानमतिवर्तते॥९८॥विस्वरं सामगा ब्रूयुर्विरक्तमिति वीणिनः॥अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ॥ ९९ ॥ शिष्याणामुपदेशार्थं कुर्याद्वृत्तिं विलंबिताम् ॥ गृहीतग्रंथ एवं तु ग्रंथोच्चारणशैक्षकान् ॥ १०० ॥ हस्ते नाध्यापयेच्छिष्यान् शैक्षेण विधिना द्विजः ॥ क्रुष्टस्य मूर्द्धनि स्थानं ललाटे प्रथमस्य तु ॥ १०१ ॥ भ्रुवोर्मध्य द्वितीयस्य तृतीयस्य तु कर्णयोः ॥ कंठस्थानं चतुर्थस्य मंद्रस्य रसनोच्यते॥१०२॥अतिस्वरस्य नीचस्य हृदि स्थानं विधीयते॥अंगुष्ठस्योत्तमे क्रुष्टो ह्यंगुष्ठं प्रथमःस्वरः॥१०३॥ प्रदेशिन्यां

तु गांधार ऋषभस्तदनंतरम्॥अनामिकायां पङ्जस्तु कनिष्ठायां तु धैवतः॥१०४॥ तस्याधस्ताच्च योन्यास्तु निषादं तत्र निर्दिशेत्॥अपर्वत्वादमध्यत्वा दव्ययत्वाच्च नित्यशः ॥ १०५ ॥ मंद्रो हि मंदीभूतस्तु पारिस्वार इति स्मृतः ॥ क्रुष्टेन देवा जीवंति प्रथमेन तु मानुषाः ॥ १०६ ॥ पशवस्तु द्वितीयेन गंधर्वाप्सरसस्त्वतु ॥ अंधजाः पितरश्चैव चतुर्थस्वरजीविनः ॥ १०७ ॥ मंद्रत्वेनोपजीवंति पिशाचासुरराक्षसाः ॥ अतिस्वरेण नीचेन जगत्स्थावरजंगमाः ॥ १०८ ॥ सर्वाणि खलु भूतानि धार्यंते सामिकैः स्वरैः ॥ दीप्तायताकरुणानां मृदुमध्यमयोस्तथा ॥१०९॥श्रुतीनां यो विशेषज्ञो न स आचार्य उच्यते ॥ दीप्ता मंद्रे द्वितीये च प्रचतुर्थे तथैव च ॥ ११० ॥ अतिस्वरे तृतीये च क्रुष्टे तु करुणा श्रुतिः॥श्रुतयो या द्वितीयस्य मृदुमध्यायताः स्मृताः॥१११॥तासामपि तु वक्ष्यामि लक्षणानि पृथक् पृथक्॥आयतात्वं भवेन्नीचे मृदुता तु विपर्यये॥११२॥स्वे स्वरे मध्यमात्वं तु तत्समीक्ष्य प्रयोजयेत् ॥ द्वितीये विरता या तु क्रुष्टश्च परतो भवेत् ॥ ११३ ॥ दीप्तां तां तु विजानीयात्प्राथम्येन मृदुः स्मृतः॥अत्रैव विरता या तु चतुर्थेन प्रवर्तते ॥११४॥ तथा मंद्रे भवेद्दीप्ता साम्नश्चैव समापने ॥ नातितारश्रुतिं कुर्यात्स्वरयोर्नापि चांतरे ॥ ११५ ॥ तं च ह्रस्वे च दीर्घे च न चापि घुटिसञ्ज्ञके ॥ द्विविधा गतिः पदांतस्थितसंधिः सहोष्मभिः ॥ ११६ ॥स्थानेषु पंचस्वेतेषु विज्ञेय घुटिसंज्ञकम्॥स्वरांतगविरतानि ह्रस्वदीर्घघुटानि च ॥११७ ॥ स्थितिस्थानेष्वशेषाणि श्रुतिवत्स्वरतो वदेत् ॥ दीप्तामुदात्ते जानीयाद्दीप्तां च स्वरिते विदुः॥११८॥अनुदात्ते मृदुर्ज्ञेया गंधर्वाः श्रुतिसंपदे ॥ उदात्तश्चानुदात्तश्च स्वरितप्रचिते तथा ॥ ११९ ॥ निघातश्चेति विज्ञेयः स्वरभेदश्च पंचधा॥अत ऊर्ध्वं प्रवक्ष्यामि आचिकस्य स्वरत्रयम् ॥ १२० ॥ उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः ॥य एवोदात्त इत्युक्तः स एव स्वरितात्परः ॥ १२१॥ प्रचयः प्रोच्यते तज्ज्ञैर्न चात्रान्यत्स्वरांतरम्॥वर्णस्वरोऽतीतस्वरः स्वरितो द्विविधः स्मृतः॥१२२॥ मात्रिको वर्ण एवं तु दीर्घस्तूच्चरितादनु॥स तु समविधो ज्ञेयः स्वरः प्रत्ययदर्शनात् ॥१२३॥ पदेन तु स विज्ञेयो भवेद्यो यत्र यादृशः ॥ सप्तस्वरान्प्रयुंजीत दक्षिणं श्रवणं प्रति ॥ १२४॥ आचार्यैर्विहितं शास्त्रं पुत्रशिष्यहितैषिभिः॥उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा॥१२५॥वैस्वर्यस्वारसंज्ञायां किंस्थानः स्वार उच्यते॥उच्चनीचस्य यन्मध्ये साधारणमिति श्रुतिः ॥१२६॥ तं स्वारं स्वारसंज्ञायां प्रतिजानंति शैक्षिकाः ॥उदात्ते निषादगांधारावनुदात्ते ऋषभधैवतौ॥१२७॥ स्वरितप्रभवा ह्येते षड्जमध्यमपंचमाः॥ यत्र कखपरा ऊष्मा जिह्वामूलप्रयोजनाः ॥ १२८ ॥तानप्याज्ञापयेन्मात्राप्रकृत्यैव तु सा कला॥ जात्यः क्षैप्रोऽभिनिहित स्तैरव्यंजन एव च॥१२९॥ तिरोविरामः प्रश्लिष्टोऽपादवृत्तश्च सप्तमः ॥ स्वराणामहमेतेषां पृथग्वक्ष्यामि लक्षणम् ॥ १३० ॥ उद्दिष्टानां तथा न्यायमुदाहरणमेव च॥सपकारं

सर्वं वापि ह्यक्षरं स्वरितं भवेत् ॥ १३१ ॥ न चोदात्तं पुरो यस्य जात्यः स्वारः स उच्यते ॥ इउवर्णौ यदोदात्तावापद्येते पवौ क्वचित् ॥१३२॥ अनुदात्तं प्रत्यये तु विद्यात्क्षैप्रस्य लक्षणम्॥ एओआभ्यामुदात्ताभ्यामकारो निहितश्च यः॥१३३॥अकारो यत्र लुंपति तमभिनिहितं विदुः ॥ उदात्तपूर्वं यत्किंचिच्छंदसि स्वरितं भवेत् ॥ १३४ ॥ एष सर्वबहुस्वारस्तैरव्यंजन उच्यते ॥ अवग्रहात्परं यत्र स्वरितं स्यादनंतरम् ॥ १३५ ॥ तिरोविरामं तं विद्यादुदात्तो यद्यवग्रहः॥इकारं यत्र पश्येयुरिकारेणैव संयुतम्॥१३६॥उदात्तमनुदात्तेन प्रश्लिष्टं तं विचारय॥स्वरे चेत्स्वरितं यत्र विवृता यत्र संहिता ॥१३७॥एतत्पादांतवृत्तस्य लक्षणं शास्त्रनोदितम्॥ तान्यः स्वारः स जात्येन श्रुत्यग्रे क्षैप्र उच्यते ॥१३८॥ ते मन्वताभिनिहितस्तैरव्यञ्जन ऊतये ॥ तिरोविरामो विष्कपिते प्रश्लिष्टो हीईंगोवर्णः॥१३९॥ पादवृत्तः कंदविदे स्वराः सप्तैवमादयः॥उच्चादेकाक्षरात्पूर्वात्स्वरं यद्यदिहाक्षरम्॥ १४०॥स्वाराणां जात्यवर्जानामेषा प्रकृतिरुच्यते ॥ चत्वारस्त्वादितः स्वाराः कंपपुंश्रुतिशास्त्रतः ॥ १४१ ॥ उदात्ते चैकनीचे वा जुह्वोऽग्निस्तन्निदर्शनम्॥इकारांते पदे पूर्वं उकारे परतः स्थिते ॥ १४२ ॥ ह्रस्वं कंपं विजानीयान्मेधावी नात्र संशयः ॥ इकारांत पदे चैवोकारद्वयं परे पदे॥ १४३ ॥दीर्घं कंपं विजानीयाच्छ्वाग्धूष्विति निदर्शनम् ॥ त्रयो दीर्घास्तु विज्ञेया ये च संध्यक्षरेषु वै ॥ १४४॥मन्था यथा न इंद्राभ्यां शेषा ह्रस्वाः प्रकीर्तिताः॥ अनेकानामुदात्तानामनुदात्तः प्रत्ययो यदि॥ १४५ ॥शिवकंपं विजानीयादुदात्तः प्रत्ययो यदि ॥ यत्र द्विप्रभृतीनि स्युरुदात्तान्यक्षराणि तु ॥ १४६ ॥ नीचं वोच्चं च परतस्तत्रोदात्तं विदुर्बुधाः ॥ न रेफे वा हकारे वा द्विर्भावो जायते क्वचित् ॥ १४७ ॥ न च वर्गद्वितीयेषु न चतुर्थे कदाचन॥ चतुर्थं तु तृतीयेन द्वितीयः प्रथमेन तु ॥ १४८ ॥आद्यमंत्यं च मध्यं च स्वाराक्षरेण पीडयेत् ॥ अनंत्यश्च भवेत्पूर्वो ह्यंतश्च परतो यदि ॥ १४९॥ तत्र मध्ये यमस्तिष्ठेत्स्ववर्णः पूर्ववर्णयोः ॥ वर्गांत्यान् शषसैः सार्द्धमंतस्थैर्वापि संयुतान् ॥ १५० ॥ दृष्ट्वा यमा निवर्तंते अदेशिकमिवाध्वगाः ॥ तृतीयश्च चतुर्थश्च चतुर्थादिपरं पदम्॥ १५१ ॥द्वौ तृतीयौ हकारश्च हकारादिपरं पदम्॥ अनुस्वारोपधामूला तान् कचित्क्रमतः परम्॥ १५२ ॥ रहपूर्वं संयुते चाप्युत्तरं क्रमतेऽक्षरम् ॥संयोगो यत्र दृश्येत व्यंजनं विरते पदे॥ १५३॥पूर्वांगमादितः कृत्वा परांगादौ निवेशयेत्॥संयोगे स्वरितं यत्र उद्घातः प्रतनं तथा॥ १५४॥पूर्वांगं तद्विजानीयाद्येनारंभः परं हि तत्॥संयोगात्तु विजानीयात्परं संयोगनायकम्॥ १५५॥संयुक्तस्य तु वर्णस्य तत्परं पूर्वमक्षरम्॥ अनुस्वारः पदांतश्च क्रमजं प्रत्यये स्वके॥ १५६॥स्वरभक्तिस्तथा रेफः पूर्वपूर्वांगमुच्यते॥पादादौ चापादादौ संयोगावग्रहेषु च ॥१५७॥ यशब्द इति विज्ञेयो योऽन्यः सयइति स्मृतः॥पादादावप्यविच्छेदे संयोगान्ते च तिष्ठताम्॥ १५८॥वर्जयित्वा रहपाणामुपादेशः प्रदृश्यते॥स्वसंयुक्तो गुरुर्ज्ञेयः सानुस्वारा

ग्रिमः स्फुटः॥अणुशेषो द्विगो वापि युगलादिरविस्फुटः॥१५९॥ यदुदात्तमुदात्तं तद्यत्स्वरितं तत्पदे भवति ॥यन्नीचं नीचमेव तद्यत्प्रचयस्थं तदपि
नीचम्॥ १६०॥अग्निः सुतो मित्रमिदं तथा वयमयावहाः॥प्रियं दूतं घृतं चित्तमतिशब्दस्तु नीचतः॥१६१॥अर्केष्वेव सुतेष्वेव यज्ञेषु कलशेषु च॥
शतेषु सपवित्रेषु नीचादुच्चार्यते श्रुतिः ॥१६२॥हारिवरुणवरेण्येषु धारापुरुषेषु स्वरतिरेफः॥विश्वानरोनकारश्च शेषास्तुस्वरिता नराः॥१६३॥द्वौ वरुणौ
वस्वरत उदुत्तमंत्वं वरुणधार चौरुधारामुरुधारेस्वदोहते ॥ मात्रिकं वा द्विमात्रं वा स्वर्यते यदिहाक्षरम् ॥तस्यादितोऽर्द्धमात्रं वै शेषं तु परतो भवेत्॥
अदीर्घं दीर्घवत्कुर्याद्विस्वरं यत्प्रयुज्यते ॥ १६४ ॥ कंपोत्स्वरिताभिगीतं ह्रस्वकर्षणमेव च ॥निमेषकाला मात्रा स्याद्विद्युत्कालेति चापरे॥१६५॥
ऋक्स्वरा तुल्ययोगा वा कैश्चिदेवमुदीर्यते ॥ १६६ ॥ समासेऽवग्रहं कुर्यात्पदं चात्रानुसंहितम् ॥ येतीक्षरादिकरणं पदांतस्येति तं विदुः ॥
॥१६७॥ ( सर्वत्र मित्रपुत्रसखिशब्दा अहिशतक्रतोरवग्राह्याः ॥ आदित्यविप्रजातवेदाश्च सत्पतिगोपतिवृत्रहासमुद्राश्च ॥ स्वरयुपुषोदेवयवश्चारितं
देवतातपे ) चिकितिश्च धचैव नावगृह्णंति पंडिताः ॥ विवृतयश्चतस्रो वै विज्ञेया इति मे मतम् ॥ १६८ ॥ अक्षराणां नियोगेन तासां
नामानि मे शृणु ॥ ह्रस्वादिवत्सानुसृता वत्सानुसारिणी चाग्रे ॥१६९॥ पाकवत्युभयोर्ह्रस्वा दीर्घा वृद्धा पिपीलिकाः ॥ चतसृणां विवृतीना
मंतरं मात्रिकं भवेत् ॥ १७० ॥ अर्द्धमात्रिकमन्येषामन्येषामणुमात्रिकम् ॥१७१॥ आपद्यते मकारो रेफोष्मसु प्रत्ययेऽप्यनुस्वारम्॥ पदेषु परसवर्णं
स्पर्शेषु चोत्तमापतिम् ॥ १७२ ॥ नकारांते पदे पूर्वे स्वरे च परतः स्थिते॥ अकारं रक्तमित्याहुस्तत्कारेण तु रज्यते॥१७३॥नकारांते पदे पूर्वे व्यंजनैश्च
यवोह्वि्षु॥अर्द्धमात्रा तु पूर्वस्य रज्यते त्वणुमात्रया॥१७४॥नकारस्वरसंयुक्तश्चतुर्युक्तो विधीयते॥रेफो रंगश्च लोपश्च सानुस्वारोऽपि वा क्वचित्॥१७५॥
हृदयादुत्तिष्ठते रंगः कांस्येन तु समन्वितः॥मृदुश्चैव द्विमात्रश्च दधन्वांइति निदर्शनम् ॥१७६॥ यथा सौराष्ट्रिका नारी अरां इत्यभिभाषते॥एवं रंगः प्रयो
क्तव्यो नारदैतन्मतं मम ॥१७७॥स्वरा गडदबाश्चैव ङणनमाः सहोष्मभिः॥चतुर्णां पदजातीनां पदांता दश कीर्तिताः॥१७८॥स्वर उच्चः स्वरो नीचः
स्वरः स्वरित एव च ॥ व्यंजना न तु वर्तन्ते यत्र तिष्ठति स स्वरः ॥ १७९ ॥ स्वरप्रधानं त्रैस्वर्यमाचार्याः प्रतिजानते ॥ मणिवद्व्यंजनं विद्यात्सूत्र
वच्च स्वरं विदुः ॥ १८० ॥ दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः ॥ दुर्बलं व्यजनं तद्वद्धरेत बलवान्स्वरः ॥ १८१ ॥ उभावश्च विवृत्तिश्च शषसा
रेफ एव च ॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १८२ ॥ स्वरप्रत्ययाविवृतिः संहितायां तु या भवेत् ॥ विसर्गस्तत्र मंतव्यस्तालव्यश्चात्र
जायते ॥१८३ ॥ संध्यक्षरे परे संधौ प्राप्तलुप्तौ यवौ यदि ॥व्यञ्जनाख्या विवृत्तिस्तु स्वराख्या प्रतिसंहिता ॥ १८४ ॥ऊष्मांतं विरते यत्र समासो

भवति क्वचित् ॥ विवृत्तिर्या भवेत्तत्र स्वराख्यां तां विनिर्दिशेत् ॥ १८५ ॥ यद्योभावप्रसंधानमृकारादिपरं पदम् ॥ स्वरांतं तादृशं विद्याद्यदन्यद्व्यक्त
मूष्मणः ॥ १८६ ॥ प्रथमा उत्तमाश्चैव पदांतेषु यदि स्थिताः ॥ द्वितीयं स्थानमापन्नाः शषसप्रत्यया यदि ॥१८७॥ प्रथमानूष्मसंयुक्तान् द्वितीया
निव दर्शयेत् ॥ न चैतान्प्रतिजानीयाद्यथा मत्स्यः क्षुरोप्सराः ॥ १८८ ॥ छंदोमानं च वृत्तं च पादस्थानं त्रिकारणम् ॥ ऋचः स्वच्छंदवृत्तास्तु
पादास्त्वक्षरमानतः ॥ १८९ ॥ ऋग्वर्य्यान् स्वरभक्तिं च छन्दोमानेन निर्दिशेत् ॥ प्रत्ययेत सहारेफमिमीते स्वरभक्तथा ॥ १९० ॥ ऋवर्णे तु
पृथग्रेफः प्रत्ययस्तु वृथा भवेत ॥ विद्याल्लघुमृकारं तु यदि तूष्माणसंयुतः ॥ १९१ ॥ ऊष्मणैव हि संयुक्त ऋकारो यत्र पीड्यते ॥ गुरुवर्णः स
विज्ञेयस्तृचं चात्र निदर्शनम् ॥ १९२ ॥ ऋषभं च गृहीतं च बृहस्पतिं पृथिव्यां च ॥ निर्ऋतिपंचमा ह्यत्र ऋकारा नात्र संशयः ॥ १९३ ॥ शषसह
रादौ रेफः स्वरभक्तिर्जायते द्विपदसंधौ ॥ इउवर्णाभ्यां हीना क्वचिदेकपदाक्रमवियुक्ता ॥ १९४ ॥ स्वरभक्तिर्द्विधा प्रोक्ता ऋकारे रेफ एव च ॥
स्वरोदा व्यञ्जनोदा च विहिताक्षरचिंतकैः ॥ १९५ ॥ शषसेषु स्वरोदयां हकारे व्यञ्जनोदयाम् ॥शषसेषु विवृतां तु हकारे संवृतां विदुः ॥ १९६ ॥
स्वरभक्तिं प्रयुंजानस्त्रीन्दोषान्परिवर्जयेत्॥ इकारं चाप्युकारं ग्रस्तदोषं तथैव च ॥१९७॥संयोगपरं छपरं विसर्जनीयं द्विमात्रकं चैव॥अथ सान्तिक च
नङ्मसानुस्वारं घुटतं च ॥ १९८ ॥यस्याः पादः प्रथमो द्वादशमात्रस्तथा तृतीयोऽपि ॥ अष्टादशो द्वितीयः समापन्नः पञ्चदशमात्रः ॥ दस्या
लक्षणमुक्तं या त्वन्या सा स्मृता विपुला ॥१९९ ॥अक्षराणां लघुह्रस्वमसंयोगपरं यदि॥ तत्संयोगोत्तरं विद्याद्गुरुदीर्घाक्षराणि तु॥२००॥विवृत्ति
र्यत्र दृश्येत स्वारस्यैवाग्रतः स्थितः ॥ २०१ ॥ गुरुस्वारः सविज्ञेयः क्षैप्रस्तत्र न विद्यते॥ अष्टप्रकारं विज्ञेयं पदानां स्वरलक्षणम् ॥ २०२ ॥ अंतो
दात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम्॥मध्योदात्तं स्वरित द्विरुदात्तमित्येता अष्टौ पदसंज्ञाः॥२०३॥अग्निः सोमः प्रवो वीर्यं हविषा स्ववनस्पतिः॥
अंतर्मध्यमयोताम्युदमनुनिपात्य आद्यात्स्वरितमुपसर्गे द्विस्त्रींचमाख्यात इति स्वरितात्पराणि यानि स्युर्द्धारापक्षराणि तु ॥ सर्वाणि प्रचयस्थान्यु
पोदात्तं निहन्यते ॥ २०४ ॥ प्रचयो यत्र दृश्येत तत्र हन्यात्स्वरं बुधः ॥ स्वरितः केवलो यत्र मृदुस्तत्र निपातयेत् ॥ २०५ ॥ पंचविधमाचार्यकं
नाम सुखं न्यासः करणं प्रतिज्ञोच्चारणा। अत्रोच्यते श्रेयः खलु वैश्याः प्रतिज्ञातोच्चारणा यस्य कस्यचिद्वर्णस्य करणं नोपलभ्यते प्रतिज्ञा तत्र
वोढव्या करणं हि तदात्मकम् ॥ २०६॥ तुंबुरुभवद्विशिष्टविश्वावस्वादयश्च गंधर्वाः ॥ सामसु निभृतं करणं स्वरसौक्ष्म्यान्नैव जानीयुः ॥ २०७ ॥
कौक्षेयाग्निं सदा रक्षेदश्रीपादर्शनं हेतुम् ॥ जीर्णो हारः प्रबुद्धः खलूषसिन्ब्रह्म चिंतयेत् ॥ २०८ ॥ शरद्विपुवतोर्तातादुपस्युत्थानमिष्यते ॥







यावद्वासंतिकी रात्रिर्मध्यमा पर्युपस्थिता ॥ २०९ ॥ आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥ वाग्यतः प्रातरुत्थाय भक्षयेद्दंतधावनम् ॥
॥ २१० ॥ खादिरश्च कदम्बश्च करवीरकरंजयोः ॥ सर्वे कंटकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥ २११ ॥ तेनास्य करणे सौक्ष्म्यं माधुर्यं चोप
जायते ॥ वर्णांश्च कुरुते सम्यक्प्राचीनौदवतिर्यथा ॥ २१२ ॥ त्रिफलां लवणाख्येन भक्षयेच्छिष्यकः सदा ॥ अग्निमेधाजनन्येषा स्वरवर्णकरी
तथा ॥ २१३ ॥ कृत्वा चावश्यकान्धर्मान्जाठरं पर्युपास्य च ॥ पीत्वा मधुं घृतं चैव शुचिर्भूत्वा ततो वदेत् ॥ २१४ ॥ मंद्रेणोपक्रमेत्पूर्वं सर्वशा
स्वास्वयं विधिः ॥ सप्तमंत्रानतिक्रम्य यथेष्टां वाचमुत्सृजेत् ॥ २१५ ॥ न तां समीरयेद्वाचं न प्राणमुपरोधयेत् ॥ प्राणानामुपरोधेन वैस्वर्यं
चोपजायते॥ स्वरव्यंजनमाधुर्यं लुप्यते नात्र संशयः ॥२१६॥ कुतीर्थादागतं दग्धमपवर्णैश्च भक्षितम् ॥ २१७ ॥ न तस्य परिमोक्षोऽस्ति पापाहे
रिव किल्बिषात्॥२१७॥सुतीर्थादागतं जग्धुं स्वाम्नातं सुप्रतिष्ठितम्॥सुस्वरेण स्ववक्रेण प्रयुक्तं ब्रह्म राजति॥२१८॥न करालो न लंबोष्ठो न च सर्वा
नुनासिकः ॥ २१८ ॥ गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति ॥ २१९॥ एकचित्तो निरुद्धांतः स्नातो गानविवर्जितः ॥ स तु वर्णान्प्रयुंजीत दंतोष्ठं
यस्य शोभनम्॥२२०॥पञ्च विद्यां न गृह्णंति चंडा स्तब्धाश्च ये नराः॥अलसाश्च सरोगाश्च येषां च विसृतं मनः॥२२१॥शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं
शनैः ॥ शनैरध्वसु वर्तेत योजनान्न परं व्रजेत् ॥ २२२ ॥ योजनानां सहस्रं तु शनैर्यांति पिपीलिका॥अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति
॥ २२३ ॥ नहि पापहता वाणी प्रयोगान्वक्तुमर्हति॥बधिरस्येव जल्पस्य विदग्धा वामलोचना ॥ २२४॥ उपांशुचरितं चैव योऽधीते वित्रसन्निव ॥
अपि रूपसहस्रेषु संदेहेष्वेव वर्तते॥२२५॥पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ॥राजते न सभामध्ये जारगर्भेव कामिनी॥२२६॥अञ्जनस्य क्षयं दृष्ट्वा
वल्मीकस्य तु संचयम् ॥ अवंध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु॥ २२७॥ यत्कीटैः पांशुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान् ॥ न तत्र बलसामर्थ्यं
मुद्योगस्तत्र कारणम्॥२२८॥सहस्रगुणिता विद्या शतशः परिकीर्तिता॥आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम् ॥२२९॥हयानामिव जात्यानामर्द्ध
रात्रार्द्धशायिनाम् ॥ नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ २३० ॥ न भोजनविलंबी स्यान्न च नारीनिबंधनः ॥ समुद्रमपि विद्यार्थी
व्रजेद्गरुडहंसवत्॥२३१॥अहिरिव गणाद्भीतः साहित्यान्नरकादिव॥राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २३२॥ न शठाः प्राप्नुवन्त्यर्थान्न
क्लीवा न च मानिनः ॥ न च लोकरवा दीना न च स्वस्वप्रतीक्षकाः ॥ २३३ ॥ यथा खनन्खनित्रेण भूतलं वारि विंदति ॥ एवं गुरुगतां
विद्यां शुश्रूषुरधिगच्छति ॥२३४॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ॥ अथवा विद्यया विद्या ह्यन्यथा नोपपद्यते ॥२३५॥ शुश्रूषारहिता विद्या

यद्यपि मेधागुणैः समुपयाति ॥ वन्ध्येव यौवनवती न तस्य साफल्यवति भवति ॥ २३६ ॥ इति दिङ्मात्रमुद्दिष्टं शिक्षाग्रंथं मया तव॥ज्ञात्वा वेदाङ्गमाद्यं तु ब्रह्मभूयाय कल्पते ॥ २३७ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे पञ्चाशत्तमोऽध्यायः ॥ ५०॥ अथातः संप्रवक्ष्यामि कल्पग्रंथं मुनीश्वर ॥ यस्य विज्ञानमात्रेण स्यात्कर्मकुशलो नरः ॥ १ ॥ नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ चतुर्थः स्यादांगिरसः शांतिकल्पश्च पंचमः॥ २ ॥ नक्षत्राधीश्वराख्यानं विस्तरेण यथातथम् ॥ नक्षत्रकल्पे निर्दिष्टं ज्ञातव्यं तदिहापि च॥ ३॥ वेदकल्पे विधानं तु ऋगादीनां मुनीश्वर ॥ धर्मार्थकाममोक्षाणां सिद्ध्यै प्रोक्तं सविस्तरम् ॥ ४ ॥ मंत्राणामृषयश्चैव छंदांस्यथ च देवताः ॥ निर्दिष्टाः संहिताकल्पे मुनिभिस्तत्त्वदर्शिभिः॥५॥तथैवांगिरसे कल्पे षट्कर्माणि सविस्तरम्॥अभिचारविधानेन निर्दिष्टानि स्वयंभुवा॥६॥शांतिकल्पे तु दिव्यानां भौमानां मुनिसत्तम॥ तथांतरिक्षोत्पातानां शांतयो ह्युदिताः पृथक्॥७॥संक्षेपेणैतदुद्दिष्टं लक्षणं कल्पलक्षणे ॥ विशेषः पृथगेतेषां स्थितः शंखांतरेषु च ॥ ८ ॥ गृह्यकल्पे तु सर्वेषामुपयोगितयाऽधुना ॥ वक्ष्यामि ते द्विजश्रेष्ठ सावधानतया शृणु ॥ ९ ॥ ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कंठं भित्त्वा विनिर्यातौ तस्मान्मांगल्यकाविमौ ॥ १० ॥ कृत्वा प्रोक्तानि कर्माणि तदूर्द्धानि करोति यः ॥ सोऽथशब्दं प्रयुंजीत तदानंत्यार्थमिष्यते ॥११॥ कुशाः परिसमूहाय व्यस्तशाखाः प्रकीर्तिताः ॥ न्यूनाधिका निष्फलाय कर्मणोऽभिमतस्य च ॥ १२ ॥ कृमिकीटपतंगाद्या भ्रमंति वसुधातले ॥ तेषां संरक्षणार्थाय प्रोक्तं परिसमूहनम् ॥ १३ ॥ रेखाः प्रोक्ताश्च यास्तिस्रः कर्तव्यास्ताः समा द्विज ॥ न्यूनाधिका न कर्त्तव्या इत्येव परिभाषितम् ॥ १४ ॥ मेदिनी मेदसा व्याप्ता मधुकैटभदैत्ययोः ॥ गोमयेनोपलेप्येयं तदर्थमिति नारद ॥ १५ ॥ वंध्या दुष्टा च दीनांगी मृतवत्सा च या भवेत् ॥ यज्ञार्थं गोमयं तस्या नाहरेदिति भाषितम् ॥ १६॥ ये भ्रमंति सदाऽऽकाशे पतंगाद्या भयंकराः ॥तेषां प्रहरणार्थाय मतं प्रोद्धरणं द्विज॥१७॥स्रुवेण च कुशेनापि कुर्यादुल्लेखनं भुवः॥अस्थिकंटकसिद्ध्यर्थं ब्रह्मणा परिभाषितम्॥१८॥आपो देवगणाः सर्वे तथा पितृगणा द्विज॥तेनाद्भिरुक्षणं प्रोक्तं मुनिभिर्विधिकोविदैः॥१९॥अग्नेरानयनं प्रोक्तं सौभाग्यस्त्रीभिरेव च॥ शुभदे मृण्मये पात्रे प्रोक्ष्याद्भिस्तं निधायपयेत् ॥ २०॥ अमृतस्य क्षयं दृष्ट्वा ब्रह्माद्यैः सर्वदेवतैः ॥ वेद्यां निधापितस्तस्मात्समिद्गर्भो हुताशनः ॥ २१॥दक्षिणस्यां दानवाद्याः स्थिता यज्ञस्य नारद॥तेभ्यः संरक्षणार्थाय ब्रह्माणं तद्दिशि न्यसेत् ॥२२॥ उत्तरे सर्वपात्राणि प्रणीताद्यानि पश्चिमे॥यजमानः पूर्वतः स्युर्द्विजाः सर्वेऽपि नारद॥२३॥द्यूते च व्यवहारे च यज्ञकर्मणि चेद्भवेत्॥ कर्तोदासीनचित्तस्तत्कर्म नश्येदिति स्थितिः॥२४॥ब्रह्माचार्यौ स्वशाखौ हि कर्त्तव्यौ यज्ञकर्मणि॥ऋत्विजां नियमो नास्ति यथालाभं समर्चयेत्॥२५॥द्वे पवित्रे

त्र्यंगुले स्तः प्रोक्षिणी चतुरंगुला॥आज्यस्थाली त्र्यंगुलाथ चरुस्थली षडंगुला॥२६॥द्व्यंगुलं तूपयमनमेकं संमार्जनांगुलम्॥स्रुवं षडंगुल प्रोक्तं स्रुचं
सार्द्धत्रयांगुलम् ॥ २७ ॥ प्रादशमात्रा समिधः पूर्णपात्रं षडंगुलम् ॥ प्रोक्षिण्या उत्तरे भागे प्रणीतापात्रमष्टभिः ॥ २८ ॥ यानि कानि च तीर्थानि
समुद्राः सरितस्तथा ॥ प्रणीतायां समासन्नास्तस्मात्तां पूरयेज्जलैः ॥२९॥ वेदिका वस्त्रहीना च नग्ना संप्रोच्यते द्विज ॥ परिस्तीर्य्य ततो दर्भैः परिद
ध्यादिमां बुधः ॥३०॥ इंद्रवज्रं विष्णुचक्रं वामदेवत्रिशूलकम्॥दर्भरूपतया त्रीणि पवित्रच्छेदनानि च॥३१॥प्रोक्षणी च प्रकर्तव्या प्रणीतोदकसंयुता॥
तेनातिपुण्यदं कर्म पवित्रमिति कीर्तितम् ॥ ३२ ॥ आज्यस्थाली प्रकर्तव्या पलमात्रप्रमाणिका ॥ कुलालचक्रघटितं आसुरं मृण्मयं स्मृतम् ॥
॥३३॥ तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥ स्रुवे च सर्वकर्माणि शुभान्यप्यशुभानि च ॥ ३४ ॥ तस्य चैव पवित्रार्थं वह्नौ तापनमीरित
म्॥अग्रे धृतेन वैधव्यं मध्ये चैव प्रजाक्षयः ॥ ३५ ॥ मूले च म्रियते होता तस्माद्धार्यं विचार्य तत्॥अग्निः सूर्यश्च सोमश्च विरिंचिरनिलो यमः॥
॥३६॥ स्रुवे षडेते देवास्तु प्रत्यंगुलमुपाश्रिताः॥ अग्निर्भोगार्थनाशाय सूर्यो व्याधिकरो भवेत् ॥ ३७ ॥ निष्फलस्तु स्मृतः सोमो विरिंचिः सर्वका
मदः ॥ अनिलो वृद्धिदः प्रोक्तो यमो मृत्युप्रदो मतः ॥ ३८ ॥ संमार्जनोपयमनं कर्तव्यं च कुशद्वयम् ॥ पूर्वं तु सर्वशाखं स्यात्पंचशाखं
तथापरम् ॥ ३९ ॥ श्रीपर्णी च शमी तद्वत्खदिरश्च विकंकतः ॥ पलाशश्चैव विज्ञेयाः स्रुवे चैव तथा स्रुचि ॥ ४० ॥ हस्तोन्मितं स्रुवं शस्तं
त्रिंदशांगुलिकं स्रुचम् ॥ विप्राणां चैतदाख्यातं ह्यन्येषामंगुलोनकम् ॥ ४१ ॥ शूद्राणां पतितानां च खरादीनां च नारद ॥ दृष्टिदोषविनाशार्थं
पात्राणां प्रोक्षणं स्मृतम् ॥ ४२ ॥ अकृते पूर्णपात्रे तु यज्ञच्छिद्रं समुद्भवेत् ॥ तस्मिन्पूर्णीकृते विप्र यज्ञसंपूर्णता भवेत् ॥ ४३ ॥ अष्टमुष्टि
र्भवेत्किंचित्पुष्कलं तच्चतुष्टयम् ॥ पुष्कलानि तु चत्वारि पूर्णपात्रं विदुर्बुधाः ॥४४ ॥ होमकाले तु संप्राप्ते न दद्यादासनं क्वचित् ॥ दत्ते तृप्तो
भवेद्वह्निः शापं दद्याच्च दारुणम् ॥ ४५ ॥ आघारौ नासिके प्रोक्तौ आज्यभागौ च चक्षुषी ॥ प्राजापत्यं मुखं प्रोक्त कटिर्व्याहृतिभिः स्मृता॥४६॥
शीर्षहस्तौ च पादौ च पंचवारुणमीरितम् ॥ तथा स्विष्टकृतं विप्र श्रोत्रे पूर्णाहुतिस्तथा ॥४७॥ द्विमुखं चैकहृदयं चतुःश्रोत्रं द्विनासिकम्॥ द्विशीर्षकं
च षण्नेत्रं पिंगलं सप्तजिह्वकम्॥४८॥ सव्यभागे त्रिहस्तं च चतुर्हस्तश्च दक्षिणे॥स्रुक्स्रुवौ चाक्षमाला च या शक्तिर्दक्षिणे करे॥४९॥त्रिमेखलं त्रिपादं
च घृतपात्रं द्विचामरम् ॥ मेषारूढं चतुःशृंगं बालादित्यसमप्रभम् ॥ ५० ॥ उपवीतसमायुक्तं जटाकुंडलमंडितम् ॥ ज्ञात्वैवमग्निदेहं तु होमकर्मसमा ॥ ८८ ॥
चरेत् ॥ ५१ ॥पयो दधि घृतं चैव स्नेहपक्वं तथैव च ॥ जुहुयाद्यस्तु हस्तेन स विप्रो ब्रह्महा भवेत्॥५२॥यदन्नं पुरुषोऽश्नाति तदन्नं तस्य देवताः ॥

सर्वकामसमृद्ध्यर्थं तिलाधिक्यं हविर्मतम् ॥ ५३ ॥ होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च सूकरी ॥ अभिचारे सूकरी स्यान्मृगी हंसी शुभात्मके
॥ ५४ ॥ सर्वांगुलीभिः क्रौडी स्याद्धंसी मुक्तकनिष्ठिका ॥ मध्यमानामिकांगुष्ठैर्मृगी मुद्रा प्रकीर्तिता ॥ ५५ ॥ पूर्वप्रमाणयाहुत्या पंचांगुलिगृहीतया॥
दधिमध्वाज्यसंयुक्तं ऋत्विग्भिर्जुहुयात्तिलैः ॥ ५६ ॥ कुशास्त्वनामिकासक्ताः कार्याः स्युः पुण्यकर्मणि ॥ ५७ ॥ विनायकः कर्मविघ्नसिद्ध्यर्थं
विनियोजितः ॥ गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ ५८ ॥ तेनोपसृष्टो यस्तस्य लक्षणानि निबोध मे ॥ स्वप्नेव गाहतेत्यर्थं जलं मुंडांश्च
पश्यति ॥ ५९ ॥ कामाय वाससश्चैव क्रव्यादांश्चाधिरोहति ॥ अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ ६० ॥ व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः
विमना विफलारंभः संसीदत्यनिमित्ततः ॥ ६१ ॥ तेनोपसृष्टो लभते न राज्यं राजनंदनः ॥ कुमारी न च भर्तारमपत्यं गर्भमंगना ॥ आचार्यत्वं
श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥ ६२ ॥ वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः ॥ स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥ गौरसर्प
पकल्केन स्वस्ति वाच्या द्विजैः शुभाः ॥ ६३ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ मृत्तिकां रोचनां गंधान् गुग्गुलुं चाप्सु निक्षिपेत्
॥ ६४ ॥ पात्र्याहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ चर्मण्यानुडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥६५॥ सहस्राक्षं शतधारं मृषिभिः पावनं कृतम् ॥
तेन त्वामभिषिंचामि पावमान्याः पुनंतु ते ॥ ६६ ॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥ भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ ६७ ॥
यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तुदंतु सर्वदा ॥ ६८॥ स्नानस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥ जुहुयान्मूर्द्धनि
कुशान्सव्यन परिगृह्य च ॥६९॥ मितश्च संमितश्चैव तथा शालकटंकटौ ॥ कूष्माण्डो राजपुत्र श्चेत्यंते स्वाहासमन्वितैः ॥ ७० ॥ नामभिर्बलिमंत्रैश्च
नमस्कारसमन्वितैः॥दद्याच्चतुष्पथे सूर्प्ये कुशानास्तीर्य्य सर्वतः॥७१॥कृता कृतांस्तंडुलांश्च पललौदनमेव च॥मत्स्यान्पक्कांस्तथैवामान्मांसमेतावदेव
तु॥७२॥पुष्पं चित्रं सुगंधं च सुरां च त्रिविधामपि॥ मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजोऽपि च॥७३॥दध्यन्नं पायसं चैव गुडपिष्टं समोदकम्॥एतान्सर्वानुपा
हृत्य भूमौ कृत्वा ततः शिरः॥७४॥विनायकस्य जननी मुपतिष्ठेत्ततोऽम्बिकाम्॥दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम्॥७५॥ रूपं देहि यशो देहि
भगं भगवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥७६॥ उपस्थाय शिवां दुर्गामुमापतिमथार्चयेत्॥धूपैर्दीपैश्च नैवेद्यैर्गन्धमाल्या
नुलेपनैः ॥ ७७ ॥ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रयुगमं गुरोरपि ॥ ७८ ॥ एवं विनायकं पूज्य ग्रहांश्चैव प्रपूज
येत् ॥ श्रीकामः शांतिकामो वा पुष्टिवृद्ध्यायुर्वीर्य्यवान् ॥७९॥ सूर्य्यः सोमो महीपुत्रो बुधो जीवो भृगुः शनिः॥राहुकेतू नवाप्येते स्थापनीया ग्रहाः
क्रमात् ॥ ८०॥ ताम्रकाद्रजताद्रक्तचंदनात्स्वर्णकादपि ॥हेम्नो रजतादयसः सीसात्कार्याः शुभाप्तये ॥८१ ॥ स्ववर्णैर्वा पटे लेख्या गंधैर्मंडलकेषु च ॥







यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ ८२ ॥ गंधाश्च वलयश्चैव धूपो देयश्च गुग्गुलुः ॥ कर्तव्या मंत्रवंतश्च चरवः प्रतिदैवतम् ॥ ८३ ॥
आकृष्णेन इमंदेवा अग्निर्मूर्द्धादिवः ककुत ॥ उद्बुध्यस्वाति यदर्यस्तथैवान्नात्परिस्रुतः ॥८४॥ शन्नोदेवीस्तथा कांडात्केतुं कृण्वन्नकेतवः॥८५॥अर्कः
पलाशः खदिरस्त्वपामार्गोऽथपिप्पलः ॥ उदुंबरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ ८६ ॥ एकैकस्मादष्टशतमष्टाविंशतिरेव च ॥
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा पुनः॥८७॥ गुडौदनं पायसं च हविष्यंक्षीरषाष्टिकम् ॥दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च॥८८॥ दद्या
द्ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः ॥ शक्तितोऽपि यथा लाभं सत्कृत्य विधिपूर्वकम् ॥ ८९ ॥ धेनुः शंखस्तथाऽनड्वान्हिमवासो हयः क्रमात् ॥
कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ॥९० ॥ यस्य यस्य तु यद्द्रव्यं पलेनार्च्यः स तेन च ॥ ब्रह्मणैषां वरो दत्तः पूजिताः पूज
यिष्यथः ॥९१॥ ग्रहाधीना नरेंद्राणां धनजात्युच्छ्रयास्तथा ॥ भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥९२॥ आदित्यस्य सदा पूजा तिलकं
स्वामिनस्तथा ॥ महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥ ९३॥ कर्मणां सफलत्वं च श्रियं चाप्नोत्यनुत्तमाम् ॥ ९४ ॥ अकृत्वा मातृयागं तु यो
ग्रहाचां समारभेत् ॥ कुप्यंति मातरस्तस्य प्रत्यूहं कुर्वते तथा ॥ ९५॥ वसोः पवित्रमंत्रेण वसोर्द्धारां प्रकल्प्य च ॥ गौर्याद्या मातरः पूज्या मांग
ल्येषु शुभार्थिभिः ॥९६॥ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातृका वैधृतिर्धृतिः ॥ ९७ ॥ पुष्टिर्हृष्टिस्तथा
तुष्टिरात्मदेवतया सह॥गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश॥९८॥आवाहनं तथा पाद्यमर्घ्यं स्नानं च चंदनम् ॥ अक्षतांश्चैव पुष्पाणि धूपं दीपं
फलानि च॥९९॥नैवेद्याचमनीयं च तांबूलं पूगमेव च ॥ नीराजनं दक्षिणां च क्रमाद्दद्याच्च तुष्टये ॥१००॥पितृकल्पं प्रवक्ष्यामि धनसंततिवर्द्धनम् ॥
अमावस्याष्टका वृद्धिः कृष्णपक्षायनद्वयम् ॥ १०१ ॥ द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥ व्यतीपातो गजच्छाया ग्रहणं चंद्रसूर्ययोः ॥१०२॥
श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ॥१०३॥ वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ स्वस्री
य ऋत्विग्जामाता याज्यश्वशुरमातुलाः ॥ १०४ ॥ त्रिणाचिकेतदौहित्रशिष्यसंबंधिबांधवाः ॥ कर्मनिष्ठास्तपोनिष्ठाः पंचाग्निब्रह्मचारिणः ॥
॥१०५॥ पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥ रोगी न्यूनातिरिक्तांगः काणः पौनर्भवस्तथा ॥ १०६ ॥ अवकीर्णी कुंडगोलौ कुनखी श्या ॥ ८
वदंतकः ॥ भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥ १०७ ॥ मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥ मातृपितृगुरुत्यागी कुंडाशी
वृषलात्मजः ॥ १०८॥ परपूर्वापतिः स्तेनः कर्मभ्रष्टाश्च निंदिताः ॥ निमंत्रयीत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः ॥ १०९ ॥ तैश्चापि संयमे

भोज्यं मनोवाक्कायकर्मभिः ॥ अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ॥ ११० ॥ पवित्रपाणिराचांतानासने चोपवेशयेत् ॥ विप्रान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ॥ १११ ॥ पराश्रिते शुचौ देशे दक्षिणाप्रवणं तथा ॥ द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव च ॥ ११२ ॥ मातामहानामप्येवं तत्र वा वैश्वदैविकम् ॥ पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ॥ ११३ ॥ आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥ यवै रन्वावकीर्याथ भाजने सपवित्रके ॥ ११४ ॥ शन्नो देव्या अपः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ यादिव्या इति मंत्रेण हस्ते पाद्यं विनिःक्षिपेत् ॥ ११५ ॥ दत्त्वोदकं गंधमाल्यं प्रदायान्न सदीपकम् ॥ अपसव्यं ततः कृत्वा पितृणां सप्रदक्षिणम् ॥११६॥ द्विगुणांस्तु कुशान्दत्त्वा ह्युशंतस्त्वेत्यृचा पितॄन् ॥ आवाह्य तदनुज्ञातो जपेदायंतु नस्ततः॥११७॥यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत्॥दत्त्वार्घ्यं संयवांस्तेषां पात्रे कृत्वा विधानतः ॥ ११८ ॥ पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः॥अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥ ११९ ॥ कुरुष्वेत्यभ्यनुज्ञातो दत्त्वाग्नौ पितृयज्ञवत् ॥ हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥ १२० ॥ यथालाभोपपन्नेषु रौप्येषु च विशेषतः ॥ दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमंत्रणम् ॥ १२१ ॥ कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत ॥ सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम् ॥ १२२ ॥ जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥ १२३ ॥ आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ॥ १२४ ॥ तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥ सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ १२५ ॥ उच्छिष्टसन्निधौ पिंडान्दद्याद्वै पितृयज्ञवत् ॥ मातामहानामप्येवं दद्यादाचमनं ततः ॥ १२६ ॥ स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव हि॥दत्त्वा च दक्षिणां शक्त्या स्वधाकारमुदाहरेत ॥ १२७ ॥ वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम्॥ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिंचेत्ततो जलम् ॥१२८॥ विश्वेदेवाश्च प्रीयंतां विप्रैश्चोक्त इदं जपेत्॥दातारो नोऽभिवर्द्धंतां वेदाः संततिरेव च॥१२९॥श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति॥इत्युक्तोक्ताः प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥१३०॥ वाजेवाजे इति प्रीतः पितृपूर्वं विसर्जनम् ॥ यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ॥१३१॥ पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ प्रदक्षिणमनुव्रज्य भुंजीत पितृसेवितम् ॥१३२॥ ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह॥एवं प्रदक्षिणावृत्त्या वृद्धौ नांदीमुखान्पितॄन्॥ १३३ ॥ यजेत दधिकर्कंधुमिश्रान्पिंडान्यवैः कृतान् ॥ एकोद्दिष्टं देवहीनमेवार्घ्यैकपवित्रकम् ॥ १३४ ॥ आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ॥ १३५ ॥ अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥ गंधोदकं





तिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥ १२६ ॥ अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत ॥ ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ १२७ ॥ एतत्सपिं
डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ अर्वाक्सपिंडीकरणं यस्य संवत्सराद्भवेत् ॥१२८॥ तस्याप्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे॥मृतेऽहनि तु कर्तव्यं
प्रतिमासं तु वत्सरम् ॥ १२९ ॥ प्रतिसंवत्सरं चैव मासमेकादशेऽहनि ॥ पिंडांश्च गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥१४०॥ प्रक्षिपेत्सत्सु विप्रेषु
द्विजोच्छिष्टं न मार्जयेत् ॥ हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥ १४१॥ मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ ऐणरौरववाराहशाशैर्मांसैर्य
थाक्रमम् ॥ १४२ ॥ मासवृद्ध्याभितृप्यंति दत्तैरिह पितामहाः ॥ खड्गामिषं महाकल्पं मधु मुन्यन्नमेव च ॥ १४३ ॥ लोहामिषं महाशाकं मांसं
वार्ध्रीणसस्य च ॥ यो ददाति गयास्थश्च सर्वमानंत्यमश्नुते ॥ १४४ ॥ तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ कन्यां कन्यावेदिनश्च पशून्वै
सत्सुतानपि ॥ १४५ ॥ द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ॥ १४६ ॥ ज्ञातिश्रैष्ठ्यं सर्वकामाना
प्नोति श्राद्धदः सदा ॥ प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥ १४७ ॥ शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥स्वर्गं ह्यपत्यमोजश्च शौर्यं
क्षेत्रं बलं तथा॥ १४८ ॥ पुत्रान् श्रेष्ठांश्च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥ प्रवृत्तं चक्रतां चैव वाणिज्यप्रभृतीनि च ॥१४९॥ अरोगित्वं यशो
वीतशोकतां परमां गतिम्॥धनं विद्यां भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ॥ १५० ॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ कृत्तिकादि
भरण्यंतं सकामानाप्नुयादिमान् ॥ १५१ ॥ आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥ १५२ ॥
प्रीणयंति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥ १५३ ॥ प्रयच्छंति तथा राज्यं नृणां प्रीता
पितामहाः ॥ इत्येवं कथिते किंचित्कल्पाध्याये विशेषतः ॥१५४॥ज्ञातव्यं वैदिके तंत्र पुराणांतरकेऽपि च॥य इमं चिंतयेद्विद्वान्कल्पाध्यायं मुनीश्वर
॥ १५५ ॥ स भवेत्कर्मकुशल इहान्यत्र गतिं शुभाम् ॥ यः शृणोति नरो भक्त्या दैवे पित्र्ये च कर्मणि ॥१५६॥ कल्पाध्यायं स लभते दैवपित्र्य
क्रियाफलम् ॥ धनं विद्यां यशः पुत्रान्परत्र च गतिं पराम्॥ १५७॥ अतः परं व्याकरणं तुभ्यं वेदमुखाभिधम्॥कथयिष्ये समासेन शृणुष्व सुसमाहितः
॥१५८॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे एकपंचाशत्तमोऽध्यायः॥५१॥सनंदन उवाच॥अथ व्याकरणं वक्ष्ये संक्षेपात्तव
नारद ॥ सिद्धरूपप्रबंधेन मुखं वेदस्य सांप्रतम्॥१॥सुप्तिङंतं पदं विप्र सुपां सप्त विभक्तयः ॥ स्वौजमः प्रथमा प्रोक्ता सा प्रातिपदिकात्मिका ॥ २ ॥
संबोधने च लिंगाद्युक्ते कर्मणि कर्तरि॥ [illegible]

प्रोक्तान्तरांतरेण संयुते॥४॥टाभ्यांभिसस्तृतीया स्यात्करणे कर्तरीरिता॥येन क्रियते तत्करणं सः कर्ता स्यात्करोति यः॥५॥ङेभ्यांभ्यसश्चतुर्थी स्यात्सं प्रदाने च कारके॥यस्मै दित्सा धारयेद्वै रोचते संप्रदानकम्॥६॥पंचमी स्यान्ङसिभ्यांभ्यो ह्यपादाने च कारके ॥यतोऽपैति समादत्ते अपदत्ते च यं यतः ॥७॥ ङसोसामश्च षष्ठी स्यात्स्वामिसंबंधमुख्यके ॥ ङ्योस्सुपः सप्तमी तु स्यात्सा चाधिकरणे भवेत्॥८॥आधारे चापि विप्रेंद्र रक्षार्थानां प्रयोगतः ॥ ईप्सितं चानीप्सितं यत्तदपादानकं स्मृतम् ॥९॥ पंचमी पर्यपाङ्योगे इतरर्तेऽन्यदिङ्मुखे ॥ एतैर्योगे द्वितीया स्यात्कर्मप्रवचनीयकैः॥ ॥ १० ॥ लक्षणेत्थंभूतोऽभिरभागे चानुपरिप्रति ॥ अंतरेषु सहार्थे च हीने ह्युपश्च कथ्यते ॥ ११ ॥ द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्मणि ॥ अप्राणिषु विभक्ती द्वे मन्यकर्मण्यनादरे ॥ १२ ॥ नमःस्वस्तिस्वधास्वाहालंवषड्योग ईरिता ॥ चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥ १३॥ तृतीया सहयोगे स्यात्कुत्सितेऽङ्गे विशेषणे ॥ काले भावे सप्तमी स्यादेतैर्योगे च षष्ठ्यपि ॥ १४ ॥ स्वामीश्वराधिपतिभिः साक्षिदायादसूतकैः ॥ निर्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके ॥ १५ ॥ स्मृत्यर्थकर्मणि तथा करोतेः प्रतियत्नके ॥ हिंसार्थानां प्रयोगे च कृतिकर्मणि कर्तरि ॥ १६ ॥ न कर्तृकर्मणोः षष्ठी निष्ठादिप्रतिपादिका ॥ एता वै द्विविधा ज्ञेयाः सुवादिषु विभक्तिषु ॥ भ्वादिषु तिङंतेषु लकारा दश वै स्मृताः ॥ १७ ॥ तिप्तसंतीति प्रथमो मध्यमः सिप्थस्थोत्तमः ॥ मिव्वस्मसः परस्मै तु पादानां चा मपनेदम् ॥१८ ॥ त आतेंऽते प्रथमो मध्यः से आथे ध्वे तथोत्तमः॥ ए वहे मह आदेशा ज्ञेया ह्यन्ये लिडादिषु॥१९॥नाम्नि प्रयुज्यमाने तु प्रथमः पुरुषो भवेत् ॥ मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि॥२०॥ भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथा ततः ॥ लडीरितो वर्तमाने भूतेऽनद्यतने तथा ॥ २१ ॥ माङ्मयोगे च लङ् वाच्यो लोडाशिषि च धातुतः॥ विध्यादौ स्यादाशिषि च लिङितो द्विविधो मुने॥२२॥लिडतीते परोक्षे स्यात् श्वस्तने लुड् भविष्यति॥स्यादनद्यतने लृट् च भविष्यति तु धातुतः॥ ॥ २३ ॥ भूते लुङ् तिपस्यपौ च क्रियायां लृङ् प्रकीर्तितः ॥ सिद्धोदाहरणं विद्धि संहितादिपुरःसरम् ॥ २४ ॥ दंडाग्रं च दधीदं च मधूदकं पित्रृषभः ॥ होतृकारस्तथा सेयं लांगलीषा मनीषया ॥ २५ ॥ गंगोदकं तवल्कार ऋणार्णं च मुनीश्वर ॥ शीतार्तश्च मुनिश्रेष्ठ सेंद्रः सौकार इत्यपि ॥ ॥ २६ ॥ वध्वासनं पित्रर्थो नायको लवणस्तथा ॥ त आद्या विष्णवे ह्यत्र तस्मा अर्वो गुरा अधः ॥ २७ ॥ हरेऽव विष्णोऽवेत्येषादसोमादप्यमी अघाः ॥ शौरी एतौ विष्णू इमौ दुर्गे अमू नो अर्जुनः ॥ २८ ॥ आ एवं च प्रकृत्येते तिष्ठंति मुनिसत्तम॥ षड्त्र षण्मातरश्च वाक्छूरो वाग्घरिस्तथा ॥ २९ ॥ हरिश्शेते विभुश्छिन्यस्तच्छेषो यच्चरस्तथा ॥ प्रश्नस्त्वथ हरिष्षष्ठः कृष्णष्टीकत इत्यपि ॥ ३० ॥ भवान्षष्ठश्च षट् सन्तः षट्ते तच्छेप





एव च ॥ चक्रिंश्छिधि भवाञ्छौरिर्भवाञ्शौरिरित्यपि ॥ ३१ ॥ सम्यङ्ङनंतोंगच्छाया कृष्णं वंदे मुनीश्वर ॥ तेजांसि मंस्यते गङ्गा हरिश्छेत्ता
मरश्शिवः ॥ ३२ ॥ राम ᳵ काम्यः कृप ᳵ पूज्यो हरिः पूज्योऽर्च्य एव हि ॥ रामो दृष्टोऽबला अत्र सुप्ता इष्टा इमा यतः ॥ ३३ ॥ विष्णुर्नम्यो
रविरयं गी ᳵ फलं प्रातरच्युतः ॥ भक्तैर्वंद्योऽप्यंतरात्मा भो भो एष हरिस्तथा ॥ एष शार्ङ्गी सैष रामः संहितैवं प्रकीर्तिता ॥ ३४ ॥ रामेणाभिहितं
करोमि सततं रामं भजे सादरम् ॥ रामेणापहृतं समस्तदुरितं रामाय तुभ्यं नमः ॥ रामान्मुक्तिमभीप्सिता मम सदा रामस्य दासोऽस्म्यहम् ॥
रामे रंजत मे मनः सुविशदं हे राम तुभ्यं नमः ॥ ३५ ॥ सर्व इत्यादिका गोपाः सखा चैव पतिर्हरिः ॥ ३६ ॥ सुश्रीर्भानुः स्वयंभूश्च
कर्ता रौ गौस्तु नौरिति ॥ अनड्वान्गोधुग्लिट् च द्वे त्रयश्चत्वार एव च॥३७॥ राजा पंथास्तथा दंडी ब्रह्महा पंच चाष्ट च ॥ अष्टौ अयं मुने
सम्राट् सविभ्रद्वपुड्मनः ॥ ३८ ॥ प्रत्यङ् पुमान्महान् धीमान् विद्वान्पट् पिपठीश्च दोः ॥ उशनासाविमे पुंसि स्युरकलविगमकाः ॥ ३९ ॥ गधा
सर्वा गतिर्गोपी स्त्री श्रीर्धेनुर्वधूः स्वसा ॥ गौर्नौरुपान द्यौर्गोः क्षुत् ककुत्संवित्तु वा कचित् ॥४०॥ रुग्विड्ढाः स्त्रियां नपः कुलं सोमपमश्रि च ॥
ग्रामण्यंवुखल्प्वेवं कर्तृ चातिरि वातिनु ॥ ४१ ॥ स्वनडुच्च विमलद्यु वाश्चत्वारीदमेव च ॥एतद्ब्रह्माहश्च दंडी असृक्किंचित्त्यदादि च ॥ ४२ ॥ एतद्धे
भिद्वाक्गवाङ् गोअक् गोङ्गोक् गोङ् ॥ तिर्यग्यकृच्छकृच्चैव ददद्भवत्पचत्तुदत् ॥ ४३ ॥ दीव्यद्धनुश्च पिपठीः पयोऽदःसुपुंमांसि च ॥ गुणद्रव्य
क्रियायोगांस्त्रिलिंगांश्च कति ब्रुवे ॥ ४४ ॥ शुक्तः कीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः ॥ पटुः स्वयंभूः कर्ता च माता चैव व पिता च ना
॥ ४५ ॥ सत्यानागयुस्तथा पुंसो मतभ्रमरदीर्घपात् ॥ धनाकृसोमौ चागर्हस्ताविर्भ्रथास्वर्णन्वह् ॥ ४६ ॥ गिमपश्चिपाद्रजातानहो तथा
सर्व विश्वोभये चोभौ अन्यांतरेतराणि च ॥ ४७ ॥ उत्तरश्चोत्तमो नेमस्त्वसमोऽथ समा इपः ॥ पूर्वोत्तरोत्तरश्चैव दक्षिणश्चोत्तरधर्गे
॥ ४८ ॥ अपरश्चतुरोऽप्येतद्यावत्तत्किमसौ द्वयम् ॥ युष्मदस्मच्च प्रथमश्चरमोल्पस्तथार्धकः ॥ ४९ ॥ नोरः कतिपयो द्व च त्रयो शुद्धादयस्तथा ॥
स्वेकाभुसिरोधपरि विपर्ययश्चाव्ययास्तथा ॥५०॥ तद्धिताश्चाप्यपत्यार्थे पांडवाः श्रैधरस्तथा ॥ गार्ग्यो नाडायनात्रेयौ गांगेयः पैतृष्वस्रीयः ॥ ५१ ॥
देवतार्थे चेदमर्थे ह्यैंद्रं ब्राह्मो हविर्बली ॥ क्रियायुजोः कर्मकर्त्रोर्धौरेयः कौङ्कुमं तथा॥५२॥भवाद्यर्थे तु कानीनः क्षत्रियो वैदिकः स्वकः ॥ स्वार्थे
चौरस्तु तुल्यार्थे चंद्रवन्मुखमीक्षते ॥५३॥ ब्राह्मणत्वं ब्राह्मणता भावे ब्राह्मण्यमेव च ॥ गोमान्धनी च धनवानस्त्यर्थे प्रमितो कियान् ॥ ५४ ॥
जातार्थे मुंदिलः श्रद्धालुरौन्नत्ये तु दंतुरः ॥ स्रग्वी तपस्वी मेधावी मायाव्यस्त्यर्थ एव च ॥५५॥ [illegible]

समाप्तौ कल्पब्देशीय एव च ॥ ५६ ॥ कविकल्पः कविदेश्यः प्रकारवचने तथा ॥पटुजातीयः कुत्सायां वैयपाशः प्रशंसने ॥ ५७ ॥ वैयरूपो भूतपूर्वे मतो दृष्टचरो मुने ॥ प्राचुर्यादिष्वन्नमयो मृण्मयः स्त्रीमयस्तथा ॥ ५८ ॥ जातार्थे लज्जितोऽत्यर्थे श्रेयाञ्छ्रेष्ठश्च नारद ॥ कृष्णतरः शुक्लतमः किम आख्यानतोऽव्ययात् ॥५९॥ किंतरां चैवातितरामभिह्युच्चैस्तरामपि ॥ परिमाणे जानुदघ्नं जानुद्वयसमित्यपि॥६०॥जानुमात्रं च निर्द्धारे बहूनां च द्वयोः क्रमात् ॥ कतमः कतरः संख्येयविशेषावधारणे ॥ ६१ ॥ द्वितीयश्च तृतीयश्च चतुर्थः षष्टपंचमौ ॥ एकादशः कतिपयः कतिथः कति नारद ॥ ६२ ॥ विंशश्च विंशतितमस्तथा शततमादयः ॥ द्वेधा द्वैधा द्विधा संख्या प्रकारेऽथ मुनीश्वर ॥६३॥क्रियावृत्तौ पंचकृत्वो द्विस्त्रिर्बहुश इत्यपि ॥ द्वितयं त्रितयं चापि संख्यायां हि द्वयं त्रयम् ॥ ६४ ॥ कुटीरश्च शमीरश्च शुंडारोऽल्पार्थके मतः ॥ ब्रैणः पौष्णस्तुंडिभश्च वृंदारककृपीवलौ॥६५॥मलिनो विकटो गोमी भौरिकीविधमुत्कटम् ॥ अवटीटोवनाटे निबिडं चेक्षुशाकिनम्॥६६॥निविरीसमेपुकारी वित्तोविद्याचणस्तथा॥ विद्याचुंचुर्बहुतिथं पर्वतः शृंगिणस्तथा ॥६७॥स्वामी विषमरूप्यं चोपत्यकाधित्यका तथा ॥ चिल्लश्च चिपिटं चिक्कं वातूलः कुतपस्तथा ॥६८॥ वहलश्च हिमेलुश्च कहोडश्चोपडस्ततः ॥ ऊर्णायुश्च मरुतश्चैकाकी चर्मण्वती तथा ॥ ६९ ॥ ज्योत्स्ना तमिस्राऽष्ठीवच्च कक्षीवद्यमण्वती ॥ आसंदीवच्च चक्रीवत्तूष्णीकां जल्पतक्यपि ॥ ७० ॥ कंभश्च कंयुः कंवश्च नारदकेतिः कंतुः कंतकंपौ शंवस्तथैव च ॥ शंतः शंतिः शंयशंतौ शंयोदंयुः शुभंयुवत् ॥७१॥ भवति वभूव भविता भविष्यति भवत्वभवद्भवेच्चापि ॥ ७२ ॥ भूयादभूदभविष्यद्धादावेतानि रूपाणि ॥ अत्ति जघासात्तात्स्यत्यत्त्वाददद्याद्घिरघसदात्स्यत् ॥ ७३ ॥ जुहोति जुहाव जुहवांचकार होता होष्यति जुहोतु ॥ अजुहोज्जुहुयाद्धूयादहौषीदहोष्यद्दीव्यति ॥ दिदेव देविता देविष्यति च अदीव्यद्दीव्येद्दीव्याद्दै॥७४॥ अदेवीददेवीष्यत्सुनोति सुषाव सोता सोष्यति वै ॥ सुनोत्वसुनोत्सुनुयात्सूयादशावीदसोष्युत्तुदति च ॥ ७५ ॥ तुतोद तोत्ता तोत्स्यति तुदत्वतुदत्तुदेत्तुद्याद्धि ॥ अतौत्सीदतोत्स्यदिति च रुणद्धि रुरोध रोद्धा रोत्स्यति वै ॥७६ ॥रुणद्धु अरुणद्रुध्यादरौत्सीदरोत्स्यच्च ॥ तनोति ततान तनिता तनिष्यति तनोत्वतनोत्तनुयाद्धि ॥ ७७ ॥ अतनीत्चातानीदतनिष्यत्क्रीणाति चिक्राय क्रेता क्रेष्यति क्रीणात्विति च॥अक्रीणात्क्रीणीयात्क्रीयादक्रैषीदक्रेष्यच्चोरयति चोरयामास चोरयिता चोरयिष्यति चोरयतु॥७८॥अचोरयच्चोरयेच्चोर्यात् अचूचुरदचोरिष्यदित्येवं दश वै गणाः॥प्रयोजके भावयति सनीच्छायां बुभूषति॥क्रियासमभिहारे तु पंडितो बोभूयते मुने॥७९॥तथा यङ्लुकि बोभवीति च पठ्यते॥पुत्रीयतीत्यात्मनीच्छायां तथाचारेऽपि नारद ॥ अनुदात्तङितो धातोः क्रियाविनिमये तथा॥८०॥निविशादेस्तथा विप्र विजानीह्या







त्मनेपदम्॥परस्मैपदमाख्यातं शेषात्कर्तरि शाब्दिकैः॥८१॥ञित्स्वरितेतश्च उभे यक्च स्याद्भावकर्मणोः॥सौकर्यातिशयं चैव यदा द्योतयितुं मुने॥८२॥
विवक्ष्यते न व्यापारो लक्ष्ये कर्तुस्तदापरे ॥ लभंते कर्तृतां पश्य पच्यते ह्योदनः स्वयम् ॥ ८३ ॥ साधु वासिश्छिनत्त्येवं स्थाली पचति वै मुने ॥
धातोः सकर्मकाद्भावे कर्मण्यपि लप्रत्ययाः ॥ ८४ ॥ तस्मै वाकर्मकाद्विप्र भावे कर्तरि कीर्तितः ॥ फलव्यापरयोरेकनिष्ठतायामकर्मकः ॥ ८५ ॥
धातुस्तयोर्द्धर्मिभेदे सकर्मक उदाहृतः ॥ गौणे कर्मणि दुह्यादेः प्रधाने नीहकृष्वहाम् ॥८६॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ प्रयोज्य
कर्मण्यन्येषां ण्यंतानां लादयो मताः ॥ ८७ ॥ फलव्यापारयोर्द्धातुराश्रये तु तिङः स्मृताः ॥ फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ ८८ ॥
एधितव्यमेधनीयमिति कृत्ये निदर्शनम् ॥ भावे कर्मणि कृत्याः स्युः कृतः कर्तरि कीर्तिताः॥८९॥ कर्ता कारक इत्याद्या भूते भूतादि कीर्तितम् ॥
गम्यादिगम्ये निर्दिष्टं शेषमद्यतने मतम् ॥९०॥अधिस्त्रीत्यव्ययीभावे यथाशक्ति च कीर्तितम् ॥ रामाश्रितस्तत्पुरुषे धान्यार्थो यूपदारु च ॥९१ ॥
व्याघ्रभी राजपुरुषोऽक्षशौंडो द्विगुरुच्यते ॥ पंचगवं दशग्रामी त्रिफलेति तु रूढितः॥९२॥नीलोत्पलं महापष्ठी तुल्यार्थे कर्मधारयः ॥ अब्राह्मणो न
ञि प्रोक्तः कुंभकारादिकः कृता ॥ ९३॥ अन्यार्थे तु बहुव्रीहौ ग्रामः प्राप्तोदको द्विज ॥ पंचगू रूपवद्भार्यो मध्याह्नः ससुतादिकः ॥ ९४ ॥ समुच्चये
गुरुं चेशं भजस्वान्वाचये त्वट ॥ भिक्षामानय गां चापि वाक्यमेवानयोर्भवेत् ॥ ९५ ॥ इतरेतरयोगे तु रामकृष्णौ समाहृतौ ॥ रामकृष्णं
द्विज द्वे द्वं ब्रह्म चैकमुपास्यते ॥९६॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे व्याकरणनिरूपणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥
॥ ५२ ॥ सनंदन उवाच ॥ निरुक्तं ते प्रवक्ष्यामि वेदं श्रोत्रांगमुत्तमम् ॥ तत्पंचविधमाख्यातं वैदिकं धातुरूपकम् ॥ १ ॥ क्वचिद्वर्णागमस्तत्र
क्वचिद्वर्णविपर्ययः॥विकारः क्वापि वर्णानां वर्णनाशः क्वचिन्मतः ॥२॥तथा विकारनाशाभ्यां वर्णानां यत्र नारद ॥धातोर्योगातिशयी च संयोगः परि
कीर्तितः ॥३॥सिद्धेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्॥गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरः॥४॥भ्रमरादिषु शब्देषु ज्ञेयो योगो हि पञ्चमः॥ बहुलं
छन्दसीत्युक्तमत्र वाच्यं पुनर्वसू ॥ ५ ॥ नभस्वद्वृषणश्चैवापरस्मैपदि चापि हि ॥ परं व्यवहिताश्चापि गतिसंज्ञास्तथा हि आ ॥ ६ ॥ विभक्तीनां
विपर्यासो यथा दध्ना जुहोति हि ॥ अभ्युत्सादयामकेतुर्ध्वनयीत्प्रमुखास्तथा ॥ निष्क्याद्यास्तथोक्ताश्च गृभायेत्यादिकास्तथा ॥ ७ ॥ सुप्ति
ङुपग्रहलिंगनराणां कालहल्चूम्स्वरकर्तृयङां च ॥ व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुल्येन ॥ ८ ॥ रात्री बिम्बी
च कद्रूश्चाविष्टो वाजसनेयिनः ॥ ९ ॥ कर्णेभिश्च यशोभाग्य इत्याद्या [illegible]

माद्याश्च प्रलयाद्याश्च स्तृचं तथा ॥ अपस्पृधेथां नो अव्यादायो अस्मान्मुखास्तथा ॥ ११ ॥ सगर्भ्योस्थापदी ऋत्व्योरजिष्टं त्रिपंचकम् ॥ हिरण्ययेन नरं च परमे व्योमनित्यपि ॥ १२ ॥ उर्विया स्वप्नया वारवध्वाददुहवैवधी ॥ यजध्वैनमेमसि च स्नात्वी गत्वा पचास्थभीः ॥ १३ ॥ गोनांचापरिहृवृत्ताश्चातुरैर्ग्रसितादिका ॥ पश्येदधद्बभूथापि प्रमिणांतित्यवीवृधत् ॥ १४ ॥ मित्रयुश्च दुरस्वा वा ह्रात्वा सुधितमित्यपि ॥ दधत्याद्या स्ववद्भिश्च समूवेति च धिष्व च ॥१५॥ प्रप्रायं च हरिवतेक्षण्वतः सुपथितरः ॥ रथीतरी नसताद्या अम्रभुवरथो इति ॥१६॥ ब्रह्माद्यादेः परस्याप्यौ श्रावयेत्यादिके प्लुतः ॥ दाश्वांश्च स्वतवान्यापौत्रिभिष्टं च नृभिष्टुतः॥१७॥अभीषुण ऋतावाहं न्यषीदन्नृमणा अपि॥चतुर्विधाद्बाहुलकात्प्रवृत्तेरप्रवृत्तितः ॥ १८ ॥ विभाषयान्यथाभावात्सर्वं सिद्ध्येच्च वैदिकम् ॥ भूवाद्या धातवो ज्ञेयाः परस्मैपदिनस्स्मृताः॥ १९ ॥ एधाद्या आत्मनेभाषा उदात्ताः षट्त्रिंशसंख्यकाः॥अतादयोऽष्टत्रिंशच्च परस्मैपदिनो मुने॥२०॥श्लोकृपूर्वा द्विचत्वारिंशदुक्ता च ह्यात्मने पदे॥उदात्तेतरतु पंचाशत्पक्काद्याः पारिकीर्तिताः ॥ २१ ॥ वर्चाद्या अनुदात्तेत एकविंशतिरीरिताः ॥ गुपादयो द्विचत्वारिंशदुदात्तेताः समीरिताः॥ २२ ॥ धिण्यादयोऽनुदात्तेतो दश प्रोक्ता हि शाब्दिकैः॥अणादयोप्युदात्तेतः सप्तविंशतिधातवः॥२३॥अमादयःसमुद्दिष्टाश्चतुस्त्रिंशद्धि शाब्दिकैः ॥ द्विसप्ततिमिता मव्यमुखाश्चोदात्तवंधनाः॥२४॥ स्वरितेद्वावुधातुस्तु एक एव प्रकीर्तितः॥क्षुधादयोऽनुदात्तेतो द्विपंचाशदुदाहृताः॥२५॥घुषिराद्या उदात्ततोऽष्टाशीतिर्धातवो मताः ॥ द्युताद्या अनुदात्तेतो द्वाविंशतिरतो मताः ॥२६॥ षितस्त्रयोदश घटादिष्वेनुदात्तेत ईरितः ॥ ततो ज्वलदुदात्तेतो द्विपंचाशन्मितास्तथा॥२७॥स्वरितेद्राजृसंप्रोक्त स्तनहेभ्राजृतस्त्रयः ॥ अनुदात्तेत अख्याता भाद्युदात्ता इतः स्यमात् ॥ २८ ॥ सहोऽनुदात्तेदेकस्तु रमँकोऽप्यात्मनेपदी ॥ सदस्त्रय उदात्तेतः कुचाद्देदा उदात्त इत् ॥ २९ ॥ स्वरितेतः पञ्चत्रिशद्धिक्काद्याश्च ततः परम् ॥ स्वरितेच्छिञ्भृञाद्याश्चत्वार स्वरितेत्ततः ॥ ३९ ॥ धेटः परस्मैपदिनः षट्चत्वारिंशदुदीरिताः ॥ अष्टादश स्मिङाद्यास्तु आमनेपदिनो मताः ॥ ३१ ॥ ततस्त्रयोऽनुदात्तेतः पूङाद्याः परिकीर्तिताः ॥ ह्रपरस्मैपदी चात्मनेभाषास्तु धुपात्रयः ॥३२॥ रभद्यब्दयनुदात्तेतो भ्रिक्ष्विदोदात्त इन्मतः ॥ परस्मैपदिनः पंच दश स्कंम्भ्वादयस्तथा ॥ ३३ ॥ कितधातुरुदात्तेच्च दानशानोभयात्मकौ ॥ स्वरितेतः पचाद्यंकाः परस्मैपदिनो मताः ॥ ३४ ॥ स्वरितेतस्त्रयश्चैतो वदवची परिभाषिणौ ॥ भ्वाद्या एते षडधिकं सहस्रं धातवो मताः ॥ ३५ ॥ परस्मैपदिनः प्रोक्ता वदाश्चपि हनेति च ॥ स्वरितेतो द्विषाद्यास्तु चत्वारो धातवो मताः ॥ ३६ ॥ चक्षिङेकः समाख्यातो धातुरत्रात्मनेपदी ॥ इरादयोऽनुदात्तेतो धातवस्तु त्रयोदश ॥ ३७ ॥ आत्मनेपदिनौ प्रोक्तौ पूङ्शीङ्द्वौ शाब्दिकैर्मुने ॥ परस्मैपदिनः प्रोक्ता धुमुखाः सप्त धातवः ॥ ३८ ॥ स्वरितेदुर्णुञाख्यातो धातुरेको मुनीश्वर ॥ धुमुखास्त्रय उद्दिष्टाः परस्मैपदिनस्तथा ॥ ३९ ॥ धुञेकस्तु समा





ख्यातः स्मृतो नारद शाब्दिकैः ॥ ४० ॥ अष्टादश राप्रभृतयः परस्मैपदिनः स्मृताः ॥ इङ्ङात्मनेपदी प्रोक्तो धातुर्नारद केवलः ॥ ४१ ॥ विदाद
यस्तु चत्वारः परस्मैपदिनो मताः ॥ त्रिष्वप्शये समुद्दिष्टः परस्मैप्रकस्तथा ॥ ४२ ॥ परस्मैपदिनश्चैव ते मयोक्ताः स्यमादयः ॥ दीधीङ्वेवीङ्
स्मृतौ धातू आत्मनेपदिनौ मुने ॥ ४३ ॥ प्रथादयस्त्रयश्चापि उदात्तेतः प्रकीर्तिताः ॥ चर्करीतं च ह्नुङ् प्रोक्तोऽनुदात्तेन्मुनिसत्तम ॥ ४४ ॥ त्रिसप्तति
समाख्याता धातवोऽदादिके गणे ॥दादयो धातवो वेदाः परस्मैपदिनो मताः ॥ ४५ ॥ स्वरितेद्वै भृञाख्यात उदात्तद्वाक् प्रकीर्तितः ॥ माङ्हाङ्द्वाव
नुदात्तेतौ स्वरितेद्दानधातुषु ॥ ४६ ॥ वाणितिराद्यास्त्रयश्चापि स्वरितेत उदाहृताः ॥ घृमुखा द्वादश तथा परस्मैपदिनो मताः ॥ ४७ ॥ द्वाविंश
तिर्ह्रिहोद्दिष्टा धातवा ह्वादिके गणे ॥ परस्मैपदिनः प्रोक्ता दिवाद्याः पंचविंशतिः ॥ ४८ ॥ आत्मनेपदिनौ धातू पूङ्दूङ्द्वावपि नारद॥ ओदितः
पूङ्मुखाः सप्त आत्मनेपदिनो मताः ॥ ४९ ॥ आत्मनेपदिनो विप्र दीङ्मुखास्त्विह कीर्तिताः ॥ स्यतिप्रभृतयो वेदाः परस्मैपदिनो मताः ॥५०॥
जन्यादयः पंचदश आत्मनेपदिनो मुने ॥ मृषाद्याः स्वरितेतस्तु धातवः पंच कीर्तिताः ॥ ५१ ॥ एकादश पदाद्यास्तु ह्यात्मनेपदिनो मताः ॥ राधोः
कर्मक एवात्र वृद्धौ स्वादिचुरादिके ॥ ५२ ॥ उदात्तेतस्तुदाद्यास्तु त्रयोदश समीरिताः ॥ परस्मैपदिनोऽष्टात्र रधाद्याः परिकीर्तिताः ॥ ५३॥ समा
द्याश्चाप्युदात्तेतः षट्चत्वारिंशदुदीरिताः ॥ चत्वारिंशच्छतं चापि दिवादौ धातवो मताः ॥ ५४ ॥ स्वादयः स्वरितेत्तोक्ता धातवः परिकीर्तिताः ॥
सप्ताख्यातो दुनोतिस्तु परस्मैपदिनो मुने ॥ ५५ ॥ अपिघावनुदात्तेतौ धातू द्वौ परिकीर्तितौ ॥ परस्मैपदिनस्त्वत्र तिकाद्यास्तु चतुर्दश ॥ ५६ ॥
द्वात्रिंशद्धातवः प्रोक्ता विप्रेन्द्र स्वादिके गणे ॥ स्वरितेतः षडाख्यातास्तुदाद्या मुनिसत्तम ॥ ५७ ॥ ऋच्युदात्तेज्जुषीपूर्वा अत्मनेपदिनोर्णताः ॥ व्रश्चा
दय उदात्तेत प्रोक्ताः पंचाधिकं शतम् ॥ ५८ ॥ गूर्युदात्तेदिहोद्दिष्टो धातुरेको मुनीश्वर ॥ णूमुखाश्चैव चत्वारः परस्मैपदिनो मताः ॥ ५९ ॥ कुडा
ख्यातोनुदात्तेच्च कुटाद्याः पूर्तिमागताः ॥ पृङ् मृङ् चात्मनेभाषौ षट् परस्मैपदे रिपेः ॥ ६० ॥ आत्मनेपदिनो धातू ढङ्धृङ्द्रौ चाप्युदाहृतौ॥
प्रच्छादिषोडशाख्याताः परस्मैपदिनो मुने॥ ६१ ॥ स्वरितेतः षट् ततश्च प्रोक्ता मिलमुखा मुने ॥ कृतीप्रभृतय श्चापि परस्मैपदिनस्त्रयः ॥
॥ ६२ ॥ सप्त पंचाशदधिकास्तुदादौ धातवः शतम् ॥ स्वरितेतो रुधोनंदा परस्मैभाषितः कृती ॥ ६३ ॥ त्रिइंधीतोऽनुदात्ततस्त्रयो धातव
ईरिताः ॥ उदात्ततः शिषपिषरुधाद्याः पंचविंशतिः ॥ ६४ ॥ स्वरितेतस्तनोः सप्त धातवः परिकीर्तिताः ॥ मनुवन्वात्मनेभाषौ स्वरिते
त्कृञुदाहृतः ॥ ६५ ॥ ततो द्वौ कीर्तितौ विप्र धातवो दश शाब्दिकैः ॥ क्याद्याः सप्तोभयेभाषाः सौत्राः स्तंभ्वादिकास्तथा ॥ ६६ ॥ परस्मै

पदिनः प्रोक्ताश्चत्वारोऽपि मुनीश्वर ॥ द्वाविंशतिरुदात्तेतः कुधाद्या धातवो मताः ॥ ६७ ॥ वृङ्ङात्मनेपदी धातुः श्रंथाद्याश्चैकविंशतिः ॥ परस्मैपदिनश्चाथ स्वारितेद्ग्रह एव च ॥ ६८ ॥ क्र्यादिकेषु द्विपंचाशद्धातवः कीर्तिता बुधैः ॥ चुराद्या धातवो ञ्यंता षट्त्रिंशदधिकं शतम् ॥ ६९ ॥ चित्याद्यष्टादशाख्याता आत्मनेपदिनो मुने ॥ चर्चाद्या आधृषीयास्तु ण्यंता वा परिकीर्तिताः ॥ ७० ॥ अदंता धातवश्चैव चत्वारिंशत्तथाष्ट च ॥ पदाद्यास्तु दश प्रोक्ता धातवो ह्यात्मनेपदे ॥७१॥ सूत्राद्या अष्ट चाप्यत्र ञ्यन्ता प्रोक्ता मनीषिभिः ॥ धात्वर्थे प्रातिपदिकाद्बहुलं चेष्ठवन्मतम् ॥ ७२ ॥ तत्करोति तदाचष्टे हेतुमत्यपि णिर्मतः ॥ धात्वर्थे कर्तृकरणाच्चित्राद्याश्चापि धातवः॥७३॥अष्ट संग्राम आख्यातोऽनुदात्तेच्छाण्दिकैर्बुधैः ॥ स्तोमाद्याः षोडश तथा अदंतस्यं निदर्शनम् ॥७४॥ तथा वाहुलकादन्ये सौत्रलौकिकवैदिकाः ॥ सर्वे सर्वगणीयाश्च तथानेकार्थवाचिनः॥७५॥सनाद्यंता धातवश्च तथा वै नामधातवः॥एवमानंत्यमुद्राव्यं धातूनामिह नारद॥संक्षेपोऽयं समुद्दिष्टो विस्तरस्तत्र तत्र च॥७६॥ऊदृदंतैर्यौति रुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः॥ वृङ्वृञ्भ्यां च विनैकाचोऽजंतेषु निहताः स्मृताः॥७७॥शक्लपच्मुचार्रिच्वच्विच्सिच्प्रच्छित्यज्निजिर् भजः॥भञ्ज्भुज्भ्रस्ज्मिजयज्युज्रुज्रञ्जविजिर्स्वञ्जिसञ्ज्सृजः ॥७८॥अद्क्षुद्खिद्छिद्तुदिनुदःपद्यभिद्विद्यतिर्विनद्॥शद्सदी स्विद्यतिस्स्कन्दिर्हदी क्रुधक्षुधिबुध्यती॥७९॥बंधिर्युधिरुधीराधिव्यध्शुधः साधिसिध्यती ॥ मन्यहन्नाप्क्षिप्छुपितप्रतिपस्तृप्यतिदृप्यती ॥८०॥ लिप्लुप्वपूशप्स्वपूसृपियभरभलभगमूनम्यमो रभिः॥क्रुशिर्दंशिदिशी दृश्मृश्रिश्रुशलिश्विश्स्पृशः कृषिः ॥८१ ॥त्विष्तुष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्यतयो घसिः ॥ वसतिर्दहदिहिदुहोनह्मिह्रुह्लिह्वहिस्तथा॥८२॥ अनुदात्ता हलंतेषु धातवो द्व्यधिकं शतम् ॥ चाद्या निपाता गवयः प्राद्या दिग्देशकालजाः ॥८३॥शब्दाः प्रोक्ता ह्यनेकार्थाः सर्वलिंगा अपि द्विज ॥ गणपाठः सूत्रपाठो धातुपाठस्तथैव च॥८४॥ पाठोनुनासिकानां च परायणमिहोच्यते ॥ शब्दाः सिद्धा वैदिकास्तु लौकिकाश्चापि नारद ॥८५॥ शब्दपारायणं तस्मात्कारणं शब्दसंग्रहे ॥ लघुमार्गेण शब्दानां साधूनां संनिरूपणम्॥८६॥प्रकृतिप्रत्ययादेशलोपागममुखैः कृतम्॥इत्थमेतत्समाख्यातं निरुक्तं किंचिदेवते॥कार्त्स्न्येन वक्तुमानंत्यात्कोऽपिशक्तो न नारद॥८८॥इति श्रीबृहन्नारदीयपुराण पूर्वभागे बृहदुपाख्याने द्वितीयपादे निरुक्तलक्षणनिरूपणं नाम त्रिपञ्चाशत्तमोऽध्यायः॥५३॥सनंदन उवाच॥ज्योतिषांगं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा॥यस्य विज्ञानमात्रेण धर्मसिद्धिर्भवेन्नृणाम् ॥ १ ॥ त्रिस्कंधं ज्यौतिषं शास्त्रं चतुर्लक्षमुदाहृतम् ॥ गणितं जातकं विप्र संहितास्कंधसंज्ञिताः॥२॥गणिते परिकर्मादिखगमध्यस्फुटक्रिये ॥ अनुयोगश्चंद्रसूर्यग्रहणं तचोदस्याकम्॥३॥ छाया शृङ्गोन्नतियुती पातसाधनमीरितम्॥जातके राशिभेदाश्च ग्रहयोनिश्च योनि





जम् ॥ ४ ॥ निषेकजन्मारिष्टानि ह्यायुर्दायो दशाक्रमः ॥ कर्माजीवं चाष्टवर्गो राजयोगाश्च नाभसाः ॥ ५॥ चंद्रयोगाः प्रव्रज्याख्या राशिशीलं च
दृक्फलम् ॥ ग्रहभावफलं चैवाश्रययोगप्रकीर्णके॥ ६ ॥अनिष्टयोगाः स्त्रीजन्मफलं निर्याणमेव च ॥नष्टजन्मविधानं च तथा द्रेष्काणलक्षणम् ॥
॥ ७ ॥संहिताशास्त्ररूपं च ग्रहचारोऽब्दलक्षणम् ॥ तिथिवासरनक्षत्रयोगतिथ्यर्द्धसंज्ञकाः ॥ ८ ॥ मुहूर्तोपग्रहाः सूर्यसंक्रांतिर्गोचरः क्रमात् ॥ चंद्रता
रावलं चैव सर्वलग्नार्तवाह्वयः ॥ ९ ॥ आधानपुंससीमंतजातनामान्नभुक्तयः ॥ चौलकर्णव्यधं मौंजी क्षुरिकाबंधनं तथा ॥ १०॥ समावर्तनवैवाहप्रति
ष्ठासद्मलक्षणम्॥ यात्राप्रवेशनं सद्योवृष्टिः कर्मविलक्षणम्॥ ११॥उत्पत्तिलक्षणं चैव सर्व संक्षेपतो ब्रुवे॥एकं दश शतं चैव सहस्रायुतलक्षकम्॥ १२॥ प्रयुतं
कोटिसंज्ञां चार्बुदमब्जं च खर्वकम्॥निखर्वं च महापद्मं शंकुर्जलधिरेव च॥ १३॥अत्यं मध्यं परार्द्धं च संज्ञा दशगुणोत्तराः॥क्रमादुत्क्रमतो वापि योगः
कार्योंत्तरं तथा॥ १४॥हन्याद्गुणेन गुण्यं स्यात्तेनैवोपांतिमादिकान्॥शुद्धेद्धरो यद्गुणश्च भाज्यांत्यात्तत्फलं मुने॥ १५॥समांकतोऽथो वर्गस्यात्तमेवाहुः कृतिं
बुधाः॥अंत्यात्तु विषमात्त्यक्त्वा कृतिं मूलं न्यसेत्पृथक्॥ १६॥द्विगुणेनामुना भक्ते फलं मूले न्यसेत्क्रमात्॥तत्कृतिं च त्यजेद्विप्र मूलेन विभजेत्पुनः॥ १७॥
एवं मुहुर्वर्गमूलं जायते च मुनीश्वर॥समत्र्यङ्कहतिः प्रोक्तो घनस्तत्र विधिः पदे॥ १८॥प्रोच्यते विषमं त्वाद्यं समे द्वे च ततः परम्॥विशोध्यं विषमादंत्या
द्घनं तन्मूलमुच्यते॥ १९॥त्रिघ्नाद्भजेन्मूलकृत्या समं मूले न्यसेत्फलम्॥तत्कृतिस्त्वेन निहतान्त्रिघ्नीं चापि विशोधयेन॥ २०॥घनं च विषमादेवं घनमूलं
मुहुर्भवेत् ॥अन्योन्यहारनिहतौ हरांशौ तु समुच्छिदा॥ २१॥लवा लवघ्नाश्च हरा हरघ्ना हि सवर्णनम्॥भागप्रभागे विज्ञेयं मुने शास्त्रार्थचिंतकैः॥ २२॥
अनुबंधेऽपवाहे चैकस्य चेदधिकोनकः॥भागास्तलस्थहारेण हरं स्वांशाधिकेन तान्॥ २३॥ ऊनेन चापि गुणयेद्धनर्णं चिंतयेत्तथा ॥कार्यस्तुल्यहरां
शानां योगश्चाप्यंततो मुने ॥ २४ ॥ अहारराशौ रूप्यं तु कल्पयेद्धरमप्यथ॥अंशाहतिश्छेदघातहृद्भिन्नगुणने फलम् ॥ २५ ॥ छेदं चापि लवं विद्व
न्परिवर्त्य हरस्य च॥ शेषः कार्यो भागहारे कर्तव्यो गुणनाविधिः॥ २६॥हारांशयोः कृती वर्गे घनौ घनविधौ मुने॥पदसिद्ध्यै पदं कुर्यादथो खं सर्वत
श्च खम् ॥ २७॥ छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम्॥ऋणं स्वं स्वमृणं कुर्याद्दृश्ये राशिप्रसिद्धये॥ २८॥अथ स्वांशाधिकोने तु लवाढ्योनो हरो
हरः ॥ अंशस्त्वविकृतस्तत्र विलोमे शेषमुक्तवत् ॥ २९ ॥ उद्दिष्टराशिः संक्षिप्तो हृतोंऽशै रहितो युतः ॥ इष्टघ्नदृष्टेनैतेन भक्तराशिरनीशितः ॥ ३० ॥
योगोन्तरेणोनयुतोद्वितोराशीतसंक्रमे ॥ राश्यंतरहृतं वर्गोत्तरं योसुतश्च तौ ॥ ३१॥गजघ्नीष्टकृतिर्व्येका दलिता चेष्टभाजिता॥एकोऽस्य वर्गो दलितः 
सैको राशिः परो मतः ॥ ३२ ॥द्विगुणेष्टहृतं रूपं श्रेष्ठं प्राक्पक्षं परम्॥ वर्गयोगांतरे व्येके राश्योर्वर्गोऽन्य एतयोः॥ ३३॥इष्टवर्गकृतिश्चेष्टघनोष्टघ्नो

सैंककौ ॥ एषीस्यानामुभे व्यक्ते गणिते व्यक्तमेव च ॥ ३४ ॥ गुणघ्नमूलोनयुतः सगुणार्द्धे कृतं पदम् ॥ दृष्टस्य च गुणार्द्धो न युतं वर्गीकृतं गुणः ॥ ३५ ॥ यदा लवोनयुग्राशिर्दृश्यं भागोनयुग्भुवा ॥ भक्त तथा मूलगुणं ताभ्यां साध्योथ व्यक्तवत् ॥३६॥ प्रमाणेच्छे सजातीये आद्यंते मध्यगं फलम् ॥ इच्छप्रमाबहृत्सेष्टं फलं व्यस्ते विपर्ययात् ॥ ३७ ॥ पंचरास्यादिकेऽन्योन्यपक्षं कृत्वा फलच्छिदाम् ॥ बहुराशिवधं भक्ते फलं स्वल्पवधेन च ॥३८॥ इष्टकर्मवधैर्मूलं च्युतं मिश्रात्कलांतरे ॥ मानघ्नकालश्चातीतकालाघ्नफलसंहृताः ॥ ३९ ॥ स्वयोगभक्तानिघ्नाः स्युः संप्रयुक्तदलानि च ॥ बहुराशिफलात्स्वल्पराशिमासफलं बहु ॥४० ॥चेद्राशिविवरं मासफलांतरहृतं च यः ॥ क्षेपा मिश्रहताः क्षेपयोगभक्ताः फलानि च ॥ ४१ ॥ भजेच्छिदोंशैस्तैर्मिश्रे रूपं कालश्च पूर्तिकृत् ॥ पूर्णोगच्छेत्समेध्यव्येसमेवर्गोर्द्धितेत्यतः ॥ ४२ ॥व्यस्तं गच्छतं फलं यद्गुणवर्गं भचहि तत् ॥ व्येकं व्येकगुणाप्तं च प्राघ्नं मानं गुणोत्तरे ॥ ४३ ॥ भुजकोटिकृतियोगमूलं कर्णश्च दोर्भवेत् ॥ श्रुतिकृत्यंतरपदं कोटिर्दोः कर्णवर्गयोः ॥ ४४ ॥ विवरात्तत्कर्णपदं क्षेत्रे त्रिचतुरस्रके ॥ राश्योरंतरवर्गेण द्विघ्ने घाते युते तयोः ॥ ४५ ॥ वर्गयोगोथ योगांतहतिर्वर्गांतरं भवेत ॥व्यास आकृतिसंक्षुण्णोव्यासास्यात्परिधिर्मुने ॥ ४६॥ ज्याव्यासयोगविवराहतमूलोनितोऽर्द्धितः ॥ व्यासः शरः शरोनाच्च व्यासाच्छरगुणात्पदम् ॥ ४७ ॥ द्विघ्नं जीवाथ जीवार्द्धवर्गे शरहृते युते ॥ व्यासोष्टतेभवेदेवं प्रोक्तं गणितकोविदैः ॥ ४८ ॥ चापोननिघ्नः परिधिः प्रगाङ्कः परिधेः कृते ॥ तुर्यांशेन शरघ्नेनाद्येनिनाघं चतुर्गणम् ॥४९॥ व्यासघ्नं प्रभजेद्विप्र ज्या काशं जायते स्फुटा॥ज्यांघ्रीषुघ्नोवृत्तवर्गोऽधिघ्नव्यासाढ्यमौर्विहृत्॥५०॥ लब्धोनवृत्तवर्गाद्विपदेर्धात्पतिते धनुः ॥ स्थूलमध्यापृवक्त्रवेधो वृत्तांकाशेषभागिकः ॥ ५१ ॥ वृत्तांगांशकृतिर्वेधनिघ्नीयनकरामितौ ॥ वार्गव्यासहतं दैर्घ्यवेधांगुलहतं पुनः ॥ ५२ ॥ खखेंदुरामविहृतं मानं द्रोणादिवारिणः॥विस्तारायामवेधानामंगुल्योन्योन्यनाडिघ्नाः ॥ ५३ ॥ रसांकाभ्राब्धिभिर्भक्ता धान्ये द्रोणादिकामितिः ॥ उत्सेधव्यासदैर्घ्याणामंगुल्यान्यस्य नो द्विज ॥ ५४ ॥ मिथोघ्नाति भजेत्खाक्षेशैर्द्रोणादिमितिर्भवेत् ॥ विस्ताराद्यंगुलान्येवं मिथोघ्नान्यपसांभवेत ॥ ५५ ॥ बाणेभमार्गणैर्लब्धं द्रोणाद्यं मानमादिशेत् ॥ दीपशंकुतलच्छिद्रघ्नः शंकुर्भेवंभवेन्मुने ॥ ५६ ॥ नरोनदीपकशिखौच्यभक्तो ह्यथ भोद्भवे ॥ शंकौनृदीपाधश्छिद्रघ्नैर्दीपौच्च्यं नरान्विते ॥५७॥ विशंकुदीपौच्च्यगुणाच्छाया शंकूद्धृता भवेत्॥दीपशंक्वंतरं चाथ च्छायाग्रविवरघ्नभा ॥ ५८ ॥ मानांतरद्धृद्भूमिः स्यादथोभूनराहतिः ॥ प्रभाप्ता जायते दीपशिखौच्च्यं स्यात्त्रिराशिकात् ॥ ५९ ॥ एतत्संक्षेपतः प्रोक्तं गणिते परिकर्मकम् ॥ ग्रहमध्यादिकं वक्ष्ये गणिते नातिविस्तरात् ॥ ६० ॥ युगमानं स्मृतं विप्र खचतुष्करदार्णवाः ॥ तद्







शांशास्तु चत्वारः कृताख्यं पादमुच्यते ॥६१॥ त्रयस्त्रेता द्वापरः द्वौ कलिरेकः प्रकीर्तितः ॥ मनुकृताब्दसहिता युगानामेकसप्ततिः ॥६२॥ विधेर्दिने
स्युर्विप्रेंद्र मनवस्तु चतुर्दश ॥ तावत्येव निशा तस्य विप्रेंद्र परिकीर्तिता॥६३॥स्वयंभुवा शरगतानब्दान्संपिंड्य नारद ॥ खचरानयनं कार्यमथ
वेष्टयुगादितः ॥६४॥ युगे सूर्यज्ञशुक्राणां खचतुष्करदार्णवाः ॥ पूजार्किगुरुशुक्राणां भगणापूर्वपापिनाम् ॥ ६५ ॥ इंदोरसाग्नित्रिषु सप्त भूधरमार्ग
णाः ॥ दस्त्र्याष्टरसांकाश्विलोचनानि कुजस्य तु ॥६६॥ बुधशीघ्रस्य शून्यर्तुखाद्रित्र्यंकनगेंदवः ॥ बृहस्पतेः खदस्राक्षिवेदस्त्रइह्वयस्तथा॥ ६७ ॥
शितशीघ्रस्य यष्णसत्रियमाश्विस्वभूधराः ॥ शनेर्भुजगषट्पचरसवेदनिशाकराः ॥ ६८ ॥ चंद्रोच्चस्याग्निशून्याक्षिवसुसर्पार्णवा युगे ॥ वामं पातस्य
च स्वग्नियमाश्विशिखिदस्त्रकाः ॥ ६९ ॥ उदयादुदयं भानोर्भूमेः सावेन वासराः ॥ वसुद्व्यष्टाद्रिरूपांकसप्ताद्रितिथयो युगे ॥ ७० ॥ षड्
वहित्रिहुताशांकतिथयश्चाधिमासकाः ॥ तिथिक्षयायमार्थाक्षिद्व्यष्टव्योमशराश्विनः ॥ ७१ ॥ खचतुष्का समुद्राष्टकुपंचरविमासकाः ॥
षट्त्र्यग्निवेदाग्निपंचशुभ्रांशुमासकाः ॥ ७२ ॥ प्रागातेः सूर्यमंदस्य कल्पेसप्ताष्टवह्नयः ॥ कौजस्य वेदस्वयमा बौधस्याष्टर्तुवह्नयः ॥ ७३ ॥ खखरं
ध्राणि जैवस्य शौक्रस्याथगुणेषवः ॥ गोग्नयः शनिमंदस्य पातानामथवा मतः ॥ ७४ ॥ मनुदस्रास्तु कौजस्य बौधस्याष्टाष्टसागराः ॥कृताद्रिचंद्रा
जैवस्य शौक्रस्याग्निखनंदकाः ॥ ७५ ॥ शनिपातस्य भगणाः कल्पे यमरसर्तवः ॥ वर्तमानयुगे पानावत्सराभगणाभिधाः ॥ ७६ ॥ मासीकृतायुता
मासैर्मधुशुक्लादिभिर्गतैः ॥ पृथक्स्थासिधिमासघ्नासूर्यमासविभाजिताः ॥ ७७॥ अथाधिमासकैर्युक्ता दिनीकृत्य दिनान्विताः ॥ द्विस्थास्तितिक्षया
भ्यस्ताश्चांद्रवासरभाजिताः ॥ ७८ ॥ लब्धोनगत्रिरहितालंकार्यामर्द्धरात्रिकः ॥ सावनोद्युगसोरर्कादिर्दिनमासाब्दयास्ततः ॥ ७९ ॥ सप्तभिः क्षपितः
शेषः सूर्याद्योवासरेश्वरः ॥ मासाब्ददिनसंख्यासंद्वित्रिघ्नं रूपसंयुतम् ॥८०॥ सप्तोद्धनावशेषौ तौ विज्ञेयौ मासवर्षपौ ॥ स्वेष्टस्य भगणाभ्यस्तो दिन
राशिः कुवासरैः ॥ ८१ ॥ विभाजितो मध्यगत्या भगणादिर्ग्रहो भवेत् ॥ एवं ह्यशीघ्रमंदाच्च ये प्रोक्ताः पूर्वपापिनः ॥ ८२ ॥ विलोमगतयः पाता
स्तद्वच्चक्राद्विशोधिताः ॥ योजनानि शतान्यष्टौ भूकर्णो द्विगुणः स्मृतः ॥ ८३ ॥ तद्वर्गतो दशगुणात्पद भूपरिधिर्भवेत् ॥ लंबज्याघ्नस्त्रिज्याप्तः
स्फुटो भूपरिधिः स्वकः ॥ ८४ ॥ तेन देशांतराभ्यस्ता ग्रहभुक्तिर्विभाजिता ॥ कल्पदितत्फलं प्राच्याः ग्रहेभ्यः परिशोधयेत् ॥ ८५ ॥ रेखाप्रतीचि ॥ ९९
संस्थाने प्रक्षिपेत्स्युः स्वदेशतः ॥ राक्षसातपदेवौकःशैलयोर्मध्यसूत्रगाः ॥ ८६ ॥ अवंतिकारोहतिकं तथा सन्निहितं सरः ॥ वारप्रवृत्तिवाग्देशे क्षयाद्वं
भ्यधिको भवेत्॥८७॥तद्देशांतरनाडीभिः पश्चादूने विनिर्दिशेत् ॥ इष्टनाडीगुणा भुक्तिः षष्ट्या भक्ता कलादिकम् ॥८८॥ गते शोद्धयं तथा योज्यं

गम्ये तात्कालिको ग्रहः ॥ भचक्रलिप्ताशीत्यंशः परमं दक्षिणोत्तरम् ॥ ८९ ॥ विक्षिप्यते स्वपातेन स्वक्रांत्यंतादनुष्णगुः ॥ तत्र नांसं द्विगुणितर्जी वस्त्रिगुणितं कुजः ॥ ९० ॥ बुधशुक्रार्कजाः पातैर्विक्षिप्यंते चतुर्गुणम् ॥ राशिलिप्ताष्टमो भागः प्रथमं ज्यार्द्धमुच्यते ॥ ९१ ॥ ततो द्विभक्तलब्धोनमिश्रितं तद्द्वितीयकम् ॥ आद्येनैव क्रमात्पिंडान्भक्ताल्लब्धोनितैर्युतान् ॥९२॥ खंडकाः स्युश्चतुर्विंशा ज्यार्द्धपिंडाः क्रमादमी ॥ परमापक्रमज्या तु सप्तरंध्रगुणेंदवः ॥ ९३ ॥ तद्गुणज्या त्रिजीवाप्ता तच्चापं क्रांतिरुच्यते ॥ ग्रहं संशोध्य मंदोच्चत्तथा शीघ्राद्विशोध्य च ॥ ९४ ॥ शेषं कंदपदंतस्माद्भुजज्या कोटिरेव च ॥ गताद्भुजज्याविषमे गम्यात्कोटिः पदे भवेत् ॥ ९५ ॥ समेति गम्याद्बाहुज्या कोटिज्यानुगता भवेत् ॥ लिप्तास्तत्त्वयमैर्भक्ता लब्धज्या पिंडकं गतम् ॥ ९६ ॥ गतगम्यांतराभ्यस्तं विभजेत्तत्त्वलोचनैः ॥ तदवाप्तफलं योज्यं ज्यापिंडे गतसंज्ञके ॥ ९७ ॥ स्यात्क्रमज्याविधिश्चैवमुत्क्रमज्यागता भवेत् ॥ लिप्तास्तत्त्वयमैर्भक्ता लब्धज्या पिंडकं गतम् ॥ ९८ ॥ गतगम्यांतराभ्यस्तं विभजेत्तत्त्वलोचनैः ॥ तदवाप्तफलं योज्यं ज्यापिंडे गतमंज्ञके ॥ ९९ ॥ स्यात्क्रमज्याविधिश्चैवमुत्क्रमज्यास्वपिस्मृतः ॥ ज्यां प्रोह्य शेषं तत्त्वताश्वि हतं तद्विवरोद्धृम् ॥१००॥ संख्यातत्त्वाश्विसंवर्ग्य संयोज्यं धनुरुच्यते ॥ रवेर्मंदपरिध्यंशा मनवः शीतगोरदाः ॥१०१॥ युग्मांते विषमांते तुनखलिप्तोनितास्तयोः॥युग्मांतेर्थाद्रयः खाग्निसुराः सूर्या नवार्णवाः ॥ १०२ ॥ ओजेद्व्यगा च सुयमारदारुद्रागजाब्धयः॥कुजादीनामतः शौघ्न्यायुग्मांतेर्थाग्निदस्रकाः ॥ १०३ ॥ गुणाग्निचंद्राः खनगाद्रिसाक्षीणि गोऽग्नयः ॥ ओजांते द्वित्रियमताद्विविश्वेयमपर्वताः ॥१०४॥ खर्तुदस्रावियद्वेदाः शीघ्रकर्मणि कीर्तिताः ॥ ओजयुग्मांतरगुणाभुजज्यात्रिज्ययोद्धृताः ॥ १०५ ॥ युग्मवृत्तेधनर्णंश्यादोजादूनेऽधिके स्फुटम् ॥ तद्गुणे भुजकोटिज्येभगणांशविभाजिते॥ १०६ ॥ तद्भुजज्याफलधनुर्मांदं लिप्तादिकं फलम् ॥ शैघ्र्यकोटिफलं केंद्रे मकरादौ धनं स्मृतम् ॥ १०७ ॥ संशोध्यं तु त्रिजीवायां कर्कादौ कोटिजं फलम्॥तद्बाहुफलवर्गैक्यान्मूलकर्णश्चलाभिधः ॥१०८॥ त्रिज्याभ्यस्तं भुजफलं मकरादौ धनं स्मृतम् ॥ संशोध्यं तु त्रिजीवायां कर्कादौ कोटिजं फलम् ॥ १०९ ॥ तद्बाहुफलवर्गैक्यान्मूलं कर्णश्चलाभिधः ॥ त्रिज्याभ्यस्तं भुजफलं पलकर्णविभाजितम् ॥११०॥ लब्धस्य चापं लिप्तादि फलं शैघ्र्यमिदं स्मृतम् ॥ एतदादौ कुजादीनां चतुर्थे चैव कर्मणि ॥१११॥मांद्यं कर्मैकमर्केद्वोर्भौमादीनामथोच्यते ॥ शैघ्र्यं मांद्यं पुनर्मांद्यं शैघ्र्यं चत्वार्यनुक्रमात् ॥ ११२ ॥ अजादिकेंद्रे सर्वेषां मांद्ये शैघ्र्ये च कर्मणि ॥ धनं ग्रहाणां लिप्तादि तुलादावृणमेव तत्॥११३॥ अर्कबाहुफलाभ्यस्ता ग्रहभुक्तिविभाजिताः ॥ भचक्रकलिकाभिस्तु लिप्ताः कार्या ग्रहेऽर्कवत्॥११४॥ ग्रहभक्तः फलं कार्यं ग्रहवन्मंदकर्मणि ॥ कर्कादौ तद्धनं तत्र मकरादावृणं स्मृतम् ॥ ११५ ॥ दोर्ज्यो





नरगुणाभुक्तिस्तत्त्वनेत्रोद्धृता पुनः ॥ स्वमंदपारिधिक्षुण्णा भगणांशोद्धृताःकलाः ॥ ११६ ॥ मंदस्फुटकृता भुक्तिः प्रोह्य शीघ्रोच्चभुक्तितः ॥
तच्छेषं विवरेणाथ हन्यात्रिज्यांककर्णयोः ॥ ११७ ॥ चक्रकर्णहतं भुक्तौ कर्णे त्रिज्याधिके धनम् ॥ ऋणमूनेऽधिके प्रोह्य शेषं वक्रगतिर्भवेत् ॥ ११८ ॥
कृततुचंद्रैर्वेदेंद्रैः शून्यत्र्येकैर्गुणाष्टभिः ॥ शररुद्रैश्चतुर्थांशुकेंद्रांशैर्भूसुतादयः ॥ ११९ ॥ वक्रिणश्चक्रशुद्धैस्तैरंशैरुज्जुतिवक्रताम् ॥ क्रमज्या विषुवद्भाघ्नी क्षिति
ज्या द्वादशोद्धृता ॥ १२० ॥ त्रिज्यागुणा दिनव्यासभक्ता चापं च शत्रवः ॥ तत्कार्मुकमुदक्कांतौ धनहीनो पृथक्क्षते ॥ १२१ ॥ स्वाहोरात्रचतुर्भागे
दिनरात्रिदले स्मृते ॥ याम्यक्रांतौ विपर्यस्ते द्विगुणेते दिनक्षये ॥ १२२ ॥ भभोगोऽष्टशतीलिप्ताः स्वाश्विशैलास्तथातिथेः ॥ ग्रहलिप्ता भगाभो
गाभानि भुक्त्यादिनादिकम् ॥ १२३ ॥ रवींदुयोगलिप्तास्तु योगाभभोगभाजिताः ॥ गतगम्याश्च षष्टिघ्ना भुक्तियोगाप्तनाडिकाः ॥ १२४ ॥
अर्कोनचंद्रलिप्तास्तु तिथयो भोगभाजिताः ॥ गतगम्याश्च षष्टिघ्ना नाऽनोभुक्तन्तरोद्धृताः ॥ १२५ ॥ तिथयः शुक्लप्रतिपदो द्विघ्नाः सैका न
गाहताः ॥ शेषं ववो बालवश्च कौलवस्तैतिलो गरः ॥ १२६ ॥ वणिजोभ्रे भवेद्विष्टिः कृष्णभूतापरार्द्धतः ॥ शकुनिर्नागश्च चतुष्पद किंस्तुघ्न
मेव च ॥ १२७ ॥ शिलातलेवसंशुद्धे वज्रलेपेतिवासमे ॥ तत्र शकांगुलैरिष्टैः सममंडलमालिखेत ॥ १२८ ॥ तन्मध्ये स्थापयेच्छंकुं कल्पना
द्वादशांगुलम् ॥ तच्छायाग्रं स्पृशेद्यत्र दत्तं पूर्वापराह्णयोः ॥ १२९ ॥ तत्र बिंदुं विधायोभौ वृत्ते पूर्वापराभिधौ ॥ तन्मध्ये तिमिना रेखा कर्तव्या
दक्षिणोत्तरा ॥ १३० ॥ याम्योत्तरदिशोर्मध्ये तिमिना पूर्वपश्चिमा ॥ दिग्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि ॥ १३१ ॥ चतुरस्रं बहिः
कुर्यात्सूत्रैर्मध्याद्विनिःसृतैः ॥ भुजसूत्रांगुलैस्तत्र दत्तैरिष्टप्रभा मता ॥ १३२ ॥ प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममंडलम् ॥ समंडलं च
विषुवन्मंडलं परिकीर्तितम् ॥ १३३ ॥ रेखा प्राच्यपरा साध्या विषुवद्भाग्रया तथा ॥ इष्टच्छायाविषुवतोर्मध्येह्यग्राभिधीयते ॥ १३४ ॥ शंकु
च्छायाकृतियुतेर्मूलं कर्णोऽस्य वर्गतः ॥ प्रोह्य शंकुकृतेर्मूलं छाया शंकुविपर्ययात् ॥ १३५ ॥ त्रिंशत्कृत्यायुगे भानां चक्रं प्राक्परिलंबते ॥ तद्गुणा
द्भूदिनैर्भक्तया द्युगणाद्यदवाप्यते ॥ १३६ ॥ तद्दोस्त्रिघ्नादशाप्तांशा विज्ञेया अयनाभिधाः ॥ तत्संस्कृताद्ग्रहात्क्रांतिच्छायाचरदलादिकम् ॥ १३७ ॥
शंकुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते ॥ लंबाक्षज्ये तयोश्चापे लंबाक्षौ दक्षिणौ सदा ॥ १३८ ॥ साक्षार्कापक्रमयुतिर्दिक्साम्येंतरमन्यथा ॥
शेषह्यानांशाः सूर्यस्य तद्बाहुज्याथ कोटिजाः ॥ १३९ ॥ शंकुमानांगुलाभ्यस्ते भुजत्रिज्ये यथाक्रमम् ॥ कोटीज्यया विभज्याप्ते छाया
कर्णावहर्दले ॥ १४० ॥ स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा ॥ दिग्भेदोपक्रमः शेषस्तस्य ज्या त्रिज्यया हता ॥ १४१ ॥ परमोपक्रमज्यान

चापमेषादिगो रविः ॥ कर्कादौ प्रोह्यचक्राद्धांतुलादौ भार्द्धसंयुतात् ॥ १४२॥ मृगादौ प्रोह्यचक्रात्तु मध्याह्नेऽर्कः स्फुटो भवेत् ॥ तन्मंदमसकृत्क्षामं
फलं मध्यो दिवाकरः ॥१४३॥ ग्रहोदयाः प्राणहताः खखाष्टैकोद्धता गतिः ॥ चक्रासवो लब्धयुतां स्वाहोरात्रासवः स्मृताः ॥१४४॥ त्रिभद्युकर्णा
र्द्धगुणा स्वाहोरात्रार्द्धभाजिताः॥क्रमादेकद्वित्रिभाज्या तच्चापानि पृथक्पृथक्॥१४५॥ स्वाधोधः प्रविशोध्याथ मेषाल्लंकोदयासवः ॥ स्वागाष्टयोर्थगो
गैकाः शरत्र्येकं हिमांशवः॥१४६॥ स्वदेशचरखंडोना भवंतीष्टोदयासवः ॥ व्यस्ताव्यस्तैर्युतास्तैस्तैः कर्कटाद्यास्ततस्तु यः ॥१४७॥ उत्क्रमेण
षडेवैते भवंतीष्टास्तुलादयः॥ गतभोग्यासवः कार्याः सायनास्स्वेष्टभास्कराः ॥१४८॥ स्वोदयात्सुहता भक्ता भक्तभोग्याः स्वमानतः ॥ अभीष्टघ
टिकासुभ्यो भोग्यासून्प्रविशोधयेत् ॥ १४९ ॥ तद्वदेवैष्यलग्नासूनेवं व्यापास्तथा क्रमात् ॥ शेषं त्रिंशत्कमाद्यचस्तमशुद्धेन विभाजितम्॥१५०॥
भागयुक्तं च हीनं च व्ययनांशं तनुः कुजे ॥ प्राक्पश्चान्नतनाडीभ्यस्तद्वल्लंकोदयासुभिः ॥१५१॥ भानौ क्षयधने कृत्वा मध्यलग्नं तदा भवेत् ॥
भोग्यासूनूनकस्याथ भुक्तासूनधिकस्य च ॥१५२॥ सपिंडचांतरलग्नासूनेवं स्यात्कालसाधनम् ॥ विराह्वर्कभुजांशाश्चेदिंद्राल्पाः स्याद् ग्रहो विधोः
॥१५३॥ तेषां शिवघ्नाः शैलाप्ता व्यावर्काजः शरोंगुलैः ॥ अर्कं विधुर्विधुं भूभा छादयत्यथ छन्नकम् ॥ १५४ ॥ छाद्यछादकमानाधं शरोनं ग्राह्यव
र्जितम् ॥ तत्स्वच्छन्नं च मानैक्याद्धांशघ्नं दशाहतम्॥१५५॥छन्नघ्नमस्मान्मूलं तु खांगोनग्लौवपुर्हृतम्॥स्थित्यर्द्धं घटिकादिस्याद्व्यंगवाह्वंशसं
मितैः ॥१५६॥इष्टैः पलैस्तदूनाढ्यं व्यगावूनेऽर्कषड्गुणः॥तदन्यथाधिके तस्मिन्नेवं स्पष्टे सुखांत्यगे॥१५७॥ग्रासेन स्वाहते च्छाद्यमानाप्ते स्युर्विंशो
पकाः ॥ पूर्णांतं मध्यमत्र स्यादशतिंजं त्रिभोनकम् ॥ १५८ ॥ पृथक्तत्क्रांत्यक्षभागसंस्कृतौ स्युर्नतांशकाः॥ तद्दिग्भांशकृतिद्व्यूनाद्धर्कियुता हरिः ॥
॥ १५९ ॥ त्रिभानांगार्कविश्लेषांशोंशोनघ्नाः ॥ पुरंदराः ॥ हराप्तालंबनं स्वर्णवित्रिभेर्काधिकोनके ॥१६०॥विश्वघ्नलंबनकलाढ्योनस्तु तिथिवद्ग्रहुः॥
शरोनोलंबनषडघ्ने तल्लवाढ्योनवित्रिभात ॥१६१॥ नतांशास्तजांसाने प्राधृतस्तद्विवर्जितः ॥शब्देंदुलिप्तैः षड्भिस्तु भक्तानतिर्नतांशदिक् ॥१६२॥
तयोर्नाट्योहर्भिन्नैकदिक्शरः स्फुटतां व्रजेत् ॥ ततश्छन्नस्थितिदले साध्ये स्थित्यर्द्धषट्त्रिभिः ॥ १६३ ॥ अंशस्तैर्वित्रिभंद्विस्थलंबनेतयोःपूर्ववत् ॥
संस्कृतेस्ताभ्यां स्थित्यर्द्धे भवतः स्फुटे ॥१६४॥ ताभ्यां हीनयुतो मध्यदर्शः कालौ मुखांतगौ ॥ अर्काद्यूना विश्व ईशा नवपंचदशांशकाः ॥१६५॥
कालांशास्तैरूनयुक्ते रवौ ह्यस्तोदयौ विधोः ॥ दृष्ट्वा ह्यादौ खेटबिंबं दृगौच्च्ये लंबमीक्ष्य च ॥१६६॥तल्लंबपापर्बिबांतर्दगो व्यासरविघ्नभाः ॥ अस्ते
सावयवा ज्ञेया गतैष्यास्तिथयो बुधैः ॥१६७॥ व्यस्ते युक्तांतिभागैश्च द्विघ्नतिथ्याहृता स्फुटम् ॥ संस्कारदिकलंबनमंगुलाद्यं भजभक्ते ॥ १६८ ॥





सेष्वंशोनाः सितं तिथ्यो बलन्नाशोन्नतं विधोः ॥ शृङ्गमन्यत्र उद्धाज्यं बलनांगुलल्लेखनात् ॥ १६९ ॥ पंचत्वे गोंकविशिखाः शेषकर्णहताः पृथक् ॥
विकुज्यकांगसिद्धाम्रिभक्तालब्धोनसंयुताः ॥ १७० ॥ त्रिज्याधिकोने श्रवणे वपूंषि स्युर्हताः कुजात् ॥ ऋज्वोरनृज्वोर्विवरं गत्यंतरविभाजितम् ॥
॥ १७१ ॥ वक्रत्वोर्गतियोगामं गम्येतीते दिनादिकम् ॥ खनत्यासंस्कृतौव्विषूदक्साम्येन्यंतरं युतिः ॥ १७२ ॥ याम्योदक्खेटविवरं
मानैक्याद्धोल्पकं यदा ॥ यदा भेदोलंबनाद्यं स्फुटार्थं सूर्यपर्ववत ॥ १७३ ॥ एलायनगतौ स्यातां सूर्याचन्द्रमसौ यदा ॥ तद्युते मंडले
क्रांत्यौ तुल्यत्वे वै धृताभिधः ॥ १७४ ॥ विपटीतायनगतौ चंद्राकौं क्रांतिलिप्तिकाः ॥ समास्तदा व्यतीपातो भगणार्द्धे तपोयुतौ ॥
॥ १७५ ॥ भास्करेंद्रोर्भचक्रांतचक्रार्द्धावधिसंस्थयोः ॥ दृक्कल्पसाधितांशादियुक्तयोः स्वावपक्रमौ ॥ १७६ ॥ अथोजपदगम्येंदोः क्रांतिर्विक्षे
पसंस्कृता ॥ यदि स्यादधिका भानोः क्रांतिः पातो गतस्तदा ॥ १७७ ॥ न्यूना चेत्स्यात्तदा भावी वामं युग्मपदस्य च ॥ यदान्यत्वं विधोः
क्रांतिः क्षेपाच्चेद्यदि शुद्धयति ॥ १७८ ॥ क्रांत्योर्जेत्रिज्ययाभिस्ते परमायक्रमोद्धते ॥ तच्चापांतर्मर्द्धवायोर्ज्यभाविनशीतगौ ॥ १७९ ॥ शोध्यं चंद्राद्गते
पाते तत्सूयगतिताडितम् ॥ चंद्रभुक्तया हृते भानौ लिप्तादिशशिवत्फलम् ॥ १८० ॥ तद्वच्छशांकपातस्य फलं देयं विपर्ययात् ॥ कर्मैतदसकृत्रावत्कां
ती यावत्समेतयोः ॥ १८१ ॥ क्रांत्योः समत्वे पातोऽथ प्रक्षिप्तांशोनिते विधौ ॥ हीनेऽर्द्धरात्रिकाघातो भावी तात्कालिकेऽधिका ॥ १८२ ॥ स्थिरीकृतार्द्धरा
त्रार्द्धौ द्वयोर्विवरलिप्तकाः ॥ षष्टिश्चाचंद्रभुक्ताप्ता पातकालस्य नाडिकाः ॥ १८३ ॥ रवींद्वोर्मानयोगार्द्धं षष्ट्या संगुण्य भाजयेत ॥ तयोर्भुक्त्यंतरेणाप्तं
स्थित्यमर्द्धं नाडिकादिवत ॥ १८४ ॥ पातकालः स्फुटो मध्यः सोऽपि स्थित्यर्द्धवर्जितः ॥ तस्य संभवकालः स्यात्तत्संयोगेंतसंज्ञकः ॥ ८५ ॥ आद्यंतका
लयोर्मध्ये कालो ज्ञेयोऽतिदारुणः ॥ प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः ॥ १८६ ॥ इत्येतद्गणिते किंचित्प्रोक्तं संक्षेपतो द्विज ॥ जातकं वच्मि
समयाद्राशिसंज्ञापुरःसरम् ॥ १८७ ॥ इति श्रीबृहन्नादीयपुराणे पूर्वभागे बृहदुपाख्याने द्वितीयपादे ज्योतिषवर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः
॥ ५४ ॥ सनंदन उवाच ॥ मूर्द्धास्यबाहुहृत्क्रोडांतर्वस्तिव्यंजसोनखः ॥ जानुजंघांघ्रियुगलं कालांगानि क्रियादयः ॥ १ ॥ भौमास्फुजिद्बुधेंदुश्च रविसौ
म्यसिताः कुजः ॥ गुरुमंदार्किगुरवो मेषादीनामधीश्वराः ॥ २ ॥ होरे विषमभेर्केंदोः समभे शशिसूर्ययोः ॥ आदिपञ्चनवाधीशाद्द्रेष्काणेशाः प्रकीर्तिताः
॥ ३ ॥ पंचेषाष्टाद्रिपंचांशा कुजार्कीज्यज्ञशुक्रगाः ॥ ओजे विपर्ययाद्युग्मे त्रिशांशेशाः समीरिताः ॥ ४ ॥ क्रियणतौलिकर्काद्या मेषादिषु नवां
शकाः ॥ स्वभाद्द्वादशभागेशाः षड्गं राशिपूर्वक्रम ॥ ५ ॥ गोजाश्च कर्कयुग्मेन रात्र्याख्या पृष्ठकोदयाः ॥ शेषा दिनाख्यास्तमयं तिमिः क्रूरः सौम्यः

पुमान् ॥ ६ ॥ पुमान् स्त्री च क्लीवश्चरस्थिरद्विस्वभावकाः ॥ मेषाद्याः पूर्वतो [illegible]थाः स्वस्वस्थानचरास्तथा ॥ ७ ॥ अजोक्षैणांगनाकीटझषजूक।
इनादितः॥उच्चानि द्वित्रिमनुयुक्तिथीषुभनखांशकैः॥८॥तत्तत्सप्तमनीचानि प्राङ्मध्यांत्यांशकाः क्रमात् ॥वर्गोत्तमाश्च राधेषु भावाद्वादश मूर्तिमान्॥९॥
सिंहोक्षाविस्त्रश्चतौलिकुंभाः सूर्यात्रिकोणभम् ॥ चतुरस्रं तूर्यमृत्युत्रिकोणं नवपंचमम् ॥ १० ॥ रिःफाष्टषट्कं त्रिकभं केंद्रं प्राक्तुर्यसप्तखम् ॥ नृपादः
कीटपशवो बलाढ्याः केंद्रगाः क्रमात् ॥ ११ ॥ केंद्रात्परं पणफरमापोक्लिममतः परम् ॥ रक्तः श्वेतः शुकनिभः पाटलो धूम्रपांडुरौ ॥ १२ ॥
चित्रः कृष्णः पीतपिंगौ बभ्रुः स्वच्छः प्रभाक्रियात् ॥ साम्याशास्यप्लवत्वं स्याद्वितीये वशिरकंभात् ॥ १३ ॥ कालात्मार्को मनश्चंद्रः कुजः सत्वं वचो
बुधः ॥ जीवो ज्ञानं सुखं शुक्रः कामो दुःखं दिनेशजः ॥१४ ॥ नृपौ रवीन्दू नेतासृक् कुमारो ज्ञः कवीज्यकौ॥ सचिवो सूर्यजः प्रेष्यो मतो ज्योति
विंदां वरैः ॥ १५ ॥ ताम्रशुक्लरक्तहरित्पीतचित्रासिता रवेः ॥वर्णा वअग्न्यहहरींद्रा शचीकोधिपारवेः॥ १६॥रविशुक्रारराहुर्केन्दुविदीज्या दिगीश्वराः॥
क्षीणेंद्वर्कारारविजाः पापा पापयुतो बुधः॥१७॥क्लीबौ बुधार्कौ शुक्रेन्दू स्त्रियौ शेषा नराः स्मृताः॥शिखिभूमिपयोवारिवासिनो भूसुतादयः॥१८॥कवी
ज्यौ कुजमूर्यौ च वेदो ज्ञो वर्णपाः क्रमात्॥सौरोऽत्यजाधिपः प्रोक्तो राहुर्म्लेंच्छाधिपस्तथा॥१९॥चंद्रार्कजीवाज्ञसितौ कुजार्की सात्त्विकादिकाः॥देवतेंद्व
ग्निखैलाभूकोसखायोपराधिपाः॥२०॥वस्त्रं स्थलं नवं वह्निकहतं मध्यदं तथा॥स्फुटितं रवितस्तांम्रं तारं ताम्रपुनिस्तथा॥२१॥ हेमकांस्यायसी त्र्यंशैः
शिशिराद्याः प्रकीर्तिताः ॥ सौरशुक्रारचंद्रज्ञगुरुपूर्वत्सु च क्रमात् ॥२२॥त्र्याशत्रिकोणतुर्याष्टसप्तमान्येन वृद्धितः॥ सौरेज्यागपरे पूर्णे क्रमात्पश्यंति
नारद ॥ २३ ॥ अयनक्षणघस्रर्तुमासार्द्धशरदो रवेः ॥ कटुतिक्तक्षारमिश्रमधुराम्लकषायकाः ॥२४ ॥ त्रिकोणात्सांत्यधाधर्मायुः सुखखोद्यपः सुहृत्॥
जीवो जीवज्ञौ सितज्ञौ त्र्यर्का ज्याराः क्रमादमी ॥ २५ ॥ वींद्वर्का विकुजेंद्वर्काः सुहृदोऽन्ये खवेधृताः॥ मिथोधनव्ययायत्रिबंधुव्यापारगः सुहृत् ॥
॥२६॥ ध्येकानुभक्ता मयान् ज्ञात्वा मिथोदीत्सहजान्मुने ॥ मत्कालोधिसुहृन्मित्रपूर्वकान्कल्पयेत्पुनः ॥ २७ ॥ स्वोच्चत्रिकोणगेहा प्रनवांशैस्था
नजं बलम् ॥ दिक्षु सौम्येज्ययोः मूर्यारयोः सौरे सिताब्जयोः ॥२८॥ स्वाहतूदगनेन्ये तु वक्रे च समागमे ॥ उत्तरस्था दीप्तकराश्चेष्टा वीर्ययुता
मताः ॥ २९ ॥ निशींद्कुजसौराश्च सर्वदा क्षोह्नि चापरे ॥ क्रूराः कृष्णे सिते सौम्याः मतं कालबलं बुधैः ॥ ३० ॥ सौरारज्ञेज्यशुक्रेंदुसूर्याधिक्यं
परस्परम् ॥ पापास्तु बलिनः सौम्या विवक्षाः कण्टकोपगे ॥३१॥क्षीवे तदूशनाद्वापि चंद्रार्कांशसमं जनुः ॥ स्वांशे पापाः परांशस्थाः सौम्यालग्नं
वियोनिजम् ॥ ३२ ॥ निर्बलं च तदादेश्यं वियोनेर्जन्म पंडितैः ॥ शीर्षं वक्त्रगले पादावंसौ पृष्ठमुरस्तथा ॥ ३३ ॥ पार्श्वे कुक्षी त्वपानांघ्री

दुरितानि च ॥ अतो दीक्षेति सा प्रोक्ता सर्वागमविशारदैः ॥ २ ॥ मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः ॥ मननात्राणधर्मत्वान्मंत्र इत्यभिधीयते॥ ॥ ३ ॥ स्त्रीपुंनपुंसकात्मानस्ते मंत्रास्तु त्रिधा मताः ॥ स्त्रीमंत्रास्तु द्विठांताः स्युः पुंमंत्रा हुंफडंतकाः ॥ ४ ॥क्लीबाश्चैव नमोंऽताः स्युर्मंत्राणां जातयः स्मृताः ॥ पुंदैवतास्तु मन्त्रा स्युर्विद्याः स्त्रीदैवता मताः ॥ ५ ॥ षट्कर्मसु प्रशस्तास्ते मनवस्त्रिविधाः पुनः ॥ तारांत्यरेफः स्वाहास्तु तत्राग्नेयाः समीरिताः ॥ ६ ॥सौम्यास्तु भृगुपीयूषबीजाढ्याः कथिता मुने ॥ अग्नीषोमात्मका ह्येवं मंत्रा ज्ञेया मनीषिभिः ॥७॥ बोधमायांति चाग्नेयाः श्वसने पिंगलाश्रिते ॥ सौम्याश्चैव प्रबुध्यंते वामे वहति मारुते ॥ ८ ॥ सर्वे मंत्राः प्रबुध्यंते वायौ नाडिद्वयाश्रिते ॥ स्वापकाले तु मन्त्रस्य जपोऽनर्थफलप्रदः ॥ ९ ॥ प्रत्येकं मन्त्रमुच्चार्य नाड्यानां तान्समुच्चरेत्॥ अनुलोमे बिंदुयुक्तान्विलोमे सर्गसंयुतान् ॥ १० ॥ जप्तो यदि स वै देवं प्रबुद्धः क्षिप्रसिद्धिदः ॥ अनया मालया जप्तो दुष्टमन्त्रोऽपि सिद्ध्यति ॥११॥ क्रूरे कर्मणि चाग्नेयाः सौम्याः सौम्य फलप्रदाः ॥ शांतज्ञानेति रौद्रेयशांतिजातिसमन्वितः ॥ १२ ॥ शांतोऽपि रौद्रतामेति हुंफट्पल्लवयोजनात्॥छिन्नादिदोषयुक्तास्ते नैव रक्षंति साधकम् ॥ १३ ॥ छिन्नो रुद्धः शक्तिहीनस्ततश्चैव पराङ्मुखः ॥ कर्णहीनो नेत्रहीनः कीलितः स्तंभितस्तथा ॥१४॥ दग्धः त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः ॥ भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः ॥ १५ ॥ हतवीर्यो भ्रांतसंज्ञः प्रध्वस्तो बालकस्तथा ॥ कुमारोऽथ युवा प्रौढो वृद्धो निस्त्रिंशकस्तथा ॥ १६ ॥ निर्बीजः सिद्धिहीनश्च मंदः कूटो निरंशकः ॥ सत्त्वहीनः केकरश्च बीजहीनश्च धूमितः ॥ १७ ॥ आलिंगितो मोहितश्च क्षुधार्तश्चातिदीप्तकः ॥ अंगहीनोऽतिक्रुद्धश्चातिक्रूरो व्रीडितस्तथा ॥ १८ ॥ प्रशांतमानसः स्थानभ्रष्टश्च विकलस्तथा ॥ अतिवृद्धोऽतिनिःस्नेहः पीडितश्च तथा पुनः ॥ १९ ॥ दोषा ह्येते समाख्याता वक्ष्याम्येषां च लक्षणम् ॥ संयुक्तं वा वियुक्तं वा त्रिधा वा स्वरसंयुतम् ॥ २० ॥ मनोर्यस्यादिमध्यांते वह्निबीजं तथोच्यते ॥ चतुर्द्धा पञ्चधा वापि स मन्त्रश्छिन्नसंज्ञकः॥२१॥ मनोर्यस्यादिमध्यांते भूबीजद्वयमुच्यते॥स तु रुद्धो मनुर्ज्ञेयो ह्यतिक्लेशेन सिद्धिदः ॥ २२ ॥ तारवर्मत्रया लक्ष्मीरेवं हीनस्तु यो मनुः ॥ शक्तिहीनः स विज्ञेयश्चिरकालफलप्रदः ॥ २३ ॥ कामबीजं मुखे माया ह्यंते चैवाङ्कुशं तथा ॥ असौ पराङ्मुखो ज्ञेयो भजतां चिरसिद्धिदः ॥ २४ ॥ आदिमध्यावसानेषु सकारो दृश्यते यदि ॥स मन्त्रो बधिरः प्रोक्तः कष्टेनाल्पफलप्रदः ॥ २५ ॥ पञ्चार्णो यदि रेफार्कबिंदुवर्जितविग्रहः ॥ नेत्रहीनस्तु विज्ञेयः क्लेशेनापि न सिद्धिदः ॥ २६ ॥ आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ ॥ हंसेंदुर्वा सकारो वा फकारो वर्म वा पुनः ॥ २७ ॥ माया नमामि च पदं नास्ति यस्मिन्स कीलितः ॥ मध्ये

मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रलकारकौ ॥ २८ ॥ न विद्येते स मंत्रस्तु स्तंभितः सिद्धिरोधकृत् ॥ अग्निः पवनसंयुक्तो मनोर्यस्य तु मूर्द्धनि ॥
॥ २९ ॥ स सार्णो दृश्यते यस्तु स मंत्रो दग्धसंज्ञकः ॥ अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः ॥ ३० ॥ त्रस्तः स मंत्रो विज्ञेयो
मुखे तारविवर्जितः ॥ हकारः शक्तिरथवा भीतो मंत्रः स एव हि ॥ ३१ ॥ मनोर्यस्यादिमध्यांते स्यान्मकारचतुष्टयम् ॥ मलिनस्तु
स विज्ञेयो ह्यतिक्लेशेन सिद्धिदः ॥ ३२ ॥ दार्णो यस्य मनोर्मध्ये मूर्ध्नि क्रोधयुगं तथा ॥ अस्त्रं चास्ति स मंत्रस्तु तिरस्कृत उदीरितः ॥ ३३ ॥
म्योद्वयं हृदयं शीर्षे वषड्वौषट्कमध्यमः ॥ यस्य स्याद्भेदितो मंत्रस्त्याज्यः क्लिष्टफलप्रदः ॥ ३४ ॥ त्र्यक्षरो हंसहीनो यः सुषुप्तः कीर्तितस्तु सः ॥ विद्या वाप्यथवा मंत्रो भवेत्सप्तदशाक्षरः ॥३५॥ फट्कारपंचकादिर्यो मदोन्मत्तस्तु स स्मृतः ॥ यस्य मध्ये स्थितं चास्त्रं स मंत्रो
मूर्च्छितः स्मृतः॥३६॥विरामस्थानगं चास्त्रं हतवीर्यः स उच्यते॥मंत्रस्यादौ च मध्ये च मूर्ध्नि चास्त्रचतुष्टयम्॥३७॥ज्ञातव्यो भ्रांत इत्येष यः स्यादष्टादशाक्षरः॥पुनर्विंशतिवर्णो वा यो मंत्रः स्मरसंयुतः॥३८॥हृल्लेखांकुशबीजाढ्यः प्रध्वस्तः स कथ्यते॥सप्तार्णो बालमंत्रस्तु कुमारो वसुवर्णवान्॥३९॥
षोडशार्णो युवा प्रौढश्चत्वारिंशतिवर्णकः ॥ त्रिंशद्वर्णश्चतुःषष्टिवर्णश्चापि शताक्षरः ॥ ४० ॥ चतुःशताक्षरो मंत्रो वृद्ध इत्यभिधीयते ॥ नवार्णस्तारसंयुक्तो मंत्रो निस्त्रिंश उच्यते ॥ ४१ ॥ यस्यांते हृदयं प्रोक्तं शिरोमंत्रोऽथ मध्यगः ॥ शिखा वर्म च यस्यांते नेत्रमस्त्रं च दृश्यते ॥४२ ॥ शिवशक्त्यार्णहीनो वा निर्बीजः स मनुः स्मृतः॥आद्यंतमध्ये फट्कारः षोढा यस्मिन्प्रदृश्यते॥४३॥स मनुः सिद्धिहीनः स्यान्मंदः पंक्त्यक्षरो मनुः ॥
कूट एकाक्षरो मंत्रः स एवोक्तो निरंशकः ॥ ४४ ॥ द्विवर्णः सत्त्वहीनः स्यात्केकरश्चतुरक्षरः ॥षड्वर्णो बीजहीनो वा सार्द्धसप्ताक्षरोऽपि वा ॥ ४५ ॥
सार्द्धद्वादशवर्णो वा धूमितो निंदितस्तु सः ॥ सार्द्धबीजत्रययुतो मंत्रो विंशतिवर्णवान् ॥ ४६ ॥ त्रिंशद्वर्णश्चैकविंशद्वर्णश्चालिंगितस्तु सः ॥ यो
मंत्रो दंतवर्णस्तु मोहितः स तु कीर्तितः ॥ ४७ ॥ चतुर्विंशतिवर्णो वा सप्तविंशतिवर्णवान् ॥ क्षुधार्तः स तु विज्ञेयो मंत्रसिद्धिविवर्जितः ॥ ४८ ॥
एकादशाक्षरो वापि पंचविंशतिवर्णकः ॥ त्रयोविंशतिवर्णो वा स मनुर्दृप्तसंज्ञकः ॥ ४९ ॥ षड्विंशत्यक्षरो वापि षट्त्रिंशद्वर्णकोऽपि वा ॥ एकोनत्रिंशदर्णो वा मंत्रो हीनांगकः स्मृतः ॥ ५० ॥ अष्टाविंशतिवर्णो वा तथैकत्रिंशदर्णकः ॥ अतिक्रूरः स विज्ञेयोऽखिलकर्मसु गर्हितः ॥ ५१ ॥
चत्वारिंशत्समारभ्य त्रिषष्टंचतस्तु यो मनुः ॥ व्रीडितः स तु विज्ञेयः सर्वकर्मसु न क्षमः॥ ५२ ॥पञ्चषष्ट्यक्षरा मन्त्रा ज्ञेया वै शांतमानसाः ॥
पञ्चषष्ट्यर्णमारभ्य नवनन्दाक्षरावधि॥ ५३ ॥ ये मंत्रास्ते तु विज्ञेयाः स्थानभ्रष्टा मुनीश्वर॥त्रयोदशार्णा ये मन्त्रास्तिथ्यर्णाश्च तथा पुनः ॥५४॥

विकलास्ते समाख्याताः सर्वतंत्रविशारदैः ॥ शतं सार्द्धशतं वापि शतद्वयमथापि वा ॥ ५५ ॥ द्विनवत्येकहीनो वा शतत्रयमथापि वा ॥ ये
मंत्रा वर्णसंख्याका निःस्नेहास्ते प्रकीर्तिताः ॥ ५६ ॥ चतुःशतं समारभ्य सहस्रार्णावधि द्विज ॥ अतिवृद्धाः प्रयोगेषु शिथिलास्ते समीरिताः ॥
॥ ५७ ॥ सहस्रवर्णादधिका मंत्रास्ते पीडिताह्वयाः ॥ तदूर्द्ध्वं चैव ये मंत्राः स्तोत्ररूपास्तु ते स्मृताः ॥ ५८ ॥ एवं विधाः समाख्याता मनवो दोष
संयुताः ॥ दोषानेतानविज्ञाय मंत्रानेताञ्जपन्ति ये ॥ ५९ ॥ सिद्धिर्न जायते तेषां कल्पकोटिशतैरपि ॥ छिन्नादिदोषदुष्टानां मंत्राणां साधनं ब्रुवे ॥
॥ ६० ॥ योनिमुद्रासने स्थित्वा प्रजपेद्यः समाहितः ॥ यं कंचिदपि वा मंत्रं तस्य स्युः सर्वसिद्धयः ॥ ६१ ॥ सव्यपार्ष्णिं गुदे स्थाप्य दक्षिणं च
ध्वजोपरि ॥ योनिमुद्राबंध एवं भवेदासनमुत्तमम्॥ ६२॥अन्योऽप्यत्र प्रकारोऽस्ति योनिमुद्रानिबंधने ॥ तदग्रे सरहस्यं ते कथयिष्यामि नारद ॥
॥ ६३ ॥ पारंपर्यक्रमप्राप्तो नित्यानुष्ठानतत्परः ॥ गुर्वनुज्ञारतः श्रीमानभिषेकसमन्वितः ॥ ६४ ॥ सुंदरः सुमुखः शांतः कुलीनः सुलभो वशी ॥
मंत्रतंत्रार्थतत्त्वज्ञो निग्रहानुग्रहक्षमः ॥ ६५ ॥ निरपेक्षो मुनिर्दांतो हितवादी विचक्षणः ॥ तत्त्वनिष्कासने दक्षो विनयी च सुवेषवान् ॥ ६६ ॥
आश्रमी ध्याननिरतः संशयच्छित्सुबुद्धिमान् ॥ नित्यानुष्ठानसंयुक्तस्त्वाचार्यः परिकीर्तितः ॥ ६७ ॥ शांतो विनीतः शुद्धात्मा सर्वलक्षणसंयुतः ॥
शमादिसाधनोपेतः श्रद्धावान् सुस्थिराशयः ॥ ६८ ॥ शुद्धदेहोऽन्नपानाद्यैर्द्धार्मिकः शुद्धमानसः ॥ दृढव्रतसमाचारः कृतज्ञः पापभीरुकः ॥
॥ ६९ ॥ गुरुध्यानस्तुतिकथासेवनासक्तमानसः ॥ एवंविधो भवेच्छिष्यस्त्वन्यथा गुरुदुःखदः ॥ ७० ॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपा
ख्याने तृतीयपादे चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥ सनत्कुमार उवाच ॥ परीक्ष्य शिष्यं तु गुरुर्मंत्रशोधनमाचरेत् ॥ प्राक्प्रत्यग्दक्षिणोदक्च
पंचसूत्राणि पातयेत् ॥ १ ॥ चतुष्टयं चतुष्कानां स्यादेवं नृपकोष्ठके ॥ तत्राद्यप्रथमे त्वाद्यं द्वितीयाद्ये द्वितीयकम्॥ २ ॥ तृतीयाद्ये तृतीयं स्याच्च
तुर्थाद्ये तुरीयकम् ॥ तत्तदाग्नेयकोष्ठेषु तत्तत्पंचममक्षरम् ॥ ३ ॥ विलिख्य क्रमतो धीमान्मनुं संशोधयेत्ततः ॥ नामाद्यक्षरमारभ्य यावन्मन्त्रादि
वर्णकम् ॥ ४ ॥ चतुष्के यत्र नामार्णस्तत्स्यात्सिद्धिचतुष्ककम् ॥ प्रादक्षिण्यात्तद्द्वितीयं साध्याख्यं परिकीर्तितम् ॥ ५ ॥ तृतीयं पुंसि सिद्धाख्यं
तुरीयमरिसंज्ञकम् ॥ द्वयोर्वर्णैकैककोष्ठे सिद्धसिद्धेति तन्मतम् ॥ ६ ॥ तद्द्वितीये तु मंत्रार्णे सिद्धसाध्यः प्रकीर्तितः ॥ तृतीये तत्सुसिद्धः स्यात्सि
द्धारिस्तच्चतुर्थके ॥ ७ ॥ नामार्णान्यचतुष्कात्तु द्वितीये मंत्रवर्णके ॥ चतुष्के चेत्तदा पूर्वं यत्र नामाक्षरं स्थितम् ॥ ८ ॥ तत्र तत्कोष्ठमारभ्य गणये ॥१२९॥
त्पूर्ववत्क्रमात् ॥ साध्यसिद्धः साध्यसाध्यस्तत्सुसिद्धश्च तद्रिपुः ॥ ९ ॥ तृतीये चेच्चतुष्के तु यदि स्यान्मंत्रवर्णकः ॥ तदा पूर्वोक्तरीत्या तु क्रमा

देयं मनीषिभिः ॥ १० ॥ सुसिद्धसिद्धस्तत्साध्यस्तत्सुसिद्धश्च तद्दषिः ॥ तुरीये चेबतुष्के तु तदैवं गणयेन्सुधीः ॥ ११ ॥ आरिसिद्धोऽरिसाध्यश्च
तत्सुसिद्धश्च तद्रिपुः ॥ सिद्धसिद्धो यथोक्तेन द्विगुणात्सिद्धिसाध्यकः ॥ १२ ॥ सिद्धः सुसिद्धोर्द्धतयात्सिद्धारिर्हंति गोत्रजान् ॥ द्विगुणा
त्साध्यसिद्धस्तु साध्यसाध्यो विलंबतः ॥ १३ ॥ साध्यः सुसिद्धो द्विगुणात्साध्यारिर्हंति बांधवान् ॥ सुसिद्धसिद्धोर्द्धतया तत्साध्यो द्विगुणा
जपात् ॥ १४ ॥ तत्सुसिद्धप्राप्तिमात्रात्सुसिद्धारिः कुटुंबहृत् ॥ आरिसिद्धस्तु पुत्रघ्नोऽरिसाध्यः कन्यकापहः ॥ १५ ॥ तत्सुसिद्धः
कलत्रघ्नः साधकघ्नोरेऽप्यारिः स्मृतः ॥ अन्येऽप्यत्र प्रकारा हि संति वै [illegible] बुधैः ॥ १६ ॥ सर्वेषु मुख्योऽयं तेऽत्र कथितो कथहाभिधः ॥
एवं संशोध्य मंत्रं तु शुद्धे काले स्थले तथा ॥ १७ ॥ दीक्षयेद्ध गुरुः शिष्यं तद्विधानमुदीर्यते ॥ नित्यकृत्यं विधायाथ प्रणम्य
गुरुपादुकाम् ॥ १८ ॥ प्रार्थयेत्सद्गुरुं भक्त्याभीष्टमंत्रार्थमादृतः ॥ संपूज्य वस्त्रालंकारगोहिरण्यधरादिभिः ॥ १९ ॥ कृत्वा स्वस्ति
विधानं तु मंडलादि च तुष्टिमान् ॥ गुरुः शिष्येण सहितः शुचिर्यागगृहं विशेत् ॥ २० ॥ सामान्यार्घोदकेनाथ संप्रोक्ष्य द्वारमस्त्रतः ॥
दिव्यानुत्सारयेद्विघ्नान्नभस्थानर्च्य वारिणा ॥ २१ ॥ पार्ष्णिघातैस्त्रिभिर्भौमांस्ततः कर्म समाचरेत् ॥ वर्णकैः सर्वतोभद्रे यथोक्तपरिकल्पिते ॥ २२ ॥
वह्निमण्डलमभ्यर्च्य तत्कलाः परिपूज्य च ॥ अस्त्रप्रक्षालितं कुंभं यथाशक्ति विनिर्मितम् ॥ २३ ॥तत्र संस्थाप्य विधिवत्तत्र भानोः कला यजेत् ॥
विलोममातृकामूलमुच्चरन् शुद्धवारिणा ॥ २४ ॥ आपूर्य कुंभं तत्रार्चेत्सोमस्य विधिवत्कलाः॥ धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी॥
॥ २५ ॥ सुश्रीः सुरूपा कपिला हव्यकव्यवहा तथा ॥ वह्नेर्दश कलाः प्रोक्ताः प्रोच्यंतेऽथ रवेः कलाः ॥२६॥ तपिनी तापिनी धूम्रा मरीचिज्वा
लिनी रुचिः ॥ सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा॥ २७ ॥ अथेंदोश्च कला ज्ञेया ह्यमृता मानदा पुनः ॥ पूषा तुष्टिश्च पुष्टिश्च गतिश्च
धृतिसंज्ञिकाः ॥ २८ ॥ शशिनी चंद्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा ॥ पूर्णापूर्णामृता चेति प्रोक्ताश्चंद्रमसः कलाः ॥ २९ ॥ वस्त्रयुग्मेन
संवेष्ट्य तस्मिन्सर्वौषधीः क्षिपेत् ॥ नवरत्नानि निक्षिप्य विन्यसेत्पञ्चपल्लवान् ॥ ३० ॥ पनसाम्रवटाश्वत्थवकुलेति च तान् विदुः ॥ मुक्तामाणिक्य
वैडूर्यगोमेदान्वज्रविद्रुमौ ॥ ३१ ॥ पद्मरागं मरकतं नीलं चेति यथाक्रमम् ॥ एवं रत्नानि निक्षिप्य तत्रावाह्येष्टदेवताम् ॥ ३२ ॥ संपूज्य विधि
वन्मंत्री ततः शिष्यं स्वलंकृतम् ॥ वेद्यां संवेश्य संप्रोक्ष्य प्रोक्षणीस्थेन वारिणा ॥ ३३ ॥ भूतशुद्ध्यादिकं कृत्वा तच्छरीरे विधानतः ॥ न्यास
जालेन संशोध्य मूर्ध्नि विन्यस्य पल्लवान् ॥ ३४ ॥ अष्टोत्तरशतेनाथ मूलमंत्रेण मंत्रितैः ॥ अभिषिंचेत्प्रियं शिष्यं जपन्मूलमनुं हृदि॥ ३५ ॥

शिष्टोदकेन वाचम्य परिधायांबरं शिशुः ॥ गुरुं प्रणम्य विधिवत्संविशेत्पुरतः शुचिः ॥ ३६ ॥ अथ शिष्यस्य शिरसि हस्तं दत्वा गुरुस्ततः ॥
जपेदष्टोत्तरशतं देयमन्त्रं विधानतः ॥ ३७ ॥ समोऽस्त्वित्यक्षरान्दद्यात्ततः शिष्योऽर्चयेद्गुरुम् ॥ ततः सचन्दनं हस्तं दत्वा शिष्यस्य मस्तके ॥
॥ ३८ ॥ तत्कर्णे प्रवदेद्विद्यामष्टवारं समाहितः ॥ संप्राप्तविद्यः शिष्योऽपि निपतेद्गुरुपादयोः ॥ ३९ ॥ उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचार
वान्भव ॥ कीर्तिश्रीकांतिपुत्रायुर्बलारोग्य सदास्तु ते ॥ ४० ॥ ततः शिष्यः समुत्थाय गन्धाद्यैर्गुरुमर्चयेत् ॥ दद्याच्च दक्षिणां तस्मै वित्तशाठ्य
विवर्जितः ॥ ४१ ॥ संप्राप्यैवं गुरोर्मंत्रं तदारभ्य धनादिभिः ॥ देहपुत्रकलत्रैश्च गुरुसेवापरो भवेत् ॥ ४२ ॥ स्वेष्टदेवं यजेन्मध्ये दत्वा पुष्पांजलिं
ततः ॥ अग्निनैर्ऋतिवागीशान् क्रमेण परिपूजयेत् ॥ ४३ ॥ यदा मध्ये यजेद्विष्णुं वाह्यादिषु विनायकम् ॥ रविं शिवां शिवं चैव यदा मध्ये तु
शङ्करम् ॥ ४४ ॥ रविं गणेशमंबां च हरिं चाथ यदा शिवाम् ॥ ईशं विघ्नार्कगोविंदान्मध्ये चेद्गणनायकम् ॥ ४५ ॥ शिवं शिवां रविं विष्णुं रवौ
मध्यगते पुनः ॥ गणेशं विष्णुमंबां च शिवं चेति यथाक्रमम् ॥ ४६ ॥ एवं नित्य समभ्यर्च्य देवपञ्चकमादृतः ॥ ब्राह्मे मुहूर्ते ह्युत्थाय कृत्वाचा
वश्यकं बुधः ॥ ४७ ॥ अशंकितो वा शय्यायां स्वकीयशिरसि स्मरेत् ॥ सहस्रदलशुक्लाब्जकर्णिकास्थदुमण्डले॥४८॥ अकथादित्रिकोणस्थं वरा
भयकरं गुरुम् ॥द्विनेत्रं द्विभुजं शुक्लगंधमाल्यानुलेपनम् ॥ ४९ ॥ वामे शक्त्या युतं ध्यात्वा मानसैरुपचारकैः ॥ आराध्य पादुकामन्त्रं दशधा
प्रजपेत्सुधीः ॥ ५० ॥ वा माया श्रीर्भगेंद्राढ्या वियद्धसखकाग्नयः ॥ हसक्षमलवार्यग्निवामकर्णेंदुयुग्मरुत् ॥ ५१ ॥ ततो भृग्वाकाशखाग्नि
भगेंद्राढ्याः परंतिमः ॥ सहक्षमलतोयाग्निचंद्रशांतियुतो मरुत् ॥ ५२ ॥ ततः श्रीश्वामुकांते तु नन्दनाथामुकी पुनः ॥ देव्यंत्रांते श्रीपादुकां
पूजयामि हृदंतिमे ॥ ५३ ॥ अयं श्रीपादुकामंत्रः सर्वसिद्धिप्रदो नृणाम् ॥ गुह्येति च समर्प्याथ मन्त्रैरेतैर्नमेत्सुधीः ॥ ॥ ५४ ॥ अखण्ड
मंडलाकारं व्याप्तं येन चराचरम् ॥ तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ५५ ॥ अज्ञानतिमिरांधस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं
येन तस्मै श्रीगुरवे नमः ॥ ५६ ॥ नमोऽस्तु गुरवे तस्मा इष्टदेवस्वरूपिणे ॥ यस्य वागमृतं हंति विषं संसारसंज्ञकम् ॥ ५७ ॥ इति नत्वा
पठेत्स्तोत्रं सद्यः प्रत्ययकारकम् ॥ ॐ नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ॥ ५८ ॥ विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ नवाय
तनरूपाय परमार्थैकरूपिणे ॥ ५९ ॥ सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ स्वतंत्राय दयाक्लृप्तविग्रहाय शिवात्मने ॥ ६० ॥ [illegible]
त्राय भक्तानां भव्यानां भावरूपिणे ॥ विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ॥ ६१ ॥ प्रकाशानां प्रकाशाय ज्ञानिनां [illegible]

॥ १३० ॥

पुरस्तात्पार्श्वयोः पृष्ठे नमस्तुभ्यमुपर्यधः ॥ ६२ ॥ सदा सच्चित्स्वरूपेण विधेहि भवदासनम् ॥ त्वत्प्रसादादहं देव कृतकृत्योऽस्मि सर्वतः ॥ ॥ ६३ ॥ मायामृत्युमहापाशाद्विमुक्तोऽस्मि शिवोऽस्मि वः ॥ इति स्तुत्वा ततः सर्वं गुरवे विनिवेदयेत् ॥ ६४ ॥ प्रातःप्रभृति सायांतं सायादिप्रातरंततः ॥ यत्करोमि जगन्नाथ तदस्तु तव पूजनम् ॥ ६५ ॥ ततश्च गुरुपादाब्जगलितामृतधारया ॥ क्षालितं निजमात्मानं निर्मलं भावयेत्सुधीः ॥ ६६ ॥ मूलादिब्रह्मरंध्रांतं मूलविद्यां विभावयेत् ॥ मूलाधारादधो भागे वर्तुलं वायुमंडलम् ॥ ६७ ॥ तत्रस्थवायुबीजोत्थ वायुना च तदूर्द्धकम् ॥ त्रिकोणं मंडलं वह्नेस्तत्रस्थवह्निबीजतः ॥ ६८ ॥ उत्पन्नेनाग्निना मूलाधारावस्थितविग्रहाम् ॥ प्रसुप्तभुजगाकारां स्वयंभूलिंगवेष्टिनीम् ॥ ६९ ॥ विसतंतुनिभां कोटिविद्युदाभां तनीयसीम् ॥ कुलकुंडलिनीं ध्यात्वा कूर्चेनोत्थापयेच्च ताम् ॥ ७० ॥ सुषुम्णावर्त्मना तां च षट्चक्रक्रमभेदिनीम् ॥ गुरूपदिष्टविधिना ब्रह्मरंध्रं नयेत्सुधीः ॥ ७१ ॥ तत्रस्थामृतसंमग्नीकृत्यात्मानं विभावयेत् ॥ तत्प्रभापटलव्याप्तं विमलं चिन्मयं परम् ॥ ७२ ॥ पुनस्तां स्वस्थलं नीत्वा हृदि देवं विचिंतयन् ॥ दृष्ट्वा च मानसैर्द्रव्यैः प्रार्थयेन्मनुनामुना ॥ ७३ ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव ॥प्रातः समुत्थाय तव प्रियार्थं संसारयात्रां त्वनुवर्तयिष्ये ॥ ७४ ॥ विष्णोरिति स्थले विप्र कार्य ऊहोऽन्यदैवते ॥ ततः कुर्यात्सर्वसिद्ध्यै त्वजपाया निवेदनम् ॥ ७५ ॥ षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ॥ अजपाख्यां तु गायत्रीं जीवो जपति सर्वदा ॥ ७६ ॥ ऋषिर्हंसस्तथाव्यक्तगायत्रीछंद ईरितम् ॥ देवता परमोहंसश्चाद्यंते बीजशक्तिकम् ॥ ७७ ॥ ततः षडंगं कुर्वीत सूर्यः सोमो निरंजनः ॥ निराभासश्च धर्मश्च ज्ञानं चेति तथा पुनः ॥ ७८ ॥ क्रमादेतान्हंसपूर्वानात्मनेपदपश्चिमान् ॥ जातयुक्तान्साधकेंद्र षडंगेषु नियोजयेत् ॥ ७९ ॥ हकारः सूर्यसंकाशतेजाः संगच्छते बहिः ॥ सकारस्तादृशश्चैव प्रवेशे ध्यानमीरितम्॥ ८०॥ एवं ध्यात्वार्पयेद्धीमान्वह्नचक्रेषु विभागशः ॥मूलाधारे वादिसांतबीजयुक्ते चतुर्दले ॥ ८१ ॥ बंधूकाभे स्वशक्त्या तु सहितापास्वगाय च ॥ पाशांकुशसुधापात्रमोदकोल्लासपाणये ॥ ॥ ८२ ॥ षट्शतं तु गणेशाय वागधीशाय चार्पयेत् ॥ स्वाधिष्ठाने विद्रुमाभे वादिलांतार्णसंयुते ॥८३ ॥ वामांगशक्तियुक्ताय विद्याधिपतये तथा ॥ स्रुवाक्षमालालसितबाहवे पद्मजन्मने ॥ ८४ ॥ ब्रह्मणे षट्सहस्रं तु हंसारूढाय चार्पयेत् ॥ विद्युल्लसितमेघाभे डादिफांतार्णपत्रके ॥ ८५ ॥ मणिपूरे शंखचक्रगदापंकजधारिणे ॥ सश्रिये षट्सहस्रं च विष्णवे विनिवेदयेत् ॥ ८६ ॥अनाहतेऽर्कपत्रे च कादिठांतार्णसंयुते ॥ शुक्ले शूलाभयवरसुधाकलशधारिणे॥८७॥वामांगे शक्तियुक्ताय विद्याधिपतये सुधीः॥वृषारूढाय रुद्राय षट्सहस्रं निवेदयेत् ॥ ८८॥ विशुद्धे षोडशदले स्वराढ्ये शुक्ल





णके॥महाज्योतिप्रकाशायेन्द्रियाधिपतये ततः॥८९॥सहस्रमर्पयेत्प्राणशक्त्या युक्तेश्वराय च॥आज्ञाचक्रे हक्षयुक्ते द्विदलेऽब्जे सहस्रकम्॥९०॥सदाशिवाय गुरवे पराशक्तियुताय वै ॥ सहस्रारे महापद्मे नादबिन्दुद्वयान्विते ॥ ९१ ॥ विलसन्मातृकावर्णे वराभयकराय च ॥ परमाद्ये च गुरवे सहस्रं विनिवेदयेत् ॥९२॥ चुलुकेंऽबु पुनर्दत्वा स्वभावादेव सिध्यतः ॥एकविंशतिसाहस्रप्रमितस्य जपस्य च ॥ ९३ ॥ षट्शताधिकसंख्यास्या दजपाया विभागशः ॥ संकल्पेन मोक्षदाता विष्णुर्मे प्रीयतामिति ॥ ९४ ॥ अस्याः संकल्पमात्रेण महापापैः प्रमुच्यते ॥ ब्रह्मैवाहं न संसारी नित्यमुक्तो न शोकभाक् ॥ ९५ ॥ सच्चिदानंदरूपोऽहमात्मानमिति भावयेत् ॥ ततः समाचरेद्देहकृत्यं देवार्चनं तथा ॥ ९६ ॥ तद्विधानं प्रवक्ष्यामि सदाचारस्य लक्षणम् ॥ ९७ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे पञ्चषष्टितमोऽध्यायः ॥६५॥सनत्कुमार उवाच ॥ ततः श्वासानुसारेण दत्वा पादं महीतले ॥ समुद्रमेखले देवि पर्वतस्तनमंडले ॥ १ ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ इति भूमिं तु संप्रार्थ्य विहरेच्च यथाविधि ॥ २ ॥ रक्षःकोणे ततो ग्रामाद्गत्वा मंत्रमुदीरयेत् ॥ गच्छंतु ऋषयो देवाः पिशाचा ये च गुह्यकाः ॥ ३ ॥ पितृभूतगणाः सर्वे करिष्ये मलमोचनम् ॥ इति तालत्रयं दत्वा शिरः प्रावृत्य वाससा ॥ ४॥ दक्षिणाभिमुखं रात्रौ दिवा स्थित्वा ह्युदङ्मुखः॥मलं विसृज्य शौचं तु मृदाद्भिः समुपाचरेत् ॥ ५ ॥ एका लिंगे गुदे तिस्रो दश वामकरे मृदः ॥ करयोः सप्त वै दद्यात्त्रित्रिवारं च पादयोः ॥६॥ एवं शौचं विधायाथ गंडूषान्द्वादशैव तु ॥ कृत्वा वनस्पतिं चाथ प्रार्थयेन्मनुनामुना ॥७ ॥ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च॥श्रियं प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ ८ संप्रार्थ्यैवं दंतकाष्ठं द्वादशांगुलसंमितम् ॥ गृहीत्वा काममंत्रेण कुर्यान्मंत्री समाहितः ॥ ९ ॥ कामदेवपदं ङेन्तं तथा सर्वजनप्रियम् ॥ स्वदंतः कामबीजाढ्यं दन्तांश्चानेन शोधयेत् ॥ १० ॥ जिह्वोल्लेखो वाग्भवेन मूलेन क्षालयेन्मुखम् ॥ देवागारं ततो गत्वा निर्माल्यमपसार्य च ॥ ११ ॥ परिधायांबरं शुद्धं मंगलारार्तिकं चरेत् ॥ अस्त्रेण पात्रं संप्रोक्ष्य मूलेन ज्वालयेच्च तम् ॥ १२ ॥ संपूज्य पात्रमादायोत्थाय घंटां च वादयेत् ॥ सुगोघृतप्रदीपेन भ्रामितेन समंततः ॥ १३ ॥ वाद्यैर्गीतैर्मनोज्ञैश्च देवस्यारार्तिकं भवेत् ॥ इति नीराजनं कृत्वा प्रार्थयित्वा निजेश्वरम् ॥ १४ ॥ स्नातुं यायान्निम्नगादौ कीर्तयन्देवतागुणान् ॥ गत्वा तीर्थं नमस्कृत्य स्नानीयं च निधाय वै ॥१५॥ मूलाभिमंत्रितमृदमादाय कटिदेशतः ॥ विलिप्य पादपर्यंत क्षालयेत्तीर्थवारिणा ॥ १६ ॥ ततश्च पञ्चभिः पादौ प्रक्षाल्यांतर्जले पुनः ॥ प्रविश्य नाभिमात्रे तु मृदं वामकरस्य च ॥ १७ ॥ मणिबन्धे हस्ततले तदग्रे च तथा पुनः ॥ कृत्वांगुल्या गांगमृदमादायाग्रेण तत्पुनः ॥१८॥ निजोपरि च मंत्रज्ञो भ्रामयित्वा तथ...

च षडंगेषु तन्मंत्रैः प्रविलेपयेत् ॥ १९ ॥ निमज्य क्षालयेत्सम्यग् मलस्नानमितीरितम् ॥ विभाव्येष्टमयं सर्वमांतरं स्नानमाचरेत् ॥ २० ॥ अनंता
दित्यसंकाशं निजभूषायुधैर्युतम् ॥ मंत्रमूर्ति प्रभुं स्मृत्वा तत्पादोदकसंभवाम् ॥ २१ ॥ धारां च ब्रह्मरंध्रेण प्रविशंतीं निजां तनुम् ॥ तया संक्षाल्ये
त्सर्वमंतर्देहगतं मलम् ॥ २२ ॥ तत्क्षणाद्विरजा मंत्री जायते स्फटिकोपमः ॥ ततः श्रौतोक्तविधिना स्नात्वा मन्त्री समाहितः ॥ २३ ॥ मंत्रस्नानं
ततः कुर्यात्तद्विधानमथोच्यते ॥ देशकालौ च संकीर्त्य प्राणायामषडंगकैः ॥ २४ ॥ कृत्वार्कमंडलात्तीर्थान्याह्वयेन्मुष्टिमुद्रया ॥ ब्रह्माण्डोदरतीर्थानि
करैः स्पृष्टानि ते रवेः ॥ २५ ॥ तेन सत्येन मे देव देहि तीर्थं दिवाकर ॥२६॥ गंगे च यमुने चैव गोदावरि सरस्वति॥नर्मदे सिंधुकावेरि जलेऽस्मि
न्संनिधिं कुरु ॥२७॥ इत्यावाह्य जले तानि सुधाबीजेन योजयेत् ॥ गोमुद्रयामृतीकृत्य कवचेनावगुंठ्य च ॥२८॥ संरक्ष्यास्त्रेण तत्पश्चाच्चक्रमुद्रां
प्रदर्शयेत ॥ वह्न्यर्केंदुमंडलानि तत्र संचिंतयेद्बुधः ॥ २९॥ मंत्रयेदर्कमन्त्रेण सुधाबीजेन तज्जलम्॥मूलेन चैकादशधा तत्र संमंत्र्य भावयेत् ॥३०॥
पूजायंत्रं च तन्मध्ये स्वांतादावाह्य देवताम् ॥ स्नापयित्वार्चयेत्तां च मानसैरुपचारकैः ॥३१ ॥सिंहासनस्थां तां नत्वा तज्जलं प्रणमेत्सुधीः ॥
आधारः सर्वभूतानां विष्णोरतुलतेजसः ॥ ३२ ॥ तद्रूपाश्च ततो जाता आपस्ताः प्रणमाम्यहम् ॥ इति नत्वा समारुन्ध्य सप्तच्छिद्राणि साधकः ॥
॥ ३३ ॥ निमज्य सलिले तस्मिन्मूलं देवाकृतिं स्मरेत्॥निमज्ज्योन्मज्ज्य त्रिश्चैवं सिंचेत्कं कुंभमुद्रया ॥ ३४॥त्रिर्मूलेन चतुर्मंत्रैरभिषिंचेन्निजां
तनुम् ॥ चत्वारो मनवस्तेऽत्र कथ्यन्ते तांत्रिका मुने॥३५॥सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजापतेः॥मातरः सर्वभूतानामापो देव्यः पुनंतु माम् ॥
॥ ३६ ॥ अलक्ष्मीर्मलरूपा या सर्वभूतेषु संस्थिता ॥ क्षालयंति च तां स्पर्शादापो देव्यः पुनंतु माम् ॥ ३७ ॥ यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च
मूर्द्धनि ॥ललाटे कर्णयोरक्ष्णोरापस्तद्धन्तु वो नमः ॥ ३८ ॥ आयुरारोग्यमैश्वर्यमरिपक्षक्षयं शुभम्॥सन्तोषः क्षांतिरास्तिक्यं विद्या भवतु वो नमः॥
॥ ३९ ॥ विप्रपादोदकं पीत्वा शालग्रामशिलाजलम् ॥ पिबेद्विरुद्धं नो कुर्यादेषां तु नियतो विधिः ॥४०॥पृथिव्यां यानि तीर्थानि दक्षांघ्रौ तानि
भूसुरे॥स्वेष्टदेवं समुद्वास्य मन्त्री मार्तंडमण्डले ॥ ४१ ॥ ततस्तीरं समागत्य वस्त्रं संक्षाल्य यत्नतः॥वाससी परिधायाथ कुर्यात्सन्ध्यादिकं सुधीः॥
॥ ४२ ॥ रोगाद्यशक्तो मनुजः कुर्यात्तत्राघमर्षणम् ॥ अथवा भस्मना स्नातो रजोभिश्चैव वाऽक्षमः ॥ ४३ ॥ अथ सन्ध्यादिकं कुर्वीत स्थित्वा
चैवासने शुभे ॥ केशवेन तथा नारायणेन माधवेन च ॥ ४४ ॥ संप्राश्य तोयं गोविंदविष्णुभ्यां क्षालयेत्करौ ॥ मधुसूदनत्रिविक्रमाभ्यामोष्ठौ
च मार्जयेत् ॥ ४५ ॥ वामनश्रीधराभ्यां च मुखं हस्तौ स्पृशेत्ततः ॥ हृषीकेशपद्मनाभाभ्यां स्पृशेच्चरणौ ततः ॥ ४६ ॥ दामोदरेण

मूर्द्धानं मुखं संकर्षणेन च ॥ वासुदेवेन प्रद्युम्नेन स्पृशेन्नासिके ततः ॥ ४७॥ अनिरुद्धपुरुषोत्तमाभ्यां नेत्रे स्पृशेत्ततः ॥ अधोक्षजनृसिंहाभ्यां
श्रवणे संस्पृशेत्तथा ॥ ४८ ॥ नाभिं स्पृशेदच्युतेन जनार्दनेन वक्षसि ॥ हरिणा विष्णुनांसौ च वैष्णवाचमनं त्विदम् ॥ ४९॥ प्रणवाद्यैर्डे
मोंतैः केशवादिकनामभिः ॥ मुखे नसोः प्रदेशिन्याऽनामया नेत्रकर्णयोः ॥५०॥ कनिष्ठया नाभिदेशं सर्वत्रांगुष्ठयोजनम् ॥ आत्मविद्याशिवैस्तत्त्वैः
स्वाहांतैः शैवमीरितम् ॥ ५१ ॥ दीर्घत्रयेंदुयुग्व्योमपूर्वकैश्च पिबेज्जलम् ॥ आत्मविद्याशिवैरेव शैवं स्वाहावसानिकैः॥ ५२ ॥ वाग्लज्जाश्री
मुखैः प्रोक्तं शाक्तं स्वाहावसानिकैः ॥ वाग्लज्जाश्रीमुखैः प्रोक्तं द्विजाचमनमर्थदम् ॥ ५३ ॥ तिलकं च ततः कुर्याद्भाले सुष्ठु गदाकृति ॥ नंदकं
हृदये शंखचक्रे चैव भुजद्वये ॥ ५४ ॥ शार्ङ्गबाणं मस्तके च विन्यसेत्क्रमशः सुधीः ॥ कर्णमूले पार्श्वयोश्च पृष्ठे नाभौ ककुद्यपि ॥ ५५ ॥ एवं तु
वैष्णवः कुर्यान्मृद्भिस्तीर्थोद्भवादिभिः ॥ अग्निहोत्रोद्भवं भस्म गृहीत्वा त्र्यंबकेण तु ॥ ५६ ॥ किंवाग्निरिति मंत्रेणाभिमंत्र्य पञ्चमन्त्रकैः ॥ क्रमात्त
त्पुरुषाघोरसद्योजातादिनामभिः ॥ ५७॥ पञ्च कुर्यात्त्रिपुंड्राणि भालांसोदरहत्सु च॥ शैवः शाक्तस्त्रिकोणाभं नारीवद्वा समाचरेत् ॥ ५८ ॥ कृत्वा तु
वैदिकीं संध्यां तांत्रिकीं च समाचरेत् ॥ आचम्य विधिवन्मन्त्री तीर्थान्यावाह्य पूर्ववत् ॥ ५९॥ ततस्त्रिवारं दर्भेण भूमौ तोयं विनिःक्षिपेत् ॥सप्तधा
तज्जलेनाथ मूर्द्धानमभिषेचयेत् ॥ ६० ॥ ततश्च प्राणानायम्य कृत्वा न्यासं षडंगकम् ॥ आदाय वामहस्तेंऽबु दक्षेणाच्छाद्य पाणिना ॥ ६१ ॥
वियद्वाय्वग्नितोयक्ष्मावीजैः संमंत्र्य मंत्रवित् ॥ मूलेन तस्मात् श्चोतद्भिर्बिन्दुभिस्तत्त्वमुद्रया ॥ ६२॥ स्वशिरः सप्तधा प्रोक्ष्यावशिष्टं तत्पुनर्जलम् ॥
कृत्वा तदक्षरं मंत्री नासिकांतिकमानयेत् ॥ ६३ ॥ जलं तेजोमयं तद्वाकृष्यांतश्चेडया पुनः ॥ प्रक्षाल्यांतर्गतं तेन कल्मषं तज्जलं पुनः ॥ ६४ ॥
कृष्णवर्णं पिंगलया रेचयेत्स्वाग्रतस्तथा ॥ क्षिपेदस्त्रेण तत्पश्चात्कल्पिते कुलिशोपले ॥ ६५ ॥ एतद्धि सर्वपापघ्नं प्रोक्तं चैवाघमर्षणम् ॥ ततश्च
हस्तौ प्रक्षाल्य प्राग्वदाचम्य मंत्रवित् ॥ ६६ ॥ समुत्थाय च मंत्रज्ञस्ताम्रपात्रे सुमादिकम् ॥ प्रक्षिप्यार्घं प्रदद्याद्वै मूलांतेमंत्रमुच्चरन् ॥ ६७ ॥ रवि
मंडलसंस्थाय देवायार्घ्यं प्रकल्पयेत् ॥ दत्त्वार्घं त्रिरनेनाथ देवं रविगतं स्मरेत् ॥ ६८ ॥ स्वकल्पोक्तां च गायत्रीं जपेदष्टोत्तरं शतम् ॥ अष्टां
विंशतिवारं वा गुह्यतिमनुनार्पयेत् ॥ ६९॥ उद्यदादित्यसंकाशां पुस्तकाक्षकरांबुजाम् ॥ कृष्णाजिनांबरां ब्राह्मीं ध्यायेत्तारांकितेऽम्बरे ॥७०॥मध्याह्ने
वरदां देवीं पार्वतीं संस्मरेत्पराम् ॥ शुक्लांबरां वृषारूढां त्रिनेत्रां रविबिंबगाम्॥७१॥ वरं पाशं च शूलं च दधानां नृकरोटिकाम्॥ सायाह्ने रत्नभूषणाढ्यां
पीतकौशेयवाससाम् ॥ ७२ ॥ श्यामरंगां चतुर्हस्तां शंखचक्रलसत्कराम् ॥ गदापद्मधरां देवीं सूर्यासनकृताश्रयाम् ॥ ७३ ॥ ततो देव... श्चैव

पितॄंश्चापि विधानवित् ॥ तर्पयित्वा स्वेष्टदेवं तर्पयेत्कल्पमार्गतः ॥ ७४ ॥ गुरुपंक्तिं च संतर्प्य सांगं सावरणं तथा ॥ सायुधं वैनतेयं संतर्प
यामीति तर्पयेत्॥७५॥नारदं पर्वतं जिष्णुं निशठोद्धवदारुकान्॥ विष्वक्सेनं च शैलेयं वैष्णवः परितर्पयेत्॥७६॥एवं संतर्प्य विप्रेंद्र दत्त्वार्घ्यं च विव
स्वते॥पूजागारं समागत्य प्रक्षाल्यांघ्री उपस्पृशेत्॥७७॥अग्निहोत्रस्थितानग्नीन् हुत्वोपस्थाय यत्नतः॥पूजास्थलं समागत्य द्वारपूजां समाचरेत्॥ ७८॥
गणेशं चोर्द्ध्वशाखायां महालक्ष्मीं च दक्षिणे॥सरस्वतीं वामभागे दक्षे विघ्नेश्वरं पुनः॥७९॥क्षेत्रपालं तथा वामे दक्षे गंगां प्रपूजयेत्॥वामे च यमुनां दक्षे
धातारं वामतस्तथा॥८०॥विधातारं शंखपद्मनिधींश्च वामदक्षयोः॥द्वारपालांस्ततोऽभ्यर्चेत्तत्तत्कल्पोदितान्सुधीः॥८१॥नंदः सुनंदश्चंडश्च प्रचंडः प्रचलो
बलः॥भद्रः सुभद्रश्चेत्याद्या वैष्णवा द्वारपालकाः॥८२॥नंदी भृंगी रिटी स्कंदो गणेशोमामहेश्वराः॥वृषभश्च महाकालः शैवा वै द्वारपालकाः ॥ ८३ ॥
ब्राह्म्याद्या मातरोऽष्टौ तु शक्तयो द्वाःस्थिताः स्वयम्॥सेंदुः स्वनामाद्यर्णाद्या ङेनमोंता इमे स्मृताः ॥८४॥ ततः स्थित्वासने धीमानाचम्य प्रयतः
शुचिः॥ दिव्यांतरिक्षभौमांश्च विघ्नानुत्सार्य यत्नतः ॥८५॥ केशवाद्यां मातृकां तु न्यसेद्वैष्णवसत्तमः ॥ केशवः कीर्तिसंयुक्तः कांत्या नारायणस्तथा ॥
॥८६॥ माधवस्तुष्टिसहितो गोविंदः पुष्टिसंयुतः ॥ विष्णुस्तु धृतिसंयुक्तः शांतियुङ्मधुसूदनः ॥८७॥ त्रिविक्रमः क्रियायुक्तो वामनो दयितायुतः॥
श्रीधरो मेधया युक्तो हृषीकेशश्च हर्षया ॥ ८८ ॥ पद्मनाभयुता श्रद्धा लज्जा दामोदरान्विता ॥ वासुदेवश्च लक्ष्मीयुक् संकर्षणसरस्वती ॥ ८९ ॥
प्रद्युम्नः प्रीतिसंयुक्तोऽनिरुद्धो रतिसंयुतः ॥ चक्री जयायुतः पश्चाद्गदी दुर्गासमन्वितः ॥ ९० ॥ शार्ङ्गी तु प्रभया युक्तः खड्गी युक्तस्तु सत्यया ॥
शंखी चंडासमायुक्तो हली वाणीसमायुतः ॥ ९१ ॥ मुसली च विलासिन्या शूली विजययान्वितः ॥ पाशी विरजया युक्तो कुशी विश्वासम
न्वितः॥ ९२ ॥ मुकुंदो विनतायुक्तो नंदजश्च सुनंदया॥नंदी स्मृत्या समायुक्तो नरो वृद्ध्या समन्वितः ॥९३॥ समृद्धियुङ्नरकजिच्छुद्धियुक्च हरिः
स्मृतः ॥ कृष्णो बुद्ध्या युतः सत्यो भुक्त्या मुक्त्याथ सात्वतः ॥ ९४ ॥ सौरिक्षमे सूरमे उमायुक्तो जनार्दनः ॥ भूधरः क्लेदिनीयुक्तो विश्व
मूर्तिश्च क्लिन्नया ॥ ९५ ॥ वैकुंठो वसुधायुक्तो वसुदः पुरुषोत्तमः ॥ बली तु परया युक्तो बलानुजपरायणे ॥ ९६ ॥ बालसूक्ष्मे वृषघ्नस्तु संध्यायुक्
प्रज्ञया वृषः ॥ हंसः प्रभासमायुक्तो वराहो निशया युतः ॥ ९७ ॥ विमलो धारया युक्तो नृसिंहो विद्युता युतः॥ केशवादिमातृकाया मुनिर्नारा
यणो मतः ॥ ९८ ॥ असृताद्या च गायत्री छंदो विष्णुश्च देवता ॥ चक्राद्यायुधसंयुक्तं कुंभादर्शधरं हरिम् ॥ ९९ ॥ लक्ष्मीयुतं विद्युदाभं चतुर्भु
जायुतं भजेत् ॥ एवं ध्यात्वा न्यसेच्छक्तिं श्रीकामपुटिताक्षरम् ॥ १०० ॥ वदेत्तद्विष्णुशक्तिभ्यां हृदयं प्रणवादिकम् ॥ त्वगसृङ्मांसमेदोऽस्थिम



न्याशुकाण्यमून्वदेत् ॥ १०१ ॥ प्राणं क्रोधं तथा मभ्यामन्तान्यादिदशस्वपि ॥ एक मौलौ मुखे चैक द्विक नेत्रे द्विकं श्रुतौ ॥ १०२॥ नसोर्द्वयं
कपोले च द्वयं द्वे द्विरदच्छदे॥एकं तु रसनामूले ग्रीवायामेकमेव च॥१०३॥कवर्गं दक्षिणे बाहौ चवर्गं वामबाहुके ॥टतवर्गौ पादयोस्तु पफौ कुक्षि
द्वये न्यसेत्॥१०४॥पृष्ठवंशे वमित्युक्तं नाभौ भं हृदये तु मम्॥यादिसप्तापि धातुस्था हं प्राणे लं तथात्मनि॥१०५॥क्षं क्रोधे क्रमतो न्यस्य विष्णु
पूजाक्षमो भवेत् ॥ पूर्णोदर्या तु श्रीकंठो ह्यनंतो विजरान्वितः॥१०६॥ सूक्ष्मेशः शाल्मलीयुक्तो लोलाक्षीयुक्त्रिमूर्तकः ॥ महेश्वरो वर्तुलाक्ष्यार्धीशो
वै दीर्घघोणया॥१०७॥दीर्घमुख्या भारभूतिस्तिथीशो गोमुखीयुतः ॥ स्थावरेशो दीर्घजिह्वायुग्धरः कुंडोदरीयुतः ॥ १०८॥ ऊर्द्धकेश्या तु झिंटीशो
भौतिको विकृतास्यया ॥ सद्यो ज्वालामुखीयुक्तोल्कामुख्यानुग्रहो युतः ॥१०९ ॥ अक्रूर आस्यया युक्तो महासेनो विद्यया युतः ॥ क्रोधीशश्च
महाकाल्या चंडेशेन सरस्वती॥ ११०॥पञ्चांतकः सिद्धगौर्या युक्तश्चाथ शिरोत्तमः ॥ त्रैलोक्यविद्यया युक्तो मन्त्रशक्त्यैकरुद्रकः ॥१११॥ कूर्मेशः
कमठीयुक्तो भूतमात्रैकनेत्रकः ॥ लम्बोदर्या चतुर्वक्त्रो ह्यजेशो द्राविणीयुतः ॥११२॥सर्वेशो नागरीयुक्तः सोमेशः खेचरीयुतः ॥ मर्यादया लांगलीशो
दारुकेशेन रूपिणी ॥ ११३ ॥ वारुण्या त्वर्द्धनारीशो उमाकांतो मुनीश्वरः ॥ काकोदर्या तथाषाढी पूतनासंयुतो मतः ॥ ११४ ॥ दंडीशो भद्रका
लीयुगत्रीशो योगिनीयुतः॥ मीनेशः शंखिनीयुक्तो मेषेशस्तर्जनीयुतः॥११५॥लोहितः कालरात्र्या च शिखीशः कुजनीयुतः॥छलगण्डः कपर्दिन्या
द्विरंडेशश्च वज्रया ॥११६॥ महाबलो जयायुक्तो बलीशः सुमुखेश्वरी ॥भुजंगो रेवतीयुक्तः पिनाकी माधवीयुतः ॥११७॥ खड्गीशो वारुणीयुक्तो
वकेशो वायवीयुतः ॥ श्वेतोरस्को विदारिण्या भृगुः सहजया युतः ॥ ११८ ॥ लकुलीशश्च लक्ष्मीयुक् शिवेशो व्यापिनीयुतः ॥ संवर्तके महामाया
प्रोक्ता श्रीकंठमातृका ॥ ११९ ॥ यत्र स्वीशपदं नोक्तं तत्र सर्वत्र योजयेत्॥ मुनिस्स्याद्दक्षिणामूर्तिर्गायत्रीछन्द ईरितम्॥१२०॥देवता चार्द्धनारीशो
विनियोगोऽखिलाप्तये ॥ हलो वीजानि चोक्तानि स्वराः शक्तय ईरिताः॥१२१॥कुर्यान्न्यासस्थाकाशेन षड्दीर्घाढ्येन चांगकम् ॥ बंधूकस्वर्णव
र्णांगं वराक्षांकुशपाशिनम् ॥ १२२ ॥ अर्द्धेंदुशेखरं त्र्यक्षं देववंद्यं विचिंतयेत् ॥ ध्यात्वैवं शिवशक्तीश्च चतुर्थी हृदयांतिमे ॥ १२३ ॥ सौबीजमातृका
पूर्वं विन्यसेन्मातृका स्थले ॥ विघ्नेशश्च ह्रिया युक्तो विघ्नराजः श्रिया युतः ॥ १२४ ॥ विनायकस्तथा पुष्ट्या शांतियुक्तः शिवोत्तमः ॥
विघ्नकृत्स्वस्तिसंयुक्तो विघ्नहर्ता सरस्वती॥१२५॥स्वाहया गणनाथश्च एकदंतः सुमेधया ॥कांत्या युक्तो द्विदंतस्तु कामिन्या गजवक्त्रकः ॥ १२६॥
निरंजनो मोहिनीयुक्कपर्दी तुनटीयुतः॥दीर्घजिह्वः पार्वतीयुग्ज्वालिन्या शंकुकर्णकः॥१२७॥वृषध्वजो नन्दया च सुरेश्या गणनायकः॥गजेन्द्रः कामरू

पिण्या शूर्पकर्णस्तथोमया॥ १२८॥ विरोचनस्तेजोवत्या सत्या लम्बोदरेण च॥ महानंदश्च विभ्रेश्या चतुर्मूर्तिस्वरूपिणी॥ १२९॥ सदाशिवःकामदया ह्या
मोदो मदजिह्वया॥ दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकीयुतः॥ १३०॥ प्रमोदः सितया युक्त एकपादो रमायुतः॥ द्विजिह्वो महिषीयुक्तो जंभिन्या शूरनाम
कः ॥ १३१ ॥ वीरो विकर्णया युक्तः षण्मुखो भृकुटीयुतः ॥ वरदो लज्जया वामदेवशो दीर्घघोणया॥ १३२ ॥ धनुर्द्धर्या वक्रतुंडो द्विरंडो यामिनी
युतः॥ सेनानी रात्रिसंयुक्तः कामांधो ग्रामणीयुतः ॥ १३३ ॥ मत्तः शशिप्रभायुक्तो विमत्तो लोलनेत्रया ॥ मत्तवाहश्चंचलया जटी दीप्तिसमन्वितः ॥
॥ १३४॥ मुंडी सुभगया युक्तः खड्गी दुर्भगया युतः॥ वरेण्यश्च शिवायुक्तो भगया वृषकेतनः॥ १३५ ॥ भक्ष्यप्रियो भगिन्या च गणेशो भगिनीयुतः ॥
मेघनादः सुभगया व्यापी स्यात्कालरात्रियुक् ॥ १३६॥ गणेश्वरः कालिकया प्रोक्ता विघ्नेशमातृकाः॥ गणेशमातृकायास्तु गणो मुनिभिरीरितः ॥
१३७ ॥ निचृद्गायत्रिकाच्छन्दो देवः शक्तिगणेश्वरः॥ षड्दीर्घाढ्येन बीजेन कृत्वांगानि ततः स्मरेत् ॥ १३८॥ पाशांकुशाभयवरान्दधानं कंजहस्तया ॥
पत्न्याश्लिष्टं रक्ततनुं त्रिनेत्रं गणपं भवेत् ॥ १३९ ॥ एवं ध्यात्वा न्यसेत्स्वीयबीजपूर्वाक्षरान्वितम् ॥ निवृत्तिश्च प्रतिष्ठा च विद्या शांतिस्तथेंधिका
॥ १४०॥ दीपिका रेचिका चापि मोचिका च पराभिधा ॥ सूक्ष्मासूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा ॥ १४१ ॥ व्यापिनी व्योमरूपा चानंता
सृष्टिः समृद्धिका ॥ स्मृतिर्मेधा ततः कांतिर्लक्ष्मीर्द्युतिः स्थिरा स्थितिः ॥ १४२ ॥ सिद्धिर्जरा पालिनी च क्षांतिरीश्वरिका रतिः ॥ कामिका वरदा
वाथ ह्लादिनी प्रीतिसंयुता ॥ १४३॥ दीर्घा तीक्ष्णा तथा रौद्रा प्रोक्ता निद्रा च तंद्रिका ॥ क्षुधा च क्रोधिनी पश्चात्क्रियाकारी समृत्युका ॥ १४४ ॥
पीता श्वेतारुणा पश्चादसितानंतया युता ॥ उक्ता कलामातृकैवं तत्तद्भक्तः समाचरेत् ॥ १४५ ॥ कलायुङ्मातृकायास्तु मुनिः प्रोक्तः प्रजापतिः ॥
गायत्रीछन्द आख्यातं देवता शारदाभिधा ॥ १४६॥ ह्रस्वदीर्घांतरस्थैश्च तारैः कुर्यात्षडंगकम्॥ पञ्चचक्रगुणैणांश्च दधतीं च त्रिलोचनाम्॥ १४७॥
पञ्चवक्त्रां भारतीं तां मुक्ताभूषां भजेत्सुधीः ॥ ध्यात्वैवं तारपूर्वां तां न्यसेन्ड्न्तकलान्विताम् ॥ १४८ ॥ ततश्च मूलमन्त्रस्य षडंगानि समाचरेत् ॥
हृदयादिचतुर्थ्यंते जातीः संयोज्य विन्यसेत् ॥ १४९ ॥ नमः स्वाहा वषट् हुं वौषट् फट् जातय ईरिताः ॥ ततो ध्यात्वेष्टदेवं तं भूषायुधसमन्वितम्॥
॥ १५०॥ न्यस्यांगषट्कं तन्मूर्तौ ततः पूजनमारभेत्॥ १५१॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे संध्यादिनिरूपणं नाम षट्षष्टि
तमोऽध्यायः ॥ ६६॥ सनत्कुमार उवाच॥ अथ वक्ष्ये देवपूजां साधकाभीष्टसिद्धिदाम् ॥ त्रिकोणं चतुरस्रं वा वामभागे प्रकल्प्य च ॥ १॥ सम्पूज्या
स्त्रेण संक्षाल्य हृदाधारं निधाय च॥ तत्राग्निमण्डलं चेद्रा पात्रं संक्षाल्य चास्त्रतः ॥ २ ॥ आधारे नमसं स्थाप्य तत्र चेद्रविमंडलम्॥ क्लोममातृका

ऽमुद्यम्यूर्णे जलैः ॥ ३ ॥ तत्रेहुं … आप्य … पूर्ववत् ॥ गोमुद्रयामृतीकृत्य कवचेनावगुंठयेत् ॥ ४ ॥ संक्षाल्यास्त्रेण प्रणवं तदुप र्यष्टधा जपेत् ॥ सामान्यार्घमिदं प्रोक्तं सर्वसिद्धिकरं नृणाम् ॥ ५॥ तज्जलं किंचिदुद्धृत्य प्रोक्षिण्या साधकोत्तमः ॥ आत्मानं यागवस्तूनि तेन संप्रोक्षयेत्सुधीः ॥ ६ ॥ आत्मवामाग्रतः कुर्यात्पङ्क्तोणांतस्त्रिकोणकम् ॥ चतुरस्त्रेण संवेष्ट्य संक्षाल्यार्घोदकेन च ॥ ७ ॥ ततस्तु साधकश्रेष्ठः स्तंभयेच्छस्त्रमुद्रया ॥ आग्नेयादिषु कोणेषु हृदायंगचतुष्टयम् ॥ ८ ॥ नेत्रं मध्ये दिक्षु चास्त्रं त्रिकोणे पूजयेत्ततः ॥ मूलखंडत्रयेणाथा धारशक्तिं तु मध्यगाम् ॥ ९ ॥ एवं संपूज्य विधिवदस्त्रसंक्षालितं हृदा ॥ प्रतिष्ठाप्य त्रिपदिकां पूजयेन्मनुनामुना ॥ १० ॥ मं वह्निमण्डला येति ततो दशकलात्मने ॥ अमुकार्घ्येति पात्रांते नमापहृदयोऽतिमे ॥ ११ ॥ चतुर्विंशतिवर्णोऽयमाधारस्यार्चने मनुः ॥ स्वमंत्रक्षालितं शखं संस्थाप्याथ समर्चयेत् ॥ १२ ॥ तारः कार्म्ममहांस्ते तु ततो जलचराय च ॥ वर्म फट् हृदयं पांचजन्याय हृदयं मनुः ॥ १३ ॥ तत्रार्कमण्डलायेति द्वादशांते कलात्मने ॥ अमुकार्घ्येति पात्रांते नमोंतस्त्र्यक्षिवर्णवान् ॥ १४॥ सम्पूज्य तेन तत्रार्चेद्द्वादशार्ककलाः क्रमात् ॥ ततः शुद्धजलैर्मूलं विलोममातृकां पठन् ॥ १५ ॥ शङ्खमापूरयेत्तस्मिन्पूजयेन्मनुनामुना ॥ ॐ सोममण्डलायेति षोडशांते कलात्मने ॥१६ ॥ अमुका र्घ्यामृतायेति हृन्मनुश्चार्घ्यपूजने ॥ तत्र षोडशसंख्याका यजेच्चंद्रमसः कलाः ॥ १७ ॥ ततस्तु तीर्थान्यावाह्य गङ्गे चेत्यादिपूर्ववत् ॥गोमुद्रयामृती कृत्याच्छादयेन्मत्स्यमुद्रया ॥ १८ ॥ कवचेनावगुंठ्याथ रक्षेदस्त्रेण तत्पुनः ॥ चिंतयित्वेष्टदेवं च ततो मुद्राः प्रदर्शयेत् ॥ १९ ॥ शङ्खमौ शलमकाख्याः परमीकरणं ततः ॥ महामुद्रां योनिमुद्रां दर्शयेत्क्रमतः सुधीः ॥२०॥ गारुडीं … मुख्ये मुद्रे प्रकीर्तिते ॥ गन्धपुष्पादिभि स्तं पूजयेद्देवतां स्मरन् ॥ २१ ॥ अष्टकृत्वो जपेन्मूलं प्रणवं चाष्टधा तथा ॥ शंखाद्दक्षिणदिग्भागे प्रोक्षणीपात्रमादिशत् ॥ २२ ॥ प्रोक्षण्यां तु … किंचित्कृत्वात्मानं त्रिधा ततः ॥ आत्मतत्त्वात्मने ह्व विद्यातत्त्वात्मने नमः ॥२३॥ शिवतत्त्वात्मने ह्व इत्येतैर्मनुभिस्त्रिभिः॥प्रोक्षेत्पुष्पाक्ष तैश्चापि मण्डलं विधिवत्सुधीः ॥२४ ॥ अथवा मूलगायत्र्या पूजाद्रव्याणि प्रोक्षयेत् ॥ पाद्यार्घ्याचमनीयार्थं मधुपर्कार्थमप्युत॥२५॥ पात्राण्याधा रयुक्तानि स्थापयेद्विधिना पुरः ॥ पाद्यं श्यामाकदूर्वाब्जविष्णुक्रांतजलैः स्मृतम् ॥ २६ ॥ अर्घ्यं पुष्पाक्षतयवैः कुशाग्रतिलसर्षपैः ॥ गंधदूर्वादलैः ॥१३४॥ प्रोक्तं ततश्चाचमनीयकम् ॥ २७ ॥ जातीफलं च कंकोलं लवंगं च जलान्वितम् ॥ क्षौद्राज्यदधिसंमिश्रं मधुपर्कसमीरितम् ॥२८॥ एकस्मिन्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ॥ शंकरार्कार्चने शंखमयेनैव प्रशस्यते ॥ २९ ॥ श्वेताकृष्णारुणापीताश्यामारक्तासितासिताः ॥ रक्तांबराभयकरा

ध्येयास्तु पीठकल्पः ॥ ३० ॥ स्वर्णादिलिखिते यंत्रे शालग्रामे मणौ तथा ॥ विधिना स्थापितायां वा प्रतिमायां प्रपूजयेत् ॥ ३१ ॥ अंगुष्ठा
दिवितस्त्यंतमाना स्वर्णादिधातुभिः ॥ निर्मिता शुभदा गेहे पूजनाय दिने दिने ॥ ३२ ॥ वक्रां दग्धां खंडितां च भिन्नमूर्द्धदृशं पुनः ॥ स्पृष्टां वाप्य
[illegible] प्रतिमां नैव पूजयेत् ॥ ३३ ॥ दाणादिलिंगे वाभ्यर्चेत्सर्वलक्षणलक्षिते ॥ मूलेन मूर्तिं संकल्प्य ध्यात्वा देवं यथोदितम् ॥ ३४ ॥
[illegible] पूजयेत्तस्यां परिवारगणैः सह ॥ शालग्रामे स्थापितायां नावाहनविसर्जने ॥ ३५ ॥ पुष्पांजलिं समादाय ध्यात्वा मंत्रमुदीरयेत् ॥ ३६ ॥
[illegible]संस्थमजं शुद्धं त्वामहं परमेश्वर ॥ अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥ ३७ ॥ तवेयं हि महामूर्तिस्तस्यां त्वां सर्वगं प्रभो ॥
॥ [illegible] दीपवत्स्थापयाम्यहम् ॥ ३८ ॥ सर्वांतर्यामिणे देवं सर्वबीजमयं शुभम् ॥ स्वात्मस्थाय परं शुद्धमासनं कल्पया
म्यहम् ॥ ३९ ॥ अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो ॥ सांनिध्यं कुरु तस्यां त्वं भक्तानुग्राहकारक ॥ ४० ॥ अज्ञानादु[illegible] मत्तत्वाद्वैकल्यात्साध
[illegible] च ॥ यदपूर्णं भवेत्कृत्यं तथाप्यभिमुखो भव ॥ ४१ ॥ दृशा पीयूषवर्षिण्या पूरयन्यज्ञविष्टरे ॥ मूर्तौ वा यज्ञसंपूर्त्यै स्थितो भव महे
श्वर ॥ ४२ ॥ [illegible] श्रोत्रदूरायितद्युते ॥ स्वतेजःपंजरेणाशु वेष्टितो भव सर्वतः ॥ ४३ ॥ यस्य दर्शनमिच्छंति देवाः स्वाभीष्टसिद्धये ॥
तस्मै ते परमेशाय स्वागतं स्वागतं च मे ॥ ४४ ॥ कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम ॥ आगतो देवदेवेशः सुस्वागतमिदं पुनः ॥ ४५ ॥ यद्भक्ति
लेशसंपर्कात्परमानंदसंभवः ॥ तस्मै ते [illegible]चरणाब्जाय पाद्यं शुद्धाय कल्प्यते ॥ ४६ ॥ वेदानामपि वेदाय देवानां देवतात्मने ॥ आचामं कल्प
यामीश शुद्धानां शुद्धिहेतवे ॥ ४७ ॥ [illegible]त्रयहरं दिव्यं परमानन्दलक्षणम् ॥ तापत्रयविनिर्मुक्त्यै तवार्घ्यं कल्पयाम्यहम् ॥ ४८ ॥ सर्वकालुष्यहीनाय परि
पूर्णसुखात्मने ॥ मधुपर्कमिदं देव कल्पयामि प्रसीद मे ॥ ४९ ॥ उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ॥ शुद्धिमाप्नोति तस्मै ते पुनरा
चमनीयकम् ॥ ५० ॥ स्नेहं गृहाण स्नेहेन लोकनाथ महाशय ॥ सर्वलोकेषु शुद्धात्मन्ददामि स्नेहमुत्तमम् ॥ ५१ ॥ परमानंदबोधाब्धिनिमग्ननिजमूर्तये ॥
सांगोपांगमिदं स्नानं कल्पयाम्यहमीश ते ॥ सहस्रं वा शतं वापि यथाशक्त्यादरेण च ॥ ५२ ॥ गन्धपुष्पादिकैरीश मनुना चाभिषिंचयेत् ॥ ५३ ॥ मायाचि
त्रपटच्छन्ननिजगुह्योरुतेजसे ॥ निरावरणविज्ञान वासस्ते कल्पयाम्यहम् ॥ ५४ ॥ यमाश्रित्य महामाया जगत्संमोहिनी सदा ॥ तस्मै ते परमेशाय
कल्पयाम्युत्तरीयकम् ॥ ५५ ॥ रक्तं शक्त्यर्कविघ्नेषु पीतं विष्णौ सितं शिवे ॥ तैलादिदूषितं जीर्णं सच्छिद्रं मलिनं त्यजेत् ॥ ५६ ॥ यस्य शक्तित्रयेणेदं संप्रीतम
खिलं जगत् ॥ यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥ ५७ ॥ स्वभावसुन्दरांगाय नानाशक्त्याश्रयाय ते ॥ भूषणानि विचित्राणि कल्पया

म्यमरार्चित ॥५८॥ परमानन्दसौरभ्यपरिपूर्णदिगंतरम् ॥ गृहाण परमं गंधं कृपया परमेश्वर॥५९॥तुरीयवनसंभूतं नानागुणमनोहरम् ॥ अमंदसौरभं पुष्पं गृह्यतामिदमुत्तमम्॥ जपाक्षतार्कधत्तूरान्विष्णौ नैवार्पयेत्क्वचित्॥६०॥केतकीं कुटजं कुंदं बंधूकं केसरं जपाम् ॥ मालतीपुष्पकं चैव नार्पयेत्तु महेश्वरे ॥६१॥मातुलिंगं च तगरं रवौ नैवार्पयेत्क्वचित् ॥ शक्तौ दूर्वार्कमंदारान् गणेशे तुलसीं त्यजेत्॥६२ ॥ सरोजिनीदमनकौ तथा मरुवकः कुशः ॥ विष्णुकांता नागवल्ली दूर्वापामार्गदाडिमौ ॥६३॥ धात्री मुनियुतानां च पत्रैर्देवार्चनं चरेत् ॥ कदली बदरी धात्री तिंतिणी बीजपूरकम्॥ ॥ ६४ ॥ आम्रदाडिमजंबीरजंबूपनसभूरुहाः ॥ एतेषां तु फलैः कुर्याद्देवतापूजनं बुधः ॥ ६५॥ शुष्कैस्तु नार्चयेद्देवं पत्रैः पुष्पैः फलैरपि ६६॥धात्रीखदिरबिल्वानां तमालस्य दलानि च ॥ छिन्नभिन्नान्यपि मुने न दूष्याणि जगुर्बुधाः ॥ ६७ ॥ पद्ममामलकं तिष्ठेच्छुद्धं चैव दिनत्रयम् ॥ सर्वदा तुलसी शुद्धा बिल्वपत्राणि वै तथा॥६८॥पलाशकाशकुसुमैस्तमालतुलसीदलैः॥धात्रीदलैश्च दूर्वाभिनार्चयेज्जगदंबिकाम्॥६९॥ नार्पयेत्कुसुमं पत्रं फलं देवे ह्यधोमुखम् ॥ पुष्पपत्रादिकं विप्र यथोत्पन्नं तथार्पयेत ॥ ७० ॥ वनस्पतिरसं दिव्यं गंधाढ्यं सुमनोहरम् ॥ आघ्रेयं देवदेवेश धूपं भक्त्या गृहाण मे॥७१॥सुप्रकाशं महादीपं सर्वदा तिमिरापहम्॥घृतवर्तिसमायुक्तं गृहाण मम सत्कृतम्॥७२॥अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्॥भक्त्या गृहाण मे देव नैवेद्यंतुष्टिदंसदा॥७३॥नागवल्लीदलं श्रेष्ठं पूगखदिरचूर्णयुक्॥कर्पूरादिसुगंधाढ्यं यद्दत्तं तद्गृहाण मे॥७४॥दद्यात्पुष्पाञ्जलिं पश्चात्कुर्यादावरणार्चनम्॥७५॥यदाशाभिमुखो भूत्वा पूजनं तु समाचरेत्॥सैव प्राची तु विज्ञेया ततोऽन्या विदिशो दश॥७६॥केशरेष्वग्निकोणादि हृदयादीनि पूजयेत् ॥ नेत्रमग्रे दिक्षु चास्त्रं अंगमंत्रैर्यथाक्रमम् ॥ ७७॥ शुक्लश्वेतसितश्यामकृष्णरक्तार्चिषः क्रमात ॥ वराभयकरा ध्येयाः स्वस्वदिक्ष्वंगशक्तयः ॥ ७८ ॥ अमुकावरणांते तु देवता इति संवदेत् ॥ सालंकारास्ततः पश्चात्सांगाः सपरिचारिकाः ॥ ७९ ॥ सवाहनाः सायुधाश्च ततः सर्वोपचारकैः ॥ संपूजितास्तर्पिताश्च वरदाः संत्विदं पठेत् ॥ ८० ॥ मूलांते च समुच्चार्य देवतायै निवेदयेत् ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ ८१ ॥ भक्त्या समर्पये तुभ्यममुकावरणार्चनम् ॥ इत्युच्चार्य क्षिपेत्पुष्पाञ्जलिं देवस्य मस्तके ॥ ८२ ॥ ततस्त्वभ्यर्च्यनीयाः स्युः कल्पोक्ताश्चावृतीः क्रमात् ॥ सायुधांस्तत इंद्राद्यान्स्वस्वदिक्षु प्रपूजयेत् ॥ ८३ ॥ इंद्रो वह्निर्यमो रक्षो वरुणः पवनो विधुः ॥ ईशानोऽथ विधिश्चैवमधस्तात्पन्नगाधिपः ॥ ८४ ॥ ऐरावतस्तथा मेषो महिषः प्रेतस्तिमिर्मृगः ॥ वाजी वृषो हंसकूर्मौ वाहनानि विदुर्बुधाः ॥ ८५ ॥ वज्रं शक्तिं दंडखड्गौ पाशांकुशगदा अपि ॥ त्रिशूलं पद्मचक्रे च क्रमादिंद्रादिहेतयः ॥ ८६ ॥ समाप्यावरणार्चां तु वेयनागार्मिकं चरेत् ॥ शंखतोयं परिभ्राम्यो

द्राहुर्नृत्यन् पतेत्क्षितौ ॥ ८७ ॥ दंडवच्चाप्यथोत्थाय प्रार्थयित्वा निजेश्वरम् ॥ दक्षिणे स्थंडिलं कृत्वा तत्र संस्कारमाचरेत्॥८८॥ मूलेनेक्षणमन्त्रेण
प्रोक्षणं ताडनं पुनः ॥ कुशैस्तद्वर्मणाभ्युक्ष्य पूज्य तत्र न्यसेद्वसुम् ॥ ८९ ॥ प्रदाप्य तत्र जुहुयाद्ध्यात्वा चैवेष्टदेवताम् ॥ महाव्याहृतिभिर्यस्तु
समस्ताभिश्चतुष्टयम् ॥ ९० ॥ जुहुयात्सर्पिषा भक्तैस्तिलैर्वा पायसेन वा ॥ सघृतैः साधकश्रेष्ठः पञ्चविंशतिसंख्यया ॥ ९१ ॥ पुनर्व्याहृतिभि
र्हुत्वा गंधाद्यैः पुनरर्चयेत् ॥ देवं संयोजयेन्मूर्तौ ततो वह्निं विसर्जयेत् ॥ ९२ ॥ भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ॥ कर्मांतरेऽपि संप्राप्ते
सान्निध्यं कुरु सादरम्॥९३॥विसृज्याग्निदेवतायै दद्यादाचमनीयकम्॥अवशिष्टेन हविषा गंधपुष्पाक्षतान्वितम्॥९४॥देवतापार्षदेभ्योऽपि पूर्वोक्तेभ्यो
बलिं ददेत् ॥ ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ॥ ९५ ॥योगिन्यो ह्युग्ररूपाश्च गणानामधिपाश्च ये ॥विघ्नभूतास्तथा चान्ये दिग्विदिक्षु
समाश्रिताः॥९६॥ सर्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम्॥इत्यष्टदिक्षु दत्वा च पुनर्भूतबलिं चरेत्॥९७॥ पानीयममृतीकृत्य मुद्रया धेनुसंज्ञया॥
देवतायाः करे दद्यात्पुनश्चाचमनीयकम् ॥ ९८ ॥ देवमुद्वास्य मूर्तिस्थं पुनस्तत्रैव योजयेत् ॥नैवेद्यं च ततो दद्यात्तदुच्छिष्टभोजिने ॥ ९९ ॥ महे
श्वरस्य चंडेशो विष्वक्सेनस्तथा हरेः ॥ चंडांशुस्तरणेर्वक्रतुंडश्चापि गणेशितुः ॥ शक्तेरुच्छिष्टचांडाली प्रोक्ता उच्छिष्टभोजिमः ॥ १००॥ ततो
ऋष्यादिकं स्मृत्वा कृत्वा मूलषडंगकम् ॥ जप्त्वा मंत्रं यथाशक्ति देवतायै निवेदयेत् ॥ १०१ ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥
सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिता॥१०२॥ ततः पराङ्मुखं चार्घं कृत्वा पुष्पैः प्रपूजयेत् दोर्भ्यां पद्भ्यां च जानुभ्यामुरसा शिरसा
दृशा ॥ मनसा वचसा चेति प्रणामोऽष्टांग ईरितः ॥ १०३॥ बाहुभ्यां च सजानुभ्यां शिरसा वचसापि वा ॥ पंचांगकः प्रणामः स्यात्पूजायां प्रवरा
वुभौ ॥ १०४ ॥ नत्वा च दंडवन्मंत्री ततः कुर्यात्प्रदक्षिणाः ॥ विष्णुसोमार्कविघ्नानां वेदाधेंद्वद्रिवह्नयः ॥ १०५ ॥ ततः स्तोत्रादिकं मंत्री प्रपठे
द्भक्तिपूर्वकम् ॥ इतः पूर्णं प्राणबुद्धिदेहधर्माधिकारतः ॥ १०६ ॥ जाग्रत्स्वप्नसुषुप्त्यंतेऽवस्थासु मनसा वदेत् ॥ वाचा हस्ताभ्यां च पद्भ्या
मुदरेण ततः परम् ॥ १०७ ॥ शिश्नांते यत्स्मृतं पश्चाद्यदुक्तं यत्कृतं ततः ॥ तत्सर्वं च ततो ब्रह्मार्पणं भवतु ठद्वयम् ॥ १०८ ॥ मां मदीयं च
सकलं विष्णवे च समर्पये ॥ तारं तत्सदतो ब्रह्मार्पणमस्तु मनुर्मतः ॥ १०९ ॥ प्रणवाद्योऽप्यवस्वर्णो ह्यनेनात्मानमर्पयेत् ॥ अज्ञानाद्वा
प्रमादाद्वा वैकल्यात्साधनस्य च ॥ ११० ॥ यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ द्रव्यहीनं क्रियाहीनं मंत्रहीनं मयान्यथा ॥ १११ ॥
कृतं यत्तत्क्षमस्वेश कृपया त्वं दयानिधे ॥ यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ॥ ११२ ॥ तत्सर्वं तावकी पूजा भूयाद्भूत्यै च मे प्रभो ॥ भूमौ

स्खलितपादानां भूमिरेवावलंबनम् ॥ ११३ ॥ त्वयि जातापराधानां त्वमेव शरणं प्रभो ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ ११४ ॥
तस्मात्कारुण्यभावेन क्षमस्व परमेश्वर ॥ अपराधसहस्राणि क्रियंतेऽहर्निशं मया ॥ ११५ ॥ दासोऽयमिति मां मत्वा क्षमस्व जगतां पते ॥ आवाहनं
न जानामि न जानामि विसर्जनम् ॥ ११६॥ पूजां चैव न जानामि त्वं गतिः परमेश्वर ॥ संप्रार्थ्यैवं ततो मंत्री मूलांते श्लोकमुच्चरेत् ॥ ११७ ॥
गच्छ गच्छ परं स्थानं जगदीश जगन्मय ॥ यत्र ब्रह्मादयो देवा जानंति च सदाशिवः ॥ ११८ ॥ इति पुष्पांजलिं दत्वा ततः संहारमुद्रया॥निधाय
देवं सांगं च स्वीयहृत्सरसीरुहे॥ ११९ ॥ सुषुम्णावर्त्मना पुष्पमाघ्रायोद्वासयेद् बुधः ॥ शंखचक्रशिलालिंगविप्रसूर्यद्वयं तथा ॥ १२० ॥ शक्तित्रयं
न चैकत्र पूजयेद्दुःखकारणम् ॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ १२१ ॥ सर्वपापक्षयकरं विष्णुपादोदकं शुभम् ॥ १२२ ॥ तत्तद्भक्तैर्गृही
तव्यं तन्नैवेद्यनिवेदितम् ॥ अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ॥ १२३ ॥ शालग्रामशिलास्पर्शात्सर्वं याति पवित्रताम् ॥ पूजा पंचविधा
तत्र कथिता नारदाखिलैः ॥ १२४ ॥ आतुरी सौतिकी त्रासी साधना-भाविनी तथा ॥ दौर्बोधी च क्रमादासां लक्षणानि शृणुष्व मे ॥ १२५ ॥
रोगादियुक्तो न स्नायान्न जपेन्न च पूजयेत् ॥ विलोक्य पूजां देवस्य मूर्तिं वा सूर्यमंडलम् ॥ १२६ ॥ प्रणम्याथ स्मरन्मंत्रमर्पयेत्कुसुमांजलिम् ॥
रोगे निवृत्ते स्नात्वाथ नत्वा संपूज्येद्गुरुम् ॥ १२७ ॥ त्वत्प्रसादाज्जगन्नाथ जगत्पूज्य दयानिधे ॥ पूजाविच्छेददोषो मे मास्त्विति प्रार्थयेच्च तम् ॥
॥ १२८ ॥ द्विजानपि च संपूज्य यथाशक्त्या प्रतोष्य च ॥ तेभ्यश्चाशिषमादाय देवं प्राग्वत्ततोऽर्चयेत ॥ १२९॥ आतुरी कथिता ह्येषा सौतिक्यथ
निगद्यते ॥ सूतकं द्विविधं प्रोक्तं जाताख्यं मृतसंज्ञकम् ॥ १३० ॥ तत्र स्नात्वा मानसीं तु कृत्वा संध्यां समाहितः ॥ मनसैव यजेद्देवं मनसैव जपे
न्मनुम् ॥ १३१ ॥ निवृत्ते सूतके प्राग्वत्संपूज्य च गुरुं द्विजान् ॥ तेभ्यश्चाशिषमादाय ततो नित्यक्रमं चरेत् ॥ १३२ ॥ एषा तु सौतिकी प्रोक्ता
त्रासी चाथ निगद्यते ॥ दुष्टेभ्यस्त्राससमापन्नो यथालब्धोपचारकैः ॥ १३३ ॥ मानसैर्वा यजेद्देवं त्रासी सा परिकीर्तिता ॥ पूजासाधनवस्तूनाम
सामर्थ्ये तु सर्वशः ॥ १३४ ॥ पुष्पैः पत्रैः फलैर्वापि मनसा वा यजेद्विभुम ॥ साधनाभाविनी ह्येषा दौर्बोधीं शृणु नारद ॥ १३५ ॥ स्त्रियो वृद्धा
स्तथा बाला मूर्खास्तैस्तु यथाक्रमम् ॥ यथाज्ञानकृता सा तु दौर्बोधीति प्रकीर्तिता ॥ १३६ ॥ एवं यथाकथंचित्तु पूजां कुर्याद्धि साधकः ॥
देवपूजाविहीनो यः स गच्छेन्नरकं ध्रुवम् ॥ १३७ ॥ वैश्वदेवादिकं कृत्वा भोजयेद्द्विजसत्तमान् ॥ देवे निवेदितं पश्चाद्भुंजीत स्वगणैः स्वयम् ॥१३८॥
आचम्यानन्तशुद्धिं च कृत्वा नित्यं [illegible]

न सांगशयिकं तस्य दुर्मतेर्जायते फलम् ॥१४०॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे देवपूजानिरूपणं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ श्रीसनत्कुमार उवाच ॥ अथ वक्ष्ये गणेशस्य मंत्रान्सर्वेष्टदायकान् ॥ यान्समाराध्य विप्रेंद्र साधको भुक्तिमुक्तिमान् ॥ ॥ १ ॥ अव्ययो विष्णुवनिता शंभुस्त्री मीनकेतनः ॥ स्मृतिर्मासिंदुमन्वाढ्या सा पुनश्चंद्रशेखरा ॥ २ ॥ ङेंतो गणपतिस्तोयं भुजंगो वरदेति च ॥ सर्वांते जनमुच्चार्य ततो मे वशमानय ॥ ३ ॥ वह्निःप्रियांतो मंत्रोऽयमष्टाविंशतिवर्णवान् ॥ गणकोऽस्य मुनिश्छंदो गायत्री निचृदादिका ॥ ४ ॥ गणेशो देवता बीजं षष्ठशक्तिस्तदादिका ॥ श्रीमन्महागणपतिप्रीतये विनियोगकः ॥ ५ ॥ ऋषिं शिरसि वक्त्रे तु छन्दश्च हृदि देवताम् ॥ गुह्ये बीजं पदोः शक्तिं न्यसेत्साधकसत्तमः॥६॥ षड्दीर्घाढ्येन बीजेन यं च बीजादिना पुनः॥ षडंगानि न्यसेदस्य जातियुक्तानि मंत्रवित् ॥७॥ शैवी षडंगमुद्रात्र न्यस्तव्या हि षडंगके॥ गामाद्यं चैव भूर्लोकं नाभ्यंतं पादयोर्न्यसेत् ॥८॥गीमाद्यं च भुवर्लोकं कंठांतं नाभितो न्यसेत् ॥ स्वर्लोकं चैव गूमाद्यं कंठादिमस्तकावधि ॥ ९ ॥ व्यापकं मूलमन्त्रेण न्यासोऽयं भुवनाभिधः ॥ मूलमंत्रं समुच्चार्य मातृकावर्णमीरयेत् ॥ १० ॥ तदंतेऽपि च मूलं स्यात्रमोंऽतं मातृकास्थले ॥ क्षांतं विन्यस्य मूलेन व्यापकं रचयेत्सुधीः ॥ ११॥ वर्णन्यासोऽयमाख्यातः पदन्यासस्तथोच्यते ॥ पञ्चत्रिबाणवह्नींदुचंद्राक्षिनिगमैः क्रमात् ॥ १२ ॥ विभक्तैर्मूलगायत्र्या हृदंतैरष्टभिः पदैः ॥ भालदेशे मुखे कण्ठे हृदि नाभ्यूरुजानुषु ॥ १३ ॥ पादयोश्चैव विन्यस्य मूलेन व्यापकं चरेत् ॥ वदेत्तत्पुरुषायांते विघ्नहेति पदं ततः ॥ १४ ॥ वक्रतुंडाय शब्दांते धीमहीति समीरयेत् ॥ तन्नो दंतिः प्रचोवर्णा दयादिति वदेत्पुनः ॥ १५ ॥एषोक्ता मूलगायत्री सर्वसिद्धिप्रदायिनी ॥ एवं न्यासविधिं कृत्वा ध्यायेद्देवं हृदंबुजे ॥ १६ ॥ उद्यन्मार्तण्डसदृशं लोकास्थित्यंतकारणम् ॥ सशक्तिकं भूषितांगं दंतचक्राद्युदायुधम् ॥ १७ ॥एवं ध्यात्वा चतुश्चत्वारिंशत्सहस्रसंयुतम् ॥ चतुर्लक्षं जपेन्मंत्रं अष्टद्रव्यैर्दशांशतः ॥ १८ ॥ जुहुयाद्विधिवन्मंत्री संस्कृते हव्यवाहने ॥ इक्षवः सक्तवो मोचाफलानि चिपिटास्तिलाः ॥ १९ ॥ मोदका नारिकेलानि लाजा द्रव्याष्टकं स्मृतम् ॥ पीठमाधारशक्त्यादिपरतत्वांतमर्चयेत् ॥ २० ॥ षट्कोणांतस्त्रिकोणं च बहिरष्टदलं लिखेत् ॥ भूपुरं तद्बहिः कृत्वा गणेशं तत्र पूजयेत् ॥ २१ ॥ तीव्राख्या ज्वालिनी नंदा भोगदा कामरूपिणी ॥ उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ २२ ॥ सर्वादिशक्तिकमलासनाय हृदयांतिकः ॥ पीठमंत्रोऽयमेतेन दद्यादासनमुत्तमम् ॥ २३ ॥ तत्रावाह्य गणाधीशं मध्ये सम्पूज्य यत्नतः ॥ त्रिकोणबाह्ये पूर्वादिचतुर्दिक्ष्वर्चयेत्क्रमात् ॥ २४ ॥ श्रियं श्रियः पतिं चैव गौरीं गौरी

पतिं तथा ॥ रतिं रतिपतिं पश्चान्महापूर्वे ९ ५॥.१.१२ २५ ॥ क्रमादिल्ववटाश्वत्थप्रियङ्गूनामधोऽर्चयेत् ॥ रमा पद्मद्वयकरा शंखचक्रधरो हरिः ॥
॥२६ ॥ गौरी पाशांकुशधरा टंकशूलधरो हरः ॥ रतिः पद्मकरा पुष्पबाणचापधरः स्मरः ॥ २७ ॥ शुकशीर्षमहस्ता भूः पोत्री चक्रगदाधरः ॥
देवाग्रे पूजयेल्लक्ष्मीसहितं तु विनायकम् ॥२८॥प्रजयेत्षट्सु कोणेषु ह्यामोदाद्यान्प्रियायुतान् ॥आमोदं सिद्धिसंयुक्तमग्रतः परिपूजयेत्॥२९॥प्रमोदं
चाग्निकोणे तु समृद्धिसहितं यजेत् ॥ ईशकोणे यजेत्कीर्तिसंयुतं सुमुखं तथा॥३०॥वारुणे मदनावत्या संयुतं दुर्मुखं यजेत् ॥ यजेन्नैर्ऋत्यकोणे तु
विघ्नं मदद्रवायुतम् ॥३१॥ द्राविण्या विघ्नकर्तारं वायुकोणे समर्चयेत् ॥ पाशांकुशाभयकरांस्तरुणार्कसमप्रभान् ॥ ३२॥ कपोलविगलद्दानगंधलुब्धा
लिशोभितान्॥षट्कोणोभयपार्श्वे तु शंखपद्मनिभौ क्रमात्॥३३॥ सहितौ निजशक्तिभ्यां ध्यात्वा पूर्ववदर्चयेत्॥केशरेषु षडंगानि पत्रेष्वष्टौ तु मातरः॥
॥३४॥इन्द्राद्यानपि वज्राद्दीन्पूजयेद्धरणीगृहे॥ एवमाराध्य विघ्नेशं साधयेत्स्वमनोरथान्॥३५ ॥चतुश्चत्वारिंशताढ्यं चतुःशतमतंद्रितः॥तर्पयेदंबुभिः
शुद्धैर्गजास्यं दिनशः सुधीः॥३६॥पद्मैस्तु वशयेद्भूपांस्तत्पत्नीश्चोत्पलैस्तथा॥कुमुदैर्मंत्रिणोऽश्वत्थसमिद्भिर्वाडवाञ्शुभैः॥३७॥उदुंम्बरोत्थैर्नृपतीन्वैश्या
न्प्लक्षसमुद्भवैः॥ वटोद्भवैः समिद्भिश्च वशयेदंतिमान्बुधः ॥ ३८ ॥ आज्येन श्रियमाप्नोति स्वर्णाप्तिर्मधुना भवेत्॥ गोदुग्धेन गवां लाभो दध्ना सर्व
समृद्धिमान् ॥ ३९ ॥ अन्नाप्तिरन्नहोमेन समिद्भिर्वेतसां जलम् ॥ वासांसि लभते हुत्वा कुसुंभकुसुमैः शुभैः ॥४० ॥ अथ सर्वेप्सदं वक्ष्ये चतुरावृत्तित
र्पणम् ॥ मूलेनादौ चतुर्वारं प्रत्येकं च प्रतर्पयेत् ॥ ४१ ॥ पूर्वमंत्राक्षरैर्मंत्रैः स्वाहांतैश्च चतुश्चतुः॥मूलमंत्रैश्चतुर्वारपूर्वकं संप्रतर्प्य च ॥ ४२ ॥ मिथु
नादींस्ततः पश्चात्पूर्ववत्संप्रतर्पयेत्॥ देवेन सहितां शक्तिं शक्त्या च सहितं तु नम् ॥ ४३॥ एवं च षड्विंशतिधा मिथुनानि भवंति हि ॥ स्वनामा
द्यर्णबीजानि तानि सन्तर्पयेत्क्रमात्॥ ४४ ॥ भवेत्संभूय सचतुश्चत्वारिंशच्चतुःशतम् ॥ एवं संतर्प्य तत्पश्चात्पूर्ववत्सोपचारकैः ॥ ४५ ॥ सर्वाभीष्टं
च संप्रार्थ्य प्रणम्योद्वासयेत्सुधीः ॥ भाद्रकृष्णचतुर्थ्यादिप्रतिमासमतंद्रितः ॥ ४६॥ आरभ्यार्कोदयं मंत्री यावच्चंद्रोदयो भवेत्॥ तावन्नोपविशेद्धर्मा
जितवाक्स्थिरमानसः ॥ ४७ ॥ ततश्चंद्रोदये मन्त्री पूजयेद्गणनायकम् ॥ पूर्वोक्तविधिना सम्यङ्नानापुष्पोपहारकैः ॥ ४८ ॥ एकविंशतिसंख्या
कान्मोदकांश्च निवेदयेत ॥ तदग्रे प्रजपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ ४९ ॥ ततः कर्पूरकाश्मीररक्तपुष्पैः सचन्दनैः ॥ अर्घ्यं दद्यात्तु मूलांते ङेंतं
गणपतिं ततः ॥ ५० ॥ इदमर्घ्यं कल्पयामि वक्रतुंडोऽर्घ्यमन्त्रमतः ॥ स्तुत्वा नत्वा विसृज्याथ यजेच्चंद्रमसं पुनः ॥ ५१॥ अर्घ्यं यथावदर्चारं पूज ॥ १३७ ॥
यित्वा गुरुं ततः ॥ निवेदितेषु विप्राय यथावर्णांश्च मोदकान् ॥ ५२ ॥ [illegible]

वत्सरावधि ॥ ५३ ॥ पुत्रान्पौत्रान्सुखं वित्तमारोग्यं लभते नरः ॥ सूर्योदयादशक्तश्चेदस्तमारभ्य मंत्रवित्॥ ५४ ॥ चंद्रोदयांतं पूर्वोक्तविधिना व्रत
माचरेत् ॥एवं कृतेऽपि पूर्वोक्तं फलमाप्नोति निश्चितम्॥५५॥गणेशप्रतिमां दंतिदंतेन कपिनापि वा॥गजभग्नेन निंबेन सितार्केणाथवा पुनः॥५६॥
कृत्वा तस्यां समावाह्य प्राणस्थापनपूर्वकम्॥अभ्यर्च्य विधिवन्मन्त्री राहुग्रस्ते निशाकरे॥५७॥स्पृष्ट्वा चैव निगहास्तां शिखायां समुद्वहन् ॥ द्यूते
विवादे समरे व्यवहारे जयं लभेत्॥५८॥ वीजं वराहो विंद्वाढ्यो मन्विंद्वाढ्यो कलौ ततः॥स्मृतिर्मासिंदुमन्वाढ्या कर्णोच्छिष्टगणे वदेत् ॥५९॥ वक्रः
सदीर्घपवनो महायक्षाय यं वलिः ॥वलिमंत्रोऽयमाख्यातो न चेद्वर्णोऽखिलेष्टदः॥६०॥प्रणवो भुवनेशानीस्त्ववीजांते नवार्णकः॥हस्त्तीनि च पिशा
चीति लिखेद्वाग्निसुंदरी ॥ ६१ ॥ नवार्णोऽयं समुद्दिष्टो भजतां सर्वसिद्धिदः ॥ पदैः सर्वेण मंत्रेण पञ्चांगानि प्रकल्पयेत ॥ ६२॥ अन्यत्सर्वं
समानं स्यात्पूर्वमंत्रेण नारद ॥ अथाभिधास्ये विधिवद्वक्रतुंडमनुत्तमम् ॥ ६३ ॥ तोयं त्रिविर्वह्निशुक्रकर्णेंद्राढ्यो हरिस्तथा॥ सर्दीर्घो दारको
वायुर्वर्मांतोऽयं रसार्णकः॥६४॥भार्गवोऽस्य मुनिश्छन्दोऽनुष्टुब्देवो गणाधिपः॥वक्रतुण्डाभिधो वीजं वं शक्तिः कवचं पुनः ॥६५॥ तारहृन्मध्यगै
मंत्रवर्णैश्चंद्रविभूषितैः॥कृत्वा षडंगमन्त्रार्णान्भ्रूमध्ये च गले हृदि॥६६॥नाभौ लिंगे पदे न्यस्याखिलेन व्यापकं चरेत्॥उद्यदर्कद्युतिं हस्तैः पाशांकुश
वराभयान् ॥ ६७ ॥ दधतं गजवक्त्रं च रक्तभूपांवरं भजेत् ॥ ध्यात्वैवं प्रजपेत्तर्कलक्षं द्रव्यैर्दशांशतः॥ ६८ ॥ अष्टभिर्जुहुयात्पीठे तीव्रादिसहितेऽ
र्चयेत् ॥ मूर्तिं मूर्तेन संकल्प्य तस्यामावाह्य पूजयेत् ॥ ६९ ॥ षट्कोणेषु षडंगानि पत्रेष्वष्टौ तु शक्तयः ॥ यजेद्विघ्नां विधात्रीं च भोगदां विघ्न
घातिनीम् ॥ ७० ॥ निधिप्रदीपां पापघ्नीं पुण्यां पश्चाच्छशिप्रभाम् ॥ दलाग्रेषु वक्रतुंड एकदंष्ट्रमहोदरौ ॥७१॥ गजास्यलंबोदरकौ विकटो विघ्न
राट् तथा ॥ धूम्रवर्णस्ततो वाह्ये लोकेशान्हेतिसंयुतान् ॥ ७२ ॥ एवमावरणैरिष्ट्वा पञ्चभिर्गणनायकम् ॥ साधयेदखिलान्कामान्वक्रतुंडप्रसादतः ॥
॥ ७३॥ लब्ध्वा गुरुमुखान्मंत्रं दीक्षासंस्कारपूर्वकम् ॥ ब्रह्मचारी हविष्याशी सत्यवाक् च जितेंद्रियः ॥ ७३ ॥ जपेदर्कसहस्रं तु षण्मासं
होमसंयुतम्॥दारिद्र्यं तु पराभूय जायते धनदोपमः॥७५॥चतुर्थ्यादि चतुर्थ्यंतं जपेदयुतमादरात्॥अष्टोत्तरशतं नित्यं हुत्वा प्राग्वत्फलं लभेत् ॥७६॥
पक्षयोरुभयोर्मंत्री चतुर्थ्यां जुहुयाच्छतम् ॥ अपूर्वेवत्सरे स स्यात्समृद्धः परमं पदम् ॥७७॥ अङ्गारकचतुर्थ्यां तु देवमिष्ट्वा विधानतः ॥ हविषा
पायसान्नेन नैवेद्यं परिकल्पयेत् ॥ ७८ ॥ ततो गुरुं समभ्यर्च्य भोजयेद्विधिवत्सुधीः॥निवेदितेन जुहुयात्सहस्रं विधिवद्वसौ॥ ७९ ॥एवं संवत्सरं
कृत्वा महतीं श्रियमाप्नुयात् ॥ अथान्यत्साधनं वक्ष्ये लोकानां हितकाम्यया ॥ ८० ॥ इष्ट्वा गणेशं पृथुकैः पायसापूपमोदकैः ॥ नानाफलैस्ततो
मंत्री हरिद्रामथ सैन्धवम् ॥ ८१ ॥ वचां निष्कार्द्धभागं च तदर्द्धं वा मनुं जपेत् ॥ विशोध्य चूर्णं प्रमृतौ गवां मूत्रे विनिक्षिपेत्॥८२॥ सहस्रकृत्वो

मनुना मंत्रयित्वा प्रयत्नतः ॥ स्नातामृतुदिने शुद्धां शुक्लांबरधरां शुभाम् ॥ ८३ ॥ देवस्य पुरतः स्थाप्य पाययेदौषधं सुधीः ॥ सर्वलक्षणसंपन्नं
वंध्यापि लभते सुतम् ॥ ८४ ॥ अथान्यत्संप्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥ गोचर्ममात्रां धरणीमुपलिप्य प्रयत्नतः ॥ ८५ ॥ विकीर्य धान्यप्रक
रैस्तत्र संस्थापयेद्घटम् ॥ शुद्धोदकेन संपूर्य तस्योपरि निधापयेत् ॥ ८६ ॥ कपिलाज्येन संपूर्णं शरावं नूतनं शुभम् ॥ षडष्टाक्षरमंत्राभ्यां दीप
मारोपयेच्छुभम् ॥ ८७ ॥ दीपे देवं समावाह्य गंधपुष्पादिभिर्यजेत् ॥ स्नातां कुमारीमथवा कुमारं पूजयेत्सुधीः ॥ ८८ ॥ दीपस्य पुरतः स्थाप्य
ध्यात्वा देवं जपेन्मनुम् ॥ प्रदीपे स्थापिते पश्येद्द्विजरूपं गणेश्वरम् ॥ ८९ ॥ पृष्टस्ततः संपदि वा नष्टं चैवाप्यनागतम् ॥ सकलं प्रवदेद्देवं कुमारी
वा कुमारकः ॥ ९० ॥ षडक्षरो हृदंतश्चेद्भवेदष्टाक्षरो मनुः ॥ अन्येऽपि मंत्रा देवर्षे सन्ति तंत्रे गणेशितुः ॥ ९१ ॥ किंत्वत्र यन्न साध्यं स्यात्त्रिषु
लोकेषु साधकैः॥अष्टविंशत्सहस्रार्णाभ्यां तन्न पश्येदपि क्वचित् ॥९२॥ एतद्गणेशमंत्राणां विधानं ते मयोदितम्॥ शठेभ्यः परशिष्येभ्यो वंचकेभ्योऽपि
मा वद॥९३॥एवं यो भजते देवं गणेशं सर्वसिद्धिदम्॥प्राप्येह सकलान्भोगानंते मुक्तिपदं व्रजेत्॥९४॥इतिश्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने
तृतीयपादे गणेशमन्त्रविधाननिरूपणं नामाष्टषष्टितमोऽध्यायः॥६८॥

सनत्कुमार उवाच॥अथ वक्ष्ये त्रयीमूर्तेर्विधानं त्वद्विजनीपतेः॥मन्त्राणां यत्समा
राध्य सर्वेष्टं प्राप्नुयाज्जनः ॥ १ ॥तारो रेचिकया युक्तो मेधानेत्रयुता रतिः॥ ससर्गो वामकर्णाढ्यो भृगुर्वंड्यासनो मरुत्॥ २ ॥शंपोदित्य इति प्रोक्तो
वस्वर्णो भुक्तिमुक्तिदः॥ देवभागो मुनिश्छन्दो गायत्री देवता रविः॥ ३ ॥ माया वीजं रमा शक्तिर्दृष्टादृष्टे नियोगकः ॥ सत्याय हृदयं पश्चाद्ब्रह्मणे
शिर ईरितम् ॥ ४ ॥ विष्णवे तु शिखावर्म रुद्राय परिकीर्तितम् ॥ नेत्रं स्यादग्नये पश्चात्शर्वायास्त्रमुदाहृतम् ॥ ५ ॥ नेत्रो ज्वाला मनो हुं फट्
स्वाहांता मनवो गणाः ॥ पुनः षडर्णैर्ह्रीं लक्ष्म्याः कृत्वांतःस्थैः षडंगकम् ॥ ६॥ शिरोरोजठरे पृष्ठे तयोर्ङेंताख्यया न्यसेत् ॥ आदित्यं च रविं पश्चा
द्भानुं भास्करमेव च ॥ ७ ॥ सूर्यं च मूर्ध्नि वदने हृदि गुह्ये च पादयोः ॥ सद्यादिपञ्च ह्रस्वाद्यान् न्यसेन्ङें हृदयोऽतिमान् ॥ ८ ॥ह्रीं गमामध्य
गामष्टौ वर्गांस्तारादिकान्न्यसेत् ॥ मूर्द्धास्यकंठहृत्कुक्षिनाभिलिंगगुदेषु च ॥ ९ ॥ सचंद्रस्वरपूर्वं तु ङेंतं शीतांशुमण्डलम् ॥ मूर्द्धादिकंठपर्यंतं
न्यसेच्चांद्रिमनुस्मरन् ॥ १० ॥ स्पर्शान्सेंदून्समुच्चार्य ङेंतं भास्करमण्डलम् ॥न्यसेत्कंठादिनाभ्यंतं ध्यायन्प्रद्योतनं हृदि ॥ ११ ॥ यादीन्सचंद्रा
नुच्चार्य ङेंतं च वह्निमंडलम् ॥ नाभ्यादिपादपर्यंतं न्यसेद्वह्निमनुस्मरन्॥१२॥ प्रोक्तोऽयं मण्डलन्यासो महातेजोविधायकः ॥ आदिठांतार्णपूर्वं ङें
नमोंतं सोममण्डलम् ॥ १३ ॥ मूर्द्धादिहृदयांतं तु विन्यसेत्साधकोत्तमः ॥ डकारादिक्षकारांतवर्णाद्यं वह्निमण्डलम् ॥ १४ ॥ ङेंतं हृदादिपा ॥ १३८ ॥

दान्तं विन्यसेत्सुसमाहितः ॥ अग्नीपोमात्मको न्यासः कथितः सर्वसिद्धिदः ॥ १९ ॥ न्यसेत्सेंदून्मातृकार्णाञ्जयांतपुरुषात्मने ॥ नमोंते व्यापकं मंत्री हंसन्यासोऽयमीरितः ॥ १६ ॥ अष्टावष्टौ स्वराञ्शेषान्पंचपञ्च मितान्पुनः ॥ उक्तादित्यमुखानेतान्विन्यसेच्च नवग्रहान् ॥ १७ ॥ आधारलिंगयोर्नाभौ हृदि कंठे मुखांतरे ॥ भ्रूमध्ये च तथा भाले ब्रह्मरंध्रे न्यसेत्क्रमात् ॥ १८ ॥ हंसाख्यमग्नीपोमाख्यं मंडलत्रयमेव च ॥ पुनर्न्यासत्रयं कुर्यान्मूलेन व्यापकं चरेत् ॥ १९ ॥ एवं न्यासविधिं कृत्वा ध्यायेत्सूर्यं हृदंबुजे ॥ दानाभयाब्जयुगलं धारयंतं करैः रविम् ॥ २० ॥ कुंडलांगदकेयूरहारिणं च त्रयीतनुम् ॥ ध्यात्वैवं प्रजपेन्मंत्री वसुलक्षं दशांशतः ॥ २१ ॥ रक्तांभोजैस्तिलैर्वापि जुहुयाद्विधिवद्वसौ ॥ प्रथमं पीठयजने धर्मादीनां स्थले यजेत् ॥ २२ ॥ प्रभूतं विमलं शारं समाराध्यमनंतरम् ॥ परमादिसुखं मध्ये खविंवांतं प्रपूजयेत् ॥ २३ ॥ सोमाग्निमंडलं पूज्य रविमंडलमर्चयेत् ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ॥ २४ ॥ अमोघा विद्युता सर्वतोमुखी पीठशक्तयः ॥ ह्रस्वत्रयोक्तिजाः क्लीबहीना वह्नींदुसंयुताः ॥२५॥ स्वरा बीजानि शक्तीनां तदाद्याः पूजयेत्तु ताः ॥ ब्रह्मविष्णुशिवात्मा ते सृष्टिः शेषान्विताप्यसौ ॥२६॥ एवं चान्ते योगपीठात्मने हृदयमीरयेत् ॥ ताराद्योऽयं पीठमंत्रस्त्वनेनासनमादिशेत् ॥२७ ॥ ध्रुवो वियद्विंदुयुतं खं खखोल्काय हृन्मनुः॥नवार्णाय च मनवे मूर्तिं संकल्पयेत्सुधीः ॥ २८ ॥ साक्षिणं जगतां तस्यामावाह्य विधिवद्यजेत् ॥ ततः षडंगामाराध्य दिक्ष्वष्टांगं प्रपूजयेत् ॥ २९ ॥ संपूज्य मध्ये वादित्यं रविं भानुं च भास्करम् ॥ सूर्यं दिशासु सद्यादिपंच ह्रस्वादिकानिमान् ॥ ३० ॥ स्वस्वनामादिवर्णाद्याः शक्तयोऽर्च्या विदिक्षु च ॥ उषां प्रज्ञां प्रभां संध्यां ततो ब्रह्मादिकान्यजेत् ॥ ३१ ॥ पुरतोऽरुणमभ्यर्च्य सोमं ज्ञं च गुरुं भृगुम् ॥ दिक्ष्वर्यमादिकानिष्ट्वा भूमिजं च शनैश्चरम् ॥ ३२ ॥ राहुं केतुं च कोणेषु पूर्ववत्परिपूजयेत् ॥ इंद्राद्यानपि वज्राद्यान्पूजयेत्पूर्ववत्सुधीः ॥ ३३ ॥ इत्थं संपूज्य विधिवद्भास्करं भक्तवत्सलम् ॥ समाहितो दिनेशाय दद्यादर्घ्यं दिने दिने॥३४॥ प्राणानायम्य सद्भूमौ न्यासान्कृत्वा पुरोदितान्॥विधाय मंडलं भानोः पीठं पूर्ववदर्चयेत् ॥ ३५॥ ध्यात्वार्कं प्रयजेद्दिव्यैर्मानसैरुपचारकैः ॥ पात्रं ताम्रमयं प्रस्थतोयग्राहि सुशोभनम् ॥ ३६ ॥ निधाय मंडले रक्तचंदनादिविनिर्मिते ॥ विलोममातृकामूलमुच्चरन्पूरयेज्जलैः ॥ ३७ ॥ सूर्यबिंबविनिर्गच्छत्सुधांबुधिविभावितैः ॥ कुंकुमं रोचनां राजीं चंदनं रक्तचंदनम् ॥ ३८ ॥ करवीरं जपाशालिकुशश्यामाकतंडुलान् ॥ तिलवेणुयवांश्चैव निक्षिपेत्सलिले शुभे ॥ ३९ ॥ सांगं सावरणं तत्रावाह्यार्कं पूर्ववद्यजेत् ॥ गंधपुष्पधूपदीपनैवेद्याद्यैर्विधानतः ॥ ४० ॥ प्राणायामत्रयं कृत्वा कुर्यादंगानि पूर्ववत् ॥ सुधाबीजं चंदनेन दक्षे करतले लिखेत् ॥ ४१ ॥ तेनाच्छाद्यार्घ्यपात्रं च जपेन्म

नुमनन्यधीः ॥ अष्टोत्तरशतावृत्त्या पुनः संपूज्य भास्करम् ॥ ४२ ॥ हस्ताभ्यां पात्रमादाय जानुभ्यामवनीं गतः ॥ आमूर्ध्नि पात्रमुद्धृत्यांवरेण वरणे रवेः ॥ ४३ ॥ दृष्टिं चाधाय मनसा पूजयित्वा रविं पुनः ॥ साधकेन स्वकैक्येन मूलमंत्रं धिया जपन् ॥ ४४ ॥ अर्घ्यं दद्याद्रविं ध्याय न्रक्तचंदनमंडले ॥ दत्त्वा पुष्पांजलिं भूयो जपेदष्टोत्तरं शतम् ॥४५॥ नित्यं वा तद्दिनेऽप्येवमर्घ्यं दद्याद्विवस्वते ॥ तेन तुष्टो दिनेशोऽस्मै दद्याद्वित्तं यशः सुखम् ॥ ४६ ॥ पुत्रान्पौत्रानभीष्टं च यद्यत्सर्वं प्रयच्छति ॥ अर्घ्यदानमिदं प्रोक्तमायुरारोग्यवर्द्धनम् ॥ ४७ ॥ धनधान्यपशुक्षेमक्षेत्रमित्रकलत्रदम् ॥ तेजोवीर्ययशःकीर्तिविद्याविभवभोगदम् ॥४८॥ गायत्र्याराधनासक्तः संध्यावंदनतत्परः ॥ एवं मनुं जपन्विप्रो दुःखं नैवाप्नुयात्क्वचित् ॥ ॥४९॥विकर्तनाय निर्माल्यमेवं संपूज्य दापयेत्॥वियद्वह्निमरुत्साद्यांतावींसेंदुसमन्वितम्॥५०॥मार्तंडभैरवाख्यं हि बीजं त्रैलोक्यमोहनम्॥ विनवीजेन पुटितं सर्वकामफलप्रदम्॥५१॥पूर्ववत्सकलं चान्यदत्र ज्ञेयं मनीषिभिः॥भृगुर्जलेंदुमन्वाढ्यः सोमाय हृदयांतिमः॥५२॥षडक्षरो मंत्रराजो मुनिरस्य भृगुर्मतः ॥ छंदः पंक्तिस्तु सोमोऽस्य देवता परिकीर्तिता ॥ ५३ ॥ आद्यं बीजं नमः शक्तिर्विनियोगोऽखिलाप्तये ॥ षड्दीर्घेण स्वबीजेन षडंगानि समाचरेत् ॥ ५४ ॥ पूर्णेंद्वास्यं स्फटिकभं नीलालककलसन्मुखम् ॥ बिभ्राणमिष्टं कुमुदं ध्यायेन्मुक्तास्रजं विधुम् ॥ ५५ ॥ ऋतुलक्षं जपेन्मंत्रं पायसेन ससर्पिषा ॥ जुहुयात्तद्दशांशेन पीठे सोमांतपूजिते ॥ ५६ ॥ मूर्तिंमूलेन संकल्प्य पूजयेद्विधिवद्विधुम् ॥ केसरेष्वंगपूजा स्यात्पत्रे श्वेताश्च शक्तयः ॥ ५७ ॥ रोहिणी कृत्तिका चैव रेवती भरणी पुरः ॥ रात्रिरार्द्रा ततो ज्योत्स्ना कला हारसमप्रभा ॥ ५८ ॥ सुशुक्लमाल्यवसना मुक्ताहारविभूषिताः ॥ सर्वास्स्तनभराक्रांता रचितांजलयः शुभाः ॥ ५९ ॥ स्वप्रियासक्तमनसो मदविभ्रममंथराः॥समभ्यर्च्याः सरोजाक्ष्यः पूर्णेंदुसदृशाननाः ॥ ६० ॥ दलाग्रेषु समभ्यर्च्यास्त्वष्टौ सूर्यादिका ग्रहाः ॥ आदित्यभूसुतबुधमंदर्देवेज्यराहवः ॥ ६१॥ शुक्रकेतुयुता ह्येते पूज्याः परिग्रगा ग्रहाः ॥ रक्तारुणश्वेतनीलपीतधूम्रसिताऽसिताः ॥६२॥ वामोरुन्यस्ततद्धस्ता दक्षिणेन धृताभयाः॥ लोकपालांस्तदस्त्राणि तद्बाह्ये पूजयेत्सुधीः॥ ॥ ६३ ॥ एवं संसाधितो मंत्रः प्रयच्छेदिष्टमात्मनः ॥ पौर्णमास्यां जिताहारो दद्यादर्घ्यं विधूदये ॥ ६४ ॥ मंडलत्रितयं कुर्यात्प्राक्प्रत्यगायतं भुवि ॥ पश्चिमे मंडले स्थित्वा पूजाद्रव्यं च मध्यमे ॥ ६५ ॥ संस्थाप्य सोममन्यस्मिन्मंडलेऽब्जसमन्विते ॥ समभ्यर्च्य विधानेन पीठपूजनपूर्वकम् ॥ ६६ ॥ स्थापयेद्राजतं पात्रं पुरतस्तत्र मंत्रवित् ॥ सुरभीपयसापूर्य्य तं स्पृशन्प्रजपेन्मनुम् ॥ ६७ ॥ अष्टोत्तरशतं पश्चाद्दिया मंत्रेण मंत्रवित् ॥ दद्यान्निशाकरायार्घ्यं सर्वाभीष्टार्थसिद्धये ॥ ६८ ॥ कुर्यादनेन विधिना प्रतिमासमतंद्रितः ॥वर्षांतरेण सर्वं प्राप्नोति सुधि

मानवः ॥ ६९ ॥ विद्ये विद्यामालिनि स्यादंत चंद्रिणि ततवदेत् ॥ चंद्रमुखि द्विठांतोऽयं विद्यामंत्र उदाहृतः ॥ ७० ॥ एवं कुमुदिनीनाथमंत्रं यो जपति ध्रुवम् ॥ धनं धान्यं सुतान्पौत्रान्सौभाग्यं लभतेऽचिरात्॥ ७१ ॥अथांगारकमंत्रं तु वक्ष्ये धनसुतप्रदम् ॥ तारो दीर्घेंदुयुग्व्योम तदेवेंदुयुतः पुनः ॥ ॥७२ ॥ षांतः सर्गी च चंडीशौ क्रमादिंदुविसर्गिणौ ॥ षडर्णोऽयं महामंत्रो मंगलस्याखिलेष्टदः ॥ ७३ ॥ विरूपाक्षो मुनिश्छंदो गायत्रं देवता कुजः॥ मंत्रार्णैः षड्भिरंगानि कुर्वन्ध्यायेद्धरात्मजम् ॥ ७४ ॥ मेषस्थं रक्तवस्त्रांगं शूलशक्तिगदावरान् ॥ करैर्बिभ्राणमीशानस्वेदजं भूसुतं स्मरेत् ॥ ७५ ॥ रसलक्षं जपेन्मंत्रं दशांशं खदिरोद्भवैः ॥ समिद्भिर्जुहुयादग्नौ शैवे पीठे यजेत्कुजम् ॥ ७६ ॥ प्रागंगानि समाराध्य ह्येकविंशतिकोष्ठकम् ॥ मंगलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः ॥ ७७ ॥ स्थिरासनो महाकायः सर्वकर्मावरोधकः ॥ लोहितो लोहिताक्षश्च सामगानां कृपाकरः ॥ ७८ ॥ धरात्मजः कुजो भौमो भूमिदो भूमिनंदनः ॥ अंगारको महीसूनुः सर्वरोगापहारकः ॥ ७९ ॥ वृष्टिकर्ता वृष्टिहर्ता सर्वकार्यार्थसिद्धिदः ॥ इत्येकविंशतिः प्रोक्ता मूर्तयो भूसुतस्य वै ॥ ८० ॥ मंगलादीन्यजेन्मंत्री स्वस्वस्थानस्थितान्क्रमात् ॥ इंद्राद्यानपि वज्रादीनेवं सिद्धो भवेन्मनुः ॥ ८१ ॥ सुतकामा कुरंगाक्षी भौमव्रतमुपाचरेत् ॥ मार्गशीर्षेऽथ वैशाखे व्रतारंभः प्रशस्यते ॥ ८२ ॥ अरुणोदयवेलायामुत्थायावश्यकं पुनः ॥ विनिर्वर्त्य रदान्धावेदपामार्गेण वाग्यता ॥ ८३ ॥ स्नात्वा रक्तांबरधरा रक्तमाल्यविलेपना ॥ नैवेद्यादींश्च संभारान्रक्तान्सर्वान्प्रकल्पयेत् ॥ ॥ ८४ ॥ योग्यं विप्रं समाहूय कुजमर्चेत्तदाज्ञया ॥ रक्तगोगोमयालिप्तभूमौ रक्तासने विशेत् ॥ ८५ ॥ आचम्य देशकालौ च स्मृत्वा काम्यं समुच्चरन् ॥ मङ्गलादीनि नामानि स्वकीयांगेषु विन्यसेत् ॥ ८६ ॥ मुखे प्रविन्यसेत्साध्वी सामगानां कृपाकरम् ॥ धरात्मजं नसोरक्ष्णोः कुजं भौमं ललाटके ॥ ८७ ॥ भूमिदं तु भ्रुवोर्मध्ये मस्तके भूमिनन्दनम् ॥ अङ्गारकं शिखायां च सर्वांगे च महीसुतम् ॥ ॥ ८८ ॥ बाहुद्वये न्यसेत्पश्चात्सर्वरोगापहारकम् ॥ मूर्द्धादि वृष्टिकर्तारमापादांतं न्यसेत्सुधीः ॥ ८९ ॥ विन्यसेद्वृष्टिहर्तारं मूर्द्धांतं चरणादितः ॥ न्यसेदंते ततो दिक्षु सर्वकार्यार्थसिद्धिदम् ॥ ९० ॥ नाभौ हृदि शिरस्यारं वक्रे भूमिजमेव च ॥ विन्यस्यैवं निजे देहे ध्यायेत्प्राग्वद्धरात्मजम् ॥ ॥ ९१ ॥ मानसैरुपचारैश्च संपूज्यार्घ्यं निधापयेत् ॥ एकविंशतिकोष्ठाढ्ये त्रिकोणे ताम्रपत्रगे ॥ ९२ ॥ आवाह्याङ्गारकं तत्र रक्तपुष्पादिभिर्यजेत् ॥ अङ्गानि पूर्वमाराध्य मङ्गलादीन्प्रपूजयेत् ॥ ९३ ॥ एकविंशतिकोष्ठेषु चक्रमारं च भूमिजम् ॥ त्रिकोणेषु च सम्पूज्य बहिरष्टौ च मातृकाः ॥ ९४ ॥ इंद्रादीनथ वज्रादीन्बाह्ये संपूजयेत्पुनः ॥ धूपदीपौ समर्प्याथ गोधूमान्नं निवेदयेत् ॥ ९५ ॥ ताम्रपात्रे शुद्धतोयपूरिते

हु.आ.पु. रक्तचंदनम् ॥ रक्तपुष्पाक्षतफलान्याक्षिप्याघ्यं समर्पयेत् ॥ मंगलाय ततो मंत्री इदं मंत्रद्वयं पठेत् ॥ ९६ ॥ भूमिपुत्र महातेजः स्वेदोद्भव पू०खं०
पिनाकिनः ॥ सुतार्थिनी प्रपन्ना त्वां गृहाणार्घ्यं नमोऽस्तु ते ॥ ९७ ॥ रक्तप्रवालसंकाश जपाकुसुमसन्निभ ॥ महीसुत महाभाग गृहाणार्घ्यं
॥ ३० ॥ नमोऽस्तु ते ॥ ९८ ॥ एकविंशतिपूर्वोक्तैर्नमोभिस्तैश्च नामभिः ॥ ताराद्यैः प्रणमेत्पश्चात्तावत्यश्च प्रदक्षिणाः ॥ ९९ ॥ धरणीगर्भसंभूतं विद्युत्तेजः अ० ६९
समप्रभम् ॥ कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥ १०० ॥ ततो रेखात्रयं कुर्यात्खदिरांगारकेण च ॥ मार्जयेद्वामपादेन
मंत्राभ्यां च समाहिता ॥ १०१ ॥ दुःखदौर्भाग्यनाशाय पुत्रसंतानहेतवे ॥ कृतरेखात्रयं वामपादेनैतत्प्रमार्ज्म्यहम् ॥ १०२ ॥ ऋणदुः
खविनाशाय मनोभीष्टार्थसिद्धिये ॥ मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः ॥ १०३ ॥ स्तुवीत धरणीपुत्रं पुष्पांजलिकरा ततः ॥
ध्यायंती तत्पदांभोजं पूजासांगत्वसिद्धये ॥ १०४॥ ऋणहर्त्रे नमस्तुभ्यं दुःखदारिद्र्यनाशिने ॥ सौभाग्यसुखदो नित्यं भव मे धरणीसुत ॥ १०५॥
तप्तकांचनसंकाश तरुणार्कसमप्रभ ॥ सुखसौभाग्यधनद ऋणदारिद्र्यनाशक ॥ १०६ ॥ ग्रहराज नमस्तेऽस्तु सर्वकल्याणकारक ॥ प्रसादं
कुरु देवेश सर्वकल्याणभाजन ॥१०७॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः ॥ आप्नुवन्ति शिवं सर्वे सदा पूर्णमनोरथाः ॥१०८॥ आचिरादेव लोके
ऽस्मिन्यस्याराधनतो जनाः ॥ प्राप्नुवन्ति सुखं तस्मै नमो धरणिसूनवे ॥१०९॥ यो वक्रगतिमापन्नो नृणां दुखं प्रयच्छति ॥ पूजितः सुखसौभाग्यं
तस्मै क्ष्मासूनवे नमः ॥ ११० ॥ नभसि द्योतमानाय सर्वकल्याणहेतवे ॥ मङ्गलाय नमस्तुभ्यं धनसंतानहेतवे ॥ १११ ॥ प्रसादं कुरु मे भौम
मंगलप्रद मंगल ॥ मेषवाहन रुद्रात्मन्देहि पुत्रान्धनं यशः ॥ ११२ ॥ एवं स्तुत्वा प्रणम्याथ विसृज्य धरणीसुतम् ॥ यथाशक्त्या प्रदाय स्वं गृह्णी
याद्ब्राह्मणाशिषः ॥ ११३ ॥ गुरवे दक्षिणां दत्त्वा भुञ्जीयात्तन्निवेदितम् ॥ ११४ ॥ एवमावत्सरं कुर्यात्प्रतिमंगलवासरम् ॥ तिलैर्होमं विधायाथ
शतार्द्धं भोजयेद्द्विजान् ॥ ११५॥ भौममूर्तिं स्वर्णमयीमाचार्याय समर्पयेत् ॥ मंडलस्थे घटेऽभ्यर्च्येत्सुतसौभाग्यसिद्धये॥११६॥ एवं व्रतपरा नारी
प्राप्नुयात्सुभगान्सुतान् ॥ ऋणनाशाय वित्तार्थं व्रतं कुर्यात्पुमानपि ॥ ११७ ॥ ब्राह्मणः प्रजपेन्मन्त्रमग्निर्मूर्द्धेति वैदिकम् ॥ अंगारकस्य गायत्रीं
वक्ष्ये यजनसिद्धये ॥ ११८॥अंगारकाय शब्दांते विद्महे पदमीरयेत् ॥ शक्तिहस्ताय वर्णांते धीमहीति समुच्चरेत् ॥ ११९ ॥ तन्नो भौमः प्रचोदयाद् ॥१२०॥
न्दयादिति च संवदेत् ॥भौमस्यैषा तु गायत्री जन्तुः सर्वेष्टसिद्धिदा ॥१२०॥ भौमोपासनमेतद्धि बुधमन्त्रमथोच्यते॥फांतः कर्णेन्दुसंयुक्तो बुधो
द्वंतिमः॥१२१॥रमाणां [illegible]

ऽखिलाप्तये ॥वंदे बुधं सदा भक्त्या पीताम्बरविभूषणम् ॥ १२३ ॥ जानुस्थवामहस्ताढ्यं साभयेतरपाणिकम् ॥ ध्यात्वैवं प्रजपेसहस्रं विजितेंद्रियः ॥ १२४ ॥ दशांशं जुहुयादाज्यैः पीठे पूर्वोदितेऽर्चयेत् ॥ अङ्गमातृदिशापालहेतिभिर्बुधमर्चयेत् ॥ १२५ ॥ एवं सिद्धे मनौ मंत्री साधयेत्स्वमनोरथान् ॥ सहस्रं प्रजपेन्मंत्रं नित्यं दशदिनावधि ॥ १२६ ॥ तस्याशु ग्रहजा पीडा नश्यत्येव न संशयः ॥ बुधस्याराधनं प्रोक्तं गुरोराराधनं शृणु ॥ १२७ ॥ बृहस्पतिपदं ङेऽतं सेंद्वाद्यर्णाघमंडितम् ॥ नमोंतो वसुवर्णोऽयं मुनिर्ब्रह्मास्य संमतः ॥ १२८ ॥ छन्दोऽनुष्टुप्सुराचार्यो देवता बीजमादिमम् ॥ हृच्छक्तिर्दीर्घवह्नींदुयुगलेनांगकल्पना ॥१२९ ॥ न्यस्तवामकरं राशौ रत्नानां दक्षिणात्करात् ॥किरंतं पीतपुष्पालंकारालेपांशुकार्चितम्॥१३०॥सर्वविद्यानिधिं देवगुरुं स्वर्णद्युतिं स्मरेत् ॥ लक्षं जपो दशांशेन घृतेनान्नेन वा हुनेत् ॥ १३१ ॥ धर्मादिपीठे प्रयजेदंगदिक्पालहेतिभिः॥एवं सिद्धे मनौ मंत्री साधयेदिष्टमात्मनः॥१३२॥विषरोगादिपीडासु कलहे स्वजनोद्भवे॥पिप्पलोत्थसमिद्भिश्च जुहुयात्तन्निवृत्तये॥१३३॥हुत्वा दिनत्रयं मन्त्री निशापुष्पैर्घृतप्लुतैः॥स विंशतिशतं शीघ्रं वासांसि लभते महीम्॥१३४॥गुरोराराधनं प्रोक्तं शृणु शुक्रस्य सांप्रतम्॥ वस्त्रं मे देहि शुक्राय ठद्वयांतो ध्रुवादिकः॥१३५॥रुद्रार्णोऽयं मनुर्ब्रह्मा मुनिश्छन्दो विराडुत॥दैत्येज्यो देवता बीजं ध्रुवः शक्तिर्वसुप्रिया॥१३६॥भूनेत्रचन्द्रनेत्राग्निनेत्रार्णैः स्यात्षडंगकम् ॥शुक्लांबरालेपभूषं करेण ददतं धनम् ॥ १३७ ॥वामेन शुक्रं व्याख्यानमुद्रादोषं स्मरेत्सुधीः॥ अयुतं प्रजपेन्मन्त्रं दशांशं जुहुयाद् घृतैः॥१३८ ॥ धर्मादिपीठे प्रयजेदंगेंद्रादितदायुधैः ॥ श्वेतपुष्पैः सुगंधैश्च जुहुयाद् भृगुवासरे ॥१३९ ॥ एकविंशतिवारं यो लभते सोंऽशुकं मणीन् ॥ मनवोऽमी सदा गोप्या न देया यस्य कस्यचित् ॥ १४० ॥ भक्तियुक्ताय शिष्याय देया वा निजसूनवे ॥ १४१ ॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे मन्त्रविधाननिरूपणं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

सनत्कुमार उवाच ॥ अथ वक्ष्ये महाविष्णोर्मन्त्रान्लोकेषु दुर्लभान् ॥ यान्प्राप्य मानवास्तूर्णं प्राप्नुवंति निजेप्सितम् ॥ १ ॥ येषामुच्चारणेनैव पापसंघः प्रलीयते ॥ ब्रह्मादयोऽपि यान्ज्ञात्वा समर्थाः स्युर्जगत्कृतौ ॥ २ ॥ तारहृत्पूर्वकं ङेंतं नारायणपदं भवेत् ॥ अष्टाक्षरो मनुश्चास्य साध्यो नारायणो मुनिः ॥ ३ ॥ छन्दः प्रोक्तं च गायत्री देवता विष्णुरव्ययः ॥ ॐ बीजं यं च तथा शक्तिर्विनियोगोऽखिलाप्तये ॥ ४ ॥ क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ॥ वीरोल्काय शिखा प्रोक्ता द्युल्काय कवचं मतम् ॥ ५ ॥ महोल्कायेति चास्त्रं स्यादित्थं पंचांगकल्पना ॥ पुनः षडंगमंत्रोत्थैः षड्वर्णैश्च समाचरेत् ॥ ६ ॥ अवशिष्टौ न्यसेत्कुक्षिपृष्ठयोर्मंत्रवर्णकौ ॥ सुदर्शनस्य मंत्रेण कुर्याद्दिग्बन्धनं ततः ॥ ७ ॥





तारो नमश्चतुर्थ्यंतं सुदर्शनपदं वदेत् ॥ अस्त्रायफडिति प्रोक्तो मंत्रो द्वादशवर्णवान् ॥ ८॥ दशावृत्तिमय न्यासं वक्ष्ये विभूतिपञ्जरम् ॥ मूला
र्णान्स्वतनौ न्यस्येदाधारे हृदये मुखे ॥ ९ ॥ दोःपन्मूलेषु नासायां प्रथमावृत्तिरीरिता ॥ गले नाभौ हृदि कुचपार्श्वपृष्ठेषु तत्पराः ॥ १० ॥
मूर्द्धास्यनेत्रश्रवणघ्राणेषु च तृतीयकाः ॥ दोःपादसंध्यंगुलिषु वेदावृत्त्या च विन्यसेत् ॥ ११ ॥ धातुप्राणेषु हृदये विन्यसेत्तदनंतरम् ॥ शिरोनेत्रा
स्यहृत्कुक्षिसोरुजंघापदद्वये ॥ १२ ॥ एकैकशो न्यसेद्वर्णान्मंत्रस्य क्रमतः सुधीः ॥ न्यसेद्धृदंसोरुपदेष्वर्णान्वेदमितान्मनोः ॥ १३ ॥ चक्रशं
खगदांभोजपदेषु स्वस्वमुद्रया ॥ शेषांश्च न्यासवर्योऽयं विभूतिपञ्जराभिधः ॥ १४ ॥ न्यसेन्मूलार्णमेकैकं सचंद्रं तारसम्पुटम् ॥ अथवा वै
नमोंतेन न्यसेदित्यपरे जगुः ॥ १५ ॥ तत्त्वन्यासं ततः कुर्याद्विष्णुभावप्रसिद्धये ॥ अष्टार्णोऽष्टप्रकृत्यात्मा गदितः पूर्वसूरिभिः॥१६॥पृथिव्यादीनि
भूतानि ततोऽहंकारमेव च ॥ महांश्च प्रकृतिश्चेवेत्यष्टौ प्रकृतयो मताः ॥ १७ ॥ पादे लिंगे हृदि मुखे मूर्ध्नि वक्षसि हृत्स्थले ॥ सर्वांगे व्यापकं
कुर्यादेकेन साधकोत्तमः ॥ १८ ॥ मंत्रार्णहृत्परायाद्यमात्मने हृदयांतिमम् ॥ तत्तन्नाम समुच्चार्य्य न्यसेत्तत्तत्स्थले बुधः ॥ १९ ॥ अयं तत्त्वाभिधो
न्यासः सर्वन्यासोत्तमोत्तमः ॥ मूर्तीर्न्यसेद्द्वादश वै द्वादशादित्यसंयुताः ॥ २० ॥ द्वादशाक्षरवर्णाद्या द्वादशादित्यसंयुताः ॥ अष्टार्णोऽयं मनुश्चा
ष्टप्रकृत्यात्मा समीरितः॥२१॥ तासामात्मचतुष्कस्य योगादर्काक्षरो भवेत् ॥ ललाटकुक्षिहृत्कंठदक्षपार्श्वांसकेषु च ॥ २२ ॥ गले च वामपार्श्वां
सगलपृष्ठेष्वनंतरम् ॥ ककुद्यपि न्यसेन्म[illegible] मूर्तीर्द्वादश वै क्रमात्॥२३॥धात्रा तु केशवं न्यस्यार्यम्ण नारायणं पुनः ॥ मित्रेण माधवं न्यस्य गोविंदं
वरुणेन च॥२४॥विष्णुं चैवांशुना युक्तं भगेन मधुसूदनम् ॥न्यसेद्विवस्वता युक्तं त्रिविक्रममतः परम्॥२५॥वामनं च तथद्रेण पूष्णा श्रीधरमेव च॥
हृषीकेशं न्यसेत्पश्चात्पर्जन्येन समन्वितम्॥ २६ ॥ त्वष्ट्रा युतं पद्मनाभं दामोदरं च विष्णुना ॥ द्वादशार्णं ततो मंत्रं समस्तं शिरसि न्यसेत्॥२७ ॥
व्यापकं विन्यसेत्पश्चात्किरीटमनुना सुधीः ॥ ध्रुवः किरीटकेयूरहारांते मकरेतिच॥२८ ॥ कुंडलांते चक्रशंखगदांतेंऽभोजहस्ततः ॥ पीतांबरांते श्रीवत्सां
कितवक्षःस्थलेति च॥२९॥श्रीभूमिसहितस्वात्मज्योतिर्द्वयमतः परम् ॥ वदेद्दीप्तिकरायांते सहस्रादित्यतेजसे ॥३०॥ नमोंतो बाणपक्ष्वर्णैः किरीटमनु
रीरितः॥एवं न्यासविधिं कृत्वा ध्यायेन्नारायणं विभुम् ॥३१॥उद्यत्कोट्यर्कसदृशं शंखं चक्रं गदांबुजम् ॥दधतं च करैर्भूमिश्रीभ्यां पार्श्वद्वयांचितम्
॥३२ ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ हारकेयूरवलयांगदं पीतांवरं स्मरेत् ॥३३॥वर्णलक्षं जपेन्मंत्रं विधिवन्नियतेंद्रियः ॥ प्रथमेन तु
लक्षेण स्वात्मशुद्धिर्भवेद् ध्रुवम् ॥३४॥लक्षद्वयजपेनाथ मंत्रशुद्धिमवाप्नुयात् ॥ लक्षत्रयेण जप्तेन स्वर्लोकमधिगच्छति ॥ ३५॥विष्णोः समीपमाप्नोति

वेदलक्षजपान्नरः ॥ तथा च निर्मलं ज्ञानं पंचलक्षजपाद्भवेत् ॥ ३६ ॥ लक्षषट्केन चाप्नोति मंत्री विष्णौ स्थिरां मतिम् ॥ सप्तलक्षजपान्मंत्री विष्णोः सारूप्यमाप्नुयात् ॥ ३७ ॥ अष्टलक्षं जपेन्मंत्री निर्वाणमधिगच्छति ॥ एवं जप्त्वा ततः प्राज्ञो दशांशं सरसीरुहैः॥३८॥ मधुराक्तैः प्रजुहुयात्संस्कृते हव्यवाहने ॥ मंडूकात्परतत्वांतं पीठे संपूज्य यत्नतः ॥ ३९ ॥ विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परा ॥ प्रह्वी सत्या तथेशानानुग्रहा नवमी मता ॥४० ॥ तारो नमो भगवते विष्णवे सर्वभू ततः ॥ तात्मने वासुदेवाय सर्वात्मेति पदं वदेत् ॥४१ ॥ संयोगयोगपद्मांते पीठाय हृदयांतिमः ॥ षट्त्रिंशदक्षरः पीठमंत्रोऽनेनासनं दिशेत् ॥ ४२ ॥ मूर्तिं संकल्प्य मूलेन तस्यामावाह्य पूजयेत् ॥ आदौ चांगानि संपूज्य मंत्राणां केशरेषु च ॥४३॥ प्रागादिदिग्दले वासुदेवं संकर्षणं तथा ॥ प्रद्युम्नमनिरुद्धं च शक्तीः कोणेष्वथार्चयेत् ॥ ४४ ॥ शांतिं श्रियं सरस्वत्या रतिं संपूजयेत्क्रमात् ॥ हेम पीततमालेंद्रनीलाभाः पीतवाससः ॥ ४५ ॥ चतुर्भुजाः शंखचक्रगदांभोजधरा इमे ॥ सितकांचनगोदुग्धदूर्वात्रर्णाश्च शक्तयः ॥ ४६ ॥ दलाग्रेषु चक्रशंखगदापंकजकौस्तुभान् ॥ पूजयेन्मुसलं खड्गं वनमालां यथाक्रमात् ॥ ४७ ॥ रक्ताजपीतकनकश्यामकृष्णासितार्जुनान् ॥ कुंकुमाभं समभ्यर्च्येद्दहिरग्रे खगेश्वरम् ॥ ४८ ॥ पार्श्वयोः पूजयेत्पश्चाच्छंखपद्मनिधी क्रमात् ॥ मुक्तामाणिक्यसंकाशौ पश्चिमे ध्वजमर्चयेत् ॥ ४९ ॥ रक्तं विघ्नं तथाग्नेये श्याममार्यं च राक्षसे ॥ दुर्गां श्यामां वायुकोणे सेनान्यं पीतमैश्वरे ॥ ५० ॥ लोकेशानायुधैर्युक्तान्बहिः संपूजयेत्सुधीः ॥ एवमावरणैर्युक्तं योऽर्चयेद्विष्णुमव्ययम् ॥ ५१ ॥ भुक्त्वेह सकलान्भोगानंते विष्णुपदं व्रजेत् ॥ क्षेत्रधान्यसुवर्णानां प्राप्तये धरणीं स्मरेत् ॥ ५२ ॥ देवीं दूर्वादलश्यामां दधानां शालिमंजरीम् ॥ चिंतयेद्भारतीं देवीं वीणापुस्तकधारिणीम् ॥ ५३ ॥ दक्षिणे देवदेवस्य पूर्णचंद्रनिभाननाम् ॥ क्षीराब्धिफेनपुंजाभे वसानां श्वेतवाससी ॥ ५४॥ भारत्या सहितं यो वै ध्यायेद्देवं परात्परम् ॥ वेदवेदार्थतत्त्वज्ञो जायते सर्ववित्तमः ॥ ५५ ॥ नारसिंहमिवात्मानं देवं ध्यात्वातिभैरवम् ॥ शस्त्रं संमंत्र्य मंत्रेण शत्रून्हत्वा निवर्तते ॥ ५६ ॥ नारसिंहेन बीजेन मंत्रं संयोज्य साधकः ॥ शतमष्टोत्तरं जप्त्वा वामहस्ताभिमंत्रिताः ॥ ५७ ॥ पुनः पुनरपः सिंचेत्सर्पदष्टोऽपि जीवति ॥ गारुडेन च संयोज्य पंचार्णेन जपेत्तदा ॥ ५८ ॥ निर्विषीकरणे ध्यायेद्विष्णुं गरुडवाहनम् ॥ अशोकफलके तार्क्ष्यमालिख्याशोकसंहतौ ॥ ५९ ॥ अशोकपुष्पैः संपूज्य भगवंतं तदग्रतः ॥ जुहुयात्तानि पुष्पाणि त्रिसंध्यं सप्तपत्रकम् ॥ ६० ॥ प्रत्यक्षो जायते पक्षी वरमिष्टं प्रयच्छति ॥ गाणपत्येन संयोज्य जपेल्लक्षं पयोव्रतः ॥ ६१ ॥ महागणपतिं देवं प्रत्यक्षमिह पश्यति ॥ वाणीबीजेन संयुक्तं षण्मासं योजयेन्नरः ॥ ६२ ॥ महाकविवरो



भूत्वा मोहयेत्सकलं जगत् ॥ हुत्वा गुडूचीशकलान्यर्द्धांगुलमितानि च ॥ ६३ ॥ दधिमध्वाज्ययुक्तानि मृत्युं जयति साधकः ॥ शनैश्चर
दिने सम्यक् स्पृष्ट्वाश्वत्थं च पाणिना ॥ ६४ ॥ जप्त्वा चाष्टशतं युद्धे ह्यपमृत्युं जयत्यसौ ॥ पञ्चविंशतिधा जप्त्वा नित्यं प्रातः पिबेज्जलम् ॥
॥ ६५ ॥ सर्वपापविनिर्मुक्तो ज्ञानवान् रोगवर्जितः ॥ कुंभं संस्थाप्य विधिवदापूर्य शुद्धवारिणा ॥ ६६ ॥ जप्त्वायुतं ततस्तेनाभिषेकः
सर्वरोगनुत् ॥ चंद्रसूर्योपरागे तु ह्युपोष्याष्टसहस्रकम् ॥ ६७ ॥ स्पृष्ट्वा ब्राह्मीघृतं जप्त्वा पिबेत्साधकसत्तमः ॥ मेधां कवित्वं वाक्सिद्धिं लभते
नात्र संशयः ॥ ६८ ॥ जुहुयादयुतं विल्वैर्महाधनपतिर्भवेत् ॥ नारायणस्य मन्त्रोऽयं सर्वमंत्रोत्तमोत्तमः ॥ ६९ ॥ आलयः सर्वसिद्धीनां कथितस्तव
नारद ॥ नारायणाय शब्दांते विद्महे पदमीरयेत् ॥ ७० ॥ वासुदेवपदं ङेंतं धीमहीति ततो वदेत् ॥ तन्नो विष्णुः प्रचोवर्णान्संवदेच्चोदयादिति ॥ ७१ ॥
एषोक्ता विष्णुगायत्री सर्वपापप्रणाशिनी ॥ तारो हृद्भगवान् ङेंतो वासुदेवाय कीर्तितः ॥ ७२ ॥ द्वादशार्णो महामन्त्रो भुक्तिमुक्तिप्रदायकः ॥ स्त्रीशू
द्राणां वितारोऽयं सतारस्तु द्विजन्मनाम् ॥ ७३ ॥ प्रजापतिर्मुनिश्चास्य गायत्री छन्द ईरितः ॥ देवता वासुदेवस्तु बीजं शक्तिर्ध्रुवश्च हृत् ॥ ७४ ॥
चन्द्राक्षिवेदपञ्चार्णैः समस्तेनांगकल्पनम् ॥ मूर्ध्नि भाले दृशोरास्ये गले दोर्हृदये पुनः ॥ ७५ ॥ कुक्षौ नाभौ ध्वजे जानुद्वये पादद्वये तथा ॥ न्यसे
त्क्रमान् मन्त्रवर्णान्सृष्टिन्यासोऽयमीरितः ॥ ७६ ॥ हृदादिमस्तकांतं तु स्थितिन्यासं प्रचक्षते ॥ पादादारभ्य मूर्द्धांनं न्यासं संहारकं विदुः ॥ ७७ ॥
तत्त्वन्यासं ततः कुर्यात्सर्वतंत्रेषु गोपितम् ॥ जीवं प्राणं तथा चित्तं हृत्पद्मं सूर्यमण्डलम् ॥ ७८ ॥ चन्द्राग्निमण्डले चैव वासुदेवं ततः परम् ॥ संकर्षणं च
प्रद्युम्नमनिरुद्धं ततः परम् ॥ ७९ ॥ नारायणं चक्रमतस्तत्त्वानि द्वादशैव तु ॥ मूलार्णहृत्परायाद्यमात्मने हृदयांतिमम् ॥ ८० ॥ तत्त्वे नाम
समुच्चार्य्य न्यसेन्मूर्द्धादिषु क्रमात् ॥ पूर्वोक्तं ध्यानमत्रापि भानुलक्षजपो मनोः ॥ ८१ ॥ तद्दशांशं तिलैराज्यलोलितैर्हवनं च रेत् ॥ पीठे पूर्वोदिते
मन्त्री मूर्तिं संकल्प्य मूलतः ॥ ८२ ॥ तस्यामावाह्य देवेऽंग वासुदेवं प्रपूजयेत् ॥ अङ्गानि पूर्वमभ्यर्च्य वासुदेवादिकास्ततः ॥ ८३ ॥
शांत्यादिशक्तयः पूज्याः प्राग्वदिक्षु विदिक्षु च ॥ तृतीयावरणे पूज्याः प्रोक्ता द्वादश मूर्तयः ॥ ८४ ॥ इंद्राद्यानायुधैर्युक्तान् पूजयेद्धरणीगृहे ॥
एवमावरणैरिष्ट्वा पञ्चभिर्विष्णुमव्ययम् ॥ ८५ ॥ प्राप्नुयात्सकलानर्थानन्ते विष्णुपदे व्रजेत् ॥ पुरुषोत्तमसंज्ञस्य विष्णोर्भेदचतुष्टयम् ॥ ८६ ॥
त्रैलोक्यमोहनस्तेषां प्रथमः परिकीर्तितः ॥ श्रीकरश्च हृषीकेशः कृष्णश्चात्र चतुर्थकः ॥ ८७ ॥ तारः कामो रमा पश्चात् ङेंतः स्यात्पुरुषो
त्तमः ॥ वर्मास्त्राण्यग्निप्रियांतो मन्त्रो वह्नीन्दुवर्णवान् ॥ ८८ ॥ ब्रह्मा मुनिः स्याद्गायत्री छन्दः प्रोक्तोऽथ देवता ॥ पुरुषोत्तममंत्रोऽस्य बीजशक्ती

स्मरेदिरे ॥ ८९ ॥ भूचंद्रैकरसाक्ष्यक्षिमंत्रवर्णैर्विभागतः ॥ कृत्वांगानि ततो ध्यायेद्विधिवत्पुरुषोत्तमम् ॥ ९० ॥ समुद्यदादित्यनिभं शंखचक्रगदांबुजैः ॥लसत्करं पीतवस्त्रं स्मरेच्छ्रीपुरुषोत्तमम् ॥९१॥ महारत्नौघखचितस्फुरत्तोरणमंडपे॥ मौक्तिकौघशमदमविराजितवितानके ॥ ९२ ॥ नृत्यद्देवांगनावृंदक्वणत्किंकिणिनूपुरे ॥ लसन्माणिक्यवेद्यां तु दीप्तार्कायुततेजसि ॥ ९३ ॥ वृंदारकव्रातकिरीटाग्ररत्नाभिचर्चिते ॥ नवलक्षं जपेन्मंत्रं जुहुयात्तद्दशांशतः ॥ ९४ ॥ उत्फुल्लैः कमलैः पीठे पूर्वोक्ते वैष्णवेऽर्चयेत् ॥ एवमाराध्य देवेशं प्राप्नोति महतीं श्रियम् ॥ ९५॥ पुत्रान्पौत्रान्यशः कीर्तिं भुक्तिं मुक्तिं च विंदति ॥ उत्तिष्ठेति पदं पश्चाच्छ्रीकराग्निप्रियांतिमः ॥ ९६ ॥ अष्टार्णोऽस्य मुनिर्व्यासः पंक्तिश्छंद उदाहृतम् ॥ श्रीकागरव्यो हरिः प्रोक्तो देवता सकलेष्टदः ॥ ९७ ॥ भीषयद्वितयं हृत्स्यात् त्रासयद्वितयं शिरः ॥ शिखा प्रमर्दयद्वंद्वं वर्म प्रध्वंसयद्वयम् ॥ ९८ ॥ अस्त्रं रक्षद्वयं सर्वे हुमंताः समुदीरिताः ॥ मस्तके नेत्रयोः कंठे हृदये नाभिदेशके ॥ ९९ ॥ ऊरूजंघांघ्रियुग्मेषु मंत्रवर्णान्क्रमान्न्यसेत् ॥ ततः पुरुषसूक्तोक्तमंत्रैर्न्यासं समाचरेत् ॥१००॥ मुखे न्यसेद्ब्राह्मणोऽस्य मुखमासीदिमं मनुम् ॥ बाहुयुग्मे तथा बाहूराजन्य इति विन्यसेत् ॥ १०१ ॥ ऊरू तदस्य यद्वैश्य इममूरुद्वये न्यसेत् ॥ न्यसेत्पादद्वये मंत्री पद्भ्यां शूद्रो अजायत ॥ १०२ ॥ चक्रं शंखं गदां पद्मं कराग्रेष्वथ विन्यसेत् ॥ एवं न्यासविधिं कृत्वा ध्यायेत्पूर्वोक्तमण्डपे॥ १०३॥ अरुणाब्जासनस्थस्य तार्क्ष्यस्योपरि संस्थितम्॥पूर्वोक्तरूपिणं देवं श्रीकरं लोकमोहनम् ॥ १०४॥ ध्यात्वैवं पूजयेदष्टलक्षं मंत्री दशांशतः॥ रक्तांबुजैः समिद्भिश्च विल्वक्षीरिद्रुमोद्भवैः॥ १०५॥पयोऽन्नैः सर्पिषा हुत्वा प्रत्येकं सुसमाहितः॥ अश्वत्थोदुंबरप्लक्षवटाः क्षीरिद्रुमाः स्मृता ॥१०६ ॥ पूजयेद्वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥ अंगावरणदिक्पालहेतिभिः सहितं विभुम् ॥१०७ ॥ इत्थं सिद्धे मनौ मंत्री प्रयोगान्पूर्ववच्चरेत् ॥ तारो हृद्भगवान् ङेंतो वराहेति ततः परम् ॥ १०८ ॥ रूपाय भूर्भुवः स्वः स्याल्लोहितकामिका च ये॥ भूपतित्वं च मे देहि ददापय शुचिप्रिया ॥ १०९ !! रामाग्निवर्णो मंत्रोऽयं भार्गवोऽस्य मुनिर्मतः॥छन्दोऽनुष्टुब्देवतादिवराहः समुदीरितः॥ ११० ॥ एकदंष्ट्राय हृदयं व्योमोल्काय शिरः स्मृतम् ॥ शिखा तेजोऽधिपतये विश्वरूपाय वर्म च ॥ १११ ॥ महादंष्ट्राय चास्त्रं स्यात्पञ्चांगमिति कल्पयेत्॥ अथवा गिरिषट्सप्तबाणैर्वसुभिरक्षरैः ॥ ११२ ॥ विभक्तैर्मंत्रवर्यस्य पञ्चांगानि प्रकल्पयेत् ॥ ततो ध्यायेदनेकार्कनिभमादिवराहकम् ॥ ११३ ॥ आं ह्रीं स्वर्णनिभं जान्वोरधो नाभेः सितप्रभम् ॥ इष्टाभीतिगदाशंखचक्रशक्त्यसिखेटकान् ॥ ११४ ॥ दधतं च करैर्दंष्ट्राग्रलसद्धरणिं स्मरेत ॥ एवं ध्यात्वा जपेल्लक्षं दशांशं सरसीरुहैः ॥ ११५ ॥ मध्वक्तैर्जुहयात्पीठे पूर्वोक्ते वैष्णवे यजेत्॥मूलेन मूर्तिं सङ्कल्प्य तस्यां सम्पूजयेद्विभुम्॥११६॥





अङ्गावरणदिक्पालहेतियंत्रप्रसिद्धये ॥ जपादेवावनिं दद्याद्धनं धान्यं महीं श्रियम् ॥ ११७ ॥ सिंहार्के सितपक्षस्याष्टम्यां गव्येषु पञ्चसु ॥
शिलां शुद्धां विनिक्षिप्य स्पृष्ट्वा तामयुतं जपेत् ॥ ११८ ॥ उदङ्मुखस्ततो मंत्री तां शिलां निखनेद्भुवि ॥ भूतप्रेताहिचौरादिकृतां बाधां
निवारयेत् ॥ ११९ ॥ प्रातर्भृगुदिने साध्यभूतलान्मृदमाहरेत् ॥ मंत्रितां मूलमंत्रेण विभजेत्तां त्रिधा पुनः ॥ १२० ॥ चुल्ह्यामेकं समालिप्याप्यपरं
पाकभाजने ॥ गोदुग्धे परमालोड्य शोधितांस्तंदुलान् क्षिपेत् ॥ १२१ ॥ सम्यक् शुद्धे शुचिः केशे जपन्मंत्रं पचेच्चरुम् ॥ अवतार्य चरुं पश्चाद्वह्नौ
देयं यथाविधि ॥ १२२ ॥ सम्पूज्य धूपदीपाद्यैः पश्चादाज्यप्लुतं चरुम् ॥ जुहुयात्संस्कृते वह्नौ अष्टोत्तरशतं सुधीः ॥ १२३ ॥ एवं प्रजुहुयान्मंत्री
कविवारेषु सप्तसु ॥ विरोधो नश्यति क्षेत्रे शत्रुचौराद्युपद्रवाः ॥ १२४ ॥ भानूदयेऽप्यारवारे साध्यक्षेत्रान्मृदं पुनः ॥ आदाय पूर्वविधिना हविरपाद्य
पूर्ववत् ॥ १२५ ॥ जुहुयादेधिते वह्नौ पूर्वसंख्याकमादरात् ॥ एवं स सप्तारवारेषु जुहुयात्क्षेत्रसिद्धये ॥ १२६ ॥ जुहुयाल्लक्षसंख्याकं गव्यै
श्चैव सपायसैः ॥ अभीष्टभूम्याधिपत्यं लभते नात्र संशयः ॥ १२७ ॥ उद्यद्दोः परिघं दिव्यं सितदंष्ट्राग्रभूधरम् ॥ स्वर्णाभं पार्थिवे पीते
मंडले सुसमाहितः ॥ १२८ ॥ ध्यात्वाप्नोति महीं रम्यां वराहस्य प्रसादतः ॥ वारुणे मण्डले ध्यायेद्वाराहं हिमसन्निभम् ॥ १२९ ॥ महोप
द्रवशांतिः स्यात्साधकस्य न संशयः ॥ वश्यार्थं च सदा ध्यायेद्वह्न्याभं वह्निमण्ले ॥ १३० ॥ ध्यायेदेवं रिपूच्चाटे कृष्णाभं वायुमण्डले ॥
ह्यमण्डलगतं स्वच्छं वाराहं सर्वसिद्धिदम् ॥ १३१ ॥ शत्रुभूतग्रहक्ष्वेडामयपीडादिशांतये ॥ भगवर्धीशयुतं व्योमबिंदुभूपितमस्तकम् ॥ १३२ ॥
एकाक्षरो वराहस्य मन्त्रः कल्पद्रुमोऽपरः ॥ पूजाद्यर्घ्यादिकं सर्वमस्या पूर्वोक्तवच्चरेत् ॥ १३३ ॥ सवामकर्णानिद्रास्याद्वराहाय हृदंतिमः ॥
ताराद्यो वसुवर्णोऽयं सर्वैश्वर्यप्रदायकः ॥ १३४ ॥ ब्रह्मा मुनिः स्याद्गायत्री छन्दो वाराहसंज्ञकः ॥ देवश्चंद्रैर्द्वाग्धिनेत्रैः सर्वेणांगक्रिया मता ॥
॥१३५॥ध्यानपूजाप्रयोगादि प्राग्वदस्यापि कल्पयेत् ॥ प्रणवादौ च ङेन्तं च भगवतीति पदं ततः॥ धरणिद्वितयं पश्चाद्धरेर्द्वयमुदीरयेत॥ १३६ ॥
एकोनविंशत्यर्णाढ्यो मन्त्रो वह्निप्रियांतिमः ॥ वराहोऽस्य मुनिश्छन्दो गायत्री निवृदादिका ॥१३७॥ देवता धरणी वीजं तारःशक्तिर्वसुप्रिया॥
रामवेदाग्निबाणाक्षिनेत्रार्णैरंगकल्पनम् ॥ १३८ ॥ श्यामां चित्रविभूषाढ्यां पद्मस्थां तुंगसुस्तनीम् ॥नीलांबुजद्वयं शालिमंजरींच शुकं करैः॥१३९॥
दधतीं चित्रवसनां धरां भगवतीं स्मरेत् ॥ एवं ध्यात्वा जपेल्लक्षं दशांशं पायसेन तु ॥ १४० ॥ साज्येन जुहुयान्मन्त्री विष्णोः पीठे समर्चयेत् ॥
मूर्तिं संकल्प्य मूलेन तस्यां वसुमतीं यजेत् ॥१४१॥अङ्गानि पूर्वमाराध्य भूवह्निजलमारुतान॥दिक्पाग्रेपन सम्पूज्य कोणाग्रेष [illegible]

निवृत्तिश्च प्रतिष्ठा च विद्यानां तैश्च तत्कलाः ॥ इंद्राद्यानपि वज्रादीन्पूजयेत्तदनंतरम् ॥ १ त्सद्ध मनो मंत्री साधयेदिष्टमात्मनः ॥ धरणीं
प्रभजन्नेवं पशुरत्नांबरादिभिः ॥ १४४ ॥ धरण्या वल्लभः स स्यात्सुखी जीवेच्छतं लोक्यमोहनो मंत्रो जगन्नाथस्य कीर्त्यते ॥ १४५ ॥
तारः कामो रमा बीजं हृदंते पुरुषोत्तमः ॥ श्रीकंठः प्रतिरूपांते लक्ष्मीति च निवार्ि च ॥ १४६ ॥ सकलांते जगत्पश्चात्क्षोभणेति पदं वदेत् ॥
सर्वस्त्रीहृदयांते तु विदारणपदं वदेत् ॥ १४७ ॥ ततस्त्रिभुवनांतं तु मदोन्मादकरेति च ॥ सुरासुरांते मनुजसुंदरीजनवर्णतः ॥ १४८ ॥ मनांसि
तापयद्वंद्वं दीपयद्वितयं ततः ॥ शोषयद्वितयं पश्चान्मारयद्वितयं ततः ॥ १४९ ॥ स्तंभयद्वितयं भूयो मोहयद्वितय ततः ॥ द्रावयद्वितयं
तावदाकर्षययुगं ततः ॥ १५० ॥ समस्तपरमो येन सुभगेन च संयुतम् ॥ सर्वसौभाग्यशब्दांते करसर्वपदं वदेत् ॥ १५१ ॥ कामप्रदादमुन्ब्रह्म
सेंदुर्हनुयुगं ततः ॥ चक्रेण गदया पश्चात्खड्गेन तदनंतरम् ॥ १५२ ॥ सर्वत्राणैर्भेदियुगं पाशेनांते कटद्वयम् ॥ अंकुशेनेनि संप्रोच्य ताडय
द्वितयं पुनः ॥ १५३ ॥ कुरुशब्दद्वयमथो किं तिष्ठसि पदं वदेत् ॥ तावद्यावत्पदस्यांते समाहितमनंतरम् ॥ ततो मे सिद्धिगभास्य
भवमन्ते च वर्म फट् ॥ १५४ ॥ हृदंतोऽयं महामंत्रो द्विशतार्णः समीरितः ॥ जैमिनिर्मुनिरस्योक्तश्छंदश्चामितमीरितम् ॥ १५५॥ देवता जगतां
मोहे जगन्नाथः प्रकीर्तितः ॥ कामो बीजं रमा शक्तिर्विनियोगोऽखिलाप्तये ॥१५६॥ पुरुषोत्तमत्रिभुवनोन्मादकांतेऽग्निवर्म च ॥ हृदयं कीर्तितं
पश्चाज्जगत्क्षोभणशब्दतः ॥ १५७ ॥ लक्ष्मीदयितवर्मान्तः शिरः प्रोक्तं शिखा पुनः ॥ मन्मथो तमशब्दांते मंगजे पदमीरयेत् ॥ १५८ ॥ काम
दायेति हुं प्रोच्य न्यसेद्धम ततः परम् ॥ परमांते भृगुकर्णाभ्यां च सर्वपदं ततः ॥ १५९ ॥ सौभाग्यकरवर्मांते कवचं परिकीर्तितम् ॥ सुरासुरांते
मनुजसुंदरीति पदं वदेत् ॥ १६० ॥ हृदयांते विद्धा पश्चाद्व्रणसर्वपदं वदेत् ॥ ततः प्रहरणधरसर्वकामुकतत्पदम् ॥ १६१ ॥ हनयुग्मं च हृदयं वंध
नानि ततो वदेत् ॥ आकर्षयद्वयं पश्चान्महाबलपदं ततः ॥ १६२ ॥ वर्म चास्त्रं समाख्यातं नेत्रं स्यात्तदनंतरम् ॥ वदेत्त्रिभुवनं पश्चाच्चर सर्वजनेति
च ॥ १६३ ॥ मनांसि हरयुग्मांते दारयद्वितयं च मे ॥ वशमानय वर्मांते नेत्रमंत्रः समीरितः ॥ १६४ ॥ षडंगमंत्रास्ताराद्याः फट्नमोंताः प्रकी
र्तिताः ॥ तारस्त्रैलोक्यशब्दांते मोहनेति पदं वदेत् ॥ १६५ ॥ हृषीकेशेति संप्रोच्याप्रतिरूपादिशब्दतः ॥ मन्मथानंतरं सर्वस्त्रीणां हृदयमीरयेत्
॥ १६६ ॥ आकर्षणपदा गच्छदागच्छहृदयांतिमः ॥ अनेन व्यापकं कृत्वा जगन्नाथं स्मरेव् सुधीः॥१६७॥ क्षीराब्धेस्तु तटे रम्यं सुरद्रुमलतांचितम् ॥
उद्यदर्कांशुजालाभं स्वधाम्नोज्वालदिङ्मुखम् ॥ १६८ ॥ प्रसूनावलिसौरभ्यमाद्यन्मधुकरारवम् ॥ दिव्यवातोच्चलत्कंजपरागोद्धूलितांबरम् ॥ १६९ ॥

स्वर्वधूगीतमाधुर्याभिराम चिंतयेद्वनम् ॥ तदंतर्मणिसम्पत्तिस्फुरत्तोरणमण्डपे ॥ १७० ॥ विलसन्मौक्तिकोद्दामदामराजद्वितानके ॥ मणिवेद्यादि
वियत्किरीटाग्रसमर्चिते ॥ १७१ ॥ दिव्यसिंहासने विप्र समासीनं स्मरेद्विभुम् ॥ शंखपाशेषु चापानि मुसलं नंदकं गदाम् ॥ १७२ ॥
अंकुशं दधतं दोर्भिः श्लिष्टे कमलयोरसि ॥ पश्यत्यंकस्थयांभोजश्रिया रागोल्लसद्दृशा ॥ १७३ ॥ ध्यात्वैवं प्रजपेल्लक्षचतुष्कं तद्दशांशतः ॥ कुंडे
ऽर्द्धचंद्रे पद्मैर्वा जातीपुष्पैश्च होमयेत् ॥ १७४ ॥यागभूमिं तथात्मानं यागोपकरणं तथा ॥ पूजयिष्यन् जगन्नाथं गायत्र्या प्रोक्षयेद्बुधः ॥ १७५ ॥
त्रैलोक्यमोहनायांते विद्महे पदमीरयेत् ॥ स्मराय धीमहीत्युक्त्वा तन्नो विष्णुः प्रचोदयात् ॥१७६॥ गायत्र्येषा समाख्याता सर्वशुद्धिकरी परा ॥ कल्प
येदासनं पीठे पूर्वोक्ते वैष्णवे सुधीः ॥ १७७ ॥ पक्षिराजाय ठद्वंद्वं पीठमंत्रोऽयमीरितः ॥ मूर्तिं संकल्पमूलेन तस्यामावाहयेदतः ॥ १७८ ॥ व्यापक
न्यासमंत्रेण ततः सम्पूज्य भक्तितः ॥ श्रीवत्सहृदयं तेन श्रीवत्सं स्तनयोर्यजेत् ॥ १७९ ॥ कौस्तुभाय हृदंतेन यजेद्वक्षसि कौस्तुभम् ॥ पूजयेद्वनमा
लायै हृदंतेन गले च ताम् ॥ १८० ॥ कर्णिकायां ततोऽभ्यर्च्येद्विधिवच्चांगदेवताः ॥ दलेषु पूजयेत्पश्चाल्लक्ष्म्याद्यावृतचामराः ॥ १८१ ॥ वन्धूककुसु
माभासाःमुक्ताहारलसत्कुचाः॥ उत्फुल्लांभोजनयना मदविभ्रममंथराः ॥ १८२ ॥ लक्ष्मी सरस्वती चैव धृतिःप्रीतिस्ततः परम् ॥ कांतिः शांतिस्तु
ष्टिपुष्टिबीजाद्या ङेनमोंतिकाः ॥ १८३ ॥ भृगुः खड्गाशचन्द्राढ्यो देव्या बीजमुदाहृतम् ॥ ह्रस्वत्रयक्लीबसर्वरहितस्वरसंयुतम् ॥ १८४ ॥ देव्या बीज
क्रमादासामादौ च विनियोजयेत्॥दलाग्रेषु यजेच्छंखं शार्ङ्गं चक्रमसिं गदाम् ॥ १८५ ॥ अंकुशं मुसलं पाशं स्वमुद्रामनुभिः पृथक् ॥महाजलचर
यांते वर्मास्त्रं वह्निवल्लभा॥ १८६ ॥पांचजन्याय ताराद्यो नमोंतः शंखपूजने॥ शार्ङ्गाय सशयांते च वर्मास्त्रं वह्निवल्लभा ॥ १८७ ॥ शार्ङ्गाय हृदयं
मन्त्रो महाद्यः शार्ङ्गपूजने ॥ सुदर्शनमहांते तु चक्रराजपदं वदेत् ॥ १८८ ॥ हययुग्मं सर्वदुष्टभयमन्ते कुरुद्वयम्॥छिंधिद्वयं ततः पश्चाद्विदारययुग्मं
ततः ॥ १८९ ॥ परमन्त्रान् ग्रसद्वन्द्वं भक्षयद्वितयं पुनः ॥भूतानि त्रासयद्वंद्वं वर्मफड्वह्निसुंदरी ॥ १९० ॥ सुदर्शनाय हृदयं प्रोक्तश्चक्रार्चने मनुः ॥
महाखड्गतीक्ष्णपदाच्छिधियुग्मं समीरयेत ॥ १९१ ॥ हुं फट् स्वाहा च खड्गाय नमः खड्गार्चने मनुः ॥ महाकौमोदकीत्यन्ते वदेच्चैव महाबले ॥
॥ १९२ ॥ सर्वासुरांतके पश्चात्प्रसीदयुगलेति च ॥ वर्मास्त्रवह्निजायांतकौमोदकि [illegible]तिमः ॥ १९३ ॥ कौमोदक्यर्चने प्रोक्तो मन्त्रः सर्वार्थसा ॥ १४४ ॥
धकः ॥ महांकुशपदात्कुट्टयुग्मं हुंफट्वसुप्रिया ॥ १९४॥ अंकुशाय नमः प्रोक्तो मन्त्र[illegible]र्चने ॥संवर्तकमहांते तु मुसलेति पदं वदेत् ॥ १९५ ॥
योधयद्वितयं वर्म फडंते वह्निसुंदरी॥ मुसलाय नमः प्रोक्तो मन्त्रो मुसलपूजने॥१९६॥महापाश[illegible]यमाकर्षयद्वयम्॥हुं फट् स्वाहा च पाशाय

284

नमः पाशार्चने मनुः ॥ १९७ ॥ ताराद्या मनवो ह्येते ततः शकादिकान्यजेत् ॥ १९८ ॥ वज्राद्यानपि संपूज्य सर्वसिद्धीश्वरो भवेत् ॥ मासमात्रं तु
कुसुमैः पूजयित्वा हयारिजैः ॥ १९९ ॥ कुमुदैर्वा प्रजुहुयादष्टोत्तरसहस्रकम् ॥ मासमात्रेण वश्यास्स्युरतस्य सर्वे नृपोत्तमाः ॥ २०० ॥ यस्य नाम
युतं मंत्रं जपेदयुतसंख्यया ॥ स भवेद्दासवत्सद्यो मंत्रस्यास्य प्रभावतः ॥ २०१ ॥ बहुना किमिहोक्तेन मनुनानेन साधकः॥साधयेत्सकलान्कामा
न्विष्णुतुल्यो न संशयः॥२०२॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे सप्ततितमोऽध्यायः॥७०॥सनत्कुमार उवाच॥ शृणु नारद
वक्ष्यामि दिव्यान्नरहरेर्मनून्॥यान्समाराध्य ब्रह्माद्याश्चकुः सृष्ट्यादि कर्म वै॥१॥ संवर्तकश्चंद्रमौलिर्मनुर्वह्निविभूषितः॥एकाक्षरः स्मृतो मंत्रो भजतां सुर
पादपः ॥२॥ मुनिरत्रिश्च जगती छंदो बुद्धिमतां वर ॥ देवता नृहरिः प्रोक्तो विनियोगोऽखिलाप्तये ॥ ३ ॥ क्षं बीजं शक्तिरी प्रोक्ता षड्दीर्घेण षडंग
कम् ॥ अर्केन्दुवह्निनयनं शरदिंदुरुचं करैः ॥ ४ ॥ धनुश्चक्राभयवरान्दधतं नृहरिं स्मरेत् ॥ लक्षं जपस्तद्दशांशहोमश्च घृतपायसैः ॥ ५ ॥यजेत्पीठे
वैष्णवे तु केसरेष्वंगपूजनम् ॥ खगेशं शंकरं शेषं शतानन्दं दिगालिषु ॥६॥ श्रियं ह्रियं धृतिं पुष्टिं कोणपत्रेषु पूजयेत् ॥ दंतच्छदेषु नृहरींस्तावतः
पूजयेत्क्रमात् ॥ ७ ॥ कृष्णो रुद्रो महाघोरो भीमो भीषण उज्ज्वलः॥करालो विकरालश्च दैत्यांतो मधुसूदनः ॥ ८ ॥ रक्ताक्षः पिंगलाक्षश्चांजनो
दीप्तरुचिस्तथा ॥ सुघोरकश्च सुहनुर्विश्वको राक्षसांतकः ॥ ९ ॥ विशालको धूम्रकेशो हयग्रीवो घनस्वनः ॥ मेघवर्णः कुंभकर्णः कृतांततीव्रतेज
सौ ॥ १० ॥ अग्निवर्णो महोग्रश्च ततो विश्वविभूषणः ॥ विघ्नक्षमो महासेनः सिंहा द्वात्रिंशदीरिताः ॥ ११ ॥ तद्बहिः प्रार्चयेद्विद्वाँल्लोकपालान्सहेति
कान् ॥ एवं सिद्धे मनौ मन्त्री साधयेदखिलेप्सितान् ॥ १२ ॥ विष्णुः प्रद्युम्नयुक् शार्ङ्गी साग्निर्वीरं महांस्ततः ॥ विष्णुं ज्वलंतं भृग्वीशो
जलं पद्मासनं ततः ॥ १३ ॥ हरिस्तु वासुदेवाय वैकुंठो विष्णुसंयुतः ॥ गदी सेंदुनृसिंहं च भीषणं भद्रमेव च ॥ १४ ॥ मृत्युमृत्युं
ततः शौरिर्भानोर्नारायणान्वितः ॥ नृहरेर्द्वात्रिंशदर्णोऽयं मन्त्रः साम्राज्यदायकः ॥ १५ ॥ ब्रह्मा मुनिस्तु गायत्री छंदोऽनुष्टुबुदाहृतम् ॥
देवता नृहरिश्चास्य सर्वेष्टफलदायकः ॥ १६ ॥ हं बीजं इं तथा शक्तिर्विनियोगोऽखिलाप्तये ॥ वेदैश्चतुर्भिर्वसुभिः षड्भिः षड्भिर्युगाक्षरैः ॥ १७ ॥
षडंगानि विधायाथ मूर्ध्नि भाले च नेत्रयोः ॥ मुखबाह्वंघ्रिसंध्यग्रेष्वथ कुक्षौ तथा हृदि ॥ १८ ॥ गले पार्श्वद्वये पृष्ठे ककुद्यर्णान्मनूद्भवान् ॥
प्रणवांतरितान् कृत्वा न्यसेत्साधकसत्तमः ॥ १९ ॥ नृसिंहसांनिध्यकरो न्यासो दशविधो यथा ॥ करांघ्र्याद्यंगुलीषु पृथगाद्यंतपर्वणोः २०॥ ॥
सर्वांगुलीषु विन्यस्यावशिष्टं तलयोर्न्यसेत् ॥ शिरोललाटे भ्रूमध्ये नेत्रयोः कर्णयोस्तथा ॥ २१ ॥ कपोलकर्णमूले च चिबुकोर्द्ध्वाधरोष्ठके ॥





कण्ठे घोणे च भुजयोर्हृत्तनौ नाभिमण्डले ॥ २२ ॥ दक्षान्यदोस्तले कट्यां मेढ्रोर्वोर्जानुजंघयोः ॥ गुल्फे पादकरांगुल्योः सर्वसन्धिषु रोमसु ॥
॥२३॥ रक्तास्थिमज्जासु तनौ न्यसेद्वर्णान्विचक्षणः ॥ वर्णान्पदे गुल्फजानुकटिनाभिहृदि स्थले ॥२४॥ बाह्वोः कंठे च चिबुके चौष्ठे गण्डे प्रविन्य
सेत् ॥ कर्णयोर्वदने नासापुटे नेत्रे च मूर्द्धनि ॥ २५ ॥ पदानि तु मुखे मूर्ध्नि नसि चक्षुषि कर्णयोः ॥ आस्ये च हृदय नाभौ पादान्सर्वांगके
न्यसेत् ॥२६॥ अर्द्धद्वयं न्यसेन्मूर्ध्नि आहृत्पादात्तदंगकम् ॥ उग्रादीनि पदानीह मृत्युमृत्युं नमाम्यहम् ॥ २७ ॥ इत्यंतान्यास्यकघ्राणचक्षुःश्रोत्रेषु
पक्ष्मसु ॥ हृदि नाभौ च कट्यादिपादांतं नवसु न्यसेत् ॥२८॥ वीराद्यानपि तान्येव यथापूर्वं प्रविन्यसेत् ॥ नृसिंहाद्यानि तान्येव पूर्ववद्विन्यसे
त्सुधीः ॥ २९ ॥ चंद्राग्निवेदषड्रामनेत्रदिग्बाहुभूमितान् ॥ विभक्तान्मंत्रवर्णांश्च क्रमात्स्थानेषु विन्यसेत् ॥ ३० ॥ मूले मूलाच्च नाभ्यंतं नाभ्यादि
हृदयावधि ॥ हृदयाद्भ्रूयुगांतं तु नेत्रत्रये च मस्तके ॥ ३१ ॥ बाह्वोरंगुलिषु प्राणमूर्द्धादि चरणावधि ॥ विन्यसेन्नामतो धीमान्हरिन्यासोऽय
मीरितः ॥ ३२ ॥ न्यासस्यास्य तु माहात्म्यं जानात्येको हरिः स्वयम् ॥ एवं न्यासविधिं कृत्वा ध्यायेच्च नृहरिं हृदि ॥ ३३ ॥ गलासक्तलसद्बाहु
स्पृष्टकेशोऽब्जचक्रधृक् ॥ नखाग्रभिन्नदैत्येशो ज्वालामालासमन्वितः ॥ ३४ ॥ दीप्तजिह्वस्त्रिनयनो दंष्ट्रोग्रं वदनं वहन् ॥ नृसिंहोऽस्मान्सदा पातु
स्थलांबुगगनोपगः ॥३५॥ ध्यात्वैवं दर्शयेन्मुद्रां नृसिंहस्य महात्मनः ॥ जानुमध्यगतौ कृत्वा चिबुकोष्ठौ समावुभौ॥३६॥ हस्तौ च भूमिसंलग्नौ
कंपमानः पुनःपुनः ॥ मुखं विजृंभितं कृत्वा लेलिहानां च जिह्विकाम् ॥ ३७ ॥ एषा मुद्रा नारसिंही प्रधानेति प्रकीर्तिता ॥ वामस्यांगुष्ठतो बद्ध्वा
कनिष्ठामंगलीत्रयम् ॥ ३८॥ त्रिशूलवत् संमुखोर्द्ध्वं कुर्यान्मुद्रां नृसिंहगाम् ॥ अंगुष्ठाभ्यां च करयोस्तथाऽऽक्रम्य कनिष्ठके ॥ ३९ ॥ अधोमुखाभिः
शिष्टाभिः शेषाभिर्नृहरौ ततः॥हस्तावधोमुखौ कृत्वा नाभिदेशे प्रसार्य च ॥ ४० ॥ तर्जनीभ्यां नयेत्स्कंधौ प्रोक्ता चांत्रणमुद्रिका ॥ हस्तावूर्द्ध्वमुखौ
कृत्वा तले संयोज्य मध्यमे ॥ ४१॥ अनामायां तु वामायां दक्षिणां तु विनिक्षिपेत् ॥ तर्जन्यौ पृष्टतो लग्नौ अंगुष्ठौ तर्जनीश्रितौ॥ ४२ ॥चक्रमुद्रा
भवेदेषा नृहरेः संनिधौ मता ॥ चक्रमुद्रा तथा कृत्वा तर्जनीभ्यां तु मध्यमे ॥ ४३ ॥ पीडयेदंष्ट्रमुद्रैषा सर्वपापप्रणाशिनी ॥ एता मुद्रा नृसिंहस्य
सर्वमंत्रेषु संमताः ॥ ४४ ॥ वर्णलक्षं जपेन्मंत्रं तद्दशांशं च पायसैः ॥ घृताक्तैर्जुहुयाद्वह्नौ पीठे पूर्वोदितेऽर्चयेत् ॥ ४५ ॥ अंगान्यादौ समाराध्य
दिक्पत्रेषु यजेत्पुनः ॥ गरुडादीन् श्रीमुखांश्च विदिक्षु लोकपान्बहिः ॥४६॥ एवं संसाधितो मंत्रः सर्वान्कामान्प्रपूरयेत ॥ सौम्ये कार्ये स्मरेत्सौम्यं
क्रूरं क्रूरे स्मरेद्बुधः ॥ ४७ ॥ पूर्वमृत्युपदे शत्रोर्नाम कृत्वा स्वयं हरिः ॥ निशितैर्नखदंष्ट्राग्रैः खाद्यमानं च संस्मरेत् ॥ ४८ ॥ अष्टोत्तरशतं नित्यं

जपेन्मन्त्रमतंद्रितः ॥ जायत मण्डलादर्वाक् शत्रुर्वै शमनातिथिः ॥४९॥ध्यानभेदानथो वक्ष्ये सर्वसिद्धिप्रदायकान्॥ श्रीकामः सततं ध्यायेत्पूर्वोक्तं नृहरिं सितम् ॥ ५० ॥ वामांकस्थितया लक्ष्म्यालिंगितं पद्महस्तया ॥ विषमृत्यूपरोगादिसर्वोपद्रवनाशनम् ॥ ५१ ॥ नरसिंहं महाभीमं कालानलसमप्रभम् ॥ आंत्रमालाधरं रौद्रं कण्ठहारेण भूषितम्॥५२॥ नागयज्ञोपवीतं च पञ्चाननसुशोभितम्॥ चन्द्रमौलिं नीलकण्ठं प्रतिवक्त्रं त्रिनेत्रकम् ॥ ॥ ५३ ॥ भुजैः परिघसंकाशैर्दशभिश्चोपशोभितम् ॥ अक्षसूत्रं गदापद्मं शंखं गोक्षीरसन्निभम् ॥ ५४॥ धनुश्च मुशलं चैव बिभ्राणं चक्रमुत्तमम्॥ खड्गं शूलं च बाणं च नृहरिं रुद्ररूपिणम् ॥५५॥ इन्द्रगोपाभनीलाभं चन्द्राभं स्वर्णसन्निभम् ॥ पूर्वादि चोत्तरं यावदूर्ध्वास्यं सर्ववर्णकम् ॥५६॥ एवं ध्यात्वा जपेन्मंत्री सर्वव्याधिविमुक्तये ॥ सर्वमृत्युहरं दिव्य स्मरणात्सर्वसिद्धिदम्॥५७॥ध्यायेद्यदा महत्कर्म तदा षोडशहस्तवान् ॥ नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः ॥ ५८ ॥ द्वौ विदारणकर्माप्तौ द्वौ चांत्रोद्धरणान्वितौ ॥ शङ्खचक्रधरौ द्वौ तु द्वौ च बाणधनुर्द्धरौ॥५९॥खड्गखेटधरौ द्वौ च द्वौ गदापद्मधारिणौ ॥ पाशांकुशधरौ द्वौ च द्वौ रिपोर्मुकुटार्पितौ ॥ ६० ॥ इति षोडशदोर्दंडमण्डितं नृहरिं विभुम्॥ध्यायेन्नारद नीलाभमुग्रकर्मण्यनन्यधीः ॥ ६१ ॥ ध्येयो महत्तमे कार्ये द्वात्रिंशद्धस्तवान्बुधैः ॥ नृसिंहः सर्वभूतेशः सर्वसिद्धिकरः परः॥ ६२ ॥ दक्षिणे चक्रपद्मे च परशुं पाशमेव च ॥ हलं च मुशलं चैव अभयं चांकुशं तथा ॥ ६३ ॥ पट्टिशं भिंदिपालं च खड्गमुद्गरतोमरान् ॥ वामभागे करैः शंङ्खं खेटं पाशं च शूलकम् ॥६४॥ अग्निं च वरदं शक्तिं कुंडिकां च ततः परम् ॥ कार्मुकं तर्जनीमुद्रां गदां डमरुशूर्पकौ ॥ ६५ ॥ द्वाभ्यां कराभ्यां च रिपोर्जानुमस्तकपीडनम् ॥ ऊर्द्ध्वीकृताभ्यां बाहुभ्यां आंत्रमालाधरं विभुम् ॥६६॥अधःस्थिताभ्यां बाहुभ्यां हिरण्यकविदारणम्॥प्रियंकरं च भक्तानां दैत्यानां च भयंकरम्॥ ६७ ॥ नृसिंहं तं स्मरेदित्थं महामृत्युभयापहम्॥एवं ध्यात्वा जपेन्मन्त्री सर्वकार्यार्थसिद्धये॥६८॥ अथोच्यते ध्यानमन्यन्मुखरोगहरं शुभम् ॥ स्वर्णवर्णसुपर्णस्थं विद्युन्मालासटान्वितम् ॥६९॥ कोटिपूर्णेन्दुवर्णं च सुमुखं त्र्यक्षिवीक्षणम् ॥पीतवस्त्रोरुभूषाढ्यं नृसिंहं शान्तविग्रहम्॥ चक्रशंखाभयवरान्दधतं करपल्लवैः॥७०॥क्ष्वेडरोगादिशमनं स्वैर्ध्यानैः सुखंदितम्॥ शत्रोः सेनानिरोधेन यत्नं कुर्याच्च साधकम् ॥७१ ॥ अक्षकाष्ठेरेधितेऽग्नौ विचिंत्य रिपुमर्दनम् ॥ देवं नृसिंहं संपूज्य कुसुमाद्युपचारकैः॥७२॥ समूलमूलैर्जुहुयाच्छरैर्दशशतं पृथक् ॥ रिपुं खादन्निव जपेन्निर्दहन्निव तं क्षिपेत् ॥७३॥हुत्वा सप्तदिनं मन्त्री सेनामिष्टां महीपतेः॥प्रस्थापयेच्छुभे लग्ने परराष्ट्रजयेच्छया॥७४॥तस्याः पुरस्तान्नृहरिं निघ्नन्तं रिपुमण्डलम्॥ स्मृत्वा जपं प्रकुर्वीत यावदायाति सा पुनः॥७५॥निर्जित्य निखिलाञ्छत्रून्सह वीरश्रियासुखात्॥प्रीणयेन्मान्त्रिणं राजा विभवैः प्रीतमानसः ॥७६॥



गजाश्वरथरत्नैश्च ग्रामक्षेत्रधनादिभिः॥यदि मन्त्री न तुष्येत तदानर्थो महीपतेः॥७७। जायते तस्य राष्ट्रेषु प्राणेभ्योऽपि महाभयम् ॥ अष्टोत्तरशत
मूलमन्त्रमंत्रितभस्मना ॥ ७८ ॥ नाशयेन्मूषिकालूतावृश्चिकाद्युत्थितं विषम् ॥ लिप्तांगः सर्वरोगैश्च मुच्यते नात्र संशयः ॥७९॥ सेवंतीकुसुमैर्हुत्वा
महतीं श्रियमाप्नुयात् ॥ औदुम्बरसमिद्भिस्तु भवेद्धान्यसमृद्धिमान्॥ ८० ॥ अपूपलक्षहोमे तु भवेद्वैश्रवणोपमः ॥ कुद्धस्य सन्निधौ राज्ञो जपेदष्टो
त्तरं शतम्॥८१॥सद्यो नैर्मल्यमाप्नोति प्रसादं चाधिगच्छति॥कुंदप्रसूनैरुदयं मोचाभिर्विघ्ननाशनम्॥८२॥तुलसीपत्रहोमेन महतीं कीर्तिमाप्नुयात्॥
शाल्युत्थसक्तुहोमेन वशयेदखिलं जगत्॥८३॥मधूकपुष्पैरिष्टं स्यात्स्तंभनं धात्रिखण्डकैः ॥ दधिमध्वाज्यमिश्रां तु गुडूचीं चतुरंगुलम्॥८४॥जुहुया
दयुतं योऽसौ शतं जीवति रोगजित्॥शनैश्चरदिनेऽश्वत्थं स्पृष्ट्वा चाष्टोत्तरं शतम्॥८५॥जपेज्जित्वासोऽपमृत्युं शतवर्षाणि जीवति॥अथ ते संप्रवक्ष्यामि
यंत्रं त्रैलोक्यमोहनम् ॥८६॥ यस्य संधारणादेव भवेयुःसर्वसंपदः ॥श्वेतभूर्जे लिखेत्पद्मं द्वात्रिंशत्सिंहसंयुतम्॥८७॥ मध्ये सिंहे स्वबीजं च लिखेत्पू
र्ववदेव तु॥श्रीबीजेन तु तु संवेष्ट्य वलयत्रयसंयुतम्॥८८॥पाशांकुशैश्च संवेष्ट्य पूजयेद्यंत्रमुत्तमम् ॥त्रैलोक्यमोहनं नाम सर्वकामार्थसाधनम् ॥ ८९ ॥
चक्रराजं महाराजं सर्वचक्रेश्वरेश्वरम् ॥ धारणाज्जयमाप्नोति सत्यं सत्यं न संशयः ॥ ९० ॥ अथ यन्त्रांतरं वक्ष्ये शृणु नारद सिद्धिदम् ॥ अष्टारं
विलिखेद्यंत्रं श्लक्ष्णं कर्णिकया युतम् ॥ ९१ ॥ मूलमंत्रं लिखेत्तत्र प्रणवेन समन्वितम् ॥ एकाक्षरं नारसिंहं मध्ये चैव ससाध्यकम् ॥ ९२ ॥ जपे
दष्टसहस्रं तु सूत्रेणावेष्ट्य तद्बहिः ॥ स्वर्णरौप्यसुतामैश्च वेष्टयेत्क्रमतः सुधीः ॥ ९३ ॥ लाक्षया वेष्टितं कृत्वा पुनर्मंत्रेण मंत्रयेत् ॥ कंठे भुजे शिखायां
वा धारयेद्यंत्रमुत्तमम् ॥ ९४ ॥ नरनारीनरेंद्राश्च सर्वे स्युर्वशगा भुवि ॥ दुष्टास्तं नैव बाधंते पिशाचोरगराक्षसाः ॥ ९५ ॥ यंत्रराजप्रसादेन सर्वत्र
जयमाप्नुयात् ॥ अथान्यत्संप्रवक्ष्यामि यंत्रं सर्ववशंकरम् ॥ ९६ ॥ द्वादशारं महाचक्रं पूर्ववद्विलिखेत्सुधीः ॥ मात्राद्वादशसंभिन्नदलेन विलिखेद्बुधः
॥ ९७ ॥ मध्ये मंत्रं शक्तियुक्तं श्रीबीजेन तु वेष्टयेत्॥ कालांतकं नाम चक्रं सुरासुरवशंकरम् ॥ ९८ ॥ चक्रमुल्लेखयेद्भूर्जे सर्वशत्रुनिवारणम्॥ यस्य
धारणमात्रेण सर्वत्र विजयी भवेत ॥ ९९ ॥ अथ सर्वेष्टदं ज्वालामालिसंज्ञं वदाम्यहम् ॥ बीजं हृद्भगवान्ङेंतो नरसिंहाय तत्परम् ॥ १०० ॥
ज्वालिने मालिने दीप्तदंष्ट्राय अग्निने पदम् ॥ त्राय सर्वादिरक्षोघ्नाय च नः सर्वभूपदम् ॥ १०१ ॥ हारिर्विनाशनाय्यांते सर्वज्वरविनाशनः ॥
नामांते दहयुग्मं च पचद्वयमुदीरयेत् ॥ १०२ ॥ रक्षयुग्मं च वर्माख्रठद्वयांतो ध्रुवादिकः ॥ अष्टषष्ट्यक्षरैः प्रोक्तो ज्वालमाली मनूत्तमः ॥ १०३ ॥
पुण्यादिकं तु पूर्वोक्तं त्रयोदशभिरक्षरैः ॥ पंक्तिभी रुद्रसंख्याकैरष्टादशभिरक्षरैः ॥ १०४ ॥ भानुभिः करणैर्मंत्री वरैरंगानि कल्पयेत् ॥

292

पूर्वोक्तरूपिणं ज्वालामालिन नृहरिं स्मरेद् ॥ १०८ ॥ लक्षं जपो दशांशं च जुहुयात्कोपलांवृतैः ॥ रौद्रापस्मारभूतादिनाशकोऽयं मनूत्तमः ॥ ॥ १०६ ॥ प्राणो माया नृसिंहश्च सृष्टिर्ब्रह्मास्त्रमीरितः ॥ षडक्षरो महामंत्रः सर्वाभीष्टप्रदायकः ॥ १०७ ॥ मुनिर्ब्रह्मा तथा छंदः पंक्तिर्देवो नृकेसरी ॥ षड्दीर्घभाजा बीजेन षडंगानि समाचरेत् ॥१०८ ॥ पूर्वोक्तेनैव विधिना ध्यानं पूजां समाचरेत् ॥ सिद्धेन मनुनानेन सर्वसिद्धिर्भवे न्नृणाम् ॥ १०९ ॥ रमाबीजादिकोऽनुष्टुप्त्रयस्त्रिंशार्णवान्मनुः ॥ प्रजापतिर्मुनिश्छंदोऽनुष्टुप् लक्ष्मीनृकेसरी ॥ ११० ॥ देवता च पदैः सर्वैर्णागकल्प नमीरितम् ॥ विन्यस्यैवं तु पंचांगं स्वात्मरक्षां समाचरेत् ॥ १११ ॥ संस्पृशन् दक्षिणं बाहुं शरभस्य मनुं जपेत् ॥ प्रणवो हृच्छिवायेति महते शरभाय च ॥ ११२ ॥ वह्निप्रियांतो मंत्रस्तु रक्षार्थे समुदाहृतः ॥ अथवा राममंत्रांते परं क्षद्वितयं पठेत् ॥ ११३ ॥ अथवा केशवाद्यैरतु रक्षां कुर्यात्प्रयत्नतः ॥ केशवः पातु पादौ मे जंघे नारायणोऽवतु ॥११४॥ माधवो मे कटिं पातु गोविन्दो गुह्यमेव च ॥ नाभिं विष्णुश्च मे पातु जठरं मधुसूदनः ॥ ११५ ॥ ऊरू त्रिविक्रमः पातु हृदयं पातु मे नरः ॥ श्रीधरः पातु कण्ठं च हृषीकेशो मुखं मम ॥११६॥ पद्मनाभः स्तनौ पातु शीर्ष दामोदरोऽवतु ॥ एवं विन्यस्य चांगेषु जपकाले तु साधकः ॥ ११७ ॥ निर्भयो जायते भूतवेतालग्रहराक्षसात् ॥ पुनर्न्यसेत्प्रयत्नेन ध्यानं कुर्व न्समाहितः ॥ ११८ ॥ पुरस्तात्केशवः पातुः चक्री जांबूनदप्रभः ॥ पश्चान्नारायणः शंखी नीलजीमूतसन्निभः ॥ ११९ ॥ उर्द्धमिंदीवरश्यामो माध वस्तु गदाधरः ॥ गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ॥ १२० ॥ उत्तरे हलधृग्विष्णुः पद्मकिंजल्कसन्निभः ॥आग्नेय्यामरविंदाक्षो मुसली मधुसूदनः ॥ १२१ ॥ त्रिविक्रमः खड्गपाणिर्नैर्ऋत्यां ज्वलनप्रभः ॥ वायव्यां माधवो वज्री तरुणादित्यसन्निभः ॥ १२२ ॥ ऐशान्यां पुण्डरीकाक्षः श्रीधरः पट्टिशायुधः ॥ विद्युत्प्रभो हृषीकेश ऊर्द्धे पातु समुद्गरः ॥ १२३ ॥ अधश्च पद्मनाभो मे सहस्रांशुसमप्रभः ॥ सर्वायुधः सर्वशक्तिः सर्वाद्यः सर्वतोमुखः ॥ १२४ ॥ इन्द्रगोपप्रभः पायात्पाशहस्तोऽपराजितः ॥ स बाह्याभ्यंतरे देहमव्याद्दामोदरो हरिः ॥ १२५ ॥ एवं सर्वत्र निश्छिद्रं नाम द्वादशपञ्जरम् ॥ प्रविष्टोऽहं न मे किंचिद्भयमस्ति कदाचन ॥ १२६ ॥ एवं रक्षां विधायाथ दुर्द्धर्षो जायते नरः ॥ सर्वेषु नृहरेर्मंत्रवर्गेष्वेवं विधिर्मतः ॥ १२७ ॥ पूर्वोक्तविधिना सर्वं ध्यानपूजादिकं चरेत् ॥ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ १२८ ॥ नमस्तेऽस्तु हृषीकेश महा पुरुष ते नमः ॥ इत्थं संप्रार्थ्य जप्त्वा च पठित्वा विसृजेद्विभुम् ॥१२९॥एवं सिद्धे मनौ मन्त्री जायते सम्पदां पदम् ॥जयद्वयं श्रीनृसिंहेत्यष्टार्णोऽयं मनूत्तमः ॥१३०॥मुनिर्ब्रह्माथ गायत्री छन्दः प्रोक्तोऽस्य देवता ॥ श्रीमाञ्जयनृसिंहस्तु सर्वाभीष्टप्रदायकः ॥१३१॥ सेंदुगोविंदपूर्वेण वियता सेन्दुना

पुनः ॥ षड्दीर्घाढ्ये न कुर्वीत षडंगानि विशालधीः ॥ १३२ ॥ ततो ध्यायेद्धृदि विभुं नृसिंहं चन्द्रशेखरम्॥१३३॥श्रीमन्नृकेसरितनो जगदेकबन्धो
श्रीनीलकण्ठ करुणार्णव सामराज ॥ वह्नीन्दुतीव्रकरनेत्र पिनाकपाणे शीतांशुशेखर रमेश्वर पाहि विष्णो ॥ १३४ ॥ ध्यात्वैवं प्रजपेल्लक्षाष्टकं मन्त्री
दशांशतः ॥ साज्येन पायसान्नेन जुहुयात्प्राग्वदर्चनम् ॥१३५॥तारो माया स्वबीजांते कर्णोग्रं वीरमीरयेत् ॥ महाविष्णुं ततो ब्रूयाज्ज्वलंतं सर्व
तोमुखम् ॥ १३६ ॥ स्फुरद्द्वयं प्रस्फुरेति द्वयं घोरपदं ततः ॥ वदेद्घोरतरं ते तु तनुरूपं च ठद्वयम् ॥ १३७ ॥ प्रचटद्वयमाभाष्य कहयुग्म च
मद्वयम् ॥ बन्धद्वयं घातयेति द्वयं वर्मास्त्रमीरयेत् ॥ १३८ ॥ नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्॥ पञ्चाशीत्यक्षरो मन्त्रो भजतामिष्टदायकः॥
॥ १३९ ॥ ऋषी ह्यघोरब्रह्माणौ तथा त्रिष्टुबनुष्टुभौ ॥ छन्दसी च तथा घोरनृसिंहो देवता मतः ॥ १४० ॥ ध्यानार्चनादिकं चास्य कुर्यादानुष्टुभं
सुधीः ॥ विशेषान्मन्त्रवर्योऽयं सर्वरक्षाकरो मतः ॥१४१॥ बीजं जययुगं पश्चान्नृसिंहेत्यष्टवर्णवान् ॥ ऋषिः प्रजापतिश्चास्यानुष्टुप्छन्द उदाहृतम् ॥
॥१४२॥ विदारणनृसिंहोऽस्य देवता परिकीर्तितः ॥जं बीजं हं तथा शक्तिर्विनियोगोऽखिलाप्तये॥१४३॥दीर्घाढ्येन नृसिंहेन षडंगन्यासमाचरेत्॥
रौद्रं ध्यायेन्नृसिंहं तु शत्रुवक्षोविदारणम् ॥ १४४ ॥ नखदंष्ट्रायुधं भक्ताभयद श्रीनिकेतनम् ॥ तप्तहाटककेशांतज्वलत्पावकलोचनम् ॥ १४५ ॥
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ मुनिर्ब्रह्मा समाख्यातोऽनुष्टुप्छंदः समीरितः ॥ १४६ ॥ देवतास्य रदार्णस्य दिव्यपूर्वो नृकेसरी ॥
पादैश्चतुर्भिः सर्वेण पंचांगानि समाचरेत् ॥१४७॥ ध्यानपूजादिकं सर्वं प्राग्वत्प्रोक्तं मुनीश्वर ॥ पूर्वोक्तानि च सर्वाणि कार्याण्यायांति सिद्धताम् ॥
॥ १४८ ॥ तारो नमो भगवते नरसिंहाय हृच्च ते ॥ जस्तेजसे आविराविर्भव वज्रनखांततः ॥ १४९ ॥ वज्रदंष्ट्रेति कर्मांते त्वासयाकंदयद्वयम् ॥
तमो ग्रसद्वयं पश्चात्स्वाहांते चाभयं ततः ॥ १५० ॥आत्मन्यंते च भूयिष्ठा ध्रुवो बीजांतिमो मनुः ॥ द्विपष्टचर्णोऽस्य मुन्यादि सर्वं पूर्ववदीरितम् ॥
॥ १५१ ॥ तारो नृसिंहबीजं च नमो भगवते ततः ॥ नरसिंहाय तारश्च वीजमस्य यदा ततः ॥ १५२ ॥ रूपाय तारः स्वबीजं कूर्मरूपाय तार
कम् ॥ बीजं वराहरूपाय तारो बीज नृसिंहतः ॥ १५३ ॥ रूपाय तार स्वं वीजं वामनांते च रूपतः ॥ पापध्रुवत्रयं बीजं रामाय निगमादितः
॥ १५४ ॥ वीजं कृष्णाय तारांते वीजं च कल्किने ततः ॥ जयद्वयं ततः शालग्रामांते च निवासिने ॥ १५५ ॥ दिव्यसिंहाय ङेन्तः स्यात्स्वयंभूः
पुरुषाय हृत् ॥ तारः स्वं वीजमित्येष महासाम्राज्यदायकः ॥ १५६ ॥ नृसिंहमन्त्रः खाकार्णो मुनिरत्रिः प्रकीर्तितः ॥ छन्दोऽतिजगती प्रोक्तं देवता
कथिता मनोः ॥ १५७ ॥ दशावतारो नृहरिं वीजं स्वं शक्तिरव्ययः ॥ पञ्चदीर्घाढ्येन बीजेन कृत्वांगानि च भावयेत् ॥१५८॥ अनेकचन्द्रप्रतिमो

लक्ष्मीमुखकृतेक्षणः ॥ दशावतारैः सहितस्तनोतु नृहरिः सुखम् ॥ १५९ ॥ जपोऽयुतं दशांशेन होमः स्यात्पायसेन तु ॥ प्रागुक्ते पूजयेत्पीठे मूर्तिं संकल्प्य मूलतः ॥१६०॥ अंगान्यादौ च मत्स्याद्यान्दिग्दलेषु ततोऽर्चयेत् ॥ इन्द्राद्यानपि वज्राद्यान्सम्पूज्येष्टमवाप्नुयात॥१६१॥सहस्रार्णं महामंत्रं वक्ष्ये तंत्रेषु गोपितम् ॥ तारो माया रमा कामो वीजं क्रोधपदं ततः ॥१६२ ॥मूर्तें नृसिंहशब्दांते महापुरुष ईरयेत्॥प्रधानधर्माधर्मान्ते निगडेतिपदं वदेत् ॥१६३॥ निर्मोचनांते कालेति ततः पुरुष ईरयेत् ॥ कालांतकसदृक्तोयं स्वेश्वरांते सदृग्जलम् ॥१६४॥ श्रांतांते तु निविष्टेति चैतन्यचित्सदा ततः ॥ भासकांते तु कालव्यतीतनित्योदितेति च ॥ १६५ ॥ उदयास्तमयाक्रान्तमहाकारुणिकेति च ॥ हृदयाब्जचतुश्चोक्ता दलांते तु निविष्टितः ॥ १६६ ॥ चैतन्यात्मंश्चतुरामन्द्वादशात्मंस्ततः परम् ॥चतुर्विंशात्मन्नन्ते तु पञ्चविंशात्मन्नित्यपि ॥१६७॥ वको हरिः सहस्रांते मूर्तें एह्येहि शब्दतः ॥ भगवन्नृसिंहपुरुष क्रोधेश्वर रसा सह ॥१६८॥ सवंदितांते पादेति कल्पांताग्निसहस्र च ॥ कोश्याभांते महादेव निकायदशशब्दतः ॥ ॥१६९ ॥ शतयज्ञातलं ज्ञेयं ततश्चामलयुग्मकम् ॥ पिंगलेक्षणसटादंष्ट्र दंष्ट्रायुध नखायुध ॥ १७० ॥ दानवेंद्रांतकावह्निणशोणितपदं ततः ॥ संसक्तिविग्रहांते तु भूतापस्मारयातुधान् ॥ १७१ ॥ सुरासुरवंद्यमानपादपंकजशब्दतः ॥ भगवन्व्योमचक्रेश्वरांते तु प्रभवाप्यय ॥ १७२ ॥ रूपेणोत्तिष्ठ चोत्तिष्ठ अविद्यानिचयं दह ॥ दह ज्ञानैश्वर्यमंते प्रकाशययुगं ततः ॥ १७३ ॥ ॐ सर्वज्ञ अरोषांते जंभाजृंभयवतारकम् ॥ सत्यपुरुषशब्दांते सदसन्मध्य ईरयेत् ॥ १७४ ॥ निविष्टं मम दुःस्वप्नभयं निगडशब्दतः ॥ भयं कांतारशब्दांते भयं विषपदात्ततः ॥ १७५ ॥ ज्वरांते डाकिनी कृत्याध्वरेवतीभयं ततः ॥ अशन्यंते भयं दुर्भिक्षभयं मारीशब्दतः ॥१७६॥ भयं मारीचशब्दांते भयं छायापदं ततः ॥ स्कंदापस्मारशब्दांते भयं चौरभयं ततः ॥ १७७ ॥ जलस्वप्नाग्निभयं गजसिंहभुजङ्गगतः ॥ भयं जन्मजरांते मरणादिशब्दमीरयेत् ॥ १७८ ॥ भयं निर्मोचययुगं प्रशमययुगं ततः ॥ ज्ञेयरूपधारणांते नृसिंहवृहत्सामतः ॥ १७९ ॥ पुरुषांते सर्वभयनिवारणपदं ततः ॥ अष्टाष्टकं चतुःषष्टि चेटिकाभयमीरयेत् ॥ १८० ॥ विद्यावृतस्त्रयस्त्रिंशद्देवताकोटिशब्दतः ॥ नमितांते पदपदात्पंकजान्वित ईरयेत् ॥ १८१ ॥ सहस्रवदनांते तु सहस्रोदर संवदेत् ॥ सहस्रेक्षणशब्दांते सहस्रपादमीरयेत् ॥ १८२ ॥ सहस्रभुज संप्रोच्य सहस्रजिह्व संवदेत् ॥ सहस्रांते ललाटेति सहस्रायुधतो धराव ॥ १८३ ॥ तमःप्रकाशक पुरमथनान्ते तु सर्व च ॥ मन्त्रराजेश्वरपदाद्विहायसगतिप्रद ॥ १८४ ॥ पातालगतिप्रदांते यन्त्रमर्दन ईरयेत् ॥ घोराट्टहासहसितविश्वावासपदं ततः ॥ १८५ ॥ वासुदेव ततोऽक्रूर ततो हयमुखेति च ॥ परमहंस





विश्वेश विश्वांते तु विडंबन ॥ १८६ ॥ निविष्टांते ततः ऽ दुर्भावकारक ईरयेत् ॥ हृषीकेश च स्वच्छंद निःशेषजीव विन्यसेत्॥१८७ ॥ ग्रासकांते
महा पश्चात्पिशितासृगितीरयेत्॥लंपटान्ते खेचरीति सिद्धमंते तु प्रदायक॥१८८॥अजेयान्व्यय अव्यक्त ब्रह्माण्डोदर इत्यपि॥ततो ब्रह्मसहस्रांते कोटि
समुंडशब्दतः ॥ १८९ ॥ माल पंडितमुण्डेति मत्स्य कूर्म ततः परम् ॥ वराहांते नृसिंहेति वामनांते समीरयेत् ॥१९०॥ त्रैलोक्याक्रमणांते तु पादशा
लिक ईरयेत् ॥ रामत्रय ततो विष्णुरूपांते धर एव च ॥१९१॥तत्त्वत्रयांते प्रणवाधारतस्तच्छिखां पदम्॥निविष्टवह्निजायांते स्वधा चैव ततो वषट्॥
॥ १९२॥ नेत्र वर्मास्त्रमुच्चार्य्य प्राणाधार इतीरयेत् ॥ आदिदेवपदात्प्राणापानपश्चान्निविष्टितः ॥१९३॥पांचरात्रिक दितिज विनिधनांते करेति च ॥
महामाया अमोघांते दर्य दैत्येंद्रशब्दतः ॥१९४॥ दर्यांते दलनेत्युक्ता तेजोराशिन् ध्रुवं स्मरः॥ तेजस्वरांते पुरुषपंडेंते सत्यपूरुष॥ १९५ ॥अस्त्रतारो
ऽच्युतास्त्रं च तारो वाचा सुदेव फट् ॥ तारमायामूर्तेः फट् वः कामः स्वरादिमः॥१९६ ॥मूर्तेस्त्रमव्ययोबीजं विश्वमूर्तेस्त्रिमव्ययः ॥ मायाविश्वात्मने
फट् च तारः सौचं तुरात्मने ॥ १९७॥ फट् तारोहं विश्वरूपिन्नस्त्रं च तदनंतरम् ॥ तारोह्वैपरमांते तु हंसफट्प्रणवस्ततः ॥१९८ ॥ ह्रः हिरण्यगर्भरूप
धारणांते च फट् ध्रुवः ॥ ह्रौं अनौपम्यरूपधारिणास्त्रं ध्रुवस्ततः ॥ १९९ ॥ क्षौं नृसिंहरूपधारिन् ॐ कुं श्लश्च स्वरादिकः ॥ घ्रांगविन्यासविन्य
स्तमूर्तिधारिंस्ततश्च फट् ॥ २०० ॥ ह्रौ निसर्गसिद्धचैकरूपधारिंस्ततश्च फट् ॥ तारो वर्मत्रयं संकरं वं चामुकमस्तकम् ॥ २०१ ॥ खंडद्वयं खाद
येतिद्वयं क्रीं साध्यमानय ॥ द्वयं ततो महात्मन्स्यान्सम्यग्दर्शययुग्मकम् ॥ २०२ ॥ षड्दीर्घाढ्यां स्वबीजं च क्षपितांते तु कल्मष ॥ उत्तरायं
द्वयं पंचबाणबीजानि वोच्चरेत् ॥ २०३ ॥ नृसिंहांते ततो ज्वालात्मने स्वाहा समीरयेत्॥नृसिंहान्ते ततः कालात्मने स्वाहा ध्रुवस्ततः ॥ २०४ ॥
खबीजं कामबीजं च लक्ष्मीबीजद्वयं ततः॥ मायातारांतिमो मन्त्रः सहस्राक्षरसंमितः ॥ २०५ ॥ कपिलोऽस्य मुनिश्छन्दो जगती देवता पुनः॥श्रील
क्ष्मीनृहरिर्बीजं क्षौं शक्तिर्वह्निवल्लभा ॥२०६ ॥ श्वेतो वर्ण उदात्तश्च स्वरः प्रोक्तो मनीषिभिः॥क्षेत्रं च परमात्मा तु विनियोगोऽखिलाप्तये॥२०७॥
क्षः सहस्रबाहवेंते सहस्रायुधधराय च ॥ नृसिंहांतं वह्निजायास्त्रायफट् मन्त्र ईरितः ॥ २०८ ॥ अनेन करशुद्धिं च कृत्वांगानि समाचरेत् ॥ तारः
क्षां च सहस्रांते क्षरशब्दाद्विजृंभितम् ॥२०९॥ नृसिंहायाग्निजायांतो हृदये मनुरीरितः ॥ मारः क्षीं च महातेनु प्रभांते विकरेति च ॥ २१० ॥नृसिंहा
याग्निजायांते शिरोमंत्रः प्रकीर्तितः ॥ तारः क्षुं तत्पयंहायश्चाद्दक्रकेशांत ईरयेत् ॥ २११ ॥ ज्वलत्पावकलो कूर्मो दीर्घा मत्राधिकेति च ॥ नख
स्पर्शाद्दिव्यसिंह-नमोऽस्तु भगवन् हरेः ॥ २१२ ॥ महाध्वस्त जगद्रूप नृसिंहाय द्वयंद्वयम् ॥ अनेन च शिखा प्रोक्ता कवचं तदनंतरम्॥ २१३ ॥

२९६

तारः क्षैं च सुवर्णं ते मदमत्तपदं ततः ॥ विह्वलितनृसिंहाय स्वाहांतं कवचं स्मृतम् ॥ २१४ ॥ तारः क्षौं च सहस्राक्ष विश्वरूपपदं वदेत् ॥ धारणेभि
प्रियांतोऽयं नेत्रमंत्रः प्रकीर्तितः ॥ २१५ ॥ तारो क्षश्च सहस्रांते वारावेपदमीरयेत् ॥ सहस्रांते सुधायाथ नृसिंहायाग्निसुंदरी ॥ २१६ ॥
अस्त्रमंत्रः समाख्यातस्ततो ध्यायेन्नृकेसरी ॥ उद्यदर्कसहस्राभं त्रीक्षणं भीमभूषणम् ॥ २१७ ॥ सुतीक्ष्णाग्रभुजो दंडैर्दैत्यदारणकं स्मरेत् ॥
एवं ध्यात्वा जपेन्मंत्री सहस्रं पायसेन च ॥ २१८ ॥ आज्यप्लुतेन जुहुयात्सम्यक्सिद्धो भवेन्मनुः ॥ प्रागुक्ते वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥
॥ २१९ ॥ संपूज्य नृहरिं पश्चादादावंगानि पूजयेत् ॥ चक्रं शंखं च पाशं वांकुशं कुलिशमेव च ॥ २२० ॥ गदाकृपाणिक्ष्वेडानि दलेषु परिपूज
येत् ॥ लोकेशानपि वज्राद्यान्पूजयेत्तदनंतरम् ॥ २२१ ॥ एवं सिद्धे मनौ मन्त्री प्रयोगान्कर्तुमर्हति ॥ भस्माभिमंत्रितं कृत्वा ग्रहग्रस्तं विलेपयेत् ॥
॥ २२२ ॥ भस्मसंलेपनादेव सर्वग्रहविनाशनम् ॥ अनेनैव विधानेन यक्षराक्षसकिन्नरः ॥ २२३ ॥ भूतप्रेतपिशाचाश्च नश्यंत्येव न संशयः ॥
पराभिचारकृत्यानि मनुनानेन मंत्रितम् ॥ २२४ ॥ भस्म संलेपयेत्सद्यो दुराधर्षो भवेन्नरः ॥ सुदिने स्थापयेत्कुम्भे सर्वतोभद्रमण्डले॥२२५ ॥ तीर्थ
तोयेन संपूर्य जपेदष्टोत्तरं शतम् ॥ तेनाभिषिक्तो मनुजः सर्वापत्ति तरेद् ध्रुवम्॥२२६॥किं बहूक्तेन सर्वेष्टदायकोऽयं मनूत्तमः ॥ वज्रनखाय विद्महे
तीक्ष्णदंष्ट्राय धीमहि ॥ तन्नो नृसिंहः शब्दांते वदेच्चैव प्रचोदयात् ॥ २२७ ॥ एषा नृसिंहगायत्री सर्वाभीष्टप्रदायिनी ॥ एतस्याः स्मरणादेव
सर्वपापक्षयो भवेत् ॥२२८ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे नृसिंहोपासनामन्त्रगायत्र्यादिनिरूपणं नामैकसप्ततितमो
ऽध्यायः ॥ ७१ ॥ सनत्कुमार उवाच ॥ प्रणवो हृदयं विष्णुर्नेन्तः सुरपतिस्तथा ॥ महाबलाय स्वाहांतो मंत्रो वसुधराक्षरः ॥ १ ॥ मुनिरिंदुर्विराट्
छन्दो देवता दधिवामनः ॥ तारो बीजं तथा शक्तिर्वह्निजाया प्रकीर्तिता ॥२॥ चंद्राक्षिरामबाणेषु नेत्रसंख्यैर्मनूद्भवैः॥वर्णैः षडंगं कृत्वा च मूर्ध्नि भाले
च नेत्रयोः ॥ ३ ॥ कर्णयोर्घ्राणयोरोष्ठतालुकण्ठभुजेषु च ॥ पृष्ठे हृदुदरे नाभौ गुह्ये चोरुस्थले पुनः ॥ ४ ॥ जानुद्वयं जङ्घयोश्च पादयोर्विन्यसे
त्क्रमात् ॥ अष्टादशैव मंत्रोत्थास्ततो देवं विचिंतयेत ॥ ५ ॥ मुक्तागौरं रत्नभूपं चन्द्रस्थं भृङ्गसन्निभैः ॥ अलकैर्विलसद्वक्रं कुम्भं शुद्धांबुपूरि
तम् ॥ ६ ॥ दध्यन्नपूर्णचषकं दोर्भ्यां संदधतं भजेत् ॥लक्षत्रयं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ॥ ७॥पायसान्नैः प्रजुहुयाद्दध्यन्नेन यथाविधि॥चन्द्रांते
कल्पिते पीठे पूर्वोक्ते पूजयेच्च तम्॥ ८ ॥ संकल्पमूर्तिमूलेन संपूज्य च विधानतः ॥ केसरेषु षडंगानि संपूज्य दिग्दलेषु च ॥ ९ ॥ वासुदेवं संकर्षणं
प्रद्युम्नमनिरुद्धकम्॥कोणपत्रेषु शांतिं च श्रियं सरस्वतीं रतिम्॥१०॥ध्वजं च वैनतेयं च कौस्तुभं वनमालिकम् ॥शंखं चक्रं गदां शार्ङ्गं दलेष्वष्टसु





पूजयेत् ॥ ११ ॥ दलाग्रेषु केशवादीन्दिक्पालांस्तदनंतरम् ॥तदस्त्राणि च सम्पूज्य गजानष्टौ समर्चयेत् ॥१२॥ ऐरावतः पुण्डरीको वामनः कुमुदोऽजनः ॥ पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥१३॥ करिण्योऽभ्रमुकपिलापिंगलानुपमाः क्रमात् ॥ ताम्रकर्णी शुभ्रदंती चांगना ह्यंजनावती ॥ १४ ॥ एवमाराधितो मंत्री दद्यादिष्टानि मंत्रिणे ॥ श्रीकामः पायसाज्येन सहस्रं जुहुयात्सुधीः॥१५॥महतीं श्रियमाप्नोति धान्याप्तिर्धान्यहोमतः ॥ शतपुष्पासमुत्थैश्च बीजैर्हुत्वा सहस्रतः ॥ १६ ॥ महाभयं नाशयेद्धि नात्र कार्या विचारणा ॥ दद्ध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतेः ॥ १७ ॥ ध्यात्वा त्रैविक्रमं रूपं जपेन्मंत्रं समाहितः ॥ कारागृहाद्भवन्मुक्तो बद्धो मंत्रप्रभावतः ॥ १८ ॥ भित्तौ संपाद्य देवेशं फलके वा प्रपूजयेत् ॥ नित्यं सुगंधकुसुमैर्महतीं श्रियमाप्नुयात्॥१९॥ हुत्वा रक्तोत्पलैर्मंत्री वशयेत्सकलं जगत् ॥ अन्नाज्यैर्जुहुयान्नित्यमष्टाविंशतिसंख्यया ॥२०॥ सिताज्यान्नं च विधिवत्प्राप्नुयादन्नमक्षयम् ॥ अपूपैः षड्रसोपेतैर्हुनेद्वसुसहस्रकम् ॥ २१ ॥ अलक्ष्मीं च पराभूय महतीं श्रियमाप्नुयात् ॥ जुहुयादयुतं मंत्री दध्यन्नं च सितान्वितम् ॥२२॥ यत्र यत्र वसेत्सोऽपि तत्रान्नगिरिमाप्नुयात् ॥ पद्माक्षैर्युतं बिल्वांतिकस्थो जुहुयान्नरः॥२३॥ महालक्ष्मीं स लभते तत्र तत्र न संशयः ॥ जुहुयात्पायसैर्लक्षं वाचस्पतिसमो भवेत् ॥ २४ ॥ लक्षं जप्त्वा तद्दशांशं पुत्रजीवफलैर्हुनेत् ॥ तत्काष्ठैरेधिते वह्नौ श्रेष्ठं पुत्रमवाप्नुयात् ॥२५॥ससाध्यतारं विलसत्कर्णिकं च सुवर्णकैः ॥ विलसत्केसरं मंत्राक्षरद्वंद्वाष्टपत्रकम् ॥२६॥ शेषयुग्मार्णांत्यपत्रं द्वादशाक्षरवेष्टितम् ॥ तद्बहिर्मातृकावर्णैर्यंत्रं सम्पत्प्रदं नृणाम् ॥२७॥ रक्तं त्रिविक्रमं ध्यात्वा प्रसूनै रक्तवर्णकैः ॥ जुहुयादयुतं मंत्री सर्वत्र विजयी भवेत्॥२८॥ ध्यायेच्चंद्रासनगतं पद्मानामयुतं हुनेत् ॥ लभेदकंटकं राज्यं सर्वलक्षणसंयुतम् ॥ २९ ॥ हुत्वा लवंगैर्मध्वाक्तैरपामार्गदलैस्तु वा ॥ अयुतं साध्यनाम्ना स वश्यो जायते ध्रुवम् ॥ ३० ॥ अष्टोत्तरशतं हुत्वा ह्यपामार्गदलैः शुभैः ॥ तावज्जप्त्वा च सप्ताहान्महारोगात्प्रमुच्यते ॥३१॥उद्गिरत्पदमाभाष्य प्रणवोद्गीथ शब्दतः ॥ सर्ववागीश्वरेत्यंते प्रवदेदीश्वरेत्यथ॥३२॥ सर्ववेदमयाचिंत्यपदान्ते सर्वमीरयेत् ॥ बोधयद्वितयांतोऽयं मन्त्रस्ताराद्दिरीरितः ॥३३॥ ऋषिर्ब्रह्मास्य निर्दिष्टश्छंदोऽनुष्टुबुदाहृतम् ॥ देवता स्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः ॥ ३४ ॥ तारेण पादैर्मंत्रस्य पञ्चांगानि प्रकल्पयेत् ॥ तुषाराद्रिसमच्छायं तुलसीदामभूषितम् ॥३५॥तुरंगवदनं वंदे तुंगसारस्वतः पदम् ॥ ध्यात्वैवं प्रजपेन्मंत्रमयुतं तद्दशांशतः ॥ ३६ ॥ मध्वक्तैः पायसैर्हुत्वा विमलादिसमन्विते ॥ पूजयेद्वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥ ३७ ॥ कर्णिकायां चतुर्दिक्षु यजेत्पूर्वादितः क्रमात् ॥ सनंदनं च सनकं श्रियं च पृथिवीं तथा ॥ ३८ ॥ तद्बहिर्दिक्षु वेदाश्च पद्मकोणेषु ततोऽर्चयेत् ॥ निरुक्तं ज्योतिषं पश्चाद्यजेद्व्याकरणं ततः॥३९॥कल्पं शिक्षां च

छंदांसि वेदांगानि त्विमानि वै ॥ ततोऽष्टदलमूले तु मातरोऽष्टौ समर्चयेत् ॥ ४० ॥ वक्रतुंडादिकानष्टौ दलमध्ये प्रपूजयेत् ॥ दलाग्रेष्वर्चयेत्प
श्चात्साधकश्चाष्टभैरवान् ॥ ४१ ॥ असितांगं रुरुं चैव भीषणं रक्तनेत्रकम् ॥ बटुकं कालदमनं दंतुरं विकटं तथा ॥ ४२ ॥ तद्बहिः षोडशदले
ष्ववतारान्हरेर्देश ॥ शंखं चक्रं गदां पद्मं नंदकं शार्ङ्गमेव च ॥ ४३ ॥ तद्बहिर्भूगृहे शक्रमुखान्दश दिगीश्वरान् ॥ वज्राद्यांस्तद्बहिश्चेष्ट्वा
द्वारेषु च ततः क्रमात् ॥ ४४ ॥ महागणपतिं दुर्गां क्षेत्रेशं बटुकं तथा ॥ समस्तप्रकटाद्याश्च योगिन्यस्तद्बहिर्भवेत् ॥ ४५ ॥ तद्बहिः सप्त नद्यश्च
तद्बाह्ये तु ग्रहान्नव ॥ तद्बाह्ये पर्वतानष्टौ नक्षत्राणि च तद्बहिः॥ ४६ ॥एवं पंचदशावृत्त्या संपूज्य तुरगाननम् ॥ वागीश्वरसमो वाचि धनैर्धनपतिर्भवेत्
॥ ४७ ॥ एवं सिद्धे मनौ मंत्री प्रयोगान्कर्तुमर्हति ॥ अष्टोत्तरसहस्रं तु शुद्धं वार्यभिमंत्रितम् ॥ ४८ ॥ बीजेन मासमात्रं यः पिबेद्धीमान् जित
न्द्रियः ॥ जन्ममूकोऽपि स नरो वाक्सिद्धिं लभते ध्रुवम् ॥४९ ॥ वियद्भृगुस्थमर्धीरारविंदुमद्बीजमीरितम् ॥ चंद्रसूर्योपरागे तु पात्रे रुक्ममये क्षिपेत्
॥ ५०॥ दुग्धं वचां ततो मंत्री कंठमात्रोदके स्थितः ॥ स्पर्शाद्विमोक्षपर्यंतं प्रजपेन्मंत्रमादरात् ॥ ५१ ॥ पिबेत्तत्सर्वमचिरात्तस्य सारस्वतं भवेत् ॥
ज्योतिष्मतीलताबीजं दिनेष्वेकैकवर्द्धितम् ॥ ५२ ॥ अष्टोत्तरशतं यावद्भक्षयेदभिमंत्रितम् ॥ सरस्वत्यवतारोऽसौ सत्यं स्याद्भुवि मानवः ॥ ५३ ॥
किं बहूक्तेन विप्रेंद्र मनोरस्य प्रसादतः ॥ सर्ववेदागमादीनां व्याख्याता ज्ञानवान् भवेत् ॥ ५४ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने
सनत्कुमारविभागे तृतीयपादे हयग्रीवोपासनानिरूपणं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ (सनत्कुमार उवाच ॥ अथ रामस्य मनवो वक्ष्यंते
सिद्धिदायकाः ॥ येषामाराधनान्मर्त्यास्तरंति भवसागरम् ॥ १ ॥ सर्वेषु मंत्रवर्येषु श्रेष्ठं वैष्णवमुच्यते ॥ गाणपत्येषु सौरेषु शाक्तशैवेष्वभीष्टदम्
॥ २ ॥ वैष्णवेष्वपि मंत्रेषु राममंत्राः फलाधिकाः ॥ गाणपत्यादिमंत्रेभ्यः कोटिकोटिगुणाधिकाः ॥३॥ विष्णुशय्यास्थितो वह्निरिंदुभूषितमस्तकः ॥
रामाय हृदयांतोऽयं महाघौघविनाशनः ॥ ४ ॥ सर्वेषु राममंत्रेषु ह्यतिश्रेष्ठः षडक्षरः ॥ ब्रह्महत्यासहस्राणि ज्ञाताज्ञातकृतानि च ॥५॥ स्वर्णस्तेय
सुरापानगुरुतल्पायुतानि च ॥ कोटिकोटिसहस्राणि ह्युपपापानि यानि वै ॥ ६ ॥मंत्रस्योच्चारणात्सद्यो लयं यांति न संशयः ॥ ब्रह्मा मुनिः स्याद्गा
यत्री छंदो रामश्च देवता ॥७॥ आद्यं बीजं च हृच्छक्तिर्विनियोगोऽखिलाप्तये ॥ षड्दीर्घभाजा बीजेन षडंगानि समाचरेत् ॥८ ॥ब्रह्मरंध्रे भ्रुवोर्मध्ये
हृन्नाभ्योर्गुह्यपादयोः ॥ मंत्रवर्णान्क्रमाद्न्यस्य केशवादीन्प्रविन्यसेत् ॥ ९ ॥ पीठन्यासादिकं कृत्वा ध्यायेद्धृदि रघूत्तमम् ॥ कालांभोधरकांतं च वीरा
सनसमास्थितम् ॥१०॥ ज्ञानमुद्रां दक्षहस्ते दधतं जानुनीतरम् ॥ सरोरुहकरां सीतां विद्युदाभां च पार्श्वगाम्॥ ११॥पश्यंतीं रामवक्त्राब्जं विविधाक

ल्पभूषिताम् ॥ ध्यात्वैवं प्रजपेद्वर्णलक्षं मंत्री दशांशतः ॥१२ ॥ कमलैर्जुहुयाद्वह्नौ ब्राह्मणान्भोजयेत्ततः॥पूजयेद्वैष्णवे पीठे विमलादिसमन्विते ॥१३॥
मूर्तिं मूलेन संकल्प्य तस्यामावाह्य साधकः ॥ सीतां वामे समासीनां तन्मन्त्रेण प्रपूजयेत् ॥ १४ ॥ रमासीतापदं ङेंतं द्विठांतो जानकीमनुः ॥
अग्नेः शार्ङ्गं च सम्पूज्य शरान्पार्श्वद्वयेऽर्चयेत् ॥ १५ ॥ केशरेषु षडंगानि पत्रेष्वेतान्समर्चयेत् ॥ हनुमंतं च सुग्रीवं भरतं सबिभीषणम् ॥ १६ ॥
लक्ष्मणांगदशत्रुघ्नान् जांबवंतं क्रमात्पुनः॥वाचयंतं हनूमंतमग्रतो धृतपुस्तकम् ॥ १७ ॥ यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ ॥ धृतातपत्रं हस्ताभ्यां
लक्ष्मणं पृष्ठतोऽर्चयेत् ॥ १८ ॥ ततोऽष्टपत्रे सृष्टिं च जयंतं विजयं तथा ॥ सुराष्ट्रं राष्ट्रपालं च अकोपं धर्मपालकम्॥१९॥सुमंतं चेति सम्पूज्य लोके
शानायुधैर्युतान्॥एवं रामं समाराध्य जीवन्मुक्तः प्रजायते॥२०॥चंदनाक्तैः प्रजुहुयाज्जातीपुष्पैः समाहितः ॥ राजवश्याय कमलैर्धनधान्यादिसिद्धये
॥२१॥ लक्ष्मीकामः प्रजुहुयात्प्रसूनैर्बिल्वसंभवैः॥आज्याक्तैर्नीलकमलैर्वशयेदखिलं जगत्॥२२॥घृताक्तशतपर्वाभिर्दीर्घायुश्च निरामयः॥रक्तोत्पलानां
होमेन धनं प्राप्नोति वांछितम्॥२३॥पालाशकुसुमैर्हुत्वा मेधावी जायते नरः॥तज्जप्तांभः पिबेत्प्रातर्वत्सरात्कविराड् भवेत् ॥२४॥तन्मंत्रितान्नं भुंजीत
महारोगप्रशांतये॥रोगोक्तौषधहोमेन तद्रोगान्मुच्यते क्षणात्॥२५॥नदीतीरे च गोष्ठे वा जपेल्लक्षं पयोव्रतः॥पायसेनाज्ययुक्तेन हुत्वा विद्यानिधिर्भवेत्
॥२६ ॥ परिक्षीणाधिपत्यो यः शाकाहारो जलांतरे ॥जपेल्लक्षं च जुहुयाद्बिल्वपुष्पैर्दशांशतः॥२७॥तदैव पुनराप्नोति स्वाधिपत्यं न संशयः ॥ उपोष्य
गङ्गातीरांते स्थित्वा लक्षं जपेन्नरः॥२८॥दशांशं कमलैर्हुत्वा बिल्वोत्थैर्वा प्रसूनकैः ॥ मधुरत्रयसंयुक्तैराज्यश्रियमवाप्नुयात् ॥ २९ ॥ मार्गमासे जले
स्थित्वा कन्दमूलफलाशनः॥लक्षं जप्त्वा दशांशेन पायसैर्जुहुयाद्वसौ॥३०॥श्रीरामचन्द्रसदृशः पुत्रः पौत्रोऽपि जायते॥अन्येऽपि बहवः संति प्रयोगा
मन्त्रराजके ॥ ३१ ॥ किंतु प्रयोगकर्तॄणां परलोको न विद्यते ॥ षट्कोणं वसुपत्रं च तद्बाह्यार्कदलं लिखेत् ॥ ३२ ॥ षट्कोणेषु षडर्णानि मन्त्रस्य
विलिखेद् बुधः ॥अष्टपत्रे तथाष्टार्णांल्लिखेत्प्रणवगर्भितान् ॥ ३३॥ कामबीजं रविदले मध्ये मन्त्रावृताभिधाम् ॥ सुदर्शनावृतं बाह्ये दिक्षु युग्माश्रृतं
तथा ॥३४ ॥ वज्रोल्लसद्भूमिगेहं कन्दर्पांकुशपाशकैः ॥ भूम्या च विलसत्कोणं यन्त्रराजमिदं स्मृतम् ॥ ३५ ॥ भूर्जेऽष्टगन्धैः संलिख्य पूजयेदुक्तव
र्त्मना ॥ षट्कोणेषु दलार्काब्जान्यावेष्टवृतयुग्मतः॥ ३६॥केशरेष्वष्टपत्रस्य स्वरद्वंद्वं लिखेद् बुधः ॥ वहिस्तु मातृकां चैव मन्त्रं प्राणनिधायनम् ॥
॥३७ ॥ यन्त्रमेतच्छुभे धत्ते कण्ठे वा दक्षिणे भुजे ॥ मूर्ध्नि वा धारयेन्मंत्री सर्वपापैः प्रमुच्यते ॥ ३८ ॥ सुदिने शुभनक्षत्रे सुदेशे शल्यवर्जिते ॥
वश्याकर्षणविद्वेषद्रावणोच्चाटनादिकम् ॥ ३९ ॥ पुष्यद्वयं तथादित्यार्द्रामघासु यथाक्रमम् ॥ दूर्वोत्था लेखनी वश्ये तथाकृष्टौ करंजजा ॥ ४० ॥

नरास्थिजा मारणे तु स्तंभने राजवृक्षजा ॥ शांतिपुष्ट्यायुषां सिद्ध्यै सर्वापच्छमनाय च ॥ ४१ ॥ विभ्रमोत्पादने चैव शिलायां विलिखेद् बुधः ॥ खरचर्मणि विद्वेषे ध्वजे तूच्चाटनाय च ॥ ४२ ॥ शत्रूणां ज्वरसन्तापशोकमारणकर्मणि ॥ पीतवस्त्रे लिखित्वा तु साधयेत्साधकोत्तमः ॥ ४३ ॥ वश्याकृष्टौ चाष्टगन्धैः सम्पूज्य च यथाविधि ॥ चितांगारादिना चैव ताडनोच्चाटनादिकम् ॥ ४४॥ विषार्कक्षीरयोगेन मारणं भवति ध्रुवम् ॥ लिखित्वैवं यंत्रराजं गन्धपुष्पादिभिर्यजेत् ॥ ४५ ॥ त्रिलोहवेष्टितं कृत्वा धारयेत्साधकोत्तमः ॥ बीजं रामाय ठद्वंद्वं मन्त्रोऽयं रसवर्णकः ॥ ४६ ॥ महासुदर्शनमनुः कथ्यते सिद्धिदायकः ॥ सुदर्शनमहाशब्दाच्चक्रराजेश्वरेति च ॥ ४७ ॥ दुष्टांतकदुष्टभयानकदुष्टभयंकरम् ॥ छिंधिद्वयं भिंधियुग्मं विदारययुगं ततः ॥ ४८ ॥ परमन्त्रान् ग्रसद्वंद्वं भक्षयद्वितयं ततः ॥ त्रासयद्वितयं वर्मास्त्राग्निजायांतिमो मनुः ॥ ४९ ॥ अष्टषष्टयक्षरः प्रोक्तो यंत्रसंवेष्टने त्वयम् ॥ तारो हृद्भगवान् ङेंतो ङेंतो हि रघुनन्दनः॥५०॥ रक्षोघ्नविशदायांते मधुरादिप्रसन्न च॥ वरदाभयायामितांते नुतेजसेपदमीरयेत्॥ ॥ ५१ ॥ बालायांते तु रामाय विष्णवे हृदयांतिमः ॥ सप्तचत्वारिंशदर्णो मालामन्त्रोऽयमीरितः ॥ ५२ ॥ विश्वामित्रो मुनिश्चास्य गायत्री छंद ईरितम् ॥ श्रीरामो देवता वीजं ध्रुवः शक्तिश्च ठद्वयम् ॥ ५३ ॥ षड्दीर्घस्वरयुग्मायावीजेनांगानि कल्पयेत् ॥ ध्यानपूजादिकं सर्वमस्य पूर्ववदाचरेत् ॥ ५४ ॥ अयमाराधितो मन्त्रः सर्वान्कामान्प्रयच्छति ॥ स्वकामसत्यवाग्लक्ष्मीताराढ्यः पञ्चवर्णकः ॥ ५५ ॥ षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥ ब्रह्मा संमोहनः शक्तिर्दक्षिणामूर्तिसंज्ञकः ॥ ५६ ॥ अगस्त्यः श्रीशिवः प्रोक्तास्ते तेषां मुनयः क्रमात् ॥ अथवा कामबीजादेर्विश्वामित्रो मुनिः स्मृतः ॥ ५७ ॥ छन्दः प्रोक्तं च गायत्री श्रीरामो देवता पुनः ॥ बीजशक्तिराधमांत्यं मन्त्रार्णैः स्यात्षडंगकम् ॥ ५८ ॥ बीजैः षड्दीर्घयुक्तैर्वा मंत्रार्णान्पूर्ववन्न्यसेत् ॥ ध्यायेत्कल्पतरोर्मूले सुवर्णमयमण्डपे ॥ ५९ ॥ पुष्पकाख्यविमानांतःसिंहासनपरिच्छदे ॥ पद्मे वसुदले देवमिंद्रनीलसमप्रभम् ॥ ६० ॥ वीरासनसमासीनं ज्ञानमुद्रोपशोभितम् ॥ वामोरुन्यस्ततद्धस्तसीतालक्ष्मणसेवितम् ॥ ६१ ॥ रत्नाकल्पं विभुं ध्यात्वा वर्णलक्षं जपेन्मनुम् ॥ यद्वा स्मारादिमन्त्राणां जयाभं च हरिं स्मरेत् ॥ ६२ ॥ यजनं काम्यकर्माणि सर्वं कुर्यात्षडर्णवत् ॥ रामश्च चन्द्रभद्रांतो ङेनमोंतो ध्रुवादिकः ॥ ६३॥ मन्त्रावष्टाक्षरौ ह्येतौ तारांत्यौ चेन्नवाक्षरौ ॥ एतेषां यजनं सर्वं कुर्यान्मंत्री षडर्णवत् ॥६४॥ जानकीवल्लभो ङेंतो द्विठांतः कवचादिकः ॥ दशार्णोऽयं महामन्त्रो विशिष्टोऽस्य मुनिः स्वराट् ॥६५॥ छन्दश्च देवता सीता पतिर्बीजं तथादिमम्॥ स्वाहा शक्तिश्च कामेन कुर्यादंगानि षट् क्रमात् ॥ ६६ ॥शिरोललाटभ्रूमध्यतालुकण्ठेषु हृद्यपि ॥ नाभ्यंघ्रिजानुपादेषु दशार्णान्विन्यसेन्मनोः ॥ ६७ ॥ अयो







ध्यानगरे रत्नचित्रसौवर्णमण्डपे ॥ मंदारपुष्पैराबद्धविताने तोरणान्विते ॥६८॥ सिंहासनसमासीन पुष्पकोपरि राघवम् ॥ रक्षोभिर्हरिभिर्देवैः सुवि
मानगतैः शुभैः ॥६९॥संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम् ॥सीतालंकृतवामांगं लक्ष्मणेनोपशोभितम् ॥ ७० ॥श्यामं प्रसन्नवदनं सर्वाभरणभू
षितम् ॥ एवं ध्यात्वा जपेन्मंत्री वर्णलक्षं समाहितः॥७१॥दशांशः कमलैर्होमो यजनं च षडर्णवत्॥रामो ङेन्तो धनुष्पाणिर्ङेन्तोऽन्ते वह्निसुंदरी॥७२॥
दशाक्षरोऽयं मंत्रोऽस्य मुनिर्ब्रह्मा विराट्र पुनः ॥ छन्दस्तु देवता प्रोक्तो रामो राक्षसमर्दनः ॥७३॥ आद्यं बीजं द्विठः शक्तिर्बीजेनांगानि कल्पयेत् ॥
वर्णन्यासं तथा ध्यानं पुरश्चर्यार्चनादिकम् ॥ ७४ ॥ दशाक्षरोक्तवत्कुर्याच्चापबाणधरं स्मरेत् ॥ तारो नमो भगवते रामान्ते चंद्रभद्रकौ ॥ ७५ ॥
ङेंतावर्काक्षरौ मंत्रौ ऋषिध्यानादि पूर्ववत् ॥ श्रीपूर्वं जयपूर्वं च तद्विधा रामनाम च ॥७६॥ त्रयोदशाक्षरो मंत्रो मुनिर्ब्रह्मा विराट् स्मृतम् ॥ छन्दस्तु
देवता प्रोक्तो रामः पापौघनाशनः ॥ ७७ ॥ षडंगानि प्रकुर्वीत द्विरावृत्त्या पदत्रयैः ॥ ध्यानार्चनादिकं सव ह्यस्य कुर्याद्दशार्णवत् ॥ ७८ ॥
तारो नमो भगवते रामायांते महापदम् ॥ पुरुषाय हृदंतोऽयं मनुरष्टादशाक्षरः॥ ७९ ॥विश्वामित्रो मुनिश्छंदो धृती रामोऽस्य देवता॥तारो वीजं नमः
शक्तिश्चंद्राक्ष्यब्ध्यग्निषड्भुजैः ॥ ८० ॥ वर्णैर्मंत्रोत्थितैः कुर्यात्षडंगानि समाहितः ॥ निश्शाणभेरीपटहशंखतुर्यादिनिःस्वनैः ॥ ८१ ॥ प्रवृत्तनृत्ये
परितो जयमंगलभाषिते ॥ चंदनागरुकस्तूरीकर्पूरादिसुवासिते ॥ ८२ ॥ नानाकुसुमसौरभ्यवाहिगंधवहान्विते ॥ देवगंधर्वनारीभिर्गायन्तीभिरल
कृते ॥ ८३ ॥ सिंहासने समासीनं पुष्पकोपरि राघवम् ॥ सौमित्रिसीतासहितं जटामुकुटशोभितम् ॥ ८४ ॥ चापबाणधरं श्यामं ससुग्रीवविभी
षणम् ॥ हत्वा रावणमायांतं कृतत्रैलोक्यरक्षणम् ॥८५॥ एवं ध्यात्वा जपेद्वर्णं लक्षं मत्री दशांशतः ॥ घृताक्तैः पायसैर्हुत्वा यजनं पूर्ववच्चरेत्॥८६॥
प्रणवो हृदयं सीतापतये तदनंतरम् ॥ रामाय हनयुग्मांते वर्मास्त्राग्निप्रियांतिमः ॥ ८७ ॥ एकोनविंशद्वर्णोऽयं मंत्रः सर्वार्थसाधकः ॥ विश्वामित्रो
मुनिश्चास्यानुष्टुप्छन्द उदाहृतम्॥८८॥देवता रामभद्रो जं बीजं शक्तिर्नम इति॥मंत्रोत्थितैः क्रमाद्वर्णैस्ततो ध्यायेच्च पूर्ववत्॥८९॥पूजनं काम्यकर्मादि
सर्वमस्य षडर्णवत् ॥ तारः स्वबीजं कमला रामभद्रेति संपठेत् ॥ ९० ॥ महेष्वासपदांते तु रघुवीर नृपोत्तम ॥ दशास्यांतकशब्दांते मां रक्ष
देहि संपठेत् ॥ ९१॥ परमांते मे श्रियं स्यान्मंत्रो वाणगुणाक्षरः ॥ वीजैर्वियुक्तो द्वात्रिंशदर्णोऽयं फलदायकः॥९२॥ विश्वामित्रो मुनिश्चास्यानुष्टुप्छंद ॥ १६१ ॥
उदाहृतम् ॥ देवता रामभद्रोऽत्र वीजं स्वं शक्तिरिंदिरा ॥ ९३ ॥ वीजत्रयाद्यैः कुर्वीत पदैः सर्वेण मंत्रवित् ॥ पंचांगानि च विन्यस्य मंत्रवर्णान्क्रमा
न्न्यसेत् ॥ ९४ ॥ मूर्ध्नि भाले दृशोः श्रोत्रे गंडयुग्मे सनासिके ॥ आस्ये दोःसंधियुगले स्तनहृन्नाभिषु क्रमात् ॥ ९५ ॥ कटौ मेढ्रे पायुपादसं

धिष्वर्णात्र्यसेन्मनोः ॥ ध्यानार्चनादिकं चास्य पूर्ववत्समुपाचरेत् ॥ ९६ ॥ लक्षत्रयं पुरश्चर्या पायसैर्हवनं मतम् ॥ ध्यात्वा रामं पीतवर्णं जपेल्लक्षं समाहितः ॥ ९७ ॥ दशांशं कमलैर्हुत्वा धनैर्धनपतिर्भवेत् ॥ तारो माया रमाद्वंद्वं दाशरथाय हृच्च वै ॥ ९८ ॥ एकादशाक्षरो मंत्रो मुन्याद्यर्चास्य पूर्ववत् ॥ त्रैलोक्यांते तु नाथाय हृदंतो वसुवर्णवान् ॥ ९९ ॥ अस्यापि पूर्ववत्सर्वं न्यासध्यानार्चनादिकम् ॥ आंजनेयपदांते तु गुरवे हृदयांतिमः ॥ १०० ॥ मंत्रो नवाक्षरोऽस्यापि यजनं पूर्ववन्मतम् ॥ ॥ ङेंतं रामपद पश्चाद्धृदयं पंचवणवत् ॥ १०१ ॥ मुनिध्यानार्चनं चास्य प्रोक्तं सर्वं षडर्णवत् ॥ रामांते चंद्रभद्रौ च ङेंतौ पावकवल्लभा ॥ १०२ ॥ मंत्रौ द्वौ च समाख्यातौ मुन्याद्यर्चादि पूर्ववत् ॥ वह्निः शेषान्वितश्चैव चंद्रभूषितमस्तकः ॥ १०३ ॥ एकाक्षरो रघुपतेर्मंत्रः कल्पद्रुमोऽपरः ॥ ब्रह्मा मुनिः स्याद्गायत्री छंदो रामोऽस्य देवता ॥ १०४ ॥ षड्दीर्घाढ्येन मंत्रेण षडंगानि समाचरेत् ॥ सरयूतीरमंदारवेदिकापंकजासने ॥१०५॥ श्यामं वीरासनासीनं ज्ञानमुद्रोपशोभितम् ॥ वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ॥ १०६ ॥ अवेक्षमाणमात्मानं मन्मथामिततेजसम् ॥ शुद्धस्फटिकसंकाशं केवलं मोक्षकांक्षया ॥ १०७ ॥ चिंतयेत्परमात्मानमृतुलक्षं जपेन्मनुम् ॥ सर्वं षडर्णवच्चास्य होमनित्यार्चनादिकम् ॥ १०८ ॥ वह्निः शेषासनो भांतः केवलो द्व्यक्षरो मनुः ॥ एकाक्षरोक्तवत्सर्वं मुनिध्यानार्चनादिकम् ॥ १०९ ॥ तारमानारमानंगचास्त्रबीजैर्द्विवर्णकः ॥ त्र्यक्षरो मंत्रराजः स्यात्षड्विधः सकलेष्टदः ॥ ११० ॥ द्व्यक्षरश्चंद्रभद्रांतो द्विविधश्चतुरक्षरः ॥ एकार्णोक्तवदेतेषां मुनिध्यानार्चनादिकम् ॥ १११ ॥ तारो रामश्चतुर्थ्यंतो वर्मास्त्रं वह्निवल्लभा ॥ अष्टार्णोऽयं महामंत्रो मुन्याद्यर्चा षडर्णवत् ॥ ११२ ॥ तारो मया हृदंते स्याद्रामाय प्रणवांतिमः ॥ शिवोमाराममंत्रोऽयमष्टार्णः सर्वसिद्धिदः ॥ ११३ ॥ ऋषिः सदाशिवः प्रोक्तो गायत्री छंद ईरितम् ॥ शिवोमारामचंद्रोऽत्र देवता परिकीर्त्तितः ॥११४॥ षड्दीर्घयामाय यांतु ध्रुवपंचार्णयुक्तया॥ षडंगानि विधायाथ ध्यायेद्धृदि सुरार्चितम् ॥ ११५ ॥ रामं त्रिनेत्रं सोमार्द्धधारिणं शूलिनं वरम् ॥ भस्मोद्धूलितसर्वांगं कपर्दिनमुपास्महे ॥ ११६॥ रामाभिरामां सौंदर्यसीमां सोमावतंसिनीम् ॥ पाशांकुशधनुर्वाणधरां ध्यायेत्त्रिलोचनाम् ॥ ११७ ॥ एवं ध्यात्वा जपेद्वर्णलक्षं त्रिमधुरान्वितैः ॥ विल्वपत्रैः फलैः पुष्पैस्तिलैर्वा पंकजैर्हुनेत् ॥ ११८ ॥ स्वयमायांति निधयः सिद्धयश्च सुरेप्सिताः ॥ तारो माया च भरताग्रजराममनोभवः ॥ ११९ ॥ वह्निजायाद्वादशार्णो मंत्रः कल्पद्रुमोऽपरः ॥ अंगिराश्च मुनिश्छंदो गायत्री देवता पुनः ॥ १२० ॥ श्रीरामो भुवनाबीजं स्वाहाशक्तिः समीरितः ॥ चंद्रैकमुनिभूनेत्रैर्मंत्रार्णैरंगकल्पनम् ॥ १२१ ॥ ध्यानपूजादिकं चास्य सर्वं कुर्यात्षडर्णवत् ॥ प्रणवो हृदयं सीतापते रामश्च ङेंतिमः ॥ १२२ ॥





हनद्वयांते वर्मास्त्रं मंत्रः षोडशवर्णवान् ॥ अगस्त्योऽस्य मुनिश्छंदो बृहती देवता पुनः ॥१२३॥श्रीरामोऽहं तथा बीजं रां शक्तिः समुदीरिता ॥रामा
विधवह्निवेदाक्षिवर्णैः पंचांगकल्पना ॥ १२४ ॥ ध्यानपूजादिकं सर्वमस्य कुर्यात्षडर्णवत् ॥ तारो हृच्चैव ब्रह्मण्यसेव्याय पदमीरयेत् ॥ १२५ ॥
रामायाकुंठशब्दांते तेजसे च समीरयेत् ॥ उत्तमश्लोकधुर्याय स्वं भृगुः कामिकान्वितः ॥ १२६ ॥ दंडार्पितां प्रिये मंत्रो रामरामाक्षरो मतः ॥
ऋषिः शुकस्तथानुष्टुप्छंदो रामोऽस्य देवता ॥ १२७ ॥ पादैः सर्वेण पंचांगं कुर्याच्छेषं षडर्णवत् ॥ लक्षं जपो दशांशेन जुहुयात्पायसैः सुधीः ॥
॥ १२८॥ सिद्धमंत्रस्य भुक्तिः स्यान्मुक्तिः पातकनाशनम् ॥आदौ दाशरथायांते विद्महे पदमुच्चरेत् ॥१२९॥ ततः सीतावल्लभाय धीमहीति समुच्च
रेत् ॥ तन्नो रामः प्रचो वर्णो दयादिति च संवदेत्॥ १३० ॥ एषोक्तारा मगायत्री सर्वाभीष्टफलप्रदा ॥ पद्मासीतापदं ङेंतं ठद्वयांतः षडक्षरः ॥
॥ १३१ ॥ वाल्मीकिश्च मुनिश्छंदो गायत्री देवता पुनः ॥ सीता भगवती प्रोक्ता श्रीं बीजं वह्निसुन्दरी ॥ १३२ ॥ शक्तिः षड्दीर्घयुक्तेन बीजेनां
गानि कल्पयेत् ॥ ततो ध्यायन्महादेवीं सीतां त्रैलोक्यपूजिताम् ॥ १३३ ॥ तप्तहाटकवर्णाभां पद्मयुग्मं करद्वये ॥ सद्रत्नभूषणस्फूर्जद्दिव्यदेहां
शुभात्मिकाम् ॥ १३४ ॥ नानावस्त्रां शशिमुखीं पद्माक्षीं मुदितांतराम् ॥ पश्यंतीं राघवं पुण्यं शय्याघ्यां षड्गुणेश्वरीम् ॥१३५॥ एवं ध्यात्वा जपे
द्वर्णलक्षं मंत्री दशांशतः॥जुहुयात्कमलैः फुल्लैःपीठे पूर्वोदिते यजेत्॥१३६॥मूर्तिं संकल्प्य मूलेन तस्यामावाह्य जानकीम्॥संपूज्य दक्षिणे राममभ्यर्च्या
ग्रेऽनिलात्मजम्॥१३७॥पृष्ठे लक्ष्मणमभ्यर्च्य षट्कोणेष्वंगपूजनम् ॥ पत्रेषु मंत्रिमुख्यांश्च बाह्ये लोकेश्वरान्पुनः॥१३८॥वज्राद्यानपि संपूज्य सर्वसिद्धी
श्वरो भवेत् ॥ जातीपुष्पैश्चन्दनाक्तै राजवश्याय होमयेत् ॥ १३९ ॥ कमलैर्धनधान्याप्तिर्नीलाब्जैर्वशयन् जगत् ॥ विल्वपत्रैः श्रियःप्राप्त्यै दूर्वाभी
रोगशांतये॥१४०॥किं बहूक्तेन सौभाग्यं पुत्रान्पौत्रान्परं सुखम्॥धनं धान्यं च मोक्षं च सीताराधनतो लभेत्॥१४१॥ शक्रः सेंदुर्लक्ष्मणाय हृदयं
सप्तवर्णवान्॥अगस्त्योऽस्य मुनिश्छंदो गायत्री देवता पुनः॥१४२॥लक्ष्मणाख्यो महावीरश्चाद्यं द्वीजशक्तिके॥षड्दीर्घाढ्येन बीजेन षडंगानि समाच
रेत्॥१४३॥द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम्॥धनुर्बाणकरं रामसेवासंसक्तमानसम्॥१४४॥ध्यात्वैवं प्रजपेद्वर्णलक्षं मंत्री दशांशतः॥मध्वाक्तैः पाय
सैर्हुत्वा रामपीठे प्रपूजयेत्॥१४५॥रामवद्यजनं चास्य सर्वसिद्धिप्रदो ह्ययम्॥साकल्यं रामपूजाया यदीच्छेन्नियतं नरः॥१४६॥तेन यत्नेन कर्त्तव्यं लक्ष्म 
णार्चनमादरात् ॥ श्रीरामचंद्रभेदास्तु बहवः संति सिद्धिदाः ॥१४७॥ तत्साधकैः सदा कार्यं लक्ष्मणाराधनं शुभम् ॥ अष्टोत्तरसहस्रं वा शतं वा
सुसमाहितैः ॥ १४८ । लक्ष्मणस्य मनुर्जप्यो मुमुक्षुभिरतंद्रितैः ॥ अजप्त्वा लक्ष्मणमनुं राममंत्रान् जपंति ये ॥१४९॥ न तेषां जायते सिद्धिर्हानि

रेव पदे पदे ॥ यो जपेल्लक्ष्मणमनुं नित्यमेकांतमास्थितः ॥१५०॥ मुच्यते सर्वपापेभ्यः सर्वान्कामानवाप्नुयात्॥जयप्रधानो मंत्रोऽयं राज्यप्राप्त्यैक साधनम् ॥ १५१ ॥ नष्टराज्याप्तये मंत्रं जपेल्लक्षं समाहितः ॥ सोऽचिरान्नष्टराज्यं स्वं प्राप्नोत्येव न संशयः॥१५२॥ ध्यायन्रामयोध्यायामभिषिक्त मनन्यधीः ॥ पञ्चायुतं मनुं जप्त्वा नष्टराज्यमवाप्नुयात् ॥१५३॥ नागपाशविनिर्मुक्तं ध्यात्वा लक्ष्मणमादरात् ॥ अयुतं प्रजपेन्मंत्रं निगडान्मुच्यते ध्रुवम् ॥१५४॥ वातात्मजेनानीताभिरोषधीभिर्गतव्यथम् ॥ ध्यात्वा लक्षं जपन्मंत्रमल्पमृत्युं जयेद्ध्रुवम् ॥१५५॥ घातयंतं मेघनादं ध्यात्वा लक्षं जपेन्मनुम् ॥ दुर्जयं वापि वेगेन जयेद्रिपुकुलं महत् ॥ १५६ ॥ ध्यात्वा शूर्पणखानासाछेदनोद्युक्तमानसम् ॥ सहस्रं प्रजपेन्मंत्रं पुरुहूतादिकान् जयेत् ॥ १५७ ॥ रामपादाब्जसेवार्थं कृतोद्योगमथो स्मरन् ॥ प्रजपल्लँक्षमेकांते महारोगात्प्रमुच्यते ॥ १५८ ॥ त्रिमासं विजिताहारो नित्यं सप्तसहस्रकम् ॥ अष्टोत्तरशतैः पुष्पैर्निश्छिद्रैः शातपत्रकैः ॥ १५९ ॥ पूजयित्वा विधानेन पायसं च सशर्करम् ॥ निवेद्य प्रजपेन्मंत्रं कुष्टरोगात्प्रमुच्यते ॥ १६० ॥ विजने विजिताहारः षण्मासं विधिनामुना ॥ क्षयरोगात्प्रमुच्येत सत्यं सत्यं न संशयः ॥ १६१ ॥ अभिमंत्र्य जलं प्रातर्मंत्रेण त्रिः समाहितः ॥ त्रिसंध्यं वा पिबेन्नित्यं मुच्यते सर्वरोगतः ॥ १६२ ॥ दारिद्र्यं च पराभूतं जायते धनदोपमः ॥ विषादिदोषसंस्पर्शो न भवेत्तु कदाचन ॥ १६३ ॥ मनुना मंत्रितैस्तोयैः प्रत्यहं क्षालयेन्मुखम् ॥ मुखनेत्रादिसंभूताञ्जयेद्रोगांश्च दारुणान् ॥ १६४ ॥ पीत्वाभिमंत्रितं त्वंभः कुक्षिरोगान् जयेद्ध्रुवम् ॥ लक्ष्मणप्रतिमां कृत्वा दद्याद्भक्त्या विधानतः ॥ १६५ ॥स सर्वेभ्योऽथ रोगेभ्यो मुच्यते नात्र संशयः ॥ कन्यार्थी विमलापाणिग्रहणासक्तमानसः ॥ १६६॥ ध्यायन् लक्षं जपेन्मंत्री अब्जैर्हुत्वा दशांशतः ॥ ईप्सितां लभते कन्यां शीघ्रमेव न संशयः॥ १६७ ॥दीक्षितं जृंभणास्त्राणां मंत्रेषु नियतव्रतम् ॥ ध्यात्वा च विधिवन्नित्यं जपेन्मासत्रयं मनुम् ॥ १६८ ॥ पूजापुरःसरं सप्तसहस्रं विजितेंद्रियः ॥ सर्वासामपि विद्यानां तत्त्वज्ञो जायते नरः ॥ १६९ ॥ विश्वामित्रक्रतुवरे कृताद्भुतपराक्रमम् ॥ ध्यायँल्लक्षं जपेन्मंत्रं मुच्यते महतो भयात् ॥ १७० ॥ कृतनित्यक्रियः शुद्धस्त्रिकालं प्रजपेन्मनुम् ॥ सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ १७१ ॥ दीक्षितो विधिवन्मंत्री गुणैर्विगतकल्मषः ॥ स्वाचारनियतो दांतो गृहस्थो विजितेंद्रियः ॥ १७२ ॥ ऐहिकाननपेक्ष्यैव निष्कामो योऽर्चयेद्विभुम् ॥ स सर्वान्पुण्यपापौघान्दग्ध्वा निर्मलमानसः ॥ १७३ ॥ पुनरावृत्तिरहितः शाश्वतं पदमश्नुते ॥ सकामो वांछितान् लब्ध्वा भुक्त्वा भोगान् मनोगतान् ॥ १७४ ॥ जातिस्मरश्चिरं भूत्वा याति विष्णोः परं पदम् ॥ निद्राचन्द्रान्विता पश्चाद्भरताय हृदंतिमः ॥ १७५ ॥ सप्ताक्षरो मनुश्चास्य मुन्याद्यर्चादि पूर्ववत् ॥





 

वकः सेंदुश्च शत्रुघ्नपरं ङेंतं हृदंतिमः ॥१७६॥ सप्ताक्षरोऽयं शत्रुघ्नमंत्रः सर्वेष्टसिद्धिदः ॥१७७॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने सनत्कुमारविभागे तृतीयपादे रामाद्युपासनावर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥७३॥ सनत्कुमार उवाच॥अथोच्यंते हनुमतो मंत्राः सर्वेष्टदायकाः॥ यान्समाराध्य विप्रेंद्र तत्तुल्याचरणा नराः ॥ १ ॥ मनुः स्वरेंदुसंयुक्तं गगनं च भगान्विताः ॥ हसफाग्निनिशाधीशाः द्वितीयं बीजमीरितम् ॥ २ ॥ स्वफाग्नथो भगेंद्राव्यास्तृतीयं बीजमीरितम् ॥वियद्भृग्वग्निमन्विदुयुक्तं स्याच्च चतुर्थकम् ॥ ३ ॥ पंचमं भगचंद्राव्यावियद्भृगुस्वकाग्नयः ॥ मन्वि द्राव्यौ हसौ षष्ठं ङेंतः स्याद्धनुमांस्ततः ॥ ४ ॥ हृदयांतो महामंत्रराजोऽयं द्वादशाक्षरः ॥ रामचन्द्रो मुनिश्चास्य जगतीछंद ईरितम्॥ ५ ॥देवता हनुमान्बीजं षष्ठं शक्तिर्द्वितीयकम् ॥ षड्बीजैश्च षडंगानि शिरोभाले दृशोर्मुखे ॥ ६ ॥ गलबाहुद्वये चैव हृदि कुक्षौ च नाभितः ॥ ध्वजे जानुद्वये पादद्वये वर्णान्क्रमान्न्यसेत् ॥ ७ ॥ षड्बीजानि पदद्वंद्वं मूर्ध्नि भाले मुखे हृदि ॥ नाभावूर्वोर्जंघयोश्च पादयोर्विन्यसेत्क्रमात् ॥ ८ ॥ अंजनीगर्भसंभूतं ततो ध्यायेत्कपीश्वरम् ॥ उद्यत्कोटयर्कसंकाशं जगत्प्रक्षोभकारकम् ॥९॥ श्रीरामांघ्रिध्याननिष्ठं सुग्रीवप्रमुखार्चितम् ॥ वित्रासयंतं नादेन राक्षसान्मारुतिं भजेत् ॥ १० ॥ ध्यात्वैवं प्रजपेद्भानुसहस्रं विजितेंद्रियः ॥ दशांशं जुहुयाद्व्रीहीन्पयोदध्याज्यमिश्रितान् ॥११॥पूर्वोक्ते वैष्णवे पीठे मूर्त्तिं संकल्प्य मूलतः ॥ आवाह्य तत्र संपूज्य पाद्यादिभिरुपायनैः॥१२॥केशरेष्वंगपूजा स्यात्पत्रेषु च ततोऽर्चयेत्॥रामभक्तो महातेजाः कपिराजो महाबलः॥१३॥द्रोणाद्रिहारको मेरुपीठकार्चनकारकः॥दक्षिणाशाभास्करश्च सर्वविघ्नविनाशकः॥१४॥इत्थं सम्पूज्य नामानि दलाग्रेषु ततोऽर्चयेत्॥ सुग्रीवमंगद नीलं जांबवंतं नलं तथा ॥ १५ ॥ सुषेणं द्विविदं मैंदं लोकपालस्ततोऽर्चयेत् ॥ वज्राद्यानपि संपूज्य सिद्धश्चैवं मनुर्भवेत् ॥१६॥ मंत्रं नवशतं रात्रौ जपेद्दशदिनावधि ॥ यो नरस्तस्य नश्यंति राजशत्रूत्थभीतयः ॥ १७ ॥ मातुलिंगाम्रकदलीफलैर्हुत्वा सहस्रकम्॥ द्वाविंशतिब्रह्मचारिविप्रान्संभोजयेच्छुचीन् ॥ १८ ॥ एवंकृते भूतविषग्रहरोगाद्युपद्रवाः ॥ नश्यंति तत्क्षणादेव विद्वेपिग्रहदानवाः ॥ १९ ॥ अष्टोत्तरशतेनांबु मंत्रितं विषनाशनम् ॥ भूतापस्मारकृत्योत्थज्वरे तन्मंत्रमंत्रितैः ॥ २० ॥ भस्मभिः सलिलैर्वापि ताडयेज्ज्वरिणं क्रुधा ॥ त्रिदिनाज्ज्वरमुक्तोऽसौ सुखं च लभते नरः ॥ २१ ॥ औषधं वा जलं वापि भुक्त्वा तन्मंत्रमंत्रितम् ॥ सर्वान्रोगान्पराभूय सुखी भवति तत्क्षणात् ॥ २२ ॥ तज्जप्तभस्मलिप्तांगो भुक्त्वा तन्मंत्रितं पयः ॥ योद्धुं गच्छेच्च यो मंत्री शस्त्रसंघैर्न बाध्यते ॥ २३ ॥ शस्त्रक्षतं व्रणस्फोटो लूतास्फोटोऽपि भस्मना ॥ त्रिर्जप्तेन च संस्पृष्टाः शुष्यंत्येव न संशयः ॥ २४ ॥ जपेदर्कास्तमारभ्य यावदर्कोदयो भवेत् ॥ मन्त्रं सप्तदिनं यावच्चादाय भस्मकीलकौ ॥ २५ ॥ निखनेदभिमन्त्र्याशु

शत्रूणां द्वार्यलक्षितः॥ विद्वेषं मिथ आपन्नाः पलायंतेऽरयोऽचिरात्॥२६॥भस्मांबु चंदनं मंत्री मंत्रेणानेन मंत्रितम्॥भक्ष्यादियोजितं यस्मै ददाति स तु दासवत् ॥ २७ ॥ क्रूराश्च जंतवोऽप्येवं भवंति वशवर्तिनः ॥ गृहीत्वेशानदिक्संस्थं करंजतरुमूलकम् ॥ २८ ॥ कृत्वा तेनांगुष्ठमात्रां प्रतिमां च हनूमतः ॥ कृत्वा प्राणप्रतिष्ठां च सिंदूराद्यैः प्रपूज्य च ॥ २९ ॥ गृहस्याभिमुखीं द्वारे निखनेन्मंत्रमुच्चरन् ॥ ग्रहाभिचाररोगाग्निविषचौरनृपोद्भवाः ॥ ३० ॥ न जायंते गृहे तस्मिन् कदाचिदप्युपद्रवाः ॥ तद्गृहं धनपुत्राद्यैरेधते प्रत्यहं चिरम् ॥ ३१ ॥ निशि यत्र वने भस्म मृत्स्नया वापि यत्नतः ॥ शत्रोः प्रतिकृतिं कृत्वा हृदि नाम समालिखेत् ॥ ३२ ॥ कृत्वा प्राणप्रतिष्ठांतं भिंद्याच्छस्त्रैर्मनुं जपन् ॥ मंत्रांते प्रोच्चरेच्छत्रोर्नाम छिंधि च भिंधि च ॥ ३३ ॥ मारयेति च तस्यांते दंतैरोष्ठं निपीड्य च ॥ पाण्योस्तले प्रपीड्याथ त्यक्त्वा तं स्वगृहं व्रजेत् ॥३४॥ कुर्वन्सप्तदिनं चैवं हन्याच्छत्रुं न संशयः ॥ राजिकालवणैर्मुक्तचिकुरः पितृकानने ॥ ३५ ॥ धत्तूरफलपुष्पैश्च नखरोमविषैरपि ॥ द्विक ( काक ) कौशिकगृध्राणां पक्षैः श्लेष्मांतकाक्षजैः ॥ ३६ ॥ समिद्भिस्त्रिशतं याम्यदिङ्मुखो जुहुयान्निशि ॥ एवं सप्तदिनं कुर्वन्मारयेदुद्धतं रिपुम् ॥ ३७ ॥ वित्रासस्त्रिदिनं रात्रौ श्मशाने षट्शतं जपेत् ॥ ततो वेताल उत्थाय वदेद्भावि शुभाशुभम् ॥ ३८ ॥ किंकरीभूय वर्त्तेत कुरुते साधकोदितम् ॥ भस्मांबुमंत्रितं रात्रौ सहस्रावृत्तिकं पुनः ॥ ३९ ॥ दिनत्रयं च तत्पश्चात्प्रक्षिपेत्प्रतिमासु च ॥ यासु कासु च स्थूलासु लघुष्वपि विशेषतः ॥ ४० ॥ मंत्रप्रभावाच्चलनं भवत्येव न संशयः ॥ अष्टम्यां वा चतुर्दश्यां कुजे वा रविवासरे ॥ ४१ ॥ हनुमत्प्रतिमां पट्टे माषैः स्नेहपरिप्लुतैः ॥ कुर्याद्रम्यां विशुद्धात्मा सर्वलक्षणलक्षिताम् ॥ ४२ ॥ तैलदीपं वामभागे घृतदीपं तु दक्षिणे ॥ संस्थाप्यावाहयेत्पश्चान्मूलमंत्रेण मंत्रवित् ॥ ४३ ॥ प्राणप्रतिष्ठां कृत्वा च पाद्यादीनि समर्पयेत् ॥ रक्तचंदनपुष्पैश्च सिंदूराद्यैः समर्चयेत् ॥ ४४ ॥ धूपं दीपं प्रदायाथ नैवेद्यं च समर्पयेत् ॥अपूपमोदनं शाकमोदकान्वटकादिकम् ॥ ४५ ॥ साज्यं च तत्समर्प्याथ मूलमंत्रेण मंत्रवित् ॥ अखंडितान्यहिलतादलानि सप्तविंशतिम् ॥ ४६ ॥त्रिधा कृत्वा सपूगानि मूलेनैव समर्पयेत्॥एवं संपूज्य मंत्रज्ञो जपेद्दशशतं मनुम् ॥४७॥कर्पूरारार्तिकं कृत्वा स्तुत्वा च बहुधा सुधीः॥निजेप्सितं निवेद्याथ विधिवद्विसृजेत्ततः ॥ ४८ ॥ नैवेद्यान्नेन संभोज्य ब्राह्मणान्सप्तसंख्यया ॥ निवेदितानि पर्णानि तेभ्यो दद्याद्विभज्य च ॥ ४९ ॥ दक्षिणां च यथाशक्ति दत्त्वा तान् विसृजेत्सुधीः॥तत इष्टगणैः सार्द्धं स्वयं भुंजीत वाग्यतः ॥५०॥ तद्दिने भूमिशय्यां च ब्रह्मचर्य्यं समाचरेत् ॥एवं यः कुरुते मर्त्यः सोऽचिरादेव निश्चितम्॥५१॥प्राप्नुयात्सकलान्कामान्कपीशस्य प्रसादतः ॥हनुमत्प्रतिमां भूमौ विलिखेत्तत्पुरो मनुम् ॥५२ ॥ साध्यनाम द्वितीयांतं







विमोचय विमोचय ॥ तत्पूर्वं मार्जयेद्वामपाणिनाथ पुनर्लिखेत् ॥ एवमष्टोत्तरशतं लिखित्वा मार्जयेत्पुनः ॥५३॥एवं कृते महाकारागृहाच्छीघ्रं विमुच्यते ॥ एवमन्यानि कर्माणि कुर्य्यात्पल्लवमुल्लिखन् ॥ ५४॥ सर्षपैर्वश्यकृद्धोमो विद्वेषे हयमारजैः ॥ कुंकुमैरिध्मकाष्ठैर्वा मरीचैर्जीरकैरपि ॥ ५५॥ ज्वरे दूर्वागुडूचीभिर्दध्ना क्षीरेण वा घृतैः ॥ शूले करंजवातारिसमिद्भिस्तैललोलितैः ॥ ५६ ॥ तैलाक्ताभिश्च निर्गुंडीसमिद्भिर्वा प्रयत्नतः ॥ सौभाग्ये चंदनैश्चंद्रलोचनैर्वा लवंगकैः ॥ ५७॥ सुगंधपुष्पैर्वस्त्राप्त्यै तत्तद्धान्यैस्तदाप्तये ॥ रिपुपादरजोभिश्च राजीलवणमिश्रितैः ॥ ५८ ॥ होमयेत्सप्तरात्रं च रिपुर्याति यमालयम् ॥ धान्यैः संप्राप्यते धान्यमन्नैरन्नसमुच्छ्रयः ॥ ५९ ॥ तिलाज्यक्षीरमधुभिर्महिषीगोसमृद्धये ॥ किं बहूक्तैर्विषे व्याधौ शांतौ मोहे च मारणे ॥ ६० ॥ विवादे स्तंभने द्यूते भूतभीतौ च संकटे ॥ वश्ये युद्धे क्षते दिव्ये बंधमोक्षे महावने ॥ ६१ ॥ साधितोऽयं नृणां दद्यान्मंत्रः श्रेयः सुनिश्चितम् ॥ वक्ष्येऽथ हनुमद्यंत्रं सर्वसिद्धिप्रदायकम् ॥ ६२ ॥ लांगूलाकारसंयुक्तं वलयत्रितयं लिखेत् ॥ साध्यनाम लिखेन्मध्ये पाशिबीजप्रवेष्टितम् ॥ ६३ ॥ उपर्यष्टच्छदं कृत्वा पत्रेषु कवचं लिखेत् ॥ तद्बहिर्दंतमालिख्य तद्बहिश्चतुरस्रकम् ॥ ६४ ॥ चतुरस्रस्य रेखाग्रे त्रिशूलानि समालिखेत् ॥ सौं बीजं भूपुरस्याष्टवज्रेषु विलिखेत्ततः ॥ ६५ ॥ कोणेष्वंकुशमालिख्य मालामंत्रेण वेष्टयेत् ॥ तत्सर्वं वेष्टयेद्यंत्रवलयत्रितयेन च ॥ ६६ ॥ शिलायां फलके वस्त्रे ताम्रपत्रेऽथ कुड्यके ॥ ताडपत्रेऽथ भूर्जे वा रोचनानाभिकुंकुमैः॥६७॥यंत्रमेतत्समालिख्य निराहारो जितेंद्रियः॥ कपेः प्राणान्प्रतिष्ठाप्य पूजयेत्तद्यथाविधि ॥ ६८ ॥ अशेषदुःखशान्त्यर्थं यंत्रं संधारयेद् बुधः ॥ मारीज्वराभिचारादिसर्वोपद्रवनाशनम् ॥ ६९ ॥ योषितामपि बालानां धृतं जनमनोहरम् ॥ भूतकृत्यापिशाचानां दर्शनादेव नाशनम् ॥ ७० ॥ मालामंत्रमथो वक्ष्ये तारो वाग्विष्णुगेहिनी ॥ दीर्घत्रयान्विता माया प्रागुक्तं कूटपञ्चकम् ॥ ७१ ॥ ध्रुवो हद्धनुमान्ङेंतोऽथ प्रकटपराक्रमः ॥ आक्रांतदिग्मंडलांते यशोवितानसंवदेत् ॥ ७२ ॥ धवलीकृतवर्णांते जगत्त्रितयवज्र च ॥ देहज्वलदग्निसूर्य कोटचेन च समप्रभ ॥ ७३ ॥ तनूरुहपदांते तु रुद्रावतार संवदेत् ॥ लंकापुरी ततः पश्चाद्दहनोदधिलंघन ॥ ७४ ॥ दशग्रीवशिरः पश्चात्कृतांतकपदं वदेत् ॥ सीतांते श्वसनपदं वाय्वंत सुतमीरयेत्॥ ७५ ॥अंजनागर्भसंभूतः श्रीरामलक्ष्मणान्वितः ॥ नंदंति कर वर्णांते सैन्यप्राकार ईरयेत् ॥ ७६ ॥ सुग्रीवसख्यकाद्वर्णाद्रणवालिनिवर्हण ॥कारणद्रोणशब्दांते पर्वतोत्पाटनेति च ॥ ॥ ७७॥ अशोकवनवीथ्यंते दारुणाक्षकुमारक ॥ छेदनांते वनरक्षाकरांते तु समूह च ॥ ७८ ॥ विभञ्जनांते ब्रह्मास्त्रब्रह्मशक्ति ग्रसेति च ॥ लक्ष्मणांते शक्तिभेदनिवारणपदं वदेत् ॥ ७९ ॥ विशल्योषधिशब्दांते समानयन संपठेत् ॥ बालोदित प्रतो भानुमंडलग्रसनेति च ॥ ८० ॥

मेघनादहोमपदाद्विध्वंसनपदं वदेत् ॥ इंद्रजिद्वधकारांते णसीतारक्षकेति च ॥ ८१ ॥ राक्षसीसंघशब्दांते विदारणपदं वदेत् ॥ कुंभकर्णादिसंकीर्त्य वधांते च परायण ॥ ८२ ॥ श्रीरामभक्तिवणांते तत्परेति समुद्र च॥ व्योमद्रुमलंघनेति महासामर्थ्य संवदेत्॥ ८३ ॥ महातेजःपुंजशब्दाद्विराजमानवो च्चरेत ॥ स्वामिवचनसंपादितार्जुनांते च संयुग ॥८४॥ सुहायांते कुमारेति ब्रह्मचारिन्पदंवदेत् ॥ गंभीरशब्दोदयांते दक्षिणापथ संवदेत् ॥ मार्त्तण्डमेरु शब्दांते वदेत्पर्वतपीठिका ॥ ८५ ॥ अर्चनांते तु सकलमंत्रांते मपदं वदेत् ॥ आचार्यमम शब्दांते सर्वग्रहविनाशन ॥ ८६ ॥ सर्वज्वरोच्चाटनांते सर्वविषविनाशन ॥ सर्वापत्तिनिवारण सर्वदुष्टनिवर्हण ॥ ८७ ॥ सर्वव्याध्यादि सम्प्रोच्य भयांते च निवारण ॥ ८८॥ सर्वशत्रुच्छेदनेति ततो मम परस्य च ॥ ८९ ॥ ततस्त्रिभुवनांते तु पुंस्त्रीनपुंसकात्मकम् ॥ सर्वजीवपदांते तु जातं वशययुग्मकम् ॥ ९० ॥ ममाज्ञाकारकं पश्चात्संपादय युग्मं पुनः ॥ ततो नानानामधेयान्सर्वान् राज्ञः स संपठेत् ॥ ९१ ॥ परिवारान्ममेत्यंते सेवकान् कुरु युग्मकम् ॥ सर्वशस्त्रास्त्रवीत्यंते पाणि विध्वंसय द्वयम्॥९२॥लज्जादीर्घत्रयोपेता होत्रयं चेहि युग्मकम् ॥ विलोमं पंचकूटानि सर्वशत्रून्हनद्वयम्॥९३॥परबलानि परांते सैन्यानि क्षोभयद्वयम् ॥९४॥ मम सर्वं कार्यजातं साधयेति द्वयं ततः ॥९५ ॥ सर्वदुष्टदुर्जनांते मुखानि कीलयद्वयम् ॥ धेत्रयं वर्मत्रितयं फट्त्रयं हांत्रयं ततः ॥९६॥ वह्निप्रियांतो मंत्रोऽयं मालासंज्ञोऽखिलेष्टदः ॥९७॥पस्वष्टत्राणवर्णोऽयं मंत्रः सर्वेष्टसाधकः॥९८॥महाभये महोत्पाते स्मृतोऽयं दुःखनाशनः॥ द्वादशार्णस्य षट्कूटं त्यक्त्वा बीजं तथादिमम् ॥ ९९ ॥ पंचकूटात्मको मंत्रः सर्वकामप्रदायकः ॥ रामचंद्रो मुनिश्चास्य गायत्री छंद ईरितम् ॥१०० ॥ हनुमान्देवता प्रोक्तो विनियोगोऽखिलाप्तये ॥ पंचबीजैः समस्तेन षडंगानि समाचरेत्॥ १०१ ॥ रामदूतो लक्ष्मणांते प्राणदाताञ्जनीसुतः ॥ सीताशोकविनाशोऽयं लंकाप्रासादभंजनः ॥ १०२ ॥हनुमदाद्याः पंचैते बीजाद्या ङेयुताः पुनः ॥ षडंगमनवो ह्येते ध्यानपूजादि पूर्ववत् ॥ १०३ ॥ प्रणवो वाग्भवं पद्मा माया दीर्घत्रयान्विता ॥ पंचकूटानि मंत्रोऽयं रुद्रार्णः सर्वसिद्धिदः ॥ १०४ ॥ ध्यानपूजादिकं सर्वमस्यापि पूर्ववन्मतम् ॥ अयमारा धितो मंत्रः सर्वाभीष्टप्रदायकः ॥ १०५ ॥ नमो भगवते पश्चादनंतश्चन्द्रशेखरां ॥ जनेयाय महांते तु बलायांतेऽग्निवल्लभा ॥ १०६ ॥ अष्टादशार्णो मंत्रोऽयं मुनिरीश्वरसंज्ञकः ॥ छंदोऽनुष्टुप्देवता तु हनुमान्पवनात्मजः ॥ १०७ ॥ हं बीजं वह्निवनिता शक्तिः प्रोक्ता मनीषिभिः ॥ आंजनेयाय हृदयं शिरश्च रुद्रमूर्तये ॥ १०८ ॥ शिखायां वायुपुत्रायाग्निगर्भाय वर्मणि ॥ रामदूताय नेत्रं स्याद्ब्रह्मास्त्रायास्त्रमीरितम् ॥ १०९ ॥ तप्तचामीकरनिभं भीघ्नसंविहिताञ्जलिम् ॥ चलत्कुंडलदीप्तास्यं पद्माक्षं मारुतिं स्मरेत् ॥ ११० ॥ ध्यात्वैवमयुतं जप्त्वा दशांशं जुहुयात्तिलैः॥







वैष्णवे पूजयेत्पीठे प्रागुदिष्टेन वर्त्मना॥ १११ ॥ अष्टोत्तरशतं नित्यं नक्तभोजी जितेंद्रियः ॥ जपित्वा क्षुद्ररोगेभ्यो मुच्यते नात्र संशयः ॥ ॥ ११२ ॥ महारोगनिवृत्त्यै तु सहस्रं प्रत्यहं जपेत् ॥ राक्षसौघं विनिघ्नंतं कपिं ध्यात्वाघनाशनम् ॥ ११३ ॥ अयुतं प्रजपेन्नित्यमचिरान्न यति द्विषम् ॥ सुग्रीवेण समं रामं संदधानं कपिं स्मरन् ॥ ११४ ॥ प्रजपेदयुतं यस्तु संधिं कुर्याद्विपद्वयोः ॥ ध्यात्वा लंकां दहंतं तमयुतं प्रजपेन्मनुम् ॥ ११५ ॥ अचिरादेव शत्रूणां ग्रामान्संप्रदहेत्सुधीः ॥ ध्यात्वा प्रयाणसमये हनुमन्तं जपेन्मनुम् ॥ ११६॥ यो याति सोऽचिरात्स्वेष्टं साधयित्वा गृहे व्रजेत् ॥ हनुमंतं सदा गेहे योऽर्चयेज्जपतत्परः ॥ ११७ ॥ आरोग्यं च श्रियं कीर्तिं लभते निरुपद्रवम् ॥ कानने व्याघ्रचौरेभ्यो रक्षेन्मनुरयं स्मृतः ॥ ११८ ॥ प्रस्वापकाले शय्यायां स्मरेन्मंत्रमनन्यधीः ॥ तस्य दुःस्वप्नचौरादिभयं नैव भवेत्क्वचित् ॥ ११९ ॥ वियत्सेंदुर्हनुमते ततो रुद्रात्मकाय च ॥ वर्मास्त्रांतो महामंत्रो द्वादशार्णोऽष्टसिद्धिकृत् ॥ १२० ॥ रामचन्द्रो मुनिश्चास्य जगती छन्द ईरितम् ॥ हनुमान्देवता बीजमाद्यं शक्तिर्हुमीरिता ॥ १२१ ॥ षड्दीर्घभाजा बीजेन षडंगानि समाचरेत् ॥ महाशैलं समुत्पाट्य धावंतं रावणं प्रति ॥ १२२ ॥ लाक्षारक्तारुणं रौद्रं कालांतकयमोपमम् ॥ ज्वलदग्निसमं जैत्रं सूर्यकोटिसमप्रभम् ॥ १२३ ॥ अंगदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ॥ तिष्ठ तिष्ठ रणे दुष्ट सृजंतं घोरनिःस्वनम् ॥ १२४ ॥ शैवरूपिणमभ्यर्च्य ध्यात्वा लक्ष जपेन्मनुम् ॥ दशांशं जुहुयाद्व्रीहीन्पयोदध्याज्यमिश्रितान् ॥ १२५ ॥ पूर्वोक्ते वैष्णवे पीठे विमलादिसमन्विते ॥ मूर्तिं संकल्प्य मूलेन पूजा कार्या हनूमतः ॥ १२६ ॥ ध्यानैकमात्रोऽपि नृणां सिद्धिरेव न संशयः ॥ अथास्य साधनं वक्ष्ये लोकानां हितकाम्यया ॥ १२७ ॥ हनुमत्साधनं पुण्यं महापातकनाशनम् ॥ एतद्गुह्यतमं लोके शीघ्रसिद्धिकरं परम् ॥ १२८ ॥मंत्री यस्य प्रसादेन त्रैलोक्यविजयी भवेत् ॥ प्रातः स्नात्वा नदीतीरे उपविश्य कुशासने ॥ १२९ ॥ प्राणायामषडंगे च मूलेन सकलं चरेत् ॥ पुष्पांजल्यष्टकं दत्त्वा ध्यात्वा रामं ससीतकम् ॥ १३० ॥ ताम्रपात्रे ततः पद्ममष्टपत्रं सकेशरम् ॥ कुचंदनेन घृष्टेन संलिखेत्तच्छलाकया ॥ १३१ ॥ कर्णिकायां लिखेन्मंत्रं तत्रावाह्य कपीश्वरम् ॥ मूर्तिं मूलेन संकल्प्य ध्यात्वा पाद्यादिकं चरेत् ॥ १३२ ॥ गंधपुष्पादिकं सर्वं निवेद्य मूलमंत्रतः ॥ केसरेषु षडंगानि दलेषु च ततोऽर्चयेत् ॥ १३३ ॥ सुग्रीवं लक्ष्मणं चैव ह्यंगदं नलनीलकौ ॥ जाम्बवंतं च कुमुदं केसरीशं दलेऽर्चयेत् ॥ १३४ ॥ दिक्पालांश्चापि वज्रादीन्पूजयेत्तदनंतरम् ॥ एवं सिद्धे मनौ मंत्री साधयेत्स्वेष्टमात्मनि ॥ १३५ ॥ नदीतीरे कानने वा पर्वते विजनेऽथवा ॥ साधयेत्साधकश्रेष्ठो भूमिग्रहणपूर्वकम् ॥ १३६ ॥ जिताहारो जितश्वासो जितवाक्च जितेंद्रियः ॥ दिग्बन्धनादिकं कृत्वा न्यासध्यानादिपूर्वकम् ॥ १३७ ॥लक्षं

जपेन्मंत्रराजं पूजयित्वा तु पूर्ववत् ॥ लक्षांते दिवसं प्राप्य कुर्य्याच्च पूजनं महत् ॥ १३८ ॥ एकाग्रमनसा सम्यग्ध्यात्वा पवननंदनम् ॥ दिवारात्रौ जपं कुर्याद्यावत्संदर्शनं भवेत् ॥ १३९ ॥ सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः ॥ १४० ॥ यथेप्सितं वरं दत्वा साधकाय कपीश्वरः ॥ वरं लब्ध्वा साधकेंद्रो विहरेदात्मनः सुखैः ॥ १४१ ॥ एतद्धि साधनं पुण्यं लोकानां हितकाम्यया ॥ प्रकाशितं रहस्यं वै देवानामपि दुर्लभम् १४२ ॥ अन्यानपिप्रयोगांश्च साधयेदात्मनो हितान् ॥ वियदिंदुयुतं पश्चान्ङेंतं पवननंदनम् ॥१४३॥ वह्निप्रियांतो मंत्रोऽयं दशार्णः सर्वकामदः ॥ मुन्यादिकं च पूर्वोक्तं षडंगान्यपि पूर्ववत् ॥ १४४ ॥ ध्यायेद्रणे हनूमंतं सूर्यकोटिसमप्रभम् ॥ धावंतं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥ १४५ ॥ लक्ष्मणं च महावीरं पतितं रणभूतले ॥ गुरुं च क्रोधमुत्पाद्य ग्रहीतुं गुरुपर्वतम्॥१४६ ॥ हाहाकारैः सदर्पैश्च कंपयंतं जगत्त्रयम् ॥ आब्रह्मांड समाव्याप्य कृत्वा भीमं कलेवरम् ॥ १४७ ॥ लक्षं जपेद्दशांशेन जुहुयात्पूर्ववत्सुधीः ॥पूर्ववत्पूजनं प्रोक्तं मंत्रस्यास्य विधानतः ॥ १४८ ॥ एवं सिद्धे मनौ मंत्री साधयेदात्मनो हितम् ॥ अस्यापि मंत्रवर्यस्य रहस्यं साधनं तु वै ॥१४९॥ सुगोप्यं सर्वतंत्रेपु न देयं यस्य कस्यचित् ॥ ब्राह्मे मुहूर्ते चोत्थाय कृतनित्यक्रियः शुचिः ॥ १५० ॥ गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ॥ मूलमंत्रं ततो जप्त्वा सिंचेदादित्यसंख्यया ॥ १५१ ॥ एवं स्नानादिकं कृत्वा गंगातीरेऽथवा पुनः ॥ पर्वते वा वने वापि भूमिग्रहणपूर्वकम् ॥ १५२॥ आद्यवर्णैः पूरकं स्यात्पञ्चवर्गैश्च कुम्भकम् ॥ रेचकं च पुनर्याद्यैरेवं प्राणान्नियम्य च ॥ १५३ ॥ विधाय भूतशुद्ध्यादि पीठन्यासावधि पुनः ॥ ध्यात्वा पूर्वोक्तविधिना संपूज्य च कपीश्वरम् ॥ १५४ ॥ तदग्रे प्रजपेन्नित्यं साधकोऽयुतमादरात् ॥ सप्तमे दिवसे प्राप्ते कुर्याच्च पूजनं महत् ॥१५५॥एकाग्रमनसा मन्त्री दिवारात्रं जपेन्मनुम् ॥ महाभयं प्रदत्वा त्रिभागशेषासु निश्चितम् ॥ १५६॥ यामिनीषु समायाति नियतं पवनात्मजः ॥ यथेप्सितं वरं दद्यात्साधकाय कपीश्वरः ॥ १५७ ॥ विद्यां वापि धनं वापि राज्यं वा शत्रुनिग्रहम् ॥ तत्क्षणादेव चाप्नोति सत्यं सत्यं न संशयः ॥१५८॥ इह लोकेऽखिलान्कामान्भुक्त्वांते मुक्तिमाप्नुयात् ॥ सद्याचितं वायुयुग्मं हनूमंतेति चोद्धरेत् ॥ १५९ ॥ फलांते फक्रियानेत्रयुक्ता च कामिका ततः ॥ धग्गंते धगिनेत्युक्त्वा आयुरास्व पदं ततः ॥ १६० ॥ लोहितो गरुडो हेतिप्राणनेत्राक्षरो मनुः ॥ मुन्यादिकं तु पूर्वोक्तं प्लीहरोगहरो हरिः ॥ १६१ ॥ देवता च समुद्दिष्टा प्लीहयुक्तोदरे पुनः ॥ नागवल्लीदलं स्थाप्यमुपर्याच्छादयेत्ततः ॥ १६२ ॥ वस्त्रं चैवाष्टगुणितं ततः साधकसत्तमः ॥ शकलं वंशजं तस्योपरि मुंचेत्कपिं स्मरेत् ॥ १६३ ॥ आरण्यसाणकोत्पन्ने वह्नौ यष्टिं प्रतापयेत् ॥ बदरीभूरुहोत्थां तां मंत्रेणानेन सप्तधा ॥ १६४ ॥







तया संताडयेद्वंशशकलं जठरस्थितम् ॥ सप्तकृत्वः प्लीहरोगो नाशमायाति निश्चितम् ॥ १६५ ॥ तारो नमो भगवत आंजनेयाय चाब्रत् ॥ पू० ख०
अमुकस्य शृंखलां त्रोटयद्वितयमीरयेत् ॥ १६६ ॥ बंधमोक्षं कुरुयुगं स्वाहांतोऽयं मनुर्मतः ॥ ईश्वरोऽस्य मुनिश्छन्दोऽनुष्टुप्च देवता पुनः ॥ अ० ७४
॥ १६७ ॥ शृंखलामोचकः श्रीमान्हनूमान्पवनात्मजः ॥ हं वीजं ठद्वयं शक्तिर्बंधमोक्षे नियोगता ॥ १६८ ॥ षड्दीर्घवह्नियुक्तेन वीजेनां
गानि कल्पयेत् ॥ वामे शैलं वैरिभिदं विशुद्धं टंकमन्यतः ॥ १६९ ॥ दधानं स्वर्णवर्णं च ध्यायेत्कुंडलिनं हरिम् ॥ एवं ध्यात्वा जपेल्लक्ष
दशांशं चूतपल्लवैः ॥ १७० ॥ जुहुयात्पूर्ववत्प्रोक्तं यजनं वास्य सूरिभिः ॥ महाकारागृहे प्राप्तो ह्ययुतं प्रजपेन्नरः ॥ १७१ ॥ शीघ्रं कारागृ
हान्मुक्तः सुखी भवति निश्चितम् ॥ यंत्रं चास्य प्रवक्ष्यामि बन्धमोक्षकरं शुभम् ॥ १७२ ॥ अष्टच्छदांतः षट्कोणं साध्यनामसमन्वितम् ॥
षट्कोणेषु ध्रुवं ङेंतमांजनेयपदं लिखेत् ॥ १७३ ॥ अष्टच्छदेषु विलिखेत्प्रणवो वातुवात्विति ॥ गोरोचनाकुंकुमेन लिखित्वा यंत्रमुत्तम
म् ॥ १७४ ॥ धृत्वा मूर्ध्नि जपेन्मंत्रमयुतं बन्धमुक्तये ॥ यन्त्रमेतल्लिखित्वा तु मृत्तिकोपरि मार्जयेत् ॥ १७५ ॥ दक्षहस्तेन मन्त्रज्ञः प्रत्यहं मंडला
वधि ॥ एवं कृते महाकारागृहान्मंत्री विमुच्यते ॥ १७६ ॥ गगनं ज्वलनः साक्षी मर्कटेति द्वयं ततः ॥ तोयं शशेपे मकरे परिमुंचति
मुंचति ॥ १७७ ॥ ततः शृंखलिकां चेति वेदनेत्राक्षरो मनुः ॥ इमं मंत्रं दक्षकरे लिखित्वा वामहस्ततः ॥ १७८ ॥ दूरीकृत्य
जपेन्मंत्रमष्टोत्तरशतं बुधः ॥ त्रिसप्ताहात्प्रबद्धोऽसौ मुच्यते नात्र संशयः ॥ १७९ ॥ मुन्याद्यर्चादिकं सर्वमस्य पूर्ववदाचरेत् ॥ लक्षं
जपो दशांशेन शुभैर्द्रव्यैश्च होमयेत् ॥ १८० ॥ पुच्छाकारे सुवस्त्रे च लेखन्या क्षुरकोत्थया ॥ गन्धाष्टकैर्लिखेद्रूपं कपिराजस्य सुन्दरम् ॥ १८१ ॥
तन्मध्येऽष्टदशार्णं तु शत्रुनामान्वितं लिखेत् ॥ तेन मन्त्राभिजप्तेन शिरोबद्धेन भूमिपः ॥१८२॥ जयत्यरिगणं सर्वं दर्शनादेव निश्चितम्॥चन्द्रसूर्यो
परागादौ पूर्वोक्तं लेखयेद्ध्वजे ॥ १८३ ॥ ध्वजमादाय मन्त्रज्ञः संस्पर्शान्मोक्षणावधि ॥ मातृकां जापयेत्पश्चाद्दशांशेन च होमयेत् ॥ १८४ ॥ तिलैः
सर्षपसंमिश्रैः संस्कृते हव्यवाहने ॥ गजे ध्वजं समारोप्य गच्छेद्युद्धाय भूपतिः॥ १८५ ॥ गजस्थं तं ध्वजं दृष्ट्वा पलायन्तेऽरयो ध्रुवम्॥ महारक्षाकरं
यन्त्रं वक्ष्ये सम्यग्घनूमतः ॥ १८६ ॥ लिखेद्वसुदलं पद्मं साध्याख्यायुतकर्णिकम् ॥ दलेऽष्टकोणमालिख्य मालामन्त्रेण वेष्टयेत् ॥ १८७ ॥ तद्बहि
र्मायया वेष्ट्य प्राणस्थापनमाचरेत् ॥ लिखितं स्वर्णलेखन्या भूर्जपत्रे सुशोभने ॥ १८८ ॥ काश्मीररोचनाभ्यां तु त्रिलोहेन च वेष्टितम् ॥ सम्पा ॥ १५६ ॥
तसाधितं यंत्रं भुजे वा मूर्ध्नि धारयेत् ॥१८९॥ रणे दुरोदरे वादे व्यवहारे जयं लभेत् ॥ ग्रहैर्विघ्नैर्विषैः शस्त्रैश्चौरैर्नैवाभिभूयते ॥ १९० ॥ सर्वास्त्रो

गानपाकृत्य चिरं जीवेच्छतं समाः॥ षड्दीर्घयुक्तं गगन वह्न्याख्यं तारसंपुटम् ॥ १९१ ॥ अष्टार्णोऽयं महामंत्रो मालामंत्रोऽथ कथ्यते ॥ प्रणवो वज्रकायेति वज्रतुंडेति संपठेत् ॥ १९२ ॥ कपिलांते पिंगलेति उर्द्ध्वकेशमहापदम् ॥ वलरक्तमुखांते तु तडिज्जिह्व महा ततः ॥ १९३ ॥ रौद्रदंष्ट्रोत्कटं पश्चात्कहद्वंद्वं करालिति ॥ महद्दढप्रहारेण लंकेश्वरवधात्ततः ॥ १९४ ॥ वायुर्महासेतुपदं बंधांते च महा पुनः ॥ शैलप्रवाह गगनेचर एह्येहि संवदेत् ॥ १९५ ॥ भगवन्महाबलांते पराक्रमपदं वदेत् ॥ भैरवाज्ञापयैह्येहि महारौद्रपदं ततः ॥ १९६ ॥ दीर्घपुच्छेन वर्णांते वदेद्वेष्टय वैरिणम् ॥ जंभयद्वयमाभाष्य वर्मास्त्रांतो मनुर्मतः ॥ १९७ ॥ मालाह्वयो द्विजश्रेष्ठ शरनेत्रधराक्षरः ॥ मालामंत्राष्टार्णयोश्च मुन्याद्यर्चा तु पूर्ववत् ॥ १९८ ॥ जप्तो युद्धे जयं दद्याद्व्याधौ व्याधिविनाशनः ॥ एवं यो भजते मंत्री वायुपुत्रं कपीश्वरम् ॥ १९९॥ सर्वान्स लभते कामान्देवैरपि सुदुर्लभान् ॥ धनं धान्यं सुतान्पौत्रान्सौभाग्यमतुलं यशः ॥ २०० ॥ मेधां विद्यां प्रभां राज्यं विवादे विजयं तथा ॥ वश्याद्यानि च कर्माणि संगरे विजयं तथा ॥ २०१ ॥ उपासितोऽञ्जनागर्भसंभूतः प्रददात्यलम् ॥ २०२ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने सनत्कुमारविभागे तृतीयपादे हनुमन्मंत्रकथनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ सनत्कुमार उवाच ॥ अथ दीपविधिं वक्ष्ये सरहस्यं हनूमतः॥ यस्य विज्ञानमात्रेण सिद्धो भवति साधकः ॥ १॥ दीपपात्रप्रमाणं च तैलमानं क्रमेण तु ॥ द्रव्यस्य च प्रमाणं वै तत्तु मानमनुक्रमात् ॥ २ ॥ स्थानभेदं च मंत्रं च दीपदानमनुं पृथक् ॥ पुष्पवासिततैलेन सर्वकामप्रदं मतम् ॥ ३ ॥ तिलतैलं श्रियः प्राप्त्यै पथिकागमनं प्रति ॥ अतसीतैलमुद्दिष्टं वश्यकर्मणि निश्चितम् ॥ ४ ॥ सार्षपं रोगनाशाय कथितं कर्मकोविदैः ॥ मारणे राजिकोत्थं वा विभीतकसमुद्भवम्॥५॥ उच्चाटने करजोत्थं विद्वेषे मधुवृक्षजम् ॥ अलाभे सर्वतैलानां तिलजं तैलमुत्तमम् ॥ ६॥ गोधूमाश्च तिला माषा मुद्गा वै तंडुलाः क्रमात् ॥ पंचधान्यमिदं प्रोक्तं नित्यदीपं तु मारुतेः॥७ ॥ पंचधान्यसमुद्भूतं पिष्टमात्रं सुशोभनम् ॥ सर्वकामप्रदं प्रोक्तं सर्वदा दीपदानके ॥ ८॥ वश्ये तंडुलपिष्टोत्थं मारणे माषपिष्टजम् ॥ उच्चाटने कृष्णतिलपिष्टजं च प्रकीर्तितम् ॥ ९ ॥ पथिकागमने प्रोक्तं गोधूमोत्थं सतंडुलम् ॥ मोहने त्वाढकीजात विद्वेषे च कुलत्थजम् ॥ १० ॥ संग्रामे केवला माषाः प्रोक्ता दीपस्य पात्रके ॥ सधौ त्रिपिष्टजं लक्ष्मीहेतोः कस्तूरिकाभवम् ॥ ११ ॥ एलालवंगकर्पूरमृगनाभिसमुद्भवम् ॥कन्याप्राप्त्यै तथा राजवश्ये सख्ये तथैव च ॥ १२ ॥ अलाभे सर्ववस्तूनां पंचधान्यं वरं स्मृतम्॥ अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ चः पुष्कलम् ॥ १३ ॥ पुष्कलानां चतुर्णां च ह्याढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम् ॥ १४ ॥ खारीचतुष्टय प्रस्थ

संज्ञा च परिकीर्तिता ॥ अथवान्यप्रकारेण मानमत्र निगद्यते ॥ १५ ॥ पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ॥ चतुर्भिः कुडवैः प्रस्थस्तै
श्चतुर्भिस्तथाढकः ॥ १६ ॥ चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम् ॥ क्रमेणैतेन ते ज्ञेयाः पात्रे षट्कर्मसंभवे ॥ १७ ॥ पञ्च सप्त नव तथा
प्रमाणास्ते यथाक्रमम् ॥ सौगंधे नैव मानं स्यात्तद्यथारुचि संमतम् ॥१८॥ नित्यपात्रे तु तैलानां नियमो वार्तकोद्भवः ॥ सोमवारे गृहीत्वा तद्धान्यं
तोयप्लुतं धरेत् ॥ १९ ॥ पश्चात्प्रमाणतो ज्ञेयं कुमारीहस्तपेषणम् ॥ तत्पिष्टं शुद्धपात्रे तु नदीतोयेन पिंडितम् ॥ २० ॥ दीपपात्रं ततः कुर्याच्छुद्धः
प्रयतमानसः ॥ दीपपात्रे ज्वाल्यमाने मारुतेः कवचं पठेत् ॥ २१ ॥ शुद्धभूमौ समास्थाप्य भौमे दीपं प्रदापयेत् ॥ मालामनूनां ये वर्णाः साध्य
नामसमन्विताः ॥ २२ ॥ वर्तिकायां प्रकर्त्तव्यास्तंतवस्तत्प्रमाणकाः ॥ तत्त्रिंशांशेन वा ग्राह्या गुरुकार्येऽखिलाब्यता ॥ २३ ॥ कूटतुल्याः स्मृता
नित्ये सामान्येऽथ विशेषके ॥ रुद्राः कूटगणाः प्रोक्ता न पात्रे नियमो मतः ॥ २४ ॥ एकविंशतिसंख्याकास्तन्तवोऽथाध्वनि स्मृताः ॥
रक्तसूत्रं हनुमतो दीपदाने प्रकीर्तितम् ॥ २५ ॥ कृष्णमुच्चाटने द्वेषेऽरुणं मारणकर्मणि ॥ कूटतुल्यपलं तैलं गुरुकार्ये शिवैर्गुणम् ॥ २६ ॥ नित्ये
पंचपलं प्रोक्तमथवा मानसी रुचिः ॥ २७ ॥ हनुमत्प्रतिमायास्तु सन्निधौ दीपदापनम् ॥ शिवालयेऽथवा कुर्यान्नित्यनैमित्तिके स्थले ॥ २८ ॥
विशेषोऽस्त्यत्र यः कश्चिन्मारुते रुच्यते मया ॥ २९ ॥ प्रतिमाग्रे प्रमोदेन ग्रहभूतग्रहेषु च ॥ चतुष्पथे तथा प्रोक्तं षट्सु दीपप्रदापनम् ॥ ३० ॥
सन्निधौ स्फाटिके लिंगे शालग्रामस्य सन्निधौ ॥ नानाभोगश्रियै प्रोक्तं दीपदानं हनूमतः ॥ ३१ ॥ गणेशसन्निधौ विघ्नमहासंकटनाशने ॥ विपद्व्या
धिभये घोरे हनुमत्सन्निधौ स्मृतम् ॥ ३२ ॥ दुर्गायाः सन्निधौ प्रोक्तं संग्रामे दीपदापनम्॥ चतुष्पथे व्याधिनष्टौ दुष्टदर्शौ तथैव च ॥ ३३ ॥
राजद्वारे बंधमुक्तौ कारागारेऽथवा मतम् ॥ अश्वत्थवटमूले तु सर्वकार्यप्रसिद्धये॥३४ ॥ वश्ये भये विवादे च वेश्मसंग्रामसंकटे ॥ द्यूते दृष्टिस्तंभने
च विद्वेषे मारणे तथा ॥३५॥ मृतकोत्थापने चैव प्रतिमाचालने तथा ॥ विषे व्याधौ ज्वरे भूतग्रहे कृत्याविमोचने ॥ ३६ ॥ क्षतग्रंथौ महारण्ये दुर्गे
व्याघ्रे च दंतिनि॥क्रूरसत्त्वेषु सर्वेषु शश्वद्बंधविमोक्षणे॥३७॥पथिकागमने चैव दुःस्थाने राजमोहने॥आगमे निर्गमे चैव राजद्वारे प्रकीर्तितम् ॥३८॥
दीपदानं हनुमतो नात्र कार्या विचारणा॥३९॥रुद्रैकविंशपिंडांश्च त्रिधा मंडलमानकम्॥लघुमानं स्मृतं पंच सप्त वा नव वा तथा॥४०॥क्षीरेण नवनी
तेन दध्ना वा गोमयेन च॥प्रतिमाकरणं प्रोक्तं मारुतेर्दीपदापने॥४१॥दक्षिणाभिमुखं वीरं कृत्वा केसरिविक्रमम्॥४२॥ऋक्षविन्यस्तपादं च किरीटेन
विराजितम् ॥ लिखेद्भित्तौ पटे वापि पीठे वा मारुतेः शुभे ॥४३॥ मालमंत्रेण दातव्यं दीपदानं हनूमतः ॥नित्यदीपः प्रकर्त्तव्यो द्वादशाक्षरविद्यया

॥ १६७ ॥

॥४४॥विशेषस्तत्र यस्तं वै दीपदानेऽवधारय॥षष्ठयादौ च द्वितीयादाविमं दीपमितीरयेत्॥४५॥गृहाणेति पदं पश्चाच्छेषं पूर्ववदुच्चरेत्॥कूटादौ नित्य दीपे च मंत्रं सूर्याक्षरं वदेत्॥४६॥तत्र मालाख्यमनुना तत्तत्कार्येषु कारयेत्॥गोमयेनोपलिप्तायां भूमौ तद्गतमानसः॥४७॥ षट्कोणं वसुपत्रं च भूमौ रेखासमन्वितम् ॥ कमलं च लिखेद्भद्रं तत्र दीपं निधापयेत् ॥४८॥ शैवे वा वैष्णवे पीठे पूजयेदंजनासुतम् ॥ कूटषट्कं च षट्कोणे अंतराले पर लिखेत् ॥४९॥ षट्कोणेषु षडंगानि बीजयुक्तानि संलिखेत् ॥ सौम्यं मध्यगतं लेख्यं तत्र संपूज्य मारुतिम् ॥५०॥ षट्कोणेषु षडंगानि नामानि च पुरोक्तवत् ॥ वसुपत्रे क्रमात्पूज्या अष्टवेते च वानराः ॥ ५१ ॥ सुग्रीवायांगदायाथ सुषेणाय नलाय च ॥नीलायाथो जांववते प्रहस्ताय तथैव च ॥ ५२ ॥ सुवेषाय ततः पश्चाद्यजेत्षडंगदेवताः ॥ आदावंजनापुत्राय ततश्च रुद्रमूर्तये ॥ ५३ ॥ ततो वायुसुतायाथ जानकीजीवनाय च ॥ रामदूताय ब्रह्मास्त्रनिवारणाय तत्परम् ॥ ५४ ॥ पंचोपचारैः संपूज्य देशकालौ च कीर्तयेत् ॥ कुशोदकं समादाय दीपमंत्रं समुच्चरेत् ॥ ५५॥ उत्तराभिमुखो जप्त्वा साधयेत्साधकोत्तमः॥तं मंत्रं कूटधा जप्त्वा जलं भूमौ विनिक्षिपेत् ॥ ५६ ॥ ततः करपुटं कृत्वा यथाशक्ति जपेन्मनुम् ॥ अनेन दीपवर्येण उदङ्मुखगतेन वै ॥ ५७ ॥ तथा विधेहि हनुमन्यथा स्युर्मे मनोरथाः ॥ त्रयोदशैवं द्रव्याणि गोमयं मृत्तिका मसी॥५८॥ अलक्तं दरदं रक्तचंदनं चंदनं मधु ॥ कस्तूरिका दधि क्षीरं नवनीतं घृतं तथा ॥ ५९ ॥गोमयं द्विविधं तत्र प्रोक्तं गोमहिषीभवम् ॥ पश्चाद्विनष्टद्रव्याप्तौ माहिषं गोमयं स्मृतम् ॥६०॥ पथिकागमने दूरान्महादुर्गस्य रक्षणे ॥ बालादिरक्षणे चैव चौरादिभयनाशने ॥ ६१॥ स्त्रीवश्यादिषु कार्येषु शस्तं गोगोमयं मुने ॥ भूमिस्पृष्टं न तद्ग्राह्यमंतरिक्षाच्च भाजने ॥ ६२ ॥चतुर्विधा मृत्तिका तु श्वेता पीतारुणासिता ॥ तत्र गोपीचंदनं तु हरितालं च गैरिकम् ॥ ॥ ६३ ॥ मषी लाक्षारसोद्भूता सर्वं वान्यत्स्फुटं मतम् ॥ कृत्वा गोपीचंदनेन चतुरस्रं गृहं सुधीः ॥ ६४ ॥ तन्मध्ये माहिषेणाथ कुर्यान्मूर्तिं हनूमतः ॥बीजं क्रोधाच्च तत्पुच्छं लिखेन्मंत्री समाहितः॥६५॥तैलेन स्नापयेन्मूर्तिं गुडेन तिलकं चरेत् ॥ शतपत्रसमो धूपः शालनिर्याससंभवः ॥६६॥ कुर्याच्च तैलदीपं तु वर्तिपंचकसंयुतम् ॥ दध्योदनेन नैवेद्यं दद्यात्साधकसत्तमः ॥ ६७ ॥ वारत्रयं कंठदेशे सशपविषमुच्चरन् ॥ एवं कृते तु नष्टानां महिषीणां गवामपि ॥ ६८ ॥ दासीदासादिकानां च नष्टानां प्राप्तिरीरिता ॥ चौरादिदुष्टसत्त्वानां सर्पादीनां भये पुनः॥ ६९॥ तालेन च चतुर्द्वारं गृहं कृत्वा सुशोभनम्॥ पूर्वद्वारे गजः स्थाप्यो दक्षिणे महिषस्तथा ॥ ७० ॥ सर्पस्तु पश्चिमे द्वारे व्याघ्रश्चैवोत्तरे तथा ॥ एवं क्रमेण खड्गं च क्षुरिकादंडमुद्गरान् ॥ ७१ ॥ विलिख्य मध्ये मूर्तिं च महिषीगोमयेन वै ॥ कृत्वा डमरुहस्तां च चकिताक्षीं प्रयत्नतः ॥ ७२ ॥ पयसा







स्नापनं रक्तचंदनेनानुलेपनम् ॥ जातीपुष्पैस्तु संपूज्य शुद्धधूप प्रकल्पयेत् ॥ ७३ ॥ घृतेन दीं दत्त्वाथ पायसान्नं निवेदयेत् ॥ गगनं दीपिकें
ङाव्यं शास्त्रं च पुरतो जपेत् ॥ ७४ ॥ एवं सप्तदिनं कृत्वा मुच्यते महतो भयात् ॥ अनयोर्भौमवारे तु कुर्यादारंभमादरात् ॥ ७५ ॥शत्रुसेना
भये प्राप्ते गैरिकेण तु मंडलम् ॥ कृत्वा तदंतरे तालमीषन्नवं समालिखेत् ॥ ७६ ॥ तत्रावलंबमानां च प्रतिमां गोमयेन तु ॥ वामहस्तेन तालाग्रं
दक्षिणे ज्ञानमुद्रिका ॥ ७७ ॥ तालमूलात्स्वकाष्ठायां मार्गे हस्तमिते गृहम् ॥ चतुरस्रं विधायाथ तन्मध्ये मूर्तिमालिखेत् ॥ ७८ ॥ दक्षिणाभिमु
खीं रम्यां हृदये विहितांजलिम् ॥ तोयेन स्नानगंधादि यथासंभवमर्पयेत् ॥ ७९ ॥ कृशरान्नं च नैवेद्यं साज्यं तस्यै निवेदयेत् ॥ किलिद्वयं जपं
प्रोक्तमेवं कुर्याद्दिने दिने ॥ ८० ॥ एवं कृते भवेच्छीघ्रं पथिकानां समागमः ॥ श्यामपाषाणखण्डेन लिखित्वा ऽपतेर्गृहम् ॥ ८१ ॥ प्राकारं तु
चतुर्द्वारयुक्तं द्वारेषु तत्र वै ॥ अन्योन्यपुच्छ रिधित्रययुक्तां हनूमतः ॥ ८२ ॥ कुर्यान्मूर्तिं गोमयेन धत्तूरकुसुमैर्यजेत् ॥ जटामांसीभवं धूपं तैला
क्तघृतदीपकम् ॥ ८३ ॥ नैवेद्यं तिलतैलाक्तसक्षारा माषरोटिका ॥ ध्येयो दक्षिणहस्तेन रोटिकां भक्षयन्हरिः ॥ ८४ ॥ वामहस्तेन पाषाणैस्त्रासय
न्परसैनिकान् ॥ मारयन्भ्रुकुटीं बद्ध्वा भीषयन्मथयन्स्थितः ॥ ८५ ॥ जपेच्च भुग्भुगिति वै सहस्रं ध्यानतत्परः ॥ एवं कृतविधानेन पर
सैन्यं विनाशयेत् ॥ ८६ ॥ रक्षा भवति दुर्गाणां सत्यं सत्य न संशयः ॥ प्रयोगा बहवस्तत्र संक्षेपाद्गदिता मया ॥ ८७ ॥ प्रत्यहं यो विधा
नेन दीपदानं हनूमतः ॥ तस्यासाध्यं न वै किंचिद्विद्यते भुवनत्रये ॥ ८८ ॥ न देयं दुष्टहृदये दुष्टचिंतनबुद्धये ॥ अविनीताय शिष्याय
पिशुनाय कदाचन ॥ ८९ ॥ कृतघ्नाय न दातव्यं दातव्यं च परीक्षिते ॥ बहुना किमिहोक्तेन सर्वं दद्यात्कपीश्वरः ॥ ९० ॥ अथ मन्त्रा
न्तरं वक्ष्ये तत्त्वज्ञानप्रदायकम् ॥ तारो नमो हनुमते जाठरत्रयमीरयेत् ॥ ९१ ॥ दनक्षोभं समाभाष्य संहद्द्वयमीरयेत् ॥ आत्मतत्त्वं ततः
पश्चात्प्रकाशययुगं ततः ॥ ९२ ॥ वर्मास्त्रवह्निजायांतः सार्द्धपङ्क्तिशदर्णवान् ॥ वसिष्ठोऽस्य मुनिश्छन्दोऽनुष्टुप् च देवताः पुनः ॥ ९३ ॥
हनुमान्मुनिसप्ततुवेदाष्टनिगमैः क्रमात् ॥ मंत्रार्णैश्च षडंगानि कृत्वा ध्यायेत्कपीश्वरम् ॥ ९४ ॥ जानुस्थवामबाहुं च ज्ञानमुद्रापरं
हृदि ॥ अध्यात्मचित्तमासीनं कदलीवनमध्यगम् ॥ ९५ ॥ बालार्ककोटिप्रतिमं ध्यायेज्ज्ञानप्रदं हरिम् ॥ ध्यात्वैवं प्रजपेल्लक्षं दशांशं
जुहुयात्तिलैः ॥ ९६ ॥ साज्यैः संपूजयेत्पीठे पूर्वोक्ते पूर्ववत्प्रभुम् ॥ जप्तोऽयं मदनक्षोभं नाशयत्येव निश्चितम् ॥ ९७ ॥ तत्त्वज्ञानमवाप्नोति
कपींद्रस्य प्रसादतः ॥ अथ मंत्रांतरं वक्ष्ये भूतविद्रावणं परम् ॥ ९८ ॥ तारः काशींकुक्षिपरवराहश्चांजनापदम् ॥ पवनो वनपुत्रांते

आवेशिद्वयमीरयेत् ॥ ९९ ॥ तारः श्रीहनुमत्पश्चाद्दस्वरचतुर्भुजाक्षरः ॥ ब्रह्मा मुनिः स्याद्गायत्री छंदोऽत्र देवता पुनः ॥ १०० ॥ हनुमा
न्कमला बीजं फट् शक्तिः परिकीर्तितः ॥ षड्दीर्घाढ्येन बीजेन षडङ्गानि समाचरेत् ॥ १०१ ॥ आंजनेय पाटलास्यं स्वर्णाद्रिसमविग्र
हम् ॥ पारिजातद्रुमूलस्थं चिंतयेत्साधकोत्तमः ॥ १०२ ॥ एवं ध्यात्वा जपेल्लक्षं दशांशं जुहुयात्तिलैः ॥ त्रिमध्वक्तैर्यजेत्पीठे पूर्वोक्ते
पूर्ववत्सुधीः ॥ १०३ ॥ अनेन मनुना मंत्री ग्रहग्रस्तं प्रमार्जयेत् ॥ आक्रंदंस्तं विमुच्याथ ग्रहः शीघ्रं पलायते ॥ १०४ ॥ मनवोऽमी सदा
गोप्या न प्रकाश्या यतस्ततः ॥ परीक्षिताय शिष्याय देया वा निजसूनवे ॥ १०५ ॥ हनुमद्भजनासक्तः कार्तवीर्यार्जुनं सुधीः ॥ विशेषतः
समाराध्य यथोक्तं फलमाप्नुयात् ॥ १०६ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे दीपविधिनिरूपणं नाम पञ्चसप्ततितमोऽ
ध्यायः ॥ ७५ ॥ नारद उवाच ॥ कार्तवीर्यप्रभृतयो नृपा बहुविधा भुवि॥ जायंतेऽथ प्रलीयंते स्वस्वकर्मानुसारतः॥ १॥तत्कथं राजवर्योऽसौ लोके
सेव्यत्वमागतः ॥ समुल्लंघ्य नृपानन्यानेतन्मे नुद संशयम् ॥ २ ॥ सनत्कुमार उवाच ॥ शृणु नारद वक्ष्यामि संदेहविनिवृत्तये ॥ यथा सेव्यत्वमा
पन्नः कार्तवीर्यार्जुनो भुवि ॥ ३ ॥ यः सुदर्शनचक्रस्यावतारः पृथिवीतले ॥ दत्तात्रेयं समाराध्य लब्धवांस्तेज उत्तमम् ॥ ४ ॥ तस्य क्षितीश्व
रेंद्रस्य स्मरणादेव नारद ॥ शत्रूञ्जयति संग्रामे नष्टं प्राप्नोति सत्वरम् ॥ ५ ॥ तेनास्य मंत्रपूजादि सर्वतंत्रेषु गोपितम् ॥तुभ्यं प्रकाशयिष्येऽहं सर्व
सिद्धिप्रदायकम् ॥ ६ ॥ वह्नितारयुता रौद्री लक्ष्मीरग्नींदुशांतियुक् ॥ वेधाधरेन्दुशांत्याढ्यो निद्रयाशाग्नि विंदुयुक्॥७॥पाशो मायांकुशं पद्मा वर्मास्त्रे
कार्तवी ग्दम् ॥ रेफोवा द्यासनोऽनन्तो वह्निजौ कर्णसंस्थितौ॥८॥मेषः सदीर्घः पवनो मनुरुक्तो हृदंतिमः॥ऊनविंशतिवर्णोऽयं तारादिर्नखवर्णकः॥
॥९ ॥ दत्तात्रेयो मुनिश्चास्यच्छन्दोऽनुष्टुबुदाहृतम् ॥ कार्तवीर्यार्जुनो देवो बीजशक्तिर्ध्रुवश्च हृत् ॥ १० ॥ शेषाढ्यबीजयुग्मेन हृदयं विन्यसेदधः ॥
शांतियुक्तचतुर्थेन कामाद्येन शिरोंऽगकम् ॥ ११॥ इन्द्वाढ्यं वामकर्णाद्यमाययोर्वीशयुक्तया ॥ शिखामंकुशपद्माभ्यां सवाग्भ्यां वर्म विन्यसेत् ॥
॥ १२ ॥ वर्मास्त्राभ्यामस्त्रमुक्तं शेषार्णैर्व्यापकं पुनः ॥ हृदये जठरे नाभौ जठरे गुह्यदेशतः ॥ १३ ॥ दक्षपादे वामपादे सक्थि जानुनि
जंघयोः ॥ विन्यसेद्वीजदशकं प्रणवद्वयमध्यगम् ॥ १४ ॥ताराद्यानथ शेषार्णान्मस्तके च ललाटके ॥ भ्रुवोः श्रुत्योस्तथैवाक्ष्णोर्नसि वक्त्रे
गलेंऽसके ॥१५ ॥ सर्वमन्त्रेण सर्वांगे कृत्वा व्यापकमादृतः ॥ सर्वेष्टसिद्धये ध्यायेत्कार्तवीर्यं जनेश्वरम् ॥ १६ ॥ उद्यदर्कसहस्राभं सर्वभूपतिवन्दि
तम् ॥ दोर्भिः पञ्चाशता दक्षैर्बाणान्वामैर्धनूंषि च ॥ १७॥ दधतं स्वर्णमालाढ्यं रक्तवस्त्रसमावृतम्॥ चक्रावतारं श्रीविष्णोर्ध्यायेदर्जुनभूपतिम्॥१८॥











लक्षमेकं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः ॥ सतण्डुलैः पायसेन विष्णुपीठे यजेत्तु तम्॥ १९ ॥ षट्कोणेषु षडंगानि ततो दिक्षु विदिक्षु च॥चौरमदवि
भंजनं मारिमदविभंजनम् ॥ २० ॥अरिमदविभंजनं दैत्यमदविभंजनम् ॥दुष्टनाशं दुःखनाशं दुरितापद्विनाशकम् ॥ २१ ॥ दिक्ष्वष्टशक्तयः पूज्याः
प्राच्यादिष्वसितप्रभाः ॥ क्षेमंकरी वश्यकरी श्रीकरी च यशस्करी ॥ २२ ॥आयुःकरी तथा प्रज्ञाकरी विद्याकरी पुनः। धनकर्यष्टमी पश्चाल्लोकेशा
अस्त्रसंयुताः॥ २३ ॥ एवं संसाधितो मंत्रः प्रयोगार्हः प्रजायते ॥ कार्तवीर्यार्जुनस्याथ पूजायंत्रमिहोच्यते ॥२४ ॥ स्वबीजानंगध्रुववाक्कर्णिकं दिग्दलं
लिखेत् ॥ तारादिवर्मांतदलं शेषवर्णदलांतरम् ॥२५॥ ऊष्मान्त्यस्वरकिंजल्कं शेषार्णैः परिवेष्टितम् ॥कोणालंकृतभूतार्णभूगृहं यन्त्रमीशितुः ॥ २६ ॥
शुद्धभूमावष्टगन्धैर्लिखित्वा यन्त्रमादरात् ॥ तत्र कुंभं प्रतिष्ठाप्य तत्रावाह्यार्चयेन्नृपम् ॥२७॥ स्पृष्ट्वा कुंभं जपेन्मन्त्रं सहस्रं विजितेंद्रियः ॥अभिषिं
चेत्तदंभोभिः प्रियं सर्वेष्टसिद्धये ॥ २८॥ पुत्रान्यशो रोगनाशमायुः स्वजनरंजनम् ॥वाक्सिद्धिं सुदृशः कुम्भाभिषिक्तो लभते नरः ॥२९ ॥ शत्रूप
द्रव आपन्ने ग्रामे वा पुटभेदने ॥ संस्थापयेदिदं यन्त्रं शत्रुभीतिनिवृत्तये ॥ ३० ॥ सर्षपारिष्टलशुनकार्पासैर्मार्यते रिपुः॥धत्तूरैः स्तभ्यते निम्बैर्द्वे
ष्यते वश्यतेऽम्बुजैः ॥ ३१ ॥ उच्चाटने विभीतस्य समिद्भिः खदिरस्य च ॥ कटुतैलमहिष्याज्यैर्होमद्रव्यांजनं स्मृतम् ॥ ३२ ॥ यवैर्हुतं श्रियः प्राप्ति
स्तिलैराज्यैरघक्षयः ॥ तिलतंडुलसिद्धार्थजालैर्वश्यो नृपो भवेत् ॥ ३३ ॥ अपामार्गार्कदूर्वाणां होमो लक्ष्मीप्रदोऽघनुत् ॥ स्त्रीवश्यकृत्प्रियंगूणां
सुराणां भूतशांतिदः ॥ ३४ ॥ अश्वत्थोदुंबरप्लक्षवटबिल्वसमुद्भवाः ॥ समिधो लभते हुत्वा पुत्रानायुर्द्धनं सुखम् ॥ ३५ ॥ निर्मोकहेमसिद्धार्थलव
णैश्चौरनाशनम् ॥ रोचनागोमयैस्तंभो भूप्राप्तिः शालिभिर्हुतैः ॥ ३६ ॥ होमसंख्या तु सर्वत्र सहस्रादयुतावधि ॥ प्रकल्पनीया मन्त्रज्ञैः कार्य्यगौ
रवलाघवात् ॥ ३७ ॥ कार्तवीर्य्यस्य मन्त्राणामुच्यते लक्षणं बुधाः ॥ कार्तवीर्यार्जुनं ङेंतं सर्वमंत्रेषु योजयेत् ॥ ३८ ॥ स्वबीजाद्यो दशार्णोऽसौ
अन्ये नवशिवाक्षराः ॥ आद्यबीजद्वयेनासौ द्वितीयो मन्त्र ईरितः ॥ ३९ ॥ स्वकामाभ्यां तृतीयोऽसौ स्वभूभ्यां तु चतुर्थकः ॥ स्वपाशाभ्यां पञ्च
मोऽसौ षष्ठः स्वेन च मायया ॥ ४० ॥ स्वांकुशाभ्यां सप्तमः स्यात्स्वरमाभ्यामथाष्टमः ॥ स्ववाग्भवाभ्यां नवमो वर्मास्त्राभ्यामथांतिमः ॥ ४१ ॥
द्वितीयादिनवांतेषु बीजयोः स्याद्व्यतिक्रमः ॥ मंत्रे तु दशमे वर्णा नववर्मास्त्रमध्यगाः ॥४२॥एतेषु मंत्रवर्येषु स्वानुकूलं मनुं भजेत् ॥एषामाद्ये विरा
ट्छंदोऽन्येषु त्रिष्टुबुदाहृतम् ॥ ४३ ॥ दश मंत्रा इमे प्रोक्ता यदा स्युः प्रणवादिकाः॥ तदादिमः शिवार्णः स्यादन्ये तु द्वादशाक्षराः ॥ ४४ ॥ त्रिष्टुप्
छन्दस्तथाद्ये स्यादन्येषु जगती मता ॥ एवं विंशतिमंत्राणां यजनं पूर्ववन्मतम् ॥ ४५ ॥ दीर्घाढ्यमूलबीजेन कुर्यादेषां षडंगकम् ॥

तारो हृत्कार्तवीर्यार्जुनाय वर्मास्त्रठद्वयम् ॥ ४६ ॥ चतुर्दशार्णो मंत्रोऽयमस्येज्या पूर्ववन्मता ॥ भूनेत्रसमनेत्राक्षिवर्णैरस्यांगपंचकम् ॥ ४७ ॥ तारो हृद्भगवान् ङेंतः कार्तवीर्यार्जुनस्तथा ॥ वर्मास्त्राग्निप्रियामंत्रः प्रोक्तो ह्यष्टादशार्णकः ॥ ४८ ॥ त्रिवेदसप्तयुग्माक्षिवर्णैः पंचांगकं मनोः ॥ नमो भगवते श्रीति कार्तवीर्यार्जुनाय च ॥ ४९ ॥ सर्वदुष्टांतकायेति तपोबलपराक्रमः ॥ परिपालितसप्तांते द्वीपाय सर्वरापदम् ॥ ५० ॥ जन्यचूडामणांते ये महाशक्तिमते ततः ॥ सहस्रदहनप्रांते वर्मास्त्रांतो महामनुः ॥ ५१ ॥ त्रिषष्टिवर्णवान्प्रोक्तः स्मरणात्सर्वविघ्नहृत् ॥ राजन्यचक्रवर्ती च वीरः शूरस्तृतीयकः ॥ ५२ ॥ माहिष्मतीपतिः पश्चाच्चतुर्थः समुदीरितः ॥ रेवांबुपरितृप्तश्च काणो हस्तप्रबाधितः ॥ ५३ ॥ दशास्येति च षड्भिः स्यात्पदैर्ङेंतैः षडंगकम् ॥ सिंच्यमानं युवतिभिः क्रीडंतं नर्मदाजले ॥ ५४ ॥ हस्तैर्जलौघं रुंधंतं ध्यायेन्मत्तं नृपोत्तमम् ॥ एवं ध्यात्वा युतं मंत्रं जपेदन्यत्तु पूर्ववत् ॥ ५५ ॥ पूर्वं तु प्रजपेल्लक्षं पूजायोगश्च पूर्ववत् ॥ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ॥ ५६ ॥ तस्य संस्मरणादेव हृतं नष्टं च संवदेत् ॥ लभ्यते मंत्रवर्योऽयं द्वात्रिंशद्वर्णसंयुतः ॥ ५७ ॥ पादैः सर्वेण पंचांगं ध्यानपूजादि पूर्ववत् ॥ कार्तवीर्याय शब्दांते विद्महे पदमुच्चरेत् ॥ ५८ ॥ महावीर्याय वर्णांते धीमहीति पदं वदेत् ॥ तन्नोऽर्जुनः प्रवर्णांते चोदयात्पदमीरयेत् ॥ ५९ ॥ गायत्र्येषार्जुनस्योक्ता प्रयोगादौ जपेत्तु ताम् ॥ अनुष्टुभं मनुं रात्रौ जपतां चौरसंचयाः ॥ ६० ॥ पलायंते गृहाद्दूरं तर्पणाद्धवनादपि ॥ अथो दीपविधिं वक्ष्ये कार्तवीर्यप्रियंकरम् ॥ ६१ ॥ वैशाखे श्रावणे मार्गे कार्तिकाश्विनपौषतः ॥ माघफाल्गुनयोर्मासोर्दीपारंभं समाचरेत् ॥ ६२ ॥ तिथौ रिक्ताविहीनायां वारे शनिकुजौ विना ॥ हस्तोत्तराश्विरौद्रेयपुष्यवैष्णववायुभे ॥ ६३ ॥ द्विदैवते च रोहिण्यां दीपारंभो हितावहः ॥ चरमे च व्यतीपाते धृतौ वृद्धौ सुकर्मणि ॥ ६४ ॥ प्रीतौ हर्षे च सौभाग्ये शोभनायुष्मतोरपि ॥ करणे विष्टिरहिते ग्रहणेऽर्द्धोदयादिषु ॥ ६५ ॥ योगेषु रात्रौ पूर्वाह्णे दीपारंभः कृतः शुभः ॥ कार्तिके शुक्लसप्तम्यां निशीथेऽतीव शोभनः ॥ ६६ ॥ यदि तत्र रवेर्वारः श्रवणं भं च दुर्लभम् ॥ अत्यावश्यककार्येषु मासादीनां न शोधनम् ॥ ६७ ॥ आद्ये ह्युपोष्य नियतो ब्रह्मचारी सपीतकैः ॥ प्रातः स्नात्वा शुद्धभूमौ लिप्तायां गोमयोदकैः ॥ ६८ ॥ प्राणानायम्य संकल्प्य न्यासान्पूर्वोदितांश्चरेत् ॥ षट्कोणं रचयेद्भूमौ रक्तचंदनतंडुलैः ॥ ६९ ॥ अतः स्मरं समालिख्य षट्कोणेषु समालिखेत् ॥ नवार्णैर्वेष्टयेत्तच्च त्रिकोणं तद्बहिः पुनः ॥ ७० ॥ एवं विलिखिते यन्त्रे निदध्याद्दीपभाजनम् ॥ स्वर्णजं रजतोत्थं वा ताम्रजं तदभावतः ॥ ७१ ॥ कांस्यपात्रं मृण्मयं च कनिष्ठं लोहजं मृतौ ॥ शांतये मुद्गचूर्णोत्थं संधौ गोधूमचूर्णजम् ॥ ७२ ॥ आज्ये पलसहस्रे तु पात्रं शतपलं स्मृतम् ॥





आज्येऽयुतपले पात्रं पलपंचशता स्मृतम् ॥ ७३ ॥ पंचसप्ततिसंख्ये तु पात्रं षष्टिपलं स्मृतम् ॥ त्रिसाहस्री घृतपले शर्करापलभाजनम् ॥ ७४ ॥
द्विसाहस्र्यां द्विशतमितं च भाजनमिष्यते ॥ शतेऽक्षिचरसंख्यातमेवमन्यत्र कल्पयेत् ॥७५॥ नित्यदीपे वह्निपलं पात्रमाज्यं पलं स्मृतम् ॥ एवं पात्रं
प्रतिष्ठाप्य वर्तीः सूत्रोत्थिताः क्षिपेत् ॥ ७६ ॥ एका तिस्रोऽथवा पंचसप्ताद्या विषमा अपि ॥ तिथिमानादासहस्रं तंतुसंख्या विनिर्मिता ॥
॥ ७७ ॥ गोघृतं प्रक्षिपेत्तत्र शुद्धवस्त्रविशोधितम् ॥ सहस्रपलसंख्यादिदशांशं कार्यगौरवात् ॥ ७८ ॥ सुवर्णादिकृतां रम्यां शलाकां
षोडशांगुलाम् ॥ तदर्द्धां वा तदर्द्धां वा सूक्ष्माग्रां स्थूलमूलिकाम् ॥ ७९ ॥ विमुंचेद्दक्षिणे पात्रमध्ये चाग्रे कृताग्रिकाम् ॥ पात्रदक्षिणदिग्देशे मुक्त्वां
गुलचतुष्टयम् ॥ ८० ॥ अधोग्रां दक्षिणाधारां निखनेच्छुरिकां शुभाम् ॥ दीपं प्रज्वालयेत्तत्र गणेशस्मृतिपूर्वकम् ॥ ८१ ॥ दीपात्पूर्वत्र दिग्भागे
सर्वतोभद्रमंडले ॥ तंडुलाष्टदले वापि विधिवत्स्थापयेद्घटम् ॥ ८२ ॥ तत्रावाह्य नृपाधीशं पूजयेत्पूर्ववत्सुधीः ॥ जलाक्षतान्समादाय दीपं
संकल्पयेत्ततः ॥ ८३ ॥ दीपसंकल्पमंत्रोऽयं कथ्यते द्वीषुभूमितः ॥ प्रणवः पाशमाये च शिखा कार्ताक्षराणि च ॥ ८४ ॥ वीर्या
र्जुनाय माहिष्मतीनाथाय सहस्र च ॥ बाहवे इति वर्णांते सहस्रपदमुच्चरेत् ॥ ८५ ॥ क्रतुदीक्षितहस्ताय दत्तात्रेयप्रियाय च ॥ आत्रेयायानुसूयांते
गर्भरत्नाय तत्परम् ॥ ८६ ॥ नमो ग्रीवामकर्णेंदुस्थितौ पाश इमं ततः ॥ दीपं गृहाण अमुकं रक्ष रक्ष पदं पुनः ॥ ८७ ॥ दुष्टा
न्नाशययुग्मं स्यात्तथा पातय घातय ॥ शत्रून् जहिद्वयं माया तारः स्वं वीजमात्मभूः ॥ ८८ ॥ वह्निप्रिया अनेनाथ दीपवर्येण पश्चिमा ॥
भिमुखेनामुकं रक्ष अमुकांते वरप्रद ॥ ८९ ॥ मायाकाशद्वयं वामनेत्रचंद्रयुतं शिवा ॥ वेदादिकामचामुंडाः स्वाहा तु पूर्सविंदुकौ ॥ ९० ॥
प्रणवोऽग्निप्रिया मंत्रो नेत्रबाणाधराक्षरः ॥ दत्तात्रेयो मुनिर्मालामंत्रस्य परिकीर्तितः ॥ ९१ ॥ छन्दोऽमितं कार्तवीर्यार्जुनो देवोऽखिलाप्ति
कृत् ॥ चामुंडया षडंगानि चरेत्षड्दीर्घयुक्तया ॥ ९२ ॥ ध्यात्वा देवं ततो मंत्रं पठित्वांते क्षिपेज्जलम् ॥ गोविंदाढ्यो हली सेंदुश्चामुंडार्वीजमी
रितम् ॥ ९३ ॥ ततो नवाक्षरं मंत्रं सहस्रं तत्पुरो जपेत् ॥ तारोऽनंतो विंदुयुक्तो मायास्वं वामनेत्रयुक् ॥ ९४ ॥ कूर्माग्नी शांतिविंद्वाढ्यौ वह्नि
जायांकुशं ध्रुवम् ॥ ऋषिः पूर्वोदितोनुष्टुप्छंदोऽन्यत्पूर्ववत्पुनः ॥ ९५ ॥ सहस्रं मंत्रराजं च जपित्वा कवचं पठेत् ॥ एवं दीपप्रदानस्य
कर्ताप्नोत्यखिलेऽप्सितम् ॥ ९६ ॥ दीपप्रबोधकाले तु वर्जयेदशुभां गिरम् ॥ विप्रस्य दर्शनं तत्र शुभदं परिकीर्तितम् ॥ ९७ ॥ शूद्राणां
मध्यमं प्रोक्तं म्लेच्छस्य वधबन्धनम् ॥ आखोत्वोर्दर्शनं दुष्टं गवाश्वस्य सुखावहम् ॥ ९८ ॥ दीपज्वाला समा सिद्ध्यै वक्रा नाशविधायिनी ॥

शब्दा भयदा कर्तुरुज्ज्वला सुखदा मता ॥ ९९ ॥ कृष्णा शत्रुभयोत्पत्त्यै वमंती पशुनाशिनी ॥ कृते दीपे यदा पात्रं भग्नं दृश्येत दैवतः ॥१००॥ पक्षादर्वाक्तदा गच्छेद्यजमानो यमालयम् ॥ वर्त्यंतरं यदा कुर्यात्कार्यं सिद्ध्येद्विलंबतः ॥ १०१ ॥ नेत्रहीनो भवेत्कर्ता तस्मिन्दीपांतरे कृते ॥ अशुचिस्पर्शने व्याधिर्दीपनाशे तु चौरभीः ॥ १०२ ॥ श्वमार्जाराखुसंस्पर्शे भवेद्भूपतितो भयम् ॥ पात्रारंभे वसुपलैः कृतो दीपोऽखिलेष्टदः ॥ १०३ ॥ तस्माद्दीपः प्रयत्नेन रक्षणीयोऽन्तरायतः ॥ आसमाप्तेः प्रकुर्वीत ब्रह्मचर्यं च भूशयः ॥ १०४॥ स्त्रीशूद्रपतितादीनां संभाषामपि वर्जयेत् ॥ जपेत्सहस्रं प्रत्येकं मंत्रराजं नवाक्षरम् ॥ १०५ ॥ स्तोत्रपाठं प्रतिदिनं निशीथिन्यां विशेषतः ॥ एकपादेन दीपाग्रे स्थित्वा यो मंत्रनायकम् ॥ १०६ ॥सहस्रं प्रजपेद्रात्रौ सोऽभीष्टं क्षिप्रमाप्नुयात् ॥ समाप्य शोभनदिने संभोज्य द्विजसत्तमान् ॥ १०७ ॥ कुंभोदकेन कर्तारमभिषिंचन्मनुं जपेत्॥कर्ता तु दक्षिणां दद्यात्पुष्कलां तोषहेतवे॥ १०८॥ गुरौ तुष्टे ददातीष्टं कृतवीर्यसुतो नृपः ॥ गुर्वाज्ञया स्वयं कुर्याद्यदि वा कारयेद्गुरुः ॥ १०९ ॥ दत्त्वा धनादिकं तस्मै दीपदानाय नारद ॥ गुर्वाज्ञामन्तरा कुर्याद्यो दीपं स्वेष्टसिद्धये ॥११० ॥ सिद्धिर्न जायते तस्य हानिरेव पदे पदे ॥ उत्तमं गोघृतं प्रोक्तं मध्यमं महषीभवम् ॥ १११ ॥ तिलतैलं तु तादृक् स्यात्कनीयोऽजादिजं घृतम् ॥ आस्यरोगे सुगंधेन दद्यात्तैलेन दीपकम् ॥ ११२ ॥ सिद्धार्थसंभवेनाथ द्विषतां नाशनाय च ॥ सहस्रेण पलैर्दीपे विहिते च न दृश्यते ॥ ११३ ॥ कार्यसिद्धिस्तदा कुर्यात्त्रिवारं दीपजं विधिम् ॥ तदा सुदुर्लभमपि कार्य्यं सिद्ध्येन्न संशयः ॥ ११४॥ दीपप्रियः कार्तवीर्यो मार्तंडो नतिवल्लभः ॥ स्तुतिप्रियो महाविष्णुर्गणेशस्तर्पणप्रियः ॥ ११५ ॥ दुर्गार्चनप्रिया नूनमभिषेकप्रियः शिवः ॥ तस्मात्तेषां प्रतोषाय विदध्यात्तत्तदादरात् ॥ ११६ ॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे कार्तवीर्यमाहात्म्यमन्त्रदीपकथनं नाम षट्सप्ततितमोऽध्यायः ॥७६॥ नारद उवाच ॥ साधु साधु महाप्राज्ञ सर्वतंत्रविशारद॥ त्वया मह्यं समाख्यातं विधानं तंत्रगोपितम्॥ १॥अधुना तु महाभाग कीर्तवीर्यहनूमतोः॥कवचे श्रोतुमिच्छामि तद्वदस्व कृपानिधे॥२॥ सनत्कुमार उवाच॥ शृणु विप्रेन्द्र वक्ष्यामि कवचं परमाद्भुतम्॥कार्तवीर्यस्य येनासौ प्रसन्नः कार्यसिद्धिकृत॥३॥सहस्रादित्यसंकाशे नानारत्नसमुज्ज्वले॥ भास्वद्ध्वजपताकाढ्ये तुरगायुतभूषिते ॥ ४ ॥ महासंवर्तकांभोधिभीमरावविराविणि ॥ समुद्धृतमहाछत्रवितानितवियत्पथे ॥ ५ ॥ महारथवरे दीप्तनानायुधविराजिते ॥ सुस्थितं विपुलोदारं सहस्रभुजमंडितम् ॥ ६ ॥ वामैरुदंडकोदंडान्दधानमपरैः शरान् ॥ किरीटहारमुकुटकेयूरवलयांगदैः ॥ ॥ ७ ॥ मुद्रिकोदरबन्धाद्यैर्मौजीनूपुरकादिभिः ॥ भूषितं विविधाकल्पैर्भास्वरैः सुमहाधनैः ॥ ८ ॥ आवद्धकवचं वीरं सुप्रसन्नाननांबुजम् ॥ धनुर्ज्या





सिंहनादेन कंपयंतं जगत्रयम् ॥ ९ ॥ सर्वशत्रुक्षयकरं सर्वव्याधिविनाशनम् ॥ सर्वसंपत्प्रदातारं विजयश्रीनिषेवितम् ॥ १० ॥ सर्वसौभाग्यदं भद्रं
भक्ताभयविधायिनम् ॥ दिव्यमाल्यानुलेपाढ्यं सर्वलक्षणसंयुतम् ॥ ११ ॥ रथनागाश्वपादातवृंदमध्यगमीश्वरम् ॥ वरदं चक्रवर्तीनं सर्वलोकैकपाल
कम् ॥ १२ ॥ समानोदितसाहस्रदिवाकरसमद्युतिम् ॥ महायोगभवैश्वर्यकीर्त्याक्रांतजगत्त्रयम् ॥ १३ ॥ श्रीमच्चक्रं हरेरंशादवतीर्णं महीतले ॥
सम्यगात्मादिभेदेन ध्यात्वा रक्षामुदीरयेत् ॥१४ ॥ अस्यांगमूर्तयः पंच पांतु मां स्फटिकोज्ज्वलाः ॥ अग्नीशासुरवायव्यकोणेषु हृदयादिकाः॥ १५॥
सर्वतोऽत्रज्वलद्रूपा दरचर्मासिपाणयः ॥ अव्याहतबलैश्वर्यशक्तिसामर्थ्यविग्रहाः ॥ १६ ॥ क्षेमंकरीशक्तियुतश्चौरवर्गविभञ्जनः॥प्राचीं दिशं रक्षतु मे
बाणबाणासनायुधः ॥ १७ ॥ श्रीकरीशक्तिसहितो मारीभयविनाशकः ॥ शरचापधरः श्रीमान् दिशं मे पातु दक्षिणाम् ॥ १८ ॥ महावश्यकरी
युक्तः सर्वशत्रुविनाशकृत्॥महेषुचापधृक्पातु मम प्राचेतसीं दिशम् ॥ १९ ॥ यशःकर्या समायुक्तो दैत्यसंघविनाशनः ॥ परिरक्षतु मे सम्यग्विदिशं
चैत्रभानवीम् ॥ २०॥ विद्याकरीसमायुक्तः सुमहद्दुःखनाशनः॥ पातु मे नैर्ऋतीं चापपाणिर्विदिशमीश्वरः ॥ २१ ॥ धनकर्या समायुक्तो महादुरित
नाशनः ॥ इष्वासनेषुधृक्पातु विदिशं मम वायवीम् ॥ २२॥ आयुःकर्या युतः श्रीमान्महाभयविनाशनः॥चापेषुधारी शैवीं मे विदिशं परिरक्षतु ॥
॥ २३ ॥ विजयश्रीयुतः साक्षात्सहस्रारधरो विभुः ॥ दिशमूर्द्ध्वामवतु मे सर्वदुष्टभयंकरः ॥ २४ ॥ शंखभृत्सुमहाशक्तिसंयुतोऽप्यधरां दिशम् ॥
परिरक्षतु मे दुःखध्वांतसम्भेदभास्करः ॥ २५ ॥ महायोगसमायुक्तः सर्वदिक्चक्रमंडलः ॥ महायोगीश्वरः पातु सर्वतो मम पद्मभृत् ॥२६॥ एतास्तु
मूर्तयो रक्ता रक्तमाल्यांशुकावृताः प्रधानदेवतारूपाः पृथगश्वरे स्थिताः ॥ २७ ॥ शक्तयः पद्महस्ताश्च नीलेंदीवरसन्निभाः ॥ शुक्लमाल्यानुवसनाः
सुलिप्ततिलकोज्ज्वलाः ॥ २८ ॥ तत्पार्षदेश्वराः स्वस्ववाहनायुधभूषणाः ॥ स्वस्वदिक्षु स्थिताः पांतु मामिंद्राद्या महाबलाः ॥ २९ ॥ एतास्तस्य
समाख्याताः सर्वावरणदेवताः ॥ सर्वतो मां सदा पांतु सर्वशक्तिसमन्विताः ॥ ३० हृदये चोदरे नाभौ जठरे गुह्यमण्डले ॥ तेजोरूपाः स्थिताः
पांतु वांछासुरवनद्रुमाः ॥ ३१ ॥ दिशं चान्ये महावर्णा मन्त्ररूपा महोज्ज्वलाः ॥ व्यापकत्वेन पांत्वस्मानापादतलमस्तकम् ॥ ३२ ॥ कार्तवीर्यः
शिरः पातु ललाटं हैहयेश्वरः ॥ सुमुखो मे मुखं पातु कर्णौ व्याप्तजगत्त्रयः ॥ ३३ ॥ सुकुमारो हनुं पातु भ्रुयुगं मे धनुर्धरः ॥ नयनं पुंडरीकाक्षो
नासिकां मे गुणाकरः ॥ ३४ ॥ अधरोष्ठौ सदा पातु ब्रह्मज्ञेयो द्विजान्कविः ॥ सर्वशास्त्रकलाधारी जिह्वां चिबुकमव्ययः ॥ ३५॥ दत्तात्रेयप्रियः
कंठं स्कंधौ राजकुलेश्वरः ॥ भुजौ दशास्यदर्पघ्नो हृदयं मे महाबलः ॥ ३६ ॥ कुक्षिं रक्षतु मे विद्वान् पक्षः पापुंजयः ॥ कटौ सर्पाधिपः पातु

करायाणि जगत्प्रियः ॥ ३७ ॥ रेवांबुलीलासंहृष्टो जठरं परिरक्षतु ॥ वीरशूरस्तु मे नाभिं पार्श्वौ मे सर्वदुष्टहा ॥३८॥ सहस्रभुजभृत्पृष्ठं सप्तद्वीपाधिपः कटिम् ॥ऊरू माहिष्मतीनाथो जानुनी वल्लभो भुवः ॥३९॥ जंघे वीराधिपः पातु पातु पादौ मनोजवः॥पातु सर्वायुधधरः सर्वांगं सर्वमर्मसु॥४०॥ सर्वदुष्टांतकः पातु धात्वष्टककलेवरम् ॥ प्राणादिदशजीवेशान्सर्वशिष्टप्रदोऽवतु ॥ ४१ ॥ वशीकृतेंद्रियग्रामः पातु सर्वेन्द्रियाणि मे ॥ अनुक्तमपि यत्स्थान शरीरांतर्बहिश्च यत् ॥ ४२ ॥ तत्सर्वं पातु मे सर्वलोकनाथेश्वरेश्वरः ॥ वज्रात्सारतरं चेदं शरीरं कवचावृतम् ॥ ४३ ॥ बाधाशतविनिर्मुक्त मस्तु मे भयवर्जितम् ॥ बद्धेदं कवचं दिव्यमभेद्यं हैहयेशितुः ॥ ४४ ॥ विचरामि दिवा रात्रौ निर्भयेनांतरात्मना ॥ राजमार्गे महादुर्गे मार्गे चौरा दिसंकुले ॥ ४५ ॥ विषमे विपिने घोरे दावाग्नौ गिरिकंदरे ॥ संग्रामे शस्त्रसंघाते सिंहव्याघ्रनिषेविते ॥ ४६ ॥ गह्वरे सर्वसंकीर्णे संध्याकाले नृपा लये ॥ विवादे विपुलावर्ते समुद्रे च नदीतटे ॥ ४७ ॥ परिपंथिजनाकीर्णे देशे दस्युगणावृते ॥ सर्वस्वहरणे प्राप्ते प्राप्ते प्राणस्य संकटे ॥ ४८ ॥ नानारोगज्वरावेशे पिशाचप्रेतयातने ॥ मारीदुःस्वप्नपीडासु क्लिष्टे विश्वासघातके ॥ ४९ ॥ शारीरे च महादुःखे मानसे च महाज्वरे ॥ आधिव्या धिभये विघ्नज्वालोपद्रवकेऽपि च ॥ ५० ॥ न भवेत्तु भयं किंचित्कवचेनावृतस्य मे ॥ आगंतुकामानखिलानस्मद्वस्तुविलुंपकान् ॥ ५१ ॥ निवारयतु दोर्दंडसहस्रेण महारथः ॥ स्वकरोद्धृतसाहस्रपाशबद्धान्सुदुर्जयान् ॥ ५२ ॥ संरुद्धगतिसामर्थ्यान्करोतु कृतवीर्यजः ॥ सृणिसाहस्रनि भिन्नान्सहस्रशरखंडितान् ॥ ५३ ॥ राजचूडामणिः क्षिप्रं करोत्वस्मद्विरोधकान् ॥ खड्गसाहस्रदलितान्सहस्रमुशलार्दितान् ॥ ५४ ॥ चौरादि दुष्टसत्त्वौघान्करोतु कमलेक्षणः ॥ स्वशंखनादसंत्रस्तान्सहस्रारसहस्रभृत् ॥ ५५ ॥ अवतारो हरेः साक्षात्पालयत्वखिलं मम ॥ कार्तवीर्य महावीर्य सर्वदुष्टविनाशन ॥ ५६ ॥ सर्वत्र सर्वदा दुष्टचौरान्नाशाय नाशय ॥ किं त्वं स्वपिषि दुष्टघ्न किं तिष्ठसि चिरायसि ॥ ५७ ॥ उत्तिष्ठ पाहि नः सर्वभयेभ्यः स्वसुतानिव ॥ ये चौरा वसुहर्तारो विद्विषो ये च हिंसकाः ॥ ५८ ॥ साधुभीतिकरा दुष्टाश्छद्मका ये दुराशयाः ॥ दुर्हृदो दुष्टभू पाला दुष्टामात्याश्च पापकाः ॥ ५९ ॥ ये च कार्यविलोप्तारो ये खलाः परिपंथिनः ॥ सर्वस्वहारिणो ये च पंच मायाविनोऽपरे ॥ ६० ॥ महाक्ले शकरा म्लेच्छा दस्यवो वृषलाश्च ये ॥ येऽग्निदा गरदातारो वंचकाः शस्त्रपाणयः ॥ ६१ ॥ ये पापा दुष्टकर्माणो दुःखदा दुष्टबुद्धयः ॥ व्याजकाः कुपथासक्ता ये च नानाभयप्रदाः ॥ ६२ ॥ छिद्रान्वेषरता नित्यं येऽस्मान्बाधितुमुद्यताः ॥ ते सर्वे कार्तवीर्यस्य महाशंखरवा हताः ॥ ६३ ॥ सहसा विलयं यान्तु दूरादेव विमोहिताः ॥ ये दानवा महादित्या ये यक्षा ये च राक्षसाः ॥ ६४ ॥ पिशाचा ये महासत्त्वा

ये भूतब्रह्मराक्षसाः ॥ अपस्मारग्रहा ये च ये ग्रहाः पिशिताशनाः ॥ ६५ ॥ महालोहितभोक्तारो वेताला ये च गुह्यकाः ॥ गंधर्वाप्सरसः सिद्धा ये
च देवादियोनयः ॥ ६६ ॥ डाकिन्यो द्रुणसाः प्रेताः क्षेत्रपाला विनायकाः॥ महाव्याघ्रमहामेघा महातुरगरूपकाः ॥ ६७ ॥ महागजा महासिंहा
महामहिषयोनयः ॥ ऋक्षवाराहशुनकवानरोलूकमूर्तयः ॥ ६८ ॥ महोष्ट्रखरमार्जारसर्पगोवृषमस्तकाः ॥ नानारूपा महासत्त्वा नानाक्लेशसहस्रदाः
॥ ६९ ॥ नानारोगकराः क्षुद्रा महावीर्या महाबलाः॥ वातिकाः पैत्तिका घोरा श्लैष्मिकाः सान्निपातिकाः ॥ ७०॥ माहेश्वरा वैष्णवाश्च वैरिंच्याश्च
महाग्रहाः ॥ स्कांदा वैनायकाः क्रूरा ये च प्रमथगुह्यकाः ॥ ७१ ॥ महाशत्रुग्रहा रौद्रा महामारीमसूरिकाः ॥ ऐकाहिका द्व्याहिकाश्च त्र्याहिकाश्च
महाज्वराः ॥ ७२ ॥ चातुर्थिकाः पाक्षिकाश्च मास्याः षाण्मासिकाश्च ये ॥ सांवत्सरा दुर्निवार्या ज्वराः परमदारुणाः ॥ ७३ ॥ स्वाप्निका
ये महोत्पाता ये च दुःस्वाप्निका ग्रहाः ॥ कूष्मांडा जृंभिका भौमा द्रोगाः सान्निध्यवंचकाः ॥ ७४ ॥ भ्रमिकाः प्राणहर्तारो ये च बालग्रहादयः ॥
मनोबुद्धीन्द्रियहराः स्फोटकाश्च महाग्रहाः ॥७५ ॥महाशना वलिभुजो महाकुणपभोजनाः॥ दिवाचरा रात्रिचरा ये च संध्यासु दारुणाः ॥ ७६ ॥
प्रमत्ता वाऽप्रमत्ता वै ये मां बाधितुमुद्यताः ॥ ते सर्वे कार्त्तवीर्यस्य धनुर्मुक्तशराहताः ॥ ७७ ॥ सहस्रधा प्रणश्यंतु भग्नसत्त्वबलोद्यमाः ॥ ये सर्पा ये
महानागा महागिरिबिलेशयाः ॥७८॥ कालव्याला महादंष्ट्रा महाजगरसंज्ञकाः ॥ अनंतशूलिकाद्याश्च दंष्ट्राविषमहाभयाः ॥ ७९ ॥ अनेकशत
शीर्षाश्च खंडपुच्छाश्च दारुणाः ॥ महाविषजलौकाश्च वृश्चिका रुक्तपुच्छकाः ॥ ८०॥ आशीविषाः कालकूटा महाहालाहलाह्वयाः ॥ जलसर्पा जल
व्याला जलग्राहाश्च कच्छपाः ॥ ८१ ॥ मत्स्यका विषपुच्छाश्च ये चान्ये जलवासिनः ॥ जलजाः स्थलजाश्चैव कृत्रिमाश्च महाविषाः ॥ ८२ ॥
गुप्तरूपा गुप्तविषा मूषिका गृहगोधिकाः ॥ नानाविषाश्च ये घोरा महोपविषसंज्ञकाः ॥ ८३ ॥ येऽस्मान्बाधितुमिच्छंति शरीरप्राणनाशकाः ॥ ते
सर्वे कार्तवीर्यस्य खड्गसाहस्रदारिताः ॥ ८४ ॥ दूरादेव विनश्यंतु प्रणष्टेंद्रियसाहसाः॥ मनुष्याः पशवो वृक्षवानरा वनगोचराः ॥ ८५ ॥ सिंह
व्याघ्रवराहाश्च महिषा ये महामृगाः ॥ गजास्तुरंगा गवया रासभाः शरभा वृकाः ॥८६॥ शुनका द्वीपिनः शुभ्रा मार्जारा विल्लोलुपाः ॥ शृगालाः
शशकाः श्येना गरुत्मन्तो विहंगमाः ॥ ८७ ॥ भेरुंडा वायसा गृध्रा हंसाद्याः पक्षिजातयः ॥ उद्भिज्जाश्चांडजाश्चैव स्वेदजाश्च जरायुजाः ॥ ८८ ॥
नानाभेदकुले जाता नानाभेदाः पृथग्विधाः ॥ येऽस्मान्बाधितुमिच्छंति संध्यासु च दिवा निशि ॥८९॥ ते सर्वे कार्तवीर्यस्य गदासाहस्रदारिताः ॥
दूरादेव विनश्यंतु विनष्टगतिपौरुषाः ॥ ९० ॥ ये चाक्षेमप्रदातारः कूटमायाविनश्च ये ॥ मारणोत्सादनोन्मूलद्वेषमोहनकारकाः ॥ ९१ ॥ विश्वास

घातका दुष्टा ये च स्वामिद्रुहो नराः ॥ ये चाततायिनो दुष्टा ये पापा गोप्यहारिणः ॥ ९२ ॥ दाहोपघातगरलशस्त्रपातातिदुःखदाः॥
क्षेत्रवित्तादिहरणवंधनादिभयप्रदाः ॥ ९३ ॥ ईतयो विविधाकारा ये चान्ये दुष्टजातयः ॥ पीडाकरा ये सततं छिद्रमिच्छंति बाधितुम् ॥ ९४ ॥
ते सर्वे कार्तवीर्यस्य चक्रसाहस्रदारिताः ॥ दूरादेव क्षयं यांतु विनष्टबलसाहसाः ॥ ९५ ॥ ये मेघा ये महावर्षा ये वाता याश्च विद्युतः ॥ ये महा
शनयो दीप्ता ये निर्घाताश्च दारुणाः ॥ ९६ ॥ उल्कापाताश्च ये घोरा ये महेंद्रायुधादयः ॥ सूर्येंदुकुजसौम्याश्च गुरुकाव्यशनैश्चराः ॥ ९७ ॥
राहुश्च केतवो घोरा नक्षत्रा राशयस्तथा ॥ तिथयः संक्रमा मासा हायना युगनायकाः ॥९८ ॥ मन्वंतराधिपाः सिद्धा ऋषयो योगसिद्धयः ॥
निधयो ऋग्यजुःसामाथर्वाणश्चैव वह्नयः ॥ ९९ ॥ ऋतवो लोकपालाश्च पितरो देवसंहतिः ॥ विद्याश्चैव चतुःषष्टिभेदा या भुवनत्रये ॥ १०० ॥
ये त्वत्र कीर्तिताः सर्वे ये चान्ये नानुकीर्तिताः ॥ ते संतु नः सदा सौम्याः सर्वकालसुखावहाः ॥ १०१ ॥ आज्ञया कार्तवीर्यस्य योगीन्द्र
स्यामितद्युतेः ॥ कार्तवीर्यार्जुनो धन्वी राजेन्द्रो हैहयेश्वरः ॥ १०२ ॥ दशास्यदर्पहा रेवालीलादृप्तः सुदुर्जयः ॥ दुःखहा चौरदमनो राजराजे
श्वरः प्रभुः ॥ १०३ ॥ सर्वज्ञः सर्वदः श्रीमान् सर्वशिष्टेष्टदः कृती ॥ राजचूडामणिर्योगी सप्तद्वीपाधिनायकः ॥ १०४ ॥ विजयी विश्वजिद्वा
ग्मी महागतिरलोलुपः ॥ यज्वा विप्रप्रियो विद्वान् ब्रह्मज्ञेयः सनातनः ॥ १०५ ॥ माहिष्मतीपतिर्योधा महाकीर्तिर्महाभुजः ॥ सुकुमारो महा
वीरो मारीघ्नो मदिरेक्षणः ॥ १०६ ॥ शत्रुघ्नः शाश्वतः शूरः शंखभृद्योगिवल्लभः ॥ महाभागवतो धीमान्महाभयविनाशनः ॥ १०७॥ असाध्यो
विग्रहो दिव्यो भावो व्याप्तजगत्त्रयः ॥ जितेंद्रियो जितारातिः स्वच्छंदोऽनंतविक्रमः ॥१०८ ॥ चक्रभृत्परचक्रघ्नः संग्रामविधिपूजितः ॥ सर्वशास्त्र
कलाधारी विरजा लोकवंदितः ॥ १०९ ॥ वीरो विमलसत्त्वाढ्यो महाबलपराक्रमः ॥ विजयश्रीमहामान्यो जितारिर्मंत्रनायकः ॥ ११० ॥ खड्ग
भृत्कामदः कांतः कालघ्नः कमलेक्षणः ॥ भद्रवादप्रियो वैद्यो विबुधो वरदो वशी ॥ १११ ॥ महाधनो निधिपतिर्महायोगी गुरुप्रियः ॥
योगाढ्यः सर्वरोगघ्नो राजिताखिलभूतलः ॥ ११२ ॥ दिव्यास्त्रभृदमेयात्मा सर्वगोप्ता महोज्ज्वलः ॥ सर्वायुधधरोऽभीष्टप्रदः परपुरंजयः ॥११३ ॥
योगसिद्धो महाकायो महावृंदशताधिपः ॥ सर्वज्ञाननिधिः सर्वसिद्धिदानकृतोद्यमः ॥ ११४ ॥ इत्यष्टशतनामोक्त्या मूर्तयो दश दिक्पथि ॥
सम्यग्दशदिशो व्याप्य पालयंतु च मां सदा ॥११५॥स्वस्थाः सर्वेन्द्रियाः संतु शांतिरस्तु सदा मम ॥ शेषाद्या मूर्तयोऽष्टौ च विक्रमेणैव भास्वराः॥
॥११६ ॥ अग्निनिर्ऋतिवाय्वीशकोणगाः पांतु मां सदा ॥ मम सौख्यमसंबाधमारोग्यमपराजयः ॥ ११७ ॥ दुःखहानिरविघ्नश्च प्रजावृद्धिः सुखो





दयः ॥ वांछासिरतिकल्याणमवैषम्यमनामयम् ॥ ११८ ॥ अनालस्यमभीष्टं स्यान्मृत्युहानिर्बलोन्नतिः ॥ भयहानिर्यशः कांतिर्विद्या ऋद्धिर्महा
श्रियः ॥ ११९ ॥ अनष्टद्रव्यता चैव नष्टस्य पुनरागमः ॥ दीर्घायुष्यं मनोहर्षः सौकुमार्यमभीप्सितम् ॥ १२० ॥ अप्रधृष्यतमत्वं च महासाम
र्थ्यमेव च ॥ संतु मे कार्तवीर्य्यस्य हैहयेंद्रस्य कीर्तनात् ॥ १२१ ॥ य इदं कार्तवीर्य्यस्य कवचं पुण्यवर्द्धनम् ॥ सर्वपापप्रशमनं सर्वो
पद्रवनाशनम् ॥ १२२ ॥ सर्वशांतिकरं गुह्यं समस्तभयनाशनम् ॥ विजयार्थप्रदं नृणां सर्वसंपत्प्रदं शुभम् ॥ १२३ ॥ शृणुयाद्वा पठेद्वापि
सर्वकामानवाप्नुयात् ॥ चौरैर्हृतं यदा पश्येत्पश्वादिधनमात्मनः ॥ १२४ ॥ सप्तवारं तदा जप्येन्निशि पश्चिमदिङ्मुखः ॥ सप्तरात्रेण लभते
नष्टद्रव्यं न संशयः ॥ १२५ ॥ सप्तविंशतिधा जप्त्वा प्राचीदिग्वदनः पुमान् ॥ देवासुरनिभं चापि परचक्रं निवारयेत् ॥ १२६ ॥ विवादे कलहे घोरे
पंचधा यः पठेदिदम् ॥ विजयो जायते तस्य न कदाचित्पराजयः ॥ १२७ ॥ सर्वरोगप्रपीडासु त्रेधा वा पंचधा पठेत् ॥ स रोगमृत्युवेतालभूतप्रेतैर्न
बाध्यते ॥ १२८ ॥ सम्यग्द्वादशधा रात्रौ प्रजपेद्बंधमुक्तये ॥ त्रिदिनान्निगडाद्बद्धो मुच्यते नात्र संशयः ॥ १२९ ॥ अनेनैव विधानेन सर्वसा
धनकर्मणि ॥ असाध्यमपि सप्ताहात्साधयेन्मंत्रवित्तमः ॥ १३० ॥ यात्राकाले पठित्वेदं मार्गे गच्छति यः पुमान् ॥ न दुष्टचौरव्याघ्राद्यैर्भयं
स्यात्परिपंथिभिः ॥ १३१ ॥ जपन्नासेचनं कुर्वञ्जलेनांजलिना तनौ ॥ न चासौ विषकृत्यादिरोगस्फोटैः प्रबाध्यते ॥ १३२ ॥ कार्तवीर्यः खल
द्वेषी कृतवीर्यसुतो बली ॥ सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः ॥ १३३ ॥ रक्तगंधो रक्तमाल्यो राजा स्मर्तुरभीष्टदः ॥ द्वादशैतानि नामानि कार्त
वीर्यस्य यः पठेत् ॥ १३४ ॥ संपदस्तस्य जायंते जनास्तस्य वशे सदा ॥ यः सेवते सदा विप्र श्रीमच्चक्रावतारकम् ॥ १३५ ॥ तस्य रक्षां सदा
कुर्याच्चक्रं विष्णोर्महात्मनः ॥ मयैतत्कवचं विप्र दत्तात्रेयान्मुनीश्वरात् ॥ १३६ ॥ श्रुतं तुभ्यं निगदितं धारयस्वाखिलेष्टदम् ॥ १३७ ॥ इति
श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे कार्तवीर्यकवचकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ सनत्कुमार उवाच ॥ कार्तवी
र्यस्य कवचं कथितं ते मुनीश्वर ॥ मोहविध्वंसनं जैत्रं मारुतेः कवचं शृणु ॥ १ ॥ यस्य संधारणात्सद्यः सर्वे नश्यंत्युपद्रवाः ॥ भूतप्रेतारिजं दुःखं
नाशमेति न संशयः ॥ २ ॥ एकदाहं गतो द्रष्टुं रामं रमयतां वरम् ॥ आनंदवनिकासंस्थं ध्यायंतं स्वात्मनः पदम् ॥ ३ ॥ तत्र रामं रमानाथं 
पूजितं त्रिदशेश्वरैः ॥ नमस्कृत्य तदादिष्टमासनं स्थितवान् पुरः ॥ ४ ॥ तत्र सर्वं मया वृत्तं रावणस्य वधांतकम् ॥ पृष्टं प्रोवाच राजेंद्रः श्रीरामः
स्वयमादरात् ॥ ५ ॥ ततः कथांते भगवान्मारुतेः कवचं ददौ ॥ यद्दत्तं तत्ते प्रवक्ष्यामि न प्रकाश्यं हि कुत्रचित् ॥ ६ ॥ भविष्यदेतन्निर्दिष्टं बाल

भावेन नारद ॥ श्रीरामेणांजनासूनोर्भुक्तिमुक्तिप्रदायकम् ॥ ७ ॥ हनुमान् पूर्वतः पातु दक्षिणे पवनात्मजः ॥ पातु प्रतीच्यामक्षघ्नः सौम्ये सागरतारकः ॥८॥ ऊर्द्ध्वं पातु कपिश्रेष्ठः केसरिप्रियनंदनः ॥ अधस्ताद्विष्णुभक्तस्तु पातु मध्ये च पावनिः॥९॥ लंकाविदाहकः पातु सर्वापद्भ्यो निरंतरम्॥ सुग्रीवसचिवः पातु मस्तकं वायुनंदनः ॥ १० ॥ भालं पातु महावीरो भ्रुवोर्मध्ये निरंतरम् ॥ नेत्रे छायापहारी च पातु नः प्लवगेश्वरः ॥ ११ ॥ कपोलौ कर्णमूले च पातु श्रीरामकिंकरः ॥ नासाग्रमंजनासूनुः पातु वक्त्रं हरीश्वरः ॥ १२ ॥ पातु कंठे तु दैत्यारिः स्कंधौ पातु सुरारिजित् ॥ भुजौ पातु महातेजाः करौ च चरणायुधः ॥ १३ ॥ नखान्नखायुधः पातु कुक्षौ पातु कपीश्वरः ॥ वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः॥ १४ ॥लंकानिभंजनः पातु पृष्ठदेशे निरंतरम् ॥ नाभिं श्रीरामभक्तस्तु कटिं पात्वनिलात्मजः ॥ १५ ॥ गुह्यं पातु महाप्राज्ञः सक्थिनी अतिथिप्रियः॥ ऊरू च जानुनी पातु लंकाप्रासादभंजनः ॥ १६ ॥ जंघे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ॥ अचलोद्धारकः पातु पादौ भास्करसन्निभः ॥ १७ ॥ अङ्गानि पातु सत्त्वाढ्यः पातु पादांगुलीः सदा ॥ मुखांगानि महाशूरः पातु रोमाणि चात्मवान्॥१८॥दिवारात्रौ त्रिलोकेषु सदागतिसुतोऽवतु ॥ स्थितं व्रजंतमासीनं पिबंतं जक्षतं कपिः ॥ १९ ॥ लोकोत्तरगुणः श्रीमान् पातु त्र्यंबकसंभवः ॥ प्रमत्तमप्रमत्तं वा शयानं गहनेंऽबुनि ॥ २० ॥ स्थलेंऽतरिक्षे ह्यग्नौ वा पर्वते सागरे द्रुमे ॥ संग्रामे संकटे घोरे विराड्रूपधरोऽवतु ॥२१॥ डाकिनीशाकिनीमारीकालरात्रिमरीचिकाः ॥ शयानं मां विभुः पातु पिशाचोरगराक्षसीः ॥ २२ ॥दिव्यदेहधरो धीमान्सर्वसत्त्वभयंकरः ॥ साधकेंद्रावनः शश्वत्पातु सर्वत एव माम् ॥ २३ ॥ यद्रूपं भीषणं दृष्ट्वा पलायंते भयानकाः ॥ स सर्वरूपः सर्वज्ञः सृष्टिस्थितिकरोऽवतु ॥ २४ ॥ स्वयं ब्रह्मा स्वयं विष्णुः साक्षाद्देवो महेश्वरः ॥ सूर्यमंडलगः श्रीदः पातु कालत्रयेऽपि माम् ॥ २५ ॥ यस्य शब्दमुपाकर्ण्य दैत्यदानवराक्षसाः ॥ देवा मनुष्यास्तिर्यंचः स्थावरा जङ्गमास्तथा ॥ २६ ॥ सभया भयनिर्मुक्ता भवंति स्वकृतानुगाः ॥ यस्यानेककथाः पुण्याः श्रूयंते प्रतिकल्पके ॥ २७ ॥ सोऽवतात्साधकश्रेष्ठं सदा रामपरायणः ॥ वैधात्रधातृप्रभृति यत्किंचिद्दृश्यतेऽत्यलम् ॥ २८ ॥ विद्धि व्याप्तं यथा कीशरूपेणानंजनेन तत्॥यो विभुः सोऽहमेषोऽहं स्वीयः स्वयमणुर्बृहत्॥२९॥ऋग्यजुःसामरूपश्च प्रणवस्त्रिवृदध्वरः ॥ तस्मै स्वस्मै च सर्वस्मै नतोऽस्म्यात्मसमाधिना ॥ ३० ॥ अनेकानन्तब्रह्माण्डधृतं ब्रह्मस्वरूपिणे ॥ समीरणात्मने तस्मै नतोऽस्म्यात्मस्वरूपिणे ॥ ३१ ॥ नमो हनुमते तस्मै नमो मारुतसूनवे ॥ नमः श्रीरामभक्ताय श्यामाय महते नमः ॥ ३२ ॥ नमो वानरवीराय सुग्रीवसख्यकारिणे ॥ लंकाविदहनायाथ महासागरतारिणे ॥ ३३ ॥ सीताशोकविनाशाय राममुद्राधराय च ॥ रावणांतनिदानाय नमः





सर्वोत्तरात्मने ॥३४॥ मेघनादमखध्वंसकारणाय नमोनमः॥अशोकवनविध्वंसकारिणे जयदायिने ॥३५॥ वायुपुत्राय वीराय आकाशोदरगामिने ॥
वनपालशिरश्छेत्रे लंकाप्रासादभंजिने ॥ ३६ ॥ ज्वलत्कांचनवर्णाय दीर्घलांगूलधारिणे॥ सौमित्रिजयदात्रे च रामदूताय ते नमः ॥ ३७ ॥ अक्षस्य
वधकर्त्रे च ब्रह्मशस्त्रनिवारिणे ॥ लक्ष्मणांगमहाशक्तिजातक्षतविनाशिने॥३८॥ रक्षोघ्नाय रिपुघ्नाय भूतघ्नाय नमोनमः ॥ऋक्षवानरवीरौघप्रासादाय
नमोनमः ॥३९॥ परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः ॥ विषघ्नाय द्विषघ्नाय भयघ्नाय नमोनमः॥४०॥महारिपुभयघ्नाय भक्तत्राणैककारिणे॥
परप्रेरितमन्त्राणां मंत्राणां स्तंभकारिणे ॥ ४१ ॥ पयःपाषाणतरणकारणाय नमोनमः ॥ बालार्कमंडलग्रासकारिणे दुःखहारिणे ॥ ४२ ॥ नखायु
धाय भीमाय दन्तायुधधराय च॥ विहंगमाय शर्वाय वज्रदेहाय ते नमः ॥ ४३ ॥ प्रतिग्रामस्थितायाथ भूतप्रेतवधार्थिने ॥करस्थशैलशस्त्राय राम
शस्त्राय ते नमः ॥ ४४ ॥ कौपीनवाससे तुभ्यं रामभक्तिरताय च ॥ दक्षिणाशाभास्कराय सतां चन्द्रोदयात्मने ॥ ४५ ॥ कृत्याक्षतव्यथाघ्नाय
सर्वक्लेशहराय च ॥ स्वाम्याज्ञापार्थसंग्रामसख्यसंजयकारिणे ॥ ४६॥ भक्तानां दिव्यवादेषु संग्रामे जयकारिणे ॥ किल्किलाबुबकाराय घोरशब्द
कराय च ॥ ४७॥ सर्वाग्निव्याधिसंस्तंभकारिणे भयहारिणे ॥ सदा वनफलाहारसंतृप्ताय विशेषतः ॥ ४८ ॥ महार्णवशिलाबद्धसेतुबंधाय ते नमः॥
इत्येतत्कथितं विप्र मारुतेः कवचं शिवम् ॥ ४९॥ यस्मै कस्मै न दातव्यं रक्षणीयं प्रयत्नतः ॥ अष्टगंधैर्विलिख्याथ कवचं धारयेत्तु यः ॥ ५० ॥
कंठे वा दक्षिणे बाहौ जयस्तस्य पदे पदे ॥ किं पुनर्बहुनोक्तेन साधितं लक्षमादरात् ॥ ५१॥ प्रजप्तमेतत्कवचमसाध्यं चापि साधयेत् ॥ ५२ ॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे हनुमत्कवचनिरूपणं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ सनत्कुमार उवाच ॥अथापरं
वायुसूनोश्चरितं पापनाशनम् ॥ यदुक्तं स्वासु रामेण आनन्दवनवासिना ॥१॥ सद्योजाते महाकल्पे श्रुतवीर्ये हनूमति ॥ मम श्रीरामचन्द्रस्य
भक्तिरस्तु सदैव हि ॥ २ ॥ शृणुष्व गदतो मत्तः कुमारस्य कुमारक ॥ चरितं सर्वपापघ्नं शृण्वतां पठतां सदा ॥ ३ ॥ वांछाम्यहं सदा विप्र संगमं
कौशरूपिणा ॥ रहस्यं रहसि स्वस्य ममानन्दवनोत्तमे ॥ ४ ॥ परीतेऽत्र सखायो मे सख्यश्च विगतज्वराः ॥ क्रीडंति सर्वदा चात्र
प्राकट्येऽपि रहस्यपि ॥ ५ ॥ कस्मिंश्चिदवतारे तु यद्वृत्तं च रहो मम ॥ तदत्र प्रकटं तुभ्यं करोमि प्रीतमानसः ॥ ६ ॥ आविर्भूतोऽस्म्यहं पूर्वं
राज्ञो दशरथक्षये ॥ चतुर्व्यूहात्मकस्तत्र तस्य भार्यात्रये मुने ॥ ७ ॥ ततः कतिपयैरब्दैरागतो द्विजपुंगवः ॥ विश्वामित्रोऽर्थयामास पितरं
मम भूपतिम् ॥ ८ ॥ यज्ञरक्षोविघातार्थं लक्ष्मणेन सहैव माम ॥ प्रेषयामास धर्मात्मा सिद्धाश्रममरण्यकम् ॥ ९ ॥ तत्र गत्वाश्रमभ्युपेर्द

पयन्तौ निशाचरौ ॥ ध्वस्तौ सुबाहुमारीचौ प्रसन्नोऽभूत्तदा मुनिः ॥ १० ॥ अस्त्रग्रामं ददौ मह्यं मासं चावासयत्तथा ॥ ततो गाधिसुतो धीमान् ज्ञात्वा भाव्यर्थमादरात् ॥ ११ ॥ मिथिलामनयत्तत्र रौद्रं चादर्शयद्धनुः ॥ तस्य कन्यां पणीभूतां सीतां सुरसुतोपमाम् ॥ १२ ॥ धनुर्विभज्य समिति लब्धवान्मानिनोऽस्य च ॥ ततो मार्गे भृगुपतेर्दर्पमूढं चिरं स्मयन् ॥ १३ ॥ व्यपनीयागमं पश्चादयोध्यां स्वपितुः पुरीम् ॥ ततो राज्ञाहमाज्ञाय प्रजाशीलनमानसः ॥ १४॥ यौवराज्ये स्वयं प्रीत्या सम्मंत्र्याप्तैर्विकल्पितः॥तच्छ्रुत्वा सुप्रिया भार्या कैकेयी भूपतिं मुने॥१५॥ देवकार्यविधानार्थं विदूषितमतिर्जगौ ॥ पुत्रो मे भरतो नाम यौवराज्येऽभिषिच्यताम् ॥१६॥ रामश्चतुर्दशसमा दंडकान्प्रविवास्यताम्॥तदाकर्ण्या हमुद्युक्तोऽरण्यं भार्यानुजान्वितः ॥ १७ ॥ गंतुं नृपतिनानुक्तोऽप्यगमं चित्रकूटकम् ॥ तत्र नित्यं वन्यफलैर्मांसैश्चावर्तितक्रियः ॥ १८ ॥निवसन्नेव राज्ञस्तु निधनं चाप्यवागमम् ॥ ततो भरतशत्रुघ्नौ भ्रातरौ मम मानदौ॥१९॥ मातृवर्गयुतौ दीनौ साचार्यामात्यनागरौ ॥ अथजिज्ञपतमागत्य पंचवट्यां निजाश्रमम् ॥ २० ॥ अकल्पयं भ्रातृभार्यासहितश्च त्रिवत्सरम् ॥ ततस्त्रयोदशे वर्षे रावणो नाम राक्षसः ॥ २१ ॥ मायया हृतवान्सीतां प्रियां मम परोक्षतः ॥ ततोऽहं दीनवदन ऋष्यमूकं हि पर्वतम् ॥ २२ ॥ भार्यामन्वेषयन्प्राप्तः सख्यं हर्यधिपेन च ॥ अथ वालिनमाहत्य सुग्रीव स्तत्पदे कृतः ॥ २३ ॥ सह वानरयूथैश्च साहाय्यं कृतवान्मम ॥ विरुध्य रावणेनालं मम भक्तो विभीषणः ॥ २४ ॥ आगतो ह्यभिषिच्याशु लंकेशो हि विकल्पितः ॥ हत्वा तु रावणं संख्ये सपुत्रामात्यबांधवम् ॥ २५ ॥ सीतामादाय संशुद्धामयोध्यां समुपागतः ॥ ततः कालांतरे विप्र सुग्रीवश्च विभीषणः॥ २६ ॥ निमंत्रितौ पितुः श्राद्धे षट्कुलाश्च द्विजोत्तमाः॥ अयोध्यायां समाजग्मुस्ते तु सर्वे निमंत्रिताः ॥२७॥ऋते विभीषणं तत्र चिंतयाने रघूत्तमे॥ शंभुर्ब्राह्मणरूपेण षट्कुलैश्च सहागतः ॥२८॥अथ पृष्टो मया शंभुर्विभीषणसमागमे॥नीत्वा मां द्रविडे देशे मोचय द्विजबंधनात् ॥२९॥ मया निमंत्रिताः श्राद्धे ह्यगस्त्याद्या मुनीश्वराः ॥ संभोजितास्तु प्रययुः स्वस्वमाश्रममंडलम् ॥ ३० ॥ ततः कालांतरे विप्रा देवा दैत्या नरेश्वराः ॥ गौतमेन समाहूताः सर्वे यज्ञसभाजिताः ॥ ३१ ॥ ते सर्वे स्फाटिकं लिंगं त्र्यंबकाद्रौ निवेशितम् ॥ संपूज्य न्यवसंस्तत्र देव दैत्यनृपाग्रजाः ॥ ३२ ॥ तस्मिन्समाजे वितते सर्वौलिंगे समर्चिते ॥ गौतमोऽप्यथ मध्याह्ने पूजयामास शंकरम् ॥ ३३ ॥ सर्वे शुक्लांबरधरा भस्मोद्धूलितविग्रहाः ॥ सितेन भस्मना कृत्वा सर्वस्थाने त्रिपुंड्रकम् ॥ ३४ ॥ नत्वा तु भार्गवं सर्वे भूतशुद्धिं प्रचक्रमुः ॥ हृत्पद्ममध्ये सुषिरं तत्रैव भूत पञ्चकम् ॥ ३५ ॥ तेषां मध्ये महाकाशमाकाशे निर्मलामलम् ॥ तन्मध्ये च महेशानं ध्यायेद्दीप्तिमयं शुभम् ॥ ३६ ॥ अज्ञानसंयुतं भूतं समलं



कर्मसंगतः ॥ तं देहमाकाशदीपे प्रदहेज्ज्ञानवह्निना॥३७॥आकाशस्यावृतिं चाहं दग्ध्वाकाशमथो दहेव॥ दग्ध्वाकाशमथो वायुमग्निभूतं तथा दहेत्
॥ ३८ ॥ अब्भूतं च ततो दग्ध्वा पृथिवीभूतमेव च॥तदाश्रितान्गुणान्दग्ध्वा ततो देहं प्रदाहयेत्॥३९॥एवं प्रदग्ध्वा भूतादिं देही तज्ज्ञानवह्निना॥
शिखामध्यस्थितं विष्णुमानंदरसनिर्भरम् ॥ ४० ॥ निष्पन्नचंद्रकिरणसंकाशकिरणं शिवम् ॥ शिवांगोत्पन्नकिरणैरमृतद्रवसंयुतैः ॥ ४१ ॥ सुशी
तला ततो ज्वाला प्रशांता चंद्ररश्मिवत् ॥ प्रसारितसुधारुग्भिः सांद्रीभूतश्च संप्लवः ॥ अनेन प्लावितं भूतग्रामं संचितयेत्परम् ॥ ४२ ॥ इत्थं कृत्वा
भूतशुद्धिं क्रियार्हो मर्त्यः शुद्धो जायते ह्येव सद्यः ॥ पूजां कर्तुं जप्यकर्मापि पश्चादेवं ध्यायेद्ब्रह्महत्यादिशुद्ध्यै ॥४३॥एवं ध्यात्वा चंद्रदीप्तिप्रकाशं
ध्यानेनारोप्याशु लिंगे शिवस्य ॥ सदाशिवं दीपमध्ये विचिंत्य पञ्चाक्षरेणार्चनमव्ययं तु ॥ ४४ ॥ आवाहनादीनुपचारांस्तथापि कृत्वा स्नानं
पूर्ववच्छंकरस्य॥औदुंबरं राजतं स्वर्णपीठं वस्त्रादिच्छन्नं सर्वमेवेह पीठम्॥४५॥अंते कृत्वा बुद्बुदाभ्यां च सृष्टिं पीठे पीठे नागमेकं पुरस्तात्॥कुर्या
त्पीठे चोर्द्धके नागयुग्मं देवाभ्याशे दक्षिणे वामतश्च॥ ४६॥जपापुष्पं नागमध्ये निधाय मध्ये वस्त्रं द्वादशप्रातिगुण्ये॥ सुश्वेतेन तस्य मध्ये महेशं
लिंगाकारं पीठयुक्तं प्रपूज्यम्॥४७॥एवं कृत्वा साधकास्ते तु सर्वे दत्त्वा दत्त्वा पंचगंधाष्टगंधम्॥पुष्पैः पत्रैः श्रीतिलैरक्षतैश्च तिलोन्मिश्रैः केवलैश्च
प्रपूज्य ॥४८॥धूपं दत्त्वा विधिवत्संप्रयुक्तं दीपं दत्त्वा चोक्तमेवोपहारम् ॥पूजाशेषं ते समाप्याथ सर्वे गीतं नृत्यं तत्र तत्रापि चक्रुः॥४९॥काले
चास्मिन्सुव्रते गौतमस्य शिष्यः प्राप्तः शंकरात्मेति नाम्ना॥५०॥ उन्मत्तवेषो दिग्वासा अनेकां वृत्तिमास्थितः॥ क्वचिद्द्विजातिप्रवरः क्वचिच्चंडालस
न्निभः॥ ५१ ॥ क्वचिच्छूद्रसमो योगी तापसः क्वचिदप्युत ॥ गर्जत्युत्पतते चैव नृत्यति स्तौति गायति ॥ ५२ ॥ रोदिति शृणुतेऽत्युक्तं पतत्यु
त्तिष्ठति क्वचित् ॥ शिवज्ञानैकसंपन्नः परमानंदनिर्भरः ॥ ५३ ॥ संप्राप्तो भोज्यवेलायां गौतमस्यांतिकं ययौ ॥ बुभुजे गुरुणा साकं क्वचिदुच्छिष्ट
मेव च॥५४॥क्वचिल्लिहति तत्पात्रं तूष्णीमेवाभ्यगात्क्वचित् ॥ हस्तं गृहीत्वैव गुरोः स्वयमेवाभुनक्क्वचित्॥५५॥क्वचिद् गृहांतरे मूत्रं क्वचित्कर्दमले
पनम् ॥ सर्वदा तं गुरुर्दृष्ट्वा करमालंब्य मंदिरम्॥५६॥प्रविश्य स्वीयपीठे तमुपवेश्याप्यभोजयत् ॥स्वयं तदस्य पात्रेण बुभुजे गौतमो मुनिः॥५७॥
तस्य चित्तं परिज्ञातुं कदाचिदथ सुंदरी॥अहल्या शिष्यमाहूय भुङ्क्ष्वेति प्राह तं मुदा ॥निर्दिष्टो गुरुपत्न्या तु बुभुजे सोऽविशेषतः॥५८॥यथा पपौ हि ॥१६६॥
पानीयं तथा वह्निमपि द्विज॥ कंटकानन्नवद्भुक्त्वा यथापूर्वमतिष्ठत॥५९॥पुरो हि मुनिकन्याभिराहूतो भोजनाय च॥दिनेदिने तत्प्रदत्तं लोष्टमंबु च
गोमयम्॥६०॥ कर्दमं काष्ठदंडं च भुक्त्वा पीत्वाथ हर्षितः॥एतादृशो मुनिरसौ चंडालसदृशाकृतिः॥६१॥सुजीर्णोपानहौ हस्ते गृहीत्वा प्रलपन्हसन्॥

अंत्यजोचितवेषश्च वृषपर्वाणमभ्यगात् ॥ ६२ ॥ वृषपर्वेशयोर्मध्ये दिग्वासाः समतिष्ठत ॥ वृषपर्वा तमज्ञात्वा पीडयित्वा शिरोऽच्छिनत् ॥ ६३ ॥ हते तस्मिन्द्विजश्रेष्ठे जगदेतच्चराचरम् ॥ अतीव कलुषं ह्यासीत्तत्रस्था मुनयस्तथा ॥ ६४ ॥गौतमस्य महाशोकः संजातः सुमहात्मनः ॥ निर्ययौ चक्षुषो वारि शोकं संदर्शयन्निव ॥ ६५ ॥ गौतमः सर्वदैत्यानां सन्निधौ वाक्यमुक्तवान् ॥ किमनेन कृतं पापं येन च्छिन्नमिदं शिरः ॥६६॥ मम प्राणाधिकस्येह सर्वदा शिवयोगिनः ॥ ममापि मरणं सत्यं शिष्यच्छद्मा यतो गुरुः ॥ ६७ ॥शैवानां धर्मयुक्तानां सर्वदा शिववर्तिनाम् ॥ मरणं यत्र दृष्टं स्यात्तत्र नो मरणं ध्रुवम् ॥ ६८ ॥ तच्छ्रुत्वा ह्यसुराचार्यः शुक्रः प्राह विदांवरः ॥ एनं संजीवयिष्यामि भार्गवं शंकरप्रियम् ॥ ६९ ॥ किमर्थं म्रियते ब्रह्मन्पश्य मे तपसो बलम् ॥ इति वादिनि विप्रेंद्रे गौतमोऽपि ममार ह॥७०॥तस्मिन्मृतेऽथ शुक्रोऽपि प्राणांस्तत्याज योगतः॥तस्यैवं हतिमाज्ञाय प्रह्लादाद्या दितीश्वराः ॥७१॥ देवा नृपा द्विजाः सर्वे मृता आसंस्तदद्भुतम् ॥ मृतमासीदथ बलं तस्य बाणस्य धीमतः ॥७२॥अहल्या शोकसंतप्ता रुरोदोच्चैः पुनःपुनः ॥ गौतमेन महेशस्य पूजया पूजितो विभुः ॥ ७३ ॥ वीरभद्रो महायोगी सर्वं दृष्ट्वा चुकोप ह ॥ अहो कष्टमहो कष्टं महेशा बहवो हताः ॥ ७४ ॥ शिवं विज्ञापयिष्यामि तेनोक्तं करवाण्यथ ॥ इति निश्चित्य गतवान्मंदराचलमव्ययम्॥७५॥नमस्कृत्वा विरूपाक्षं वृत्तं सर्वमथोक्तवान्॥ ब्रह्माणं च हरिं तत्र स्थितौ प्राह शिवो वचः॥७६॥मद्भक्तैः साहसं कर्म कृतं ज्ञात्वा वरप्रदम्॥ गत्वा पश्यामि हे विष्णो सर्वं तत्कृतसाहसम् ॥ ७७ ॥ इत्युक्त्वा वृषमारुह्य वायुना धूतचामरः॥नन्दिकेन सुवेषेण धृते छत्रेऽतिशोभने॥७८॥सुश्वेते हेमदंडे च नान्ययोग्ये धृते विभो ॥ महेशानुमतिं लब्ध्वा हरिर्नागांतके स्थितः ॥७९॥ आरक्तनीलच्छत्राभ्यां शुशुभे लक्ष्मकौस्तुभः ॥ शिवानुमत्या ब्रह्मापि हंसारूढोऽभवत्तदा॥८०॥ इंद्रगोपप्रभाकारच्छत्राभ्यां शुशुभे विधिः ॥ इन्द्रादिसर्वदेवाश्च स्वस्ववाहनसंयुताः ॥ ८१ ॥ अथ ते निर्ययुः सर्वे नानावाद्यानुमोदिताः ॥ कोटिकोटिगणाकीर्णा गौतमस्याश्रमं गताः ॥ ८२ ॥ ब्रह्मविष्णु महेशाना दृष्ट्वा तत्परमाद्भुतम् ॥ स्वभक्तं जीवयामास वामकोणनिरीक्षणात् ॥ ८३ ॥ शंकरो गौतमं प्राह तुष्टोऽहं ते वरं वृणु ॥ तदाकर्ण्य वचस्तस्य गौतमः प्राह सादरम् ॥ ८४ ॥ यदि प्रसन्नो देवेश यदि देयो वरो मम ॥ त्वल्लिंगार्चनसामर्थ्यं नित्यमस्तु ममेश्वर ॥ ८५ ॥ वृतमेतन्मया देव त्रिनेत्र शृणु चापरम् ॥ शिष्योऽयं मे महाभागो हेयादेयादिवर्जितः ॥८६॥ प्रेक्षणीयं ममत्वेन न च पश्यति चक्षुषा ॥ न घ्राणग्राह्यं देवेश न पातव्यं न चेतरत् ॥८७॥ इति बुद्ध्या तथा कुर्वन्स हि योगी महायशाः ॥ उन्मत्तविकृताकारः शंकरात्मेति कीर्तितः ॥ ८८ ॥ न कश्चित्तं प्रति द्वेषी न च तं हिंसयेदपि ॥ एतन्मे दीयतां देव मृतानामुत्थितिस्तथा ॥ ८९ ॥





तच्छ्रुत्वोमापतिः प्रीतो निरीक्ष्य हरिमव्ययः ॥ स्वांशेन वायुना देहमाविशज्जगदीश्वरः ॥ ९० ॥ हरिरूपः शंकरात्मा मारुतिः कपिस
त्तमः ॥ पर्यायैरुच्यतेऽधीशः साक्षाद्विष्णुः शिवः परः ॥ ९१ ॥ आकल्पमेष प्रत्येकं कामरूपमुपाश्रितः ॥ ममाज्ञाकारको रामभक्तः पूजितविग्रहः
॥ ९२ ॥ अनंतकल्पमीशानः स्थास्यति प्रीतमानसः॥त्वया कृतमिदं वेश्म विस्तृतं सुप्रतिष्ठितम्॥९३॥ नित्यं वै सर्वरूपेण तिष्ठामः क्षणमादरात्॥
समर्चिताः प्रयास्यामः स्वस्ववासं ततः परम् ॥ ९४ ॥ अथाबभाषे विश्वेशं गौतमो मुनिपुंगवः ॥ अयोग्यं प्रार्थयामीश ह्यर्थी दोषं न पश्यति
॥ ९५ ॥ ब्रह्माद्यलभ्यं देवेश दीयतां यदि रोचते ॥ अथेशो विष्णुमालोक्य गृहीत्वा तत्करं करे ॥ ९६ ॥ प्रहसन्नंबुजाभाक्षमित्युवाच सदाशिवः॥
क्षामोदरोऽसि गोविंद देयं ते भोजनं किमु॥९७॥स्वयं प्रविश्य यदि वा स्वयं भुंक्ष्व स्वगेहवत्॥गच्छ वा पार्वतीगेहं या कुक्षिं पूरयिष्यति॥९८॥इत्युक्त्वा
तत्करालंबी ह्येकांतमगमद्विभुः॥आदिश्य नंदिनं देवो द्वाराध्यक्षं यथोक्तवत्॥९९॥स गत्वा गौतमं वाथ ह्युक्तवान्विष्णुभाषणम्॥संपादयान्नं देवेश भोक्तु
कामा वयं मुने ॥१००॥ इत्युक्त्वैकांतमगमद्वासुदेवेन शंकरः ॥ मृदुशय्यां समारुह्य शयितौ देवतोत्तमौ॥१०१॥अन्योन्यं भाषणं कृत्वा प्रोत्तस्थतुरु
भावपि ॥ गत्वा तडागं गंभीरं स्नास्यंतौ देवसत्तमौ ॥१०२॥ करांबुपातमन्योन्यं पृथक्कृत्वोभयत्र च ॥ मुनयो राक्षसाश्चैव जलक्रीडां प्रचक्रिरे ॥
॥ १०३ ॥ अथ विष्णुर्महेशश्च जलपानानि शीघ्रतः ॥ चक्रतुः शंकरः पद्मकिंजल्कांजलिना हरेः ॥ १०४ ॥ अवाकिरन्मुखे तस्य पद्मोत्फुल्ल
विलोचने ॥ नेत्रे केशरसंपातात्प्रमीलयत केशवः ॥ १०५ ॥ अत्रांतरे हरेः स्कंधमारुरोह महेश्वरः ॥ हरेरुत्तमांगं बाहुभ्यां गृहीत्वा संन्यमज्जयत ॥
॥ १०६ ॥ उन्मज्जयित्वा च पुनः पुनश्चापि पुनःपुनः॥ पीडितः स हरिः सूक्ष्मं पातयामास शंकरम् ॥ १०७ ॥ अथ पादौ गृहीत्वा तं भ्रामयन्विच
कर्ष ह ॥ अताडयद्धरेर्वक्षः पातयामास चाच्युतम् ॥ १०८॥ अथोत्थितो हरिस्तोयमःदायांजलिना ततः ॥ शीर्षे चैवाकिरच्छंभुमथ शंभुरथो हरिः॥
॥ १०९ ॥ जलक्रीडैवमभवदथ चर्षिगणांतरे ॥ जलक्रीडासंभ्रमेण विस्रस्तजटबंधनाः ॥ ११० ॥ अथ संभ्रमतां तेषामन्योन्यजटबंधनम ॥ इतरे
तरबद्धासु जटासु च मुनीश्वराः ॥ १११ ॥ शक्तिमंतोऽशक्तिमन आकर्षंति च सव्यथम् ॥ पातयंतोऽन्यतश्चापि क्रोशंतो रुदतस्तथा ॥ ११२ ॥
एवं प्रवृत्ते तुमुले संभूते तोयकर्मणि ॥ आकाशे वानरेशस्तु ननर्त च ननाद च ॥ ११३ ॥ विपंचीं वादयन्वाद्यं ललितां गीतिमुज्जगौ ॥ सुगीत्या
ललिता यास्तु अगायत विधा दश ॥ ११४ ॥ शुश्राव गीतिं मधुरां शंकरो लोकभावनः ॥ स्वयं गातुं हि ललितं मंदमंदं प्रचक्रमे ॥ ११५ ॥
स्वयं गायति देवेशे विश्रामं गलदेशिकम् ॥ स्वरं ध्रुवं समादाय सर्वलक्षणसंयुतम् ॥ ११६ ॥ स्वधारामृतसंयुक्तं गानेनैवमपोनयन् ॥ वासुदेवो

मर्दलं च कराभ्यामप्यवादयत् ॥ ११७ ॥ अम्बुजांगश्चतुर्वक्त्रस्तुंबुरुमुखरा बभा ॥ तानका गातमाद्यास्तु गायको वायुजोऽभवत् ॥ ११८ ॥
गायके मधुरं गीतं हनूमति कपीश्वरे ॥ म्लानमम्लानमभवत्कुशाः पुष्पास्तदाभवन् ॥ ११९ ॥ स्वां स्वां गीतिमतः सर्वे तिरस्कृत्यैव मूर्च्छिताः ॥
तूष्णीभूतं समभवद्देवर्षिगणदानवम् ॥ १२० ॥ एकः स हनुमान् गाता श्रोतारः सर्व एव ते ॥मध्याह्नकाले वितते गायमाने हनूमति ॥ स्वस्ववाह
नमारुह्य निर्गताः सर्वदेवताः ॥ १२१ ॥ गानप्रियो महेशस्तु जग्राह प्लवगेश्वरम्॥ प्लवग त्वं मयाज्ञप्तो निःशंको वृषमारुह॥१२२॥मम चाभिमुखो
भूत्वा गायस्वानेकगायनम् ॥ अथाह कपिशार्दूलो भगवंतं महेश्वरम् ॥ १२३ ॥ वृषभारोहसामर्थ्यं तव नान्यस्य विद्यते ॥ तव वाहनमारुह्य
पातकी स्यामहं विभो ॥ १२४ ॥ मामेवारुह देवेश विहंगः शिवधारणः ॥ तव चाभिमुखं गानं करिष्यामि विलोकय ॥ १२५ ॥ अथेश्वरो हनूमं
तमारुरोह यथा वृषम् ॥ आरूढे शंकरे देवे हनुमत्कंधरां शिवः॥ १२६ ॥ छित्वा त्वचं परावृत्य सुखं गायति पूर्ववत् ॥ शृण्वन्गीतिसुधां शंभुर्गौत
मस्य गृहं ततः ॥ १२७ ॥ सर्वे चाप्यागतास्तत्र देवर्षिगणदानवाः ॥ पूजिता गौतमेनाथ भोजनावसरे सति ॥ १२८ ॥ यच्छुष्कं दारुसंभूतं गृहो
पकरणादिकम् ॥ प्ररूढमभवत्सर्वं गायमाने हनूमति ॥ १२९ ॥ तस्मिन्गाने समस्तानां चित्रं दृष्टिरतिष्ठत ॥ १३० ॥ द्विबाहुरीशस्य पदाभिवं
दनः समस्तगात्राभरणोपपन्नः ॥ प्रसन्नमूर्तिस्तरुणः सुमध्ये विन्यस्तमूर्द्धांजलिभिः शिरोभिः ॥ १३१ ॥ शिरः कराभ्यां परिगृह्य शंकरो हनूमतः
पूर्वमुखं चकार ॥ पद्मासनासीनहनूमतोंऽजलौ निधाय पादं त्वपरं मुखे च॥१३२॥पादांगुलीभ्यामथ नासिकां विभुः स्नेहेन जग्राह च मन्दमन्दम्॥
स्कन्धे मुखे त्वंसतले च कण्ठे वक्षस्थले च स्तनमध्यमे हृदि ॥१३३॥ ततश्च कुक्षावथ नाभिमंडले पादं द्वितीयं विदधाति चांजलौ॥शिरो गृहीत्वाऽ
वनमय्य शंकरः पस्पर्श पृष्ठं चिबुकेन सोऽध्वनि ॥१३४॥ हारं च मुक्तापरिकल्पितं शिवो हनूमतः कंठगतं चकार ॥१३५॥ अथ विष्णुर्महेशानमिदं
वचनमुक्तवान् ॥ हनूमता समो नास्ति कृत्स्नब्रह्माण्डमण्डले ॥ १३६॥ श्रुतिदेवाद्यगम्यं हि पदं तव कपिस्थितम् ॥ सर्वोपनिषदव्यक्तं त्वत्पदं कपि
सर्वयुक् ॥ १३७ ॥ यमादिसाधनैर्योगैर्न क्षणं ते पदं स्थिरम् ॥ महायोगिहृदंभोजे परं स्वस्थं हनूमति ॥ १३८ ॥ वर्षकोटिसहस्रं तु सहस्राब्देरथा
न्वहम् ॥ भक्त्या संपूजितोऽपीश पादो नो दर्शितस्त्वया॥ १३९ ॥ लोके वादो हि सुमहाञ्छंभुर्नारायणप्रियः॥हरिप्रियस्तथा शंभुर्न तादृग्भाग्य
मस्ति मे॥१४०॥तच्छ्रुत्वा वचनं शंभुर्विष्णोः प्राह मुदान्वितः॥न त्वया सदृशो मह्यं प्रियोऽन्योऽस्ति हरे क्वचित्॥१४१॥पार्वती वा त्वया तुल्या
वर्तते नैव भिद्यते॥अथ देवाय महते गौतमः प्रणिपत्य च॥ १४२॥व्यजिज्ञपदमेयात्मन्देवैर्हि करुणानिधे॥मध्याह्नोऽयं व्यतिक्रांतो भुक्तिवेलाखिलस्य





च ॥१४३॥ अथाचम्य महादेवो विष्णुना सहितो विभुः ॥ प्रविश्य गौतमगृहं भोजनायोपचक्रमे ॥ १४४ ॥ रत्नांगुलीयैरथ नूपुराभ्यां दुकूलबंधेन
तडित्सुकांच्या ॥ हारैरनेकैरथ कण्ठनिष्कयज्ञोपवीतोत्तरवाससी च॥ १४५ ॥ विलंबिचंचन्मणिकुंडलेन सुपुष्पधम्मिल्लवरेण चैव ॥ पंचांगगंधस्य
विलेपनेन ह्यङ्गदैः कंकणकांगुलीयैः ॥ १४६ ॥ अथो विभूषितः शिवो, निविष्ट उत्तमासने ॥ स्वसंमुखं हरिं तथा न्यवेशयद्वरासने ॥ १४७ ॥ देव
श्रेष्ठौ हरीशौ तावन्योन्याभिमुखस्थितौ ॥ सुवर्णभाजनस्थान्नं ददौ भक्त्या स गौतमः ॥ १४८ ॥ त्रिंशत्प्रभेदान्भक्ष्यांस्तु पायसं च चतुर्विधम् ॥
सुपक्वं पाकजातं च कल्पितं यच्छतद्वयम्॥१४९॥ अपक्वं मिश्रकं तद्वत्त्रिंशतं परिकल्पितम् ॥शतं शतं सुकन्दानां शाकानां च प्रकल्पितम्॥१५०॥
पंचविंशतिधा सर्पिःसंस्कृतं व्यंजनं तथा ॥ शर्कराद्यं तथा चूतमोचाखर्जूरदाडिमम् ॥१५१ ॥ द्राक्षेक्षुनागरंगं च मिष्टं पक्वं फलोत्करम् ॥ प्रियालकं
जम्बुफलं विकंकतफलं तथा ॥ १५२ ॥ एवमादीनि चान्यानि द्रव्याणीशे समर्प्य च॥दत्त्वापोशानकं विप्रो भुंजध्वमिति चाब्रवीत् ॥ १५३ ॥
भुंजानेषु च सर्वेषु व्यजनं सूक्ष्मविस्तृतम् ॥ गौतमः स्वयमादाय शिवविष्णू अवीजयत्॥१५४॥परिहासमथो कर्तुमियेष परमेश्वरः॥पश्य विष्णो
हनूमन्तं कथं भुंक्ते स वानरः ॥ १५५ ॥ वानरं पश्यति हरौ मण्डकं विष्णुभाजने ॥ चिक्षेप मुनिसंदेषु पश्यत्स्वपि महेश्वरः ॥ १५६ ॥ हनूमते
दत्तवांश्च स्वोच्छिष्टं पायसादिकम् ॥ त्वदुच्छिष्टमभोज्यं तु तवैव वचनाद्विभो ॥ १५७ ॥ अनर्हं मम नैवेद्यं पत्रं पुष्पं फलादिकम् ॥ मह्यं निवेद्य
सकलं कूप एव विनिःक्षिपेत् ॥ १५८ ॥ अभुक्ते त्वद्वचो नूनं भुक्ते चापि कृपा तव॥ बाणलिंगे स्वयंभूते चन्द्रकांते हृदि स्थिते॥१५९॥चांद्रायण
समं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥ भुक्तिवेलेयमधुना तद्वैरस्यं कथांतरात् ॥१६०॥ भुक्त्वा तु कथयिष्यामि निर्विशंकं विभुंक्ष्व तत॥अथासौ जलसं
स्कारं कृतवान् गौतमो मुनिः ॥ १६१ ॥ आरक्तसुस्निग्धसुसूक्ष्मगात्राननेकधाधौतसुशोभितांगान् ॥ तडागतोयैः कतवीजवर्पितैर्विशोधितैस्तैः
करकानपूरयत् ॥ १६२ ॥ नद्याः सैकतवेदिकां नवतरां संछाद्य सूक्ष्मांबरैः शुद्धैः श्वेततरैरथोपरि घटांस्तोयेन पूर्णान्क्षिपेत् ॥ लिप्त्वा नालिकं
जातिमास्तपुटकं तत्कौलकं कारिकाचूर्णं चन्दनचन्द्ररश्मिविशदां मालां पुटांते क्षिपेत् ॥ यामस्यापि पुनश्च वारिवसनेनाशोध्य कुम्भेन
तच्चंद्रग्रन्थिमथो निधाय वकुलं क्षिप्त्वा तथा पाटलम्॥१६३॥शेफालीस्तवकमथो जलं च तत्र,विन्यस्य प्रथमत एव तोयशुद्धिम्॥कृत्वाथो मृदुतर
सूक्ष्मवस्त्रखण्डेनावेष्टत्सृणिकमुखं च सूक्ष्मचन्द्रम् ॥ १६४ ॥ अनातपप्रदेशे तु निधाय करकानथ ॥ मन्दवातसमोपेते सूक्ष्मव्यजन
वीजिते ॥ १६५ ॥ सिंचच्छीतैर्जलैश्चापि वासितैः सृणिकामपि ॥ संस्कृताः स्वायतास्तत्र नरा नार्योऽथवा नृपाः ॥ १६६ ॥ तत्कन्या

वा क्षालितांगा धौतपादास्सुवाससः ॥ मधुपिंगमनिर्यासमसांद्रमगुरुद्रवम् ॥ १६७ ॥ बाहुमूले च कंठे च विलिप्यासांद्रमेव च ॥ मस्तके जातकं न्यस्य पंचगंधविलेपनम् ॥ १६८ ॥ पुष्पनद्धसुकेशास्तु ताः शुभाः स्युः सुनिर्मलाः ॥ एवमेवार्चिता नार्य आतकुंकुमविग्रहाः ॥ १६९ ॥ युवत्यश्चारुसर्वांग्यो नितरां भूषणैरपि ॥ एतादृग्वनिताभिर्वा नरैर्वा दापयेज्जलम् ॥ १७० ॥ तेऽपि प्रादानसमये सूक्ष्मवस्त्राल्पवेष्टनम् ॥ अथ वामकरे न्यस्य करकं प्रेक्ष्य तत्र हि ॥ १७१ ॥ दोरिकान्यस्तमुन्मुच्य ततस्तोयं प्रदापयेत् ॥ एवं स कारयामास गौतमो भगवान्मुनिः ॥ १७२ ॥ महेशादिषु सर्वेषु भुक्तवत्सु महात्मसु ॥ प्रक्षालितांघ्रिहस्तेषु गंधोद्वर्तितपाणिषु ॥ १७३ ॥ उच्चासनसमासीने देवदेवे महेश्वरे ॥ अथ नीचसमासीना देवाः सर्षिगणास्तथा ॥ १७४ ॥ मणिपात्रेषु संन्यस्य पूगखंडान्सुधूपितान् ॥ अकोणान्वर्तुलान्स्थूलानसूक्ष्मानकृशानपि ॥ १७५ ॥ श्वेतपत्राणि संशोध्य क्षिप्त्वा कर्पूरखंडकम् ॥ चूर्णं च शंकरायाथ निवेदयति गौतमे ॥ १७६ ॥ गृहाण देव तांबूलमित्युक्तवचने मुनौ ॥ कपे गृहाण तांबूलं प्रयच्छ मम खंडकान् ॥ १७७ ॥ उवाच वानरो नास्ति मम शुद्धिर्महेश्वर ॥ अनेकफलभोक्तृत्वाद्वानरस्तु कथं शुचिः ॥ १७८ ॥ तच्छ्रुत्वा तु विरूपाक्षः प्राह वानरसत्तमम् ॥ मद्वाक्यादखिलं शुद्ध्येन्मद्वाक्यादमृतं विषम् ॥ १७९ ॥ मद्वाक्यादखिला वेदा मद्वाक्याद्देवतादयः ॥ मद्वाक्याद्धर्मविज्ञानं मद्वाक्यान्मोक्ष उच्यते ॥ १८० ॥ पुराणान्यागमाश्चैव स्मृतयो मम वाक्यतः ॥ अतो गृहाण तांबूलं मम देहि सुखंडकान् ॥ १८१ ॥ हरिर्वामकरेणाधात्तांबूलं पूगखंडकम् ॥ ततः पत्राणि संगृह्य तस्मै खंडान्समर्पयत् ॥ १८२ ॥ कर्पूरमग्रतो दत्तं गृहीत्वाभक्षयच्छिवः ॥ देवं तु कृततांबूले पार्वती मंदराचलात् ॥ १८३ ॥ जयाविजययोर्हस्तं गृहीत्वायान्मुनेर्गृहम् ॥ देवपादौ ततो नत्वा विनम्रवदनाभवत् ॥ १८४ ॥ उन्नमय्य मुखं तस्या इदमाह त्रिलोचनः ॥ त्वदर्थं देवदेवेशि अपराधः कृतो मया ॥ १८५ ॥ यत्त्वां विहाय भुक्तं हि तथान्यच्छृणु सुंदरि ॥ यत्त्वां स्वमंदिरे त्यक्त्वा महदेनो मया कृतम् ॥ १८६ ॥ क्षंतुमर्हसि देवेशि त्यक्तकोपा विलोकय ॥ न बभाषेऽप्येवमुक्ता सारुंधत्या विनिर्ययौ ॥ १८७ ॥ निर्गच्छंतीं मुनिर्ज्ञात्वा दंडवत्प्रणनाम ह ॥ अथोवाच शिवा तं च गौतम त्वं किमिच्छसि ॥ १८८ ॥ अथाह गौतमो देवीं पार्वतीं प्रेक्ष्य सस्मिताम् ॥ कृतकृत्यो भवेयं वै भुक्तायां मद्गृहे त्वयि ॥ १८९ ॥ ततः प्राह शिवा विप्रं गौतमं रचितांजलिम् ॥ भोक्ष्यामि त्वद्गृहे विप्र शंकरानुमतेन वै ॥ १९० ॥ अथ गत्वा शिवं विशे लब्धानुज्ञा त्वरागतः ॥ भोजयामास गिरिजां देवीं चारुंधतीं तथा ॥ १९१ ॥ भुक्त्वाथ पार्वती सर्वगंधपुष्पाद्यलंकृता ॥ सहानुचरकन्याभिः सहस्राभिर्हरं ययौ ॥ १९२ ॥ अथाह शंकरो देवीं गच्छ गौतममंदिरम् ॥ संध्योपास्तिमहं कृत्वा ह्यागमिष्ये तवांतिकम् ॥ १९३ ॥ इत्युक्त्वा





प्रययौ देवी गौतमस्यैव मंदिरम् ॥ संध्यावदनकामास्तु सर्वे एव विनिर्गताः ॥१९४॥ कृतसंध्यास्तडागे तु महेशाद्याश्च कृत्स्नशः॥ अथोत्तरमुखः
शंभुर्न्यास कृत्वा जजाप ह ॥ १९५ ॥ अथ विष्णुर्महातेजा महेशमिदमब्रवीत् ॥ सर्वैर्नमस्यते यस्तु सर्वैरेव समर्च्यते ॥ १९६॥ हूयते सर्वयज्ञेपु
स भवान्किं जपिष्यति॥ रचितांजलयः सर्वे त्वामेवैकमुपासिते ॥ १९७॥ स भवान्देवदेवेशः कस्मै विरचितांजलिः ॥ नमस्कारादिपुण्यानां फल
दस्त्वं महेश्वर ॥१९८॥तव कः फलदो वंद्यः को वा त्वत्तोऽधिको वद ॥ तच्छ्रुत्वा शंकरः प्राह देवदेवं जनार्दनम्॥१९९॥ ध्याये न किंचिद्गोविंद
नमस्ये ह न किंचन ॥ किंतु नास्तिकजंतूनां प्रवृत्त्यर्थमिदं मया ॥२००॥ दर्शनीयं हरे चैतदन्यथा पापकारिणः॥ तस्माल्लोकोपकारार्थमिदं सर्वं
कृतं मया ॥ २०१ ॥ ओमित्युक्त्वा हरिरथ तं नत्वा समतिष्ठत ॥अथ ते गौतमगृहं प्राप्ता देवर्षयस्तदा॥२०२॥सर्वे पूजामथो चक्रुर्देवदेवाय शूलिने॥
देवो हनूमता सार्द्धं गायन्नास्ते मुनीश्वर ॥ २०३ ॥ पञ्चाक्षरीं महाविद्यां सर्वे एव तदाऽजपन् ॥ हनुमत्करमालंब्य देवाभ्यां संगतो हरः ॥ २०४॥
एकशय्यासमासीनौ तावुभौ देवदंपती ॥ गायन्नास्ते च हनुमांस्तुंबुरुप्रमुखास्तथा ॥ २०५ ॥ नानाविधविलासांश्च चकार परमेश्वरः ॥ आहूय
पार्वतीमीश इदं वाक्यमुवाच ह ॥ २०६ ॥रचयिष्यामि धम्मिल्लमेहि मत्पुरतः शुभे ॥ देव्याह न च युक्तं तद्भर्त्रा शुश्रूषणं स्त्रियः ॥२०७ ॥ केश
प्रसाधनकृतावनर्थांतरमापतेत् ॥ केशप्रसाधने देव तत्त्वं सर्वं न चेप्सितम् ॥ २०८ ॥ अथ वंधकृते पश्चाद्दंसप्रांतप्रमार्जनम् ॥ ततश्चरमसंलग्न
केशपुष्पादिमार्जनम् ॥ २०९ ॥ एतस्मिन्वर्तमाने तु महात्मानो यदागमन् ॥ तदा किमुत्तरं वाच्यं तव देवादिवंदित ॥ २१० ॥ नायांति चेदत्र
विभो भीतिर्नाशमुपैष्यति ॥ एवं हि भाषमाणां तां करेणाकृष्य शंकरः ॥ २११ ॥ स्वोर्वोः संस्थापयित्वैव विस्रस्य कचबंधनम् ॥ विभज्य च
कराभ्यां स प्रससार नखैरपि ॥ २१२ ॥विष्णुदत्तां पारिजातस्रजं कचगतामपि ॥ कृत्वा धम्मिल्लमकरोदथ मालां कचगताम् ॥ २१३ ॥
मल्लिकास्रजमादाय बबंध कचबंधने ॥ कल्पप्रसूनमालां च ब्रह्मदत्तां महेश्वरः ॥ २१४ ॥ पार्वतीवसने गूढगन्धाढ्यं च समाददात् ॥ अथांसपृष्ठ
संलग्नमार्जनं कृतवान् विभुः ॥ २१५ ॥ श्लथन्नीवेरधो देव्या वस्त्रवेष्टादधोगतः ॥ किमिदं देवि चेत्युक्त्वा नीवीबंधं चकार ह ॥ २१६ ॥ नासा
भूषणमेतत्ते सत्यमेव वदामि ते ॥ ततः प्राह शिवा शंभुं स्मित्वा पर्वतनंदिनी ॥ २१७॥ अहो त्वन्मंदिरे शंभो सर्ववस्तु समृद्धिमत् ॥ पूर्वमेव
मया सर्वं ज्ञातप्रायमभूत्किल ॥ २१८ ॥ सर्वद्रविणसंपत्तिर्भूषणैरवगम्यते ॥ शिरो विभूषितं देव ब्रह्मशीर्षस्य मालया ॥ २१९ ॥ नरकस्य तथा
माला वक्षस्थलविभूषणम् ॥शेषश्च वासुकिश्चैव सविषौ तव कङ्कणौ ॥२२० ॥ दिशोंऽबरं जटाः केशा भसितं चांगरागकम्॥ महोक्षो वाहनं गोत्रं

कुलं चाज्ञातमेव च ॥ २२१ ॥ ज्ञायेते पितरौ नैव विरूपाक्षं तथा वपुः ॥ एवं वदंतीं गिरिजां विष्णुः प्राहातिकोपनः ॥२२२॥ किमर्थं निंदसे
देवि देवदेवं जगत्पतिम् ॥ दुष्प्राणा न प्रिया भद्रे तव नूनमसंयमात् ॥ २२३ ॥ यत्रेशनिंदनं भद्रे तत्र नो मरणव्रतम् ॥ इत्युक्त्वाथ नखाभ्यां
हि हरिश्छेत्तुं शिरो गतः ॥२२४॥ महेशस्तत्करं गृह्य प्राह मा साहसं कृथाः ॥ पार्वतीवचनं सर्वं प्रियं मम न चाप्रियम् ॥२२५॥ ममाप्रियं
हृषीकेश कर्तुं यत्किंचिदिष्यते ॥ ओमित्युक्त्वाथ भगवांस्तूष्णींभूतोऽभवद्धरिः॥ २२६ ॥ हनुमानथ देवाय व्यज्ञापयदिदं वचः ॥ अर्थयामि विनि
ष्कामं मम पूजाव्रतं तथा ॥ २२७ ॥ पूजार्थमप्यहं गच्छे मामनुज्ञातुमर्हसि ॥ तच्छ्रुत्वा शंकरो देवः स्मित्वा प्राह कपीश्वरम् ॥ २२८ ॥ कस्य
पूजा क्व वा पूजा किं पुष्पं किं दलं वद ॥ को गुरुः कश्च मंत्रस्ते कीदृशं पूजनं तथा ॥२२९॥ एवं वदति देवेशे हनुमान्प्रीतिसंयुतः ॥ वेपमान
समस्तांग स्तोतुमेवं प्रचक्रमे ॥ २३० ॥ नमो देवाय महते शंकरायामितात्मने ॥योगिने योगधात्रे च योगिनां गुरवे नमः ॥ २३१ ॥योगगम्याय
देवाय ज्ञानिनां पतये नमः ॥ वेदानां पतये तुभ्यं देवानां पतये नमः ॥२३२॥ ध्यानाय ध्यानगम्याय ध्यातॄणां गुरवे नमः ॥ अष्टमूर्ते नमस्तुभ्यं
पशूनां पतये नमः ॥ २३३ ॥ अंतकाय त्रिनेत्राय सोमसूर्याग्निचक्षुषे ॥ सुभृङ्गराजधत्तूरद्रोणपुष्पप्रियस्य ते ॥ २३४ ॥ बृहतीपूग
पुन्नागचपकादिप्रियाय च ॥ नमस्तेऽस्तु नमस्तेऽस्तु भूय एव नमोनमः ॥ २३५ ॥ शिवो हरिमथ प्राह मा भैषीर्वद मेऽखिलम् ॥ ततस्त्यक्त्वा
भयं प्राह हनुमान् वाक्यकोविदः ॥ २३६ ॥ शिवलिंगार्चनं कार्यं भस्मोद्धूलितदेहिना ॥ दिवा संपादितैस्तोयैः पुष्पाद्यैरपि तादृशैः ॥
॥ २३७ ॥ देव विज्ञापयिष्यामि शिवपूजाविधिं शुभम् ॥ सायंकाले तु संप्राप्ते आशिरःस्नानमाचरेत् ॥ २३८ ॥ क्षालितं वसनं शुष्कं
धृत्वाचम्य त्रिरन्यधीः ॥ अथ भस्म समादाय आग्नेयं स्नानमाचरेत् ॥ २३९ ॥ प्रणवेन समामंत्र्य अष्टवारमथापि वा ॥
पञ्चाक्षरेण मन्त्रेण नाम्ना वा येन केनचित् ॥ २४० ॥ सप्ताभिमंत्रितं भस्म दर्भपाणिः समाहरेत् ॥ ईशानः सर्वविद्यानामुक्त्वा शिरसि
पातयेत् ॥ २४१ ॥ तत्पुरुषाय विद्महे मुखे भस्म प्रसेचयेत् ॥ अघोरेभ्योऽथ घोरेभ्यो भस्म वक्षसि निक्षिपेत् ॥ २४२ ॥ वामदेवाय नमः इति
गुह्यस्थाने विनिक्षिपेत् ॥ सद्योजातं प्रपद्यामि निक्षिपेदथ पादयोः ॥ २४३ ॥ उद्धूलयेत्समस्तांगं प्रणवेन विचक्षणाः ॥ त्रैवर्णिकानामुदितः
स्नानादिविधिरुत्तमः ॥ २४४ ॥ शूद्रादीनां प्रवक्ष्यामि यदुक्तं गुरुणा तथा ॥ शिवेति पदमुच्चार्य भस्म संमन्त्रयेत्सुधीः ॥ २४५ ॥ सप्त
वारमथादाय शिवायेति शिरस्यथ ॥ शंकराय मुखे प्रोक्तं सर्वज्ञाय हृदि क्षिपेत् ॥ २४६ ॥ स्थाणवे नम इत्युक्त्वा मुखे चापि स्वयंभुवे ॥





उच्चार्य पादयोः क्षिप्त्वा भस्म शुद्धमतः परम् ॥ २४७ ॥ नमः शिवायेत्युच्चार्य सर्वांगोद्धूलनं स्मृतम् ॥ प्रक्षाल्य हस्तावाचम्य दर्भपाणिः
समाहितः ॥ २४८ ॥ दर्भाभावे सुवर्णं स्यात्तदभावे गवालुकाः ॥ तदभावे तु दूर्वाः स्युस्तदभावे तु राजतम् ॥ २४९ ॥ संध्योपास्तिं जपं
देव्याः कृत्वा देवगृहं व्रजेत् ॥ देववेदीमथो वापि कल्पितं स्थंडिलं तु वा ॥ २५० ॥ मृण्मयं कल्पितं शुद्धं पद्मादिरचनायुतम् ॥ चातुर्वर्णकरं
गैश्च श्वेतेनैकेन वा पुनः ॥ २५१ ॥ विचित्राणि च पद्मानि स्वस्तिकादि तथैव च ॥ उत्पलादिगदाशंखत्रिशूलडमरूस्तथा ॥ २५२ ॥ शरोक्तपंच
प्रासादं शिवलिंगमथैव च ॥ सर्वकामफलं वृक्षं कुल्कं कोल्कं तथा ॥२५३॥ षट्कोणं च त्रिकोणं च नवकोणमथापि वा ॥ कोणे द्वादशकांदोलापा
दुकाव्यजनानि च ॥२५४॥ चामरच्छत्रयुगलं विष्णुब्रह्मादिकांस्तथा॥चूर्णैर्विरचयेद्देव्यां धीमान्देवालयेऽपि वा॥२५५॥ यत्रापि देवपूजा स्यात् तत्रैवं
कल्पयेद्बुधः ॥ स्वहस्तरचितं मुख्यं क्रीतं चैव तु मध्यमम् ॥ २५६ ॥ याचितं तु कनिष्ठं स्याद्बलात्कारमथोऽधमम् ॥ अर्हेषु यस्त्वनर्हेषु
वलात्कारात्तु निष्फलम् ॥ २५७ ॥ रक्तशालिजपाशाणकलमासितरक्तकैः तंदुलैर्व्रीहिमात्रोत्थैः कणैश्चैव यथाक्रमम्. ॥ २५८ ॥ उत्तमैर्मध्यमै
श्चैव कनिष्ठैरधमैस्तथा ॥ पद्मादिस्थापनैरेव तत्सम्यग्यागमाचरेत्॥ २५९ ॥ प्रागुत्तरमुखो वापि यदि वा प्राङ्मुखो भवेत् ॥ आसनं च प्रवक्ष्यामि
यथादृष्टं यथा श्रुतम् ॥ २६० ॥ कौशं चार्मं चैलतल्पे दारवं तालपत्रकम् ॥ कांबलं कांचनं चैव राजतं ताम्रमेव च ॥ २६१ ॥ गोकरी .र्कजै
र्वापि ह्यासनं परिकल्पयेत् ॥ वैयाघ्रं रौरवं चैव हारिण मार्गमेव च॥२६२॥ चार्मं चतुर्विधं ज्ञेयमथ वंधुकमेव च ॥ यथासंभवमेतेषु ह्य.सनं परिक
ल्पयेत् ॥ २६३ ॥ कृतपद्मासनो वापि स्वस्तिकासन एव च ॥ दर्भभस्मसमासीनः प्राणानायम्य वाग्यतः ॥ २६४ ॥ तावत्स देवतारूपो ध्यानं
चांतः समाचरेत् ॥ शिखांते द्वादशांगुल्ये स्थितं सूक्ष्मतनुं शिवम् ॥ २६५॥ अंतश्चरंतं भूतेषु गुहायां विश्वतोमुखम् ॥ सर्वाभरणसंयुक्तमणिमादिगुणा
न्वितम् ॥ २६६ ॥ ध्यात्वा तं धारयेच्चित्ते तद्दीप्त्या पूरयेत्तनुम् ॥ तया दीप्त्या शरीरस्थं पापं नाशमुपागतम् ॥ २६७ ॥ स्वर्णपादैरसंपर्काद्रक्त
श्वेतं यथा भवेत् ॥ तद्द्वादशदलावृत्तमष्ट पंच त्रिरेव वा ॥ २६८ ॥ परिकल्प्यासनं शुद्धं तत्र लिंगं निधाय च ॥गुहास्थितं महेशानं लिंगेशं चिंत
येत्तथा ॥२६९॥ शोधिते कलशे तोयं शोधितं गंधवासितम् ॥ सुगन्धपुष्पं निक्षिप्य प्रणवेनाभिमंत्रितम् ॥ २७० ॥ प्राणायामश्च प्रणवः शूद्रेषु न ॥ १६९ ॥
विधीयते ॥ प्राणायामपदे ध्यानं शिवेत्योंकारमंत्रितम्॥२७१॥गन्धपुष्पाक्षतादीनि पूजाद्रव्याणि यानि च ॥ तानि स्थाप्य समीपे तु ततः संकल्प
माचरेत् ॥२७२॥शिवपूजां करिष्यामि शिवतुष्ट्यर्थमेव च॥इति संकल्पयित्वा तु तत आवाहनादिकम्॥२७३॥ कृत्वा तु स्नानपर्यंतं ततः स्नानं मक

ल्पयेत्॥नमस्तेत्यादिमंत्रेण शतरुद्रविधानतः॥२७४॥अविच्छिन्ना तु या धारा मुक्तिधारेति कीर्तिता॥तया यः स्नापयेन्मासं जपन्रुद्रमुखांश्च वा॥२७५॥
एकवारं त्रिवारं च पंच सप्त नवापि वा ॥ एकादश तथा वारमथैकादशधान्वितम् ॥ २७६ ॥ मुक्तिस्नानमिदं ज्ञेयं मासं मोक्षप्रदायकम् ॥ शैवया
विद्यया स्नानं केवलं प्रणवेन वा २७७ ॥ मृण्मयैर्नालिकेरस्य शकलैश्चोर्मिभिस्तथा ॥ कांस्येन मुक्ताशुक्त्या च पुष्पादिकेसरेण वा ॥ २७८ ॥
स्नापयेद्देवदेवेशं यथासंभवमीरितैः ॥ शृंगस्य च विधिं वक्ष्ये स्नानयोग्यं यथा भवेत् ॥२७९॥पूर्वमंतस्तु संशोध्य बहिरंतस्तु शोधयेत् ॥ सुस्निग्धं
लघु कृत्वाथ नाग्रं छिंद्यात्कथंचन ॥ २८० ॥ नीचैकदेशविन्यस्तद्वारद्रोण्या सुहृत्तया ॥ कुशानुयुक्तं स्नानं तु देवाय परिकल्पयेत् ॥ २८१ ॥
एवं गवयशृंगस्य जलपूर्तिरथोच्यते ॥ द्वारे निषिद्धलोहार्द्रसंधिद्वारासमन्विते ॥ २८२ ॥ योगवक्रं नागदंडं नागाकारं प्रकल्पयेत् ॥ फलस्थाने तु
चषकं दंडेन समरंध्रकम् ॥ २८३ ॥ तत्रैव पातयेत्तोयं मूर्द्धयंत्रघटे स्थितम् ॥ पातयेदथ चान्येन वामेनैव करेण वा ॥ २८४ ॥ मुक्तिधारा कृता तेन
पवित्र पापनाशनम् ॥ एवं संस्नाप्य देवेशं पंचगव्यैस्तथैव च ॥ २८५ ॥ पञ्चामृतैरथ स्नाप्य मधुरत्रितयेन च ॥ विभूष्य भूषणैर्देवं पुनः स्नाप्य
महेश्वरम् ॥२८६॥ शीतोपचारं कृत्वाथ तत आचमनादिकम् ॥ वस्त्रं तथोपवीतं च गंधद्रव्यकमेव च॥२८७॥ कर्पूरमगरुं चापि पाटीरमथवा भवेत्॥
उभयमिश्रितं चापि शिवलिंगं प्रपूजयेत् ॥ कृत्स्नं पीठं गंधपूर्णं यद्वा विभवसारतः ॥ तूष्णीमथोपचारं वा कालीयं पुष्पमेव च॥२८८॥श्रीपत्रमरु
चित्याज्यं यथाशक्त्यखिलं यथा॥अनेकद्रव्यधूपं च गुग्गुलं केवलं तथा ॥:२८९ ॥ कपिलाघृतसंयुक्तं सर्वधूपं प्रशस्यते॥धूपं दत्वा यथाशक्ति कपि
लाघृतदीपकान्॥२९०॥अथवा पूजामात्रेण दीपान्दत्वोपहारकम्॥नैवेद्यमुपपन्नं च दत्वा पुष्पसमन्वितम्॥२९१॥मुखशुद्धिं ततः कृत्वा दत्वा तांबूल
मादरात्॥प्रदक्षिणनमस्कारौ पूजैवं हि समाप्यते॥२९२॥गीत्यंगपंचकं पश्चात्तानि विज्ञापयामि ते॥गीतिर्वाद्यं पुराणं च नृत्यं हासोक्तिरेव च॥२९३॥
नीराजनं च पुष्पाणामंजलिश्चाखिलार्पणम् ॥ क्षमापनं चोद्वसनं प्रोक्तं पंचोपचारकम् ॥ ·२९४ ॥ भूषणं च तथा छत्रं चामरव्यजने अपि ॥ उप
वीत च कैंकर्यं षोडशानुपचारकान् ॥ २९५ ॥ द्वात्रिंशदुपचारैस्तु यः समाराधयेच्छिवम् ॥ एकेनाह्ना समस्तानां पातकानां क्षयो भवेत् ॥ २९६॥
एतच्छ्रुत्वा हनुमतो वचनं प्राह शंकरः ॥ एवमेतत्कपिश्रेष्ठ यदुक्तं पूजनं मम ॥ २९७ ॥ सारभूतमहं तुभ्यमुपदेक्ष्यामि सांप्रतम् ॥ आराधनं यथा
लिंगे विस्तरेण त्वयोदितम् ॥ २९८ ॥ मत्पादयुगलं प्राच्यं पूजाफलमवाप्नुहि ॥ ततः प्राह कपिश्रेष्ठो देवदेवमुमापतिम् ॥ २९९ ॥ गुरुणा लिंगपू
जैव नियता परिकल्पिता ॥ तां [illegible] ॥ ३०० ॥ इत्युक्त्वा नमस्कृत्य शिवलिंगार्चनाय च ॥ सरस्वतीरमागत्य









कृत्वा सैकतवेदिकाम् ॥ ३०१ ॥ तालपत्रैर्विरचितमासनं पर्यकल्पयत् ॥ प्रक्षाल्य पादौ हस्तौ च समाचम्य समाहितः ॥ ३०२ ॥ भस्मस्नानमथो चक्रे पुनराचम्य वाग्यतः ॥ देववेद्यामथो चक्रे पद्मं च सुमनोहरम् ॥ ३०३ ॥ अनंतरं तालपत्रे पद्मासनगतः कपिः ॥ प्राणानायम्य संन्यस्य शुद्धध्यानसमन्वितः ॥ ३०४ ॥ प्रणम्य गुरुमीशानं जपन्नासीदतः परम् ॥ अथ देवार्चनं कर्तुं यत्नमास्थितवान्कपिः ॥ ३०५ ॥ पलाशपत्रपुटकद्व यानीतजलं शुचि ॥ शिरः कमंडलुगतं निधायाग्निनिमंत्रितम् ॥ ३०६ ॥ आवाहनादि कृत्वाथ स्नानपर्यंतमेव च ॥ अथ स्नापयितुं देवमादाय कर संपुटे ॥ ३०७ ॥ कृत्वा निरीक्षणं देवपीठं नो दृष्टवान्कपिः ॥ लिङ्गमात्रं करगतं दृष्ट्वा भीतिसमन्वितः ॥ ३०८ ॥ इदमाह महायोगी किंवा पापं मया कृतम् ॥ यदेतत्पीठरहितं शिवलिङ्गं करस्थितम् ॥ ३०९ ॥ ममाद्य मरणं सिद्धं न पीठं चागमिष्यति ॥ अथ रुद्रं जपिष्यामि तदायाति महेश्वरः ॥ ३१० ॥ इति निश्चित्य मनसा जजाप शतरुद्रियम् ॥ यदा तु न समायातो महेशोऽथ कपीश्वरः ॥ ३११ ॥ रुद्दं न्यपातयद्भूमौ वीरभद्रः समागतः ॥ किमर्थं रुद्यते भद्र रुदिते कारणं वद ॥ ३१२ ॥ तच्छ्रुत्वा प्राह हनुमान्वीरभद्रं मनोगतम् ॥ पीठहीनमिदं लिंगं पश्य मे पाप संचयम् ॥ ३१३ ॥ वीरभद्रस्ततः प्राह श्रुत्वा कपिसमीरितम् ॥ यदि नायाति पीठं ते लिंगे मा साहसं कुरु ॥ ३१४ ॥ दाहयिष्याम्यहं लोकान्यदि नायाति पीठकम् ॥ पश्य दर्शय मे लिंगं पीठं चात्रागतं न वा ॥ ३१५ ॥ अथ दृष्ट्वा वीरभद्रो लिंगे पीठमनागतम् ॥ दग्धुकामोऽखिलाँल्लोकान्वीरभद्रः प्रतापवान् ॥ ३१६ ॥ अनलं भुवि चिक्षेप क्षणाद्दग्धा मही तदा ॥ अथ सप्ततलान्दग्ध्वा पुनरूर्द्धमवर्तत ॥ ३१७ ॥ पश्चोर्द्ध्वलोकानदहज्जनलोकनिवासिनः ॥ ललाटनेत्रसंभूतं नखेनादाय चानलम् ॥३१८॥ जंबीरफलसंकाशं कृत्वा करतले विभुः ॥ तपः सत्यं च संदग्धुमुद्यतोऽभून्मुनीश्वरः ॥ ३१९ ॥ ततस्तु मुनयो दृष्ट्वातपोलोकनिवासिनः ॥ दग्धुकामं वीरभद्रं गौतमाश्रममागताः ॥ ३२० ॥ न दृष्ट्वा तत्र देवेशं शंकरं स्वात्मनि स्थितम्॥अस्तुवन्भक्तिसंयुक्ताः स्तोत्रैर्वेदसमुद्भवैः ॥३२१॥ ॐ वेदवेद्याय देवाय तस्मै शुद्धप्रभाचिन्त्यरूपाय कस्मै ॥ ब्रह्माद्यधीशाय सृष्ट्यादिकर्त्रे,विष्णुप्रियायार्तिहंत्रेऽतकर्त्रे ॥ ३२२ ॥ नमस्तेऽखिलाधीश्वरायांबराय नमस्ते चरस्थावरव्यापकाय ॥ नमो वेदगुह्याय भक्तप्रियाय नमः पाकभोक्त्रे मखेशाय तुभ्यम् ॥३२३॥नमस्ते शिवायादिदेवाय कुर्मो नमो व्यालयज्ञोपवीतप्रधर्त्रे ॥ नमस्ते सुराविन्दुवर्पापनाय त्रयीमूर्तये कालकालाय नाथ ॥ ३२४ ॥ धरित्रीमरुद्व्योमतोयेंदुवह्निप्रभामंडलात्माष्टधामूर्तिधर्त्रे॥ शिवायाशिवघ्नाय वीराय भूयात्सदा नः प्रसन्नो जगन्नाथकेज्यः॥३२५॥कलानाथभालाय आत्मा महात्मा मनो ह्यप्रयानो निरूप्यो न वाग्भिः ॥ जगज्जाड्यविध्वंसनो

भुक्तिमुक्तिप्रदः स्तात्प्रसन्नः सदा शुद्धकीर्तिः॥३२६॥यतः संप्रसूतं जगज्जातमीशात्स्थितं येन रक्षावता भावितं च ॥ लयं यास्यते यत्र वाचां विदूरे स
वै नः प्रसन्नोऽस्तु कालत्रयात्मा॥ ३२७ ॥ यदादिं च मध्यं तथांतं न केऽपि विजानन्ति विज्ञा अपि स्वानुमानाः॥ स वै सर्वमूर्तिः सदा नो विभूत्यै
प्रसन्नोऽस्तु किं ज्ञापयामोऽत्र कृत्यम् ॥ ३२८ ॥ एतां स्तुतिमथाकर्ण्य भगनेत्रप्रदः शिवः ॥ विष्णुमाह मुनीनेतानानयस्व मदंतिकम् ॥ ३२९॥ अथ
विष्णुः समागत्य तपोलोकनिवासिनः ॥ मुनीन्सांत्वय्य विश्वेशं दर्शयामास शंकरम् ॥ ३३०॥ तानाह शंकरो वाक्यं किमर्थं यूयमागताः ॥ तपो
लोकाद्भूमिलोकं मुनयो मुक्तकिल्बिषाः॥३३१॥तच्छ्रुत्वा शूलिनो वाक्यं प्रोचुस्ते मुनिसत्तमाः ॥ देव द्वादशलोकानां दृश्यंते भस्मराशयः ॥३३२ ॥
स्थितमेकं वनमिदं पश्य तल्लोकसंक्षयम् ॥ तच्छ्रुत्वा गिरिशः प्राह तान्मुनीनूर्द्ध्वरेतसः ॥ ३३३॥ भूर्लोकस्य तु संदाहे पातालानां तथैव च॥सन्देहो
नास्ति मुनयः स्थितानां नो रहःस्थले ॥ ३३४ ॥ ऊर्द्ध्वपंचकलोकानां दाहे संदेह एव नः ॥ कथमंगारवृष्टिश्च कथं नो वा महाध्वनिः ॥ ३३५ ॥
तदाकर्ण्य विभोर्वाक्यं शंकरस्य मुनीश्वराः ॥ प्रोचुः प्रांजलयो देवं ब्रह्मादिसुरसंगतम् ॥ ३३६ ॥ भीतिरस्माकमधुना वर्तते वीरभद्रतः ॥ स एवांगार
वृष्टिं च पिपासुरपिवद्विभोः ॥ ३३७ ॥ देवोऽथ वीरमाहूय किं वीरेत्यब्रवीद्वचः ॥वीरोऽप्याह कपेर्लिंगे पीठाभावादिदं कृतम् ॥ ३३८ ॥ तच्छ्रुत्वाह
शिवो देवो मुनींस्तान्भयविह्वलान् ॥ कपेश्चित्तं परिज्ञातुं मया कृतमिदं द्विजाः ॥ ३३९ ॥ मा भैष्ट भवतां सौख्यं सदा संपादयाम्यहम् ॥
इत्युक्त्वा तु यथापूर्वं देवदेवः कृपानिधिः ॥ ३४० ॥ दग्धानप्यखिलाँल्लोकान्पूर्वतः शोभनान्विभुः ॥ कल्पयामास विश्वात्मा वीरभद्रमथाब्र
वीत् ॥ ३४१ ॥ साधु वत्स यतो भद्रं भक्तानामीहसे सदा ॥ ततस्ते विपुला कीर्तिर्लोके स्थास्यति शाश्वती ॥ ३४२ ॥ इत्युक्त्वालिं
ग्य शिरसि समाघ्राय महेश्वरः ॥ तांबूलं वीरभद्राय दत्तवान्प्रीतमानसः ॥ ३४३ ॥ अथासौ हनुमानीशपूजनं कृतवान्यथा ॥ समाप्तायां तु
पूजायां हनुमान्प्रीतमानसः ॥ ३४४ ॥ एकं वनचरं तत्र गंधर्वं सविपंचकम् ॥ ददर्श तमथाभ्याह वीणा मे दीयतामिति ॥ ३४५ ॥ गंधर्वो
ऽप्याह न मया त्याज्या वीणा प्रिया मम ॥ ममापीष्टेह गंधर्व वीणेत्याह कपीश्वरः ॥ ३४६ ॥ यदा न दत्ते गंधर्वो वल्लकीं कपये प्रियाम् ॥
तदा मुष्टिप्रहारेण गंधर्वः पातितः क्षितौ ॥ ३४७ ॥ वीणामादाय महतीं स्वरतंतुसमन्विताम् ॥ हनुमान्वानरश्रेष्ठो गायन्प्रागाच्छिवांतिकम् ॥
॥ ३४८ ॥ ततो गानेन महता प्रसाद्य जगदीश्वरम् ॥ बृहतीकुसुमैः शुद्धैर्देवपादावपूजयत् ॥३४९॥ततः प्रसन्नो विश्वात्मा मुनीनां सन्निधौ तदा॥
दैत्यानां देवतानां च नृपाणां शंकरोऽपि च ॥३५० ॥ तस्मै वरमथ प्रादात्कल्पांतं जीवितं पुनः॥समुद्रलंघने शक्तिं शास्त्रज्ञत्वं बलोन्नतिम्॥३५१॥





एवं दत्तं वरं प्राप्य महेशेन महात्मना ॥ प्रत्यक्षं मम विप्रेंद्र हनुमान्हर्षमागतः॥३५२॥समस्तभूपाशु॒ पिंगतांगः स्वदीप्तिमंदीकृतदेवदीप्तिः ॥ प्रसन्न मूर्तिस्तरुणः शिवांशः संभावयामास समस्तदेवान् ॥ ३५३ ॥ आज्ञप्तो हनुमांस्तत्र मत्सेवार्ये मुनीश्वरः ॥ महेशेनाहमप्येनं शशिमौलिमवैमि च ॥ ३५४ ॥ किं बहूक्तेन विप्रर्षे यादृशो वानरेश्वरः ॥ बुद्धौ न्याये च वै धैर्ये तादृगन्योऽस्ति न क्वचित्॥३५५ ॥इति ते सर्वमाख्यातं चरितं पाप नाशनम्॥पठतां शृण्वतां चैव गच्छ विप्र यथासुखम्॥ ३५६॥तच्छ्रुत्वा रामभद्रस्य रघुनाथस्य धीमतः॥वचनं दक्षिणीकृत्य नत्वा चागां यथागतः॥ ॥ ३५७ ॥एतत्तेऽभिहितं विप्र चरितं च हनूमतः ॥ सुखदं मोक्षदं सारं किमन्यच्छ्रोतुमिच्छसि ॥ ३५८ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदु पाख्याने तृतीयपादे हनुमच्चरित्रं नाम एकोनाशीतितमोऽध्यायः ॥ ७९ ॥ सूत उवाच ॥ श्रुत्वा तु नारदो विप्राः कुमारवचनं मुनिः ॥ यत्प प्रच्छ पुनस्तच्च युष्मभ्यं प्रवदाम्यहम् ॥ १ ॥ कार्तवीर्यस्य कवचं तथा हनुमतोऽपि च ॥ चरितं च महत्पुण्यं श्रुत्वा भूयोऽब्रवीद्वचः ॥ २ ॥ नारद उवाच ॥ साधु साधु मुनिश्रेष्ठ त्वयातिकरुणात्मना ॥ श्रावितं चरितं पुण्यं शिवस्य च हनूमतः ॥ ३ ॥ तन्त्रस्यांस्य क्रमप्राप्तं कथनीयं च यत्त्वया ॥तत्प्रब्रूहि महाभाग किं पृष्टान्यद्विदांवर ॥ ४ ॥ सनत्कुमार उवाच ॥ अथ वक्ष्ये कृष्णमंत्रान्भुक्तिमुक्तिफलप्रदान् ॥ ब्रह्माद्या यान्स माराध्य सृष्ट्यादिकरणे क्षमाः ॥ ५ ॥ कामः कृष्णपदं ङंतं गोविंदं च तथाविधम् ॥ गोपीजनपदं पश्चाद्वल्लभायाग्निसुंदरी ॥ ६ ॥ अष्टादशार्णो मंत्रोऽयं दुर्गाधिष्ठातृदैवतः ॥ नारदोऽस्य मुनिश्छंदो गायत्री देवता पुनः ॥७ ॥ श्रीकृष्णः परमात्मा च कामो वीजं प्रकीर्तितम् ॥ स्वाहा शक्तिर्नि योगस्तु चतुर्वर्गप्रसिद्धये ॥ ८ ॥ ऋषिं शिरसि वक्त्रे तु छंदश्च हृदि देवताम् ॥ गुह्ये बीजं पदोः शक्तिं न्यसेत्साधकसत्तमः ॥ ९ ॥ युगवेदाब्धि निगमैर्द्वाभ्यां वर्णैर्मनूद्भवैः ॥ पंचांगानि प्रविन्यस्य तत्त्वन्यासं समाचरेत् ॥ १० ॥ हृदंतिमादिकांतार्णमपराद्यानि चात्मने॥ मत्यंतानि च तत्वानि जीवाद्यानि न्यसेत्क्रमात् ॥ ११ ॥ जीवं प्राणं मतिमहंकारं मनस्तथैव च ॥ शब्दं स्पर्शं रूपरसौ गंधं श्रोत्रं त्वचं तथा ॥ १२ ॥ नेत्रं च रसनां घ्राणं वाचं पाणिं पदेंद्रियम् ॥ पायुं शिश्नमथाकाशं वायुं वह्निं जलं महीम् ॥ १३ ॥ जीवं प्राणं च सर्वांगे मत्यादित्रितयं हृदि ॥ मूर्द्धास्यहृद्गुह्य पादेष्वथ शब्दादिकान्न्यसेत् ॥ १४ ॥ कर्णादिस्वस्वस्थानेषु श्रोत्रादीनींद्रियाणि च ॥ तथा वागादींद्रियाणि स्वस्वस्थानेषु विन्यसेत् ॥ १५ ॥ मूर्द्धास्यहृद्गुह्यपादेष्वाकाशादीन्न्यसेत्ततः ॥ हृत्पुंडरीकमर्केन्दुवह्निबिंबान्यनुक्रमात् ॥१६ ॥ द्विषड्द्व्यष्टदशकलान्याप्तानि च तथा मतः ॥ भूताष्टा गाक्षिपदगैर्वर्णैः प्रविन्यसेद्धृदि ॥ १७ ॥ अथाकाशादिस्थलेषु वासुदेवादिकांस्ततः ॥ वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ॥१८ ॥ नारायणश्च

क्रमशः परमेष्ठ्यादिभिर्युताः ॥ परमेष्ठिपुमांच्छौ चविश्वनिवृत्तिसर्वकाः ॥ १९ ॥ श्वेतानिलाग्न्यंबुभूमिवर्णैः प्राग्वत्प्रविन्यसेत् ॥ स्वबीजाद्यं
कोपतत्वं नृसिंहं व्यापकेन च ॥ २० ॥ प्राग्वद्विन्यस्य सर्वांगे तत्त्वन्यासोऽयमीरितः ॥ मकाराद्या आद्यवर्णाः सर्वे स्युश्चंद्रभूषिताः ॥ २१ ॥
वासुदेवादिका ज्ञेया ङेंताः साधकसत्तमैः ॥ प्राणायामं ततः कृत्वा पूरकुम्भकरेचकैः ॥ २२ ॥ चतुर्भिः षड्भिर्द्वाभ्यां च मूलमंत्रेण मंत्रविद ॥
केचिदाहुरिहाचार्याः प्राणायामोत्तरं पुनः ॥ २३ ॥ पीठन्यासं विधायाथ न्यासानन्यान्समाचरेत् ॥ दशतत्त्वादि विन्यस्य वक्ष्यमाणविधानतः
॥ २४ ॥ मूर्तिपंजरनामानं पूर्वोक्तं विन्यसेद्बुधः ॥ सर्वांगे व्यापकं कृत्वा किरीटमनुना सुधीः ॥२५॥ ततस्तारपुटं मंत्रं व्यापय्य करयोस्त्रिशः ॥
पंचांगुलीषु करयोः पंचांगं विन्यसेत्ततः ॥ २६ ॥ त्रिशो मूलेन मूर्द्धादिपादांतं व्यापकं न्यसेत् ॥ सकृद्व्यापय्य तारेण मंत्रन्यासं ततश्चरेत् ॥२७॥
शिरोललाटे भ्रूमध्ये कर्णयोश्चक्षुषोस्तथा ॥ घ्राणयोर्वदने कंठे हृदि नाभौ तथा पुनः ॥ २८ ॥ कट्यां लिंगे जानुनोश्च पादयोर्विन्यसेत्क्रमात् ॥
हृदंतान्मंत्रवर्णांश्च ततो मूर्ध्नि ध्रुवं न्यसेत् ॥ २९ ॥ पुनर्नयनयोरास्ये हृदि गुह्ये च पादयोः ॥ विन्यसेद्धृदयांतानि मनोः पंचपदानि च ॥ ३० ॥
भूयो मुन्यादिकं न्यस्य पंचांगं पूर्ववन्न्यसेत् ॥ अथ वक्ष्ये महागुह्यं सर्वन्यासोत्तमोत्तमम् ॥ ३१ ॥ यस्य विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः ॥ अणि
माद्यष्टसिद्धीनामीश्वरः स्यान्न संशयः ॥ ३२ ॥ यस्याराधनतो मंत्री कृष्णसांनिध्यतां व्रजेत् ॥ ताराद्याभिर्व्याहृतिभिः संपुटं विन्यसेन्मनुम् ॥ ३३ ॥
मंत्रेण पुटितांश्चापि प्रणवाद्यांस्ततो न्यसेत् ॥ गायत्र्या पुटितं मंत्रं विन्यसेन्मातृकास्थले ॥ ३४ ॥ मंत्रेण पुटितां तां च गायत्रीं विन्यसेत्क्रमात् ॥
मातृकापुटितं मूलं विन्यसेत्साधकोत्तमः ॥३५॥ मूलेन पुटितां चैव मातृकां विन्यसेत्क्रमात् ॥ तृचं न मातृकावर्णान्पूर्वं तत्तत्स्थले सुधीः ॥ ३६॥
विन्यसेन्न्यासषट्कं च षोढा न्यासोऽयमीरितः ॥ अनेन न्यासवर्येण साक्षात्कृष्णसमो भवेत् ॥ ३७॥ न्यासेन पुटितं दृष्ट्वा सिद्धगंधर्वकिन्नराः ॥ देवा अपि
नमंत्येनं किंपुनर्मानवा भुवि ॥ ३८ ॥ सुदर्शनस्य मंत्रेण कुर्याद्दिग्बंधनं ततः ॥ देवं ध्यायन्स्वहृदये सर्वाभीष्टप्रदायकम् ॥ ३९ ॥ उत्फुल्लकुसुम
व्रातनम्रशाखैर्वरद्रुमैः ॥ सस्मेयमंजरीवृंदवल्लरीवेष्टितैः शुभैः ॥ ४० ॥ गलत्परागधूलीभिः सुरभीकृतदिङ्मुखः ॥ स्मरेच्छिशिरितं वृंदावनं मंत्री
समाहितः ॥ ४१ ॥ उन्मीलन्नवकंजालिविगलन्मधुसंचयैः ॥ लुब्धांतःकरणैर्गुंजद्द्विरेफपटलैः शुभम् ॥ ४२ ॥ मरालपरभृत्कीरकपोतनिकरैर्मुहुः ॥
मुखरीकृतमानृत्यन्मायूरकुलमंजुलम् ॥ ४३ कालिंद्या लोलकल्लोलविप्रुषैर्मंदवाहिभिः ॥ उन्निद्रांबुरुहव्रातरजोभिर्धूसरैः शिवैः ॥ ४४ ॥ प्रदीपित
स्मरैर्गोपसुंदरीमृदुवाससाम् ॥ विलोलनपरैः संसेवितं वा तैर्निरंतरम् ॥ ४५ ॥ स्मरेत्तदंते गीर्वाणभूरुहं सुमनोहरम् ॥ तदधः स्वर्णवेद्यां च रत्नपी







ठमनुत्तमम् ॥ ४६ ॥ रत्नकुट्टिमपीठेऽस्मिन्नरुणं कमलं स्मरेत्॥ अष्टपत्रं च तन्मध्ये मुकुंदं संस्मरेत्स्थितम् ॥ ४७ ॥ फुल्लेंदीवरकांतं च केकिबर्हावतं
सकम् ॥ पीतांशुकं चंद्रमुखं सरसीरुहनेत्रकम् ॥ ४८ ॥ कौस्तुभोद्भासितांगं च श्रीवत्सांकं सुभूषितम् ॥ व्रजस्त्रीनेत्रकमलाभ्यर्चितं गोगणावृतम् ॥
॥ ४९ ॥ गोपवृंदयुतं वंशीं वादयंतं स्मरेत्सुधीः ॥ एवं ध्यात्वा जपेदादावयुतद्वितयं बुधः ॥ ५० ॥ जुहुयादरुणांभोजैस्तद्दशांशं समाहितः ॥
जपेत्पश्चान्मंत्रसिद्ध्यै भूतलक्षं समाहितः ॥ ५१ ॥ अरुणैः कमलैर्हुत्वा सर्वसिद्धीश्वरो भवेत् ॥ पूर्वोक्ते वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥
॥ ५२ ॥ तस्यामावाह्य चाभ्यर्चेद्गोपीजनमनोहरम् ॥ मुखे वेणुं समभ्यर्च्य वनमालां च कौस्तुभम् ॥ ५३ ॥ श्रीवत्सं च हृदि प्राच्यं
ततः पुष्पांजलिं क्षिपेत् ॥ ततः श्वेतां च तुलसीं शुक्लचंदनपंकिलाम् ॥ ५४ ॥ रक्तां च तुलसीं रक्तचंदनाक्तां क्रमात्सुधीः ॥ अर्पयेद्दक्षिणे
वामभागे ध्यायन्सुरेश्वरम् ॥५५॥ हयमारद्वयेनैव हृदि मूर्ध्नि तथा पुनः ॥ पद्मद्वयं च विधिवत्ततः शीर्षे समर्पयेत् ॥ ५६ ॥ तुलसीद्वयमंभो
जद्वयमश्वारियुग्मकम् ॥ ततः सर्वाणि पुष्पाणि सर्वाङ्गेषु समर्पयेत् ॥ ५७ ॥ दक्षिणे वासुदेवाख्यं स्वच्छं चैतन्यमव्ययम् ॥ वामे च रुक्मिणीं
तद्वन्नित्यां रक्तां रजोगुणाम् ॥ ५८ ॥ एवं संपूज्य गोपालं कुर्यादावरणार्चनम् ॥ यजेद्दामसुदामौ च वसुदामं च किंकिणीम् ॥ ५९ ॥ पूर्वा
द्याशासु दामाद्या ङेंनमोन्तध्रुवादिकाः ॥ अग्निनैर्ऋतिवाय्वीशकोणेषु हृदयादिकान् ॥६०॥ दिक्ष्वस्त्राणि समभ्यर्च्य पत्रेषु महिषीर्यजेत् ॥ रुक्मिणी
सत्यभामा च नाग्नजित्यभिधा पुनः ॥ ६१ ॥ सुविंदा मित्रविंदा च लक्ष्मणा चर्क्षजा ततः ॥ सुशीला च लसद्रम्यचित्रितांबरभूषणा ॥६२॥ ततो
यजेद्दलाग्रेषु वसुदेवञ्च देवकीम् ॥ नंदगोपं यशोदां च बलभद्रं सुभद्रिकाम् ॥ ६३ ॥ गोपान्गोपीश्च गोविंदविलीनमतिलोचनान् ॥ ज्ञानमुद्राभयकरौ
पितरौ पीतपांडुरौ ॥ ६४ ॥ दिव्यमाल्यांबरालेपभूषणे मातरौ पुनः ॥ धारयंत्यौ चरुं चैव पायसीं पूर्णपात्रिकाम् ॥६५॥ अरुणश्यामले हारमणिकुं
डलमंडिते ॥ बलः शंखेंदुधवलो मुशलं लांगलं दधत् ॥६६॥ हालालोलो नीलवासा हलवानेककुंडलः ॥कला या श्यामला भद्रा सुभद्रा भद्रभू
षणा ॥ ६७ ॥ वराभययुता पीतवसना रूढयौवना ॥ वेणुवीणाहेमयष्टिशंखशृंगादिपाणयः ॥ ६८ ॥ गोपा गोप्यश्च विविधप्राभृतान्नकरांबुजाः ॥
मंदारादींश्च तद्बाह्ये पूजयेत्कल्पपादपान् ॥ ६९ ॥ मंदारश्च तथा संतानको वै पारिजातकः ॥ कल्पद्रुमस्ततः पश्चाद्धरिचन्दनसंज्ञकः ॥ ७० ॥
मध्ये दिक्षु समभ्यर्च्य बहिः शक्रादिकान्यजेत् ॥ तदस्त्राणि च संपूज्य यजेत्कृष्णाष्टकेन च ॥ ७१ ॥ कृष्णं च वासुदेवं च देवकीनन्दनं
तथा ॥ नारायणं यदुश्रेष्ठं वार्ष्णेयं धर्मपालकम् ॥ ७२ ॥ असुराक्रांतभूभारहारिणं पूजयेत्ततः ॥ एभिरावरणैः पूजा कर्तव्यासुरवैरिणः ॥ ७३ ॥

संसारसागरोत्तीर्त्यै सर्वकामाप्तये बुधैः ॥ एवं पूजादिभिः सद्दा भवद्वश्रवणो यमः ॥ ७४ ॥ त्रिकालपूजनं चास्य वक्ष्ये सर्वार्थसिद्धिदम् ॥ श्रीमदुद्यानसंवीतिहेमभूरत्नमंडपे ॥ ७५ ॥ लसत्कल्पद्रुमाधस्थरत्नाब्जपीठसंस्थितम् ॥ सुत्रामरत्नसंकाशं गुडस्निग्धालकं शिशुम् ॥ ७६ ॥ चलत्कनककुंडलोल्लसितचारुगंडस्थलं सुघोणधरमद्भुतस्मितमुखांबुजं सुन्दरम् ॥स्फुरद्विमलरत्नयुक्कनकसूत्रनद्धं दधत्सुवर्णपरिमंडितं सुभगपौंडरीकं नखम् ॥ ७७ ॥ समुद्‌धूसरोरस्थले धेनुधूल्या सुपुष्टांगमष्टापदाकल्पदीप्तम् ॥ कटीलस्थले चारुजंघान्तयुग्मं पिनद्धं क्वणत्किंकिणीजालदाम्ना ॥ ७८ ॥ हसन्तं हसद्बंधुजीवप्रसूनप्रभापाणिपादांबुजोदारकांत्या ॥ दधानं करे दक्षिणे पायसान्नं सुहैयंगवीनं तथा वामहस्ते ॥ ७९ ॥ लसद्गोपगोपीगवां वृंदमध्ये, स्थितं वासवाद्यैः सुरैरर्चितांघ्रिम् ॥ महीभारभूतामरारातियूथांस्ततः पूतनादीन्निहंतुं प्रवृत्तम् ॥ ८० ॥ एवं ध्यात्वार्चयेद्देवं पूर्ववत्स्थिरमानसः ॥ दध्ना गुडेन नैवेद्यं दत्वा दशशतं जपेत् ॥८१ ॥मध्यंदिने यजेद्देवं विशिष्टरूपधारिणम् ॥ नारदाद्यैर्मुनिगणैः सुरवृन्दैश्च पूजितम् ॥८२॥ लसद्गोपगोपीगवां वृन्दमध्यस्थितं सांद्रमेघप्रभं सुन्दरांगम् ॥ शिखंडिच्छदापीडमब्जायताक्षं लसच्चिल्लिकं पूर्णचन्द्राननं च ॥८३ ॥ चलत्कुण्डलोल्लासिगंडस्थलश्रीभरं सुन्दरं मंदहासं सुनासम् ॥ सुकार्तस्वराभांबरं दिव्यभूषं क्वणत्किंकिणीजालमत्तानुलेपम् ॥ ८४ ॥ वेणुं धमंतं स्वकरे दधानं सव्ये दरं यष्टिमुदारवेषम् ॥दक्षे तथैवेप्सितदानदक्षं ध्यात्वार्चयेन्नंदजमिंदिरास्यै ॥ ८५ ॥ एवं ध्यात्वार्चयेत्कृष्णं पूर्ववद्वैष्णवोत्तमः ॥ अपूपपायसान्नाद्यैर्नैवेद्यं परिकल्पयेत् ॥ ८६ ॥ हुत्वा चाष्टोत्तरशतं पयोऽन्नैः सर्पिषाप्लुतैः ॥स्वस्वदिक्षु बलिं दद्याद्दिशेदाचमनं ततः ॥ ८७ ॥अष्टोत्तरसहस्रं च प्रजपेन्मंत्रमुत्तमम् ॥ अह्नो मध्ये यजेद्देवं यः कृष्णं वैष्णवोत्तमः ॥ ८८ ॥ देवाः सर्वे नमस्यंति लोकानां वल्लभो नरः ॥ मेधायुःश्रीकांतियुक्तः पुत्रैः पौत्रैश्च वर्द्धते ॥८९॥ तृतीयकालपूजायामस्ति कालविकल्पना ॥ सायाह्ने निशि वेत्यत्र वदंत्येके विपश्चितः ॥ ९० ॥ दशाक्षरेण चेद्रात्रौ सायाह्नेऽष्टादशार्णतः ॥ उभयीमुभयेनैव कुर्यादित्यपरे जगुः ॥९१॥सायाह्ने द्वारवत्यां तु चित्रोद्यानोपशोभिते ॥ अष्टसाहस्रसंख्यातैर्भवनैरुपमंडिते ॥ ९२ ॥ हंससारससंकीर्णकमलोत्पलशालिभिः ॥ सरोभिर्निर्मलांभोभिः परीते भवनोत्तमे ॥ ९३ ॥ उद्यत्प्रद्योतनोद्योतद्युतौ श्रीमणिमंडले ॥ हेमांभोजासनासीनं कृष्णं त्रैलोक्यमोहनम् ॥९४ ॥ मुनिवृंदैः परिवृतमात्मतत्त्वविनिर्णये ॥ तेभ्यो मुनिभ्यः स्वं धाम दिशंतं परमक्षरम् ॥ ९५ ॥ उन्निद्रेंदीवरश्यामं पद्मपत्रायतेक्षणम् ॥ स्निग्धं कुंतलसंभिन्नकिरीटवनमालिनम् ॥ ९६ ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं सुमनोहरम् ॥ ९७ ॥ काश्मीरकपिशोरस्कं पीतकौशेयवाससम् ॥ हारकेयूरकटककटिसूत्रैरलंकृतम् ॥ ९८ ॥ हतविश्वंभ





राभूरिभारं मुदितमानसम् ॥ शंखचक्रगदापद्मराजद्भुजचतुष्टयम् ॥ ९९ ॥ एवं ध्यात्वार्चयेन्मन्त्री स्यादंगैः प्रथमावृतिः ॥ द्वितीया महिषीभिस्तु
तृतीयायां समर्चयेत् ॥ १०० ॥ नारदं पर्वतं जिष्णुं निशठोद्धवदारुकान् ॥ विष्वक्सेनं च शैनेयं दिक्ष्वग्रे विनतासुतम् ॥ १०१ ॥ लोकपालैश्च
वज्राद्यैः पूजयेद्वैष्णवोत्तमः ॥ एवं संपूज्य विधिवत्पायसं विनिवेदयेत् ॥ १०२ ॥ तर्पयित्वा खंडमिश्रदुग्धबुद्ध्या जलैरिह ॥ जपेदष्टशतं मन्त्री
भावयन्पुरुषोत्तमम् ॥ १०३ ॥ पूजासु होमं सर्वासु कुर्यान्मध्यंदिनेऽथवा ॥ आसनादर्घ्यपर्यंतं कृत्वा स्तुत्वा नमेत्सुधीः ॥ १०४ ॥ समर्था
त्मानमुद्वास्य स्वीयहृत्सरसीरुहे ॥ विन्यस्य तन्मयो भूत्वा पुनरात्मानमर्चयेत् ॥ १०५ ॥ सायाह्ने वासुदेवं यो नित्यमेवं समर्चयेत् ॥ सर्वा
न्कामानवाप्यांते स याति परमां गतिम् ॥ १०६ ॥ रात्रौ चेन्मदनाक्रांतचेतसं नन्दनन्दनम् ॥ यजेद्रासपरिश्रांतं गोपीमंडलमध्यगम् ॥ १०७ ॥
विकसत्कुंदकह्लारमल्लिकाकुसुमोद्धतैः ॥ रजोभिर्धूसरैर्मंदमारुतैः शिशिरीकृते ॥ १०८ ॥ उन्मीलन्नवकैरवालिविगलन्माध्वीकलब्धांतरं
भ्राम्यन्मत्तमिलिंदगीतललिते सन्मल्लिकोज्जृम्भिते ॥ पीयूषांशुकरैर्विशालितहरित्प्रांते स्मरोद्दीपने कालिन्दीपुलिनांगणे स्मितमुखं वेणुं
रणंतं मुहुः ॥ १०९ ॥ अन्तस्तोयलसन्नवांबुदघटासंघट्टकारत्विषं चंचच्चिल्लिकमंबुजायतदृशं बिम्बाधरं सुन्दरम् ॥ मायूरच्छदबद्धमौलिवि
लसद्धम्मिल्लमालं चलं दीप्यत्कुण्डलरत्नरश्मिविलसद्गंडद्वयोद्भासितम् ॥ ११० ॥ कांचीनूपुरहारकंकणलसत्केयूरभूपान्वितं गोपीनां द्वितयां
तरे सुललितं वन्यप्रसूनस्रजम् ॥ अन्योन्यं विनिबद्धगोपदयितादोर्वल्लिवीतं लसद्रासक्रीडनलोलुपं मनसिजाक्रांतं मुकुन्दं भजेत् ॥ १११ ॥
विविधश्रुतिभिन्नमनोज्ञतरस्वरसप्तकमूर्छनतानगणैः ॥ भ्रममाणममूभिरुदारमणिस्फुटमंडनसिंजितचारुतनुम् ॥ ११२ ॥ इतरेतरबद्धकरप्रमदागण
कल्पितरासविहारविधौ ॥ मणिशंकुगमप्यमुना वपुषा बहुधा विहितस्वकदिव्यतनुम् ॥ ११३ ॥ एवं ध्यात्वार्चयेन्मन्त्री स्यादंगैः प्रथमावृतिः ॥
श्रीकामः सस्वराद्यानि कलाब्जैर्वैष्णवोत्तमः ॥ ११४ ॥ यजेत्केशवकीर्त्यादिमिथुनानि च षोडश ॥ इन्द्राद्यानपि वज्रादीन्पूजयेत्तदनन्तरम् ॥ ११५ ॥
पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शंकुम् ॥ आक्रम्य पद्भ्यामितरेतरैस्तु हस्तैर्भ्रमेऽयं खलु रासगोष्ठी ॥ ११६ ॥ संपूज्यैवं च पयसा ससितो
पलसर्पिषा ॥ नैवेद्यमर्चयित्वा तु चषकैर्नृपसंख्यकैः ॥ ११७ ॥ मंत्री मिथुनेष्वर्पयेत्क्रमात् ॥ विधाय पूर्ववच्छेषं सहस्रं प्रजपेन्मनुम् ॥ ११८ ॥ ॥ १७
स्तुत्वा नत्वा च संप्रार्थ्य पूजाशेषं समापयेत् ॥ एवं यः पूजयेत्कृष्णं द्धेःपदं भवेत् ॥ ११९ ॥ अणिमाद्यष्टसिद्धीनामीश्वरः स्यान्न संशयः ॥ भुक्त्वेह
विविधान्भोगानंते विष्णुपदं व्रजेत् ॥ १२० ॥ एवं पूजादिभिः सिद्धे मना यानि साधयेत् ॥ अष्टाविंशतिवारं या त्रिकालं पूजयेत्सुधीः ॥ १२१ ॥

स्वकालविहितान् भूयः परिवारांश्च तर्पयेत् ॥ प्रातर्दध्ना गुडाक्तेन मध्याह्ने पयसा पुनः॥ १२२॥नवनीतयुतेनाथ सायाह्ने तर्पयेत्पुनः॥ ससितोपलमिश्रेण पयसा वैष्णवोत्तमः ॥ १२३ ॥ तर्पयामिपदं योज्यं मंत्रांते स्वेषु नामसु ॥ द्वितीयांतेषु तु पुनः पूजाशेषं समापयेत् ॥ १२४ ॥ अभ्युक्ष्य तत्प्रसादाद्भिरात्मानं प्रपिबेदपः ॥ तत्तृप्तस्तमथोद्वास्य तन्मयः प्रजपेन्मनुम् ॥ १२५ ॥ अथ द्रव्याणि काम्येषु प्रोच्यंते तर्पणेषु च ॥ तानि प्रोक्तविधानानामाश्रित्यान्यतमं भजेत् ॥ १२६ ॥पायसं दाधिकं चाज्यं गौडान्नं कृसरं पयः ॥ दधीनि कदली मोचा चिंचा रजस्वला तथा ॥ १२७ ॥ अपूपा मोदका लाजाः पृथुका नवनीतकम् ॥ द्रव्यषोडशकं ह्येतत्कथितं पद्मजादिभिः ॥ १२८ ॥ लाजांते पृथुकं प्राक्च समर्प्य च सितोपलम् ॥ चतुःसप्ततिवारं यः प्रातरेवं प्रतर्पयेत् ॥ १२९ ॥ ध्यात्वा कृष्णपदं मंत्री मंडलादिष्टमाप्नुयात् ॥ धारोष्णपक्वपयसा नवनीतं दधीनि च ॥ ॥ १३० ॥ दौग्धाग्रमाज्यं मन्स्यंडी क्षौद्रं कीलालमेव च ॥ पूजयेन्नवभिर्द्रव्यैः प्रत्येकं रविसंख्यया ॥ १३१ ॥ एवमष्टोत्तरशतसंख्याकं तर्पणं पुनः ॥ यः कुर्याद्वैष्णवश्रेष्ठः पूर्वोक्तं फलमाप्नुयात् ॥ १३२ ॥ किं बहूक्तेन सर्वेष्टदायकं तर्पणं त्विदम् ॥ ससितोपलधारोष्णदुग्धबुद्ध्या जलेन वै ॥ १३३ ॥ कृष्णं प्रतर्पयन् ग्रामं व्रजन्प्राप्नोति साधकः ॥ धनवस्त्राणि भोज्यं च परिवारगणैः सह ॥ १३४ ॥ यावत्संतर्पयेन्मंत्री तावत्संख्यं जपेन्मनुम् ॥ तर्पणेनैव कार्याणि साधयेदखिलान्यपि ॥ १३५ ॥ काम्यहोममथो वक्ष्ये साधकानां हिताय च ॥ श्रीपुष्पैर्जुहुयान्मंत्री श्रियमिच्छन्ननिंदिताम् ॥ १३६ ॥ साज्येनान्नेन जुहुयात्घृतान्नस्य समृद्धये ॥ वन्यपुष्पैर्द्विजान् जातीपुष्पैश्च पृथिवीपतीन् ॥ १३७ ॥ असितैः कुसुमैर्वैश्यान् शूद्रान्नीलोत्पलैस्तथा ॥ वशयेल्लवणैः सर्वानंबुजैर्युवतीजनम् ॥ १३८ ॥ गोशालासु कृतो होमः पायसेन ससर्पिषा ॥ गवां शांतिं करोत्याशु गोपालो गोकुलेश्वरः ॥ १३९ ॥ शिक्षावेषधरं कृष्णं किंकिणीजालशोभितम् ॥ ध्यात्वा प्रतर्पयेन्मंत्री दुग्धबुद्ध्या शुभैर्जलैः ॥ १४० ॥ धनं धान्यं सुतान्कीर्तिं प्रीतस्तस्मै ददाति सः ॥ ब्रह्मवृक्षसमिद्भिर्वा कुशैर्वा तिलतंदुलैः ॥ १४१ ॥ जुहुयादयुतं मंत्री त्रिमध्वाक्तैर्हुताशने ॥ वशयेद्ब्राह्मणांश्चाथ राजवृक्षसमुद्भवैः ॥ १४२ ॥ प्रसूनैः क्षत्रियान्वैश्यान्कुरंडकुसुमैस्तथा ॥ पाटलोत्थैश्च कुसुमैर्वशयेदंतिमान्सुधीः ॥ १४३ ॥ श्वेतपद्मै रक्तपद्मैश्चंपकैः पाटलैः क्रमात् ॥ हुत्वायुतं त्रिमध्वाक्तैर्वशयेत्तद्वरांगनाः ॥ १४४ ॥ नित्यं हयारिकुसुमैर्निशीथे त्रिमधुप्लुतैः ॥ वरस्त्रीं वशयेत्प्राज्ञः सम्यग्धृत्वा दिनाष्टकम् ॥ १४५ ॥ अयुतत्रितयं रात्रौ सिद्धार्थैस्त्रिमधुप्लुतैः ॥ प्रत्यहं जुह्वतो मासात्सुरेशोऽपि वशीभवेत् ॥ १४६ ॥ आहृत्य बल्लवीवस्त्राण्यारूढं नीपभूरुहे ॥ स्मरेत्कृष्णं जपेद्रात्रौ सहस्रं खेंद्रहात्सुधीः ॥ १४७ ॥ हठादाकर्षयेच्छीघ्रमुर्वशीमपि साधकः ॥ बहुना





किमिहोक्तेन मंत्रोऽयं सर्ववश्यकृत् ॥ १४८ ॥ रहस्यं परमं चाथ वक्ष्ये मोक्षप्रदं नृणाम् ॥ ध्यायेत्स्वहृत्सरसिजे देवकीनंदनं विभुम् ॥ १४९॥
श्रीमत्कुन्देंदुगौरं सरसिजनयनं शङ्खचक्रे गदाब्जे,बिभ्राणं हस्तपद्मैर्नवनलिनलसन्मालयादीप्यमानम् ॥ वंदे वेद्यं मुनींद्रैः कणिकमुनिलसद्दिव्य
भूषाभिरामं, दिव्यांगालेपभासं सकलभयहरं पीतवस्त्रं मुरारिम् ॥ १५० ॥ एवं ध्यात्वा पुमांसं स्फुटहृदयसरोजासनासीनमाद्यं
सांद्रांभोदाच्छबिंबाद्भुतकनकनिभं संजपेदर्कलक्षम् ॥ मन्वोरेकं द्वितारांतरितमथ हुनेदर्कसाहस्रमिध्मैः क्षीरिद्रूत्थयर्थोक्तैः समधु
घृतसितेनाथवा पायसेन ॥ १५१ ॥ एवं लोकेश्वराराध्यं कृष्णं स्वहृदयांबुजे ॥ ध्यायन्ननुदिनं मंत्री त्रिसहस्रं जपेन्मनुम् ॥ १५२ ॥
सायाह्नोक्तेन विधिना संपूज्य हवनं पुनः ॥ कृत्वा पूर्वोक्तविधिना मन्त्री तद्गतमानसः ॥ १५३ ॥ एवं यो भजते नित्यं विद्वान्
गोपालनंदनम् ॥ समुत्तीर्य भवांभोधिं स याति परमं पदम् ॥ १५४ ॥ मध्ये कोणेषु बाह्येष्वनलपुरपुटस्यालिखेत्कार्णिकायां कंदर्पं साध्ययुक्तं
विवरगतषडर्णंद्विषः केशरेषु॥शक्तिः श्रीपूर्विकाणिद्विनवलिपिमनोरक्षराणिच्छदानां मध्ये वर्णान्दशान्तो दशलिपिमनुवर्यस्य वैकैकशोऽञ्जम्॥१५५॥
भूसद्मना भिवृतमस्त्रगमन्मथेन गोरोचनाविलिखितं तपनीयसूच्या ॥ पट्टे हिरण्यरचिते गुलिकीकृतं तद्गोपालयंत्रमखिलार्थदमेतदुक्तम् ॥ १५६ ॥
संयातसिक्तमभिजप्तमिमं महद्भिर्धार्यं जगत्त्रयवशीकरणैकदक्षम् ॥ रक्षायशः सुतमहीधनधान्यलक्ष्मीसौभाग्यलिप्सुभिरजस्रमनर्घ्यवीर्यम् ॥ १५७ ॥
स्मरश्चित्रिविक्रमाक्रांतश्चाक्रीष्टचाय हृदित्यसौ॥षडक्षरोऽयं संप्रोक्तः सर्वसिद्धिकरो मनुः॥१५८॥ क्रोडः शान्तींदुवह्न्याढ्यो माया बीज प्रकीर्तितम्
॥ गोविंदवह्निचन्द्राढ्यो मनुः श्रीबीजमीरितम् ॥ १५९ ॥ आभ्यामष्टादशक्लिपिः स्याद्विंशत्यक्षरो मनुः॥शालग्रामे मणौ यंत्रे मंडले प्रतिमासु
वा ॥ १६० ॥ नित्यं पूजा हरेः कार्या न तु केवलभूतले ॥ एवं यो भजते कृष्णं स याति परमां गतिम् ॥ १६१ ॥ विंशार्णस्य मुनिर्ब्रह्मा
गायत्री छन्द ईरितम् ॥ कृष्णश्च देवता कामो बीजं शक्तिर्द्विठो बुधैः ॥ १६२ ॥ रामाग्निवेदवेदाब्धनेत्रार्णैरंगकल्पनम् ॥ मूलेन व्यापकं कृत्वा
मनुना पुटितानथ ॥ १६३ ॥ मातृकार्णान्न्यसेत्तत्तत्स्थानेषु सुसमाहितः ॥ दशतत्त्वानि विन्यस्य मूलेन व्यापकं चरेत् ॥ १६४ ॥ मंत्रन्यासं
ततः कुर्याद्देवताभावसिद्धये ॥ शीर्षे ललाटे भ्रूमध्ये नेत्रयोः कर्णयोस्तथा ॥ १६५ ॥ नसोर्वक्त्रे च चिबुके कण्ठे दोर्मूलके हृदि ॥ उदरे नाभि
देशे च लिंगे मूलसरोरुहे ॥१६६ ॥ कट्यां जान्वोर्जंघयोश्च गुल्फयोः पादयोः क्रमात्॥ न्यसेद्दशांतान्मंत्राणां सृष्टिन्यासोऽयमीरितः ॥१६७॥
हृदये चोदरे नाभौ लिंगे मूलसरोरुहे ॥ कट्यां जान्वोर्जंघयोश्च गुल्फयोः पादयोस्तथा ॥ १६८ ॥ मूर्ध्नि कपोले भ्रूमध्ये नेत्रयोः कर्णयोर्नसोः ॥

वदने चिबुके कंठे दोर्मूले विन्यसेत्क्रमात्॥ १६९॥ नमोंतान्मंत्रवर्णांश्च स्थितिन्यासोऽयमीरितः॥ पादयोर्गुल्फयोश्चैव जंघयोर्जानुनोस्तथा॥ १७०॥ कट्यां मूले ध्वजे नाभौ जठरे हृदये पुनः ॥ दोर्मूले कंठदेशे च चिबुके वदने नसोः ॥१७१॥ कर्णयोर्नेत्रयोश्चैव भ्रूमध्ये निटिले तथा ॥ मूर्ध्नि न्यसेन्मंत्रवर्णान्संहाराख्योऽयमीरितः ॥ १७२ ॥ पुनः सृष्टिस्थितिन्यासौ विधाय वैष्णवोत्तमः ॥ मूर्तिपंजरनामानं विन्यसेत्पूर्ववत्ततः ॥ १७३ ॥ पुनः षडंगं कृत्वाथ ध्यायेत्कृष्णं हृदंबुजे ॥ द्वारवत्यां सहस्रार्कभास्वरैर्भवनोत्तमैः ॥ १७४ ॥ अनल्पैः कल्पवृक्षैश्च परीते मणिमण्डपे ॥ ज्वलद्रत्नमयस्तंभद्वारतोरणकुड्यके ॥ १७५ ॥ फुल्लप्रफुल्लसच्चित्रवितानालंबिमौक्तिके ॥ पद्मरागस्थलीराजद्रत्नसंघैश्च मध्यतः ॥ १७६ ॥ अनारतगलद्रत्नधाराढ्यस्वस्तरोरधः ॥ रत्नप्रदीपावलिभिः प्रदीपितदिगंतरे ॥ १७७ ॥ उद्यदादित्यसंकाशमणिसिंहासनांबुजे ॥ समासीनोऽच्युतो ध्येयो द्रुतहाटकसन्निभः ॥ १७८ ॥ समानोदितचंद्रार्कतडित्कोटिसमद्युतिः ॥ सर्वांगसुंदरः सौम्यः सर्वाभरणभूषितः ॥१७९॥ पीतवासाः शंखचक्रगदांभोजलसत्करः ॥ अनाहतोच्छलद्रत्नधारौघकलशं स्पृशन् ॥ १८० ॥ वामपादांबुजाग्रेण मुष्णता पल्लवच्छविम् ॥ रुक्मिणीसत्यभामेऽस्य मूर्ध्नि रत्नौघधारया ॥ १८१ ॥ सिंचंत्यौ दक्षवामस्थे स्वदोस्थकलशोत्थया ॥ नाग्नजिती सुनंदा च दिशंत्यौ कलशौ तयोः ॥ १८२ ॥ ताभ्यां च दक्षवामस्थमित्रविंदासुलक्ष्मणे ॥ रत्नद्याः समुद्धृत्य रत्नपूर्णौ घटौ तयोः ॥ १८३ ॥ जांबवती सुशीला च दिशंत्यौ दक्षवामके ॥ बहिः षोडशसाहस्रसंख्याकाः परितः प्रियाः ॥ १८४ ॥ ध्येयाः कनकरत्नौघधारायुक्कलशोज्वलाः ॥ तद्बहिश्चाष्टनिधयः पूरयंतो धनैर्धराम् ॥ १८५ ॥ तद्बहिर्वृष्णयः सर्वे पुरोवच्च स्वरादयः ॥ एवं ध्यात्वा जपेल्लक्षपंचकं तद्दशांशतः ॥ १८६ ॥ अरुणैः कमलैर्हुत्वा पीठे पूर्वोदिते यजेत् ॥ विलिप्य गंधपंकेन लिखेदष्टदलांबुजम् ॥ १८७ ॥ कर्णिकायां च षट्कोणं ससाध्यं तत्र मन्मथम् ॥ शिष्टैस्तु सप्तदशभिरक्षरैर्वेष्टयेत्स्वगम् ॥ १८८ ॥ प्राग्रक्षोऽनिलकोणेषु श्रियं शिष्टेषु संविदुम् ॥ षट्सु संधिषु षट्वर्णे केसरेषु त्रिशस्त्रिशः ॥ १८९ ॥ विलिखेत्स्मरगायत्रीं मालमंत्रं दलाष्टके ॥ षट्शः संलिख्य तद्बाह्ये वेष्टयेन्मातृकाक्षरैः ॥ १९० ॥ भूबिंबं च लिखेद्बाह्ये श्रीमायादिग्विदिक्ष्वपि ॥ भूगृहं चतुरस्रं स्यादष्टवज्रविभूषितम् ॥ १९१ ॥ एतद्यंत्रं हाटकादिपट्टेष्वालिख्य पूर्ववत् ॥ संस्कृतं धारयेद्यो वै सोऽर्च्यते त्रिदशैरपि॥१९२॥स्याद्गायत्री वामदेवपुष्पबाणौ तु ङेंतिमौ ॥ विद्महेधीमहियुतौ तन्नोऽनंगः प्रचोदयात् ॥ १९३ ॥ जप्या जपादौ गोपालमनूनां जनरंजनी ॥ हृदयं कामदेवाय ङेंतं सर्वजनप्रियम् ॥ १९४ ॥ उक्त्वा सर्वजनांते तु संमोहनपदं तथा ॥ ज्वल ज्वल प्रज्वलेति प्रोच्य सर्वजनस्य च ॥ १९५ ॥ हृदयं मम च ब्रूयाद्वशंकुरुयुगं शिरः ॥ प्रोक्तो





मदनमंत्रोऽष्टचत्वारिंशद्भिरक्षरैः ॥ १९६ ॥ जपादौ स्मरबीजाद्यो जगत्त्रयवशीकरः ॥ पीठ प्राग्वत्समभ्यर्च्य मूर्ति संकल्प्य मूलतः ॥ १९७ ॥
तत्रावाह्याच्युतं भक्त्या सकलीकृत्य पूजयेत् ॥ आसनादिविभूषांतं पुनर्न्यासक्रमाद्यजेत् ॥ १९८ ॥ सृष्टिं स्थितिं षडंगं च किरीटं कुंडलद्वयम् ॥
शंखं चक्रं गदां पद्मं मालां श्रीवत्सकौस्तुभौ ॥१९९॥ गन्धपुष्पैः समभ्यर्च्य मूलेन वैष्णवोत्तमः॥षट्कोणेषु षडंगानि दिग्दलेषु क्रमाद्यजेत॥२००॥
वासुदेवादिकान्कोणेषु तु शांत्यादिकांस्ततः ॥ पत्राग्रगा महिष्योऽष्टौ यजेत्साधकसत्तमः ॥ २०१ ॥ ततः षोडशसाहस्रं सकृद्देवार्चयेत्स्त्रियाः ॥
इंद्रनीलमुकुंदांश्च करालानंदकच्छपान् ॥ २०२ ॥ शंखपद्मौ ततः पश्चान्निधीनष्टौ क्रमाद्यजेत् ॥ तद्बहिर्लोकपालांश्च वज्राद्यानपि पूजयेत् ॥
॥ २०३ ॥ एवं सप्तावृत्तिवृतं कृष्णमभ्यर्च्य चादरात् ॥ प्रीणयेद्दधिखंडाज्यमिश्रेण तु पयोऽधसा ॥ २०४ ॥ दिव्योपचारं दत्वाथ स्तुत्वा नत्वा च
केशवम् ॥ उद्वासयेत्स्वहृदये परिवारगणैः सह ॥ २०५ ॥ न्यस्यात्मानं समभ्यर्च्य तन्मयो विहरेत्सुधीः ॥ रत्नाभिषेकध्यानेज्या विंशत्यर्णाश्रिते
रिता ॥ २०६ ॥ एवं यो भजते मन्त्रं स समृद्धेः पदं भवेत् ॥ जपहोमार्चनध्यानैर्यो मनुं प्रजपेदमुम् ॥२०७॥ तद्वेश्म पूर्यते रत्नैः स्वर्णधान्यैरनार
तम् ॥ पृथ्वी पृथ्वी करे तस्य सर्वसस्यसमाकुला ॥ २०८ ॥ पुत्रैर्मित्रैः सुसंपन्नः प्रयात्यंते परां गतिम् ॥ वह्नावभ्यर्च्य गोविंदं शुक्लपुष्पैः सतंदुलैः
॥ २०९ ॥ आज्याक्तैरयुतं हुत्वा भस्म तन्मूर्ध्नि धारयेत् ॥ तस्यान्नादिसमृद्धिः स्यात्तद्वशे सर्वयोषितः ॥ २१० ॥ रक्तांभोजैस्त्रिमध्वक्तैर्हुनेल्लक्षं
समाहितः ॥ श्रिया तस्येंद्रमैश्वर्यं तृणलेशायते ध्रुवम् ॥ २११॥ त्रिमध्वक्तैः सितैः पुष्पैरष्टोत्तरसहस्रकम् ॥ यो हुनेत्प्रत्यहं मासात्पुरोधा नृपतेर्भवेत
॥ २१२ ॥ एवमादिप्रयोगांश्च साधयेन्मनुनामुना ॥ मन्त्रराजमथो वक्ष्ये दशार्णं सर्वसिद्धिदम् ॥ २१३ ॥ स्मृतिः सद्यान्विता साक्षिर्लोहितो
जनवल्लभा ॥ पवनोऽग्निप्रियांतोऽयं दशार्णो मन्त्र ईरितः ॥२१४॥नारदोऽस्य मुनिश्छंदो विराट् कृष्णोऽस्य देवता॥कामो वीजं वह्निजाया शक्तिः
प्रोक्ता मनीषिभिः ॥ २१५ ॥ आचक्रं च विचक्रं च सुचक्रं तदनन्तरम् ॥ त्रैलोक्यरक्षणं चक्रमसुरांतकचक्रकम् ॥ २१६ ॥ एतैर्ङेंठद्वयांतैश्च चक्रैः
पंचांगकं मनोः ॥ ततस्तारपुटं मन्त्रं व्यापय्य करयोस्त्रिशः ॥ २१७ ॥ सेंदून्हृदंतान्मंत्रार्णान्प्रणवांतरितान्न्यसेत् ॥ दक्षांगुष्ठाच्च वामांगुष्ठांतमंगुलि
पर्वसु ॥ २१८॥ सृष्टिन्यासोऽयमुदितः स्थितिन्यासोऽधुनोच्यते ॥ न्यसेद्वामकनिष्ठादिकनिष्ठांतं स्थितौ सुधीः ॥ २१९ ॥ वामांगुष्ठान्न्यसेद्दक्षां
गुष्ठांतं संहृतौ तथा ॥ संहृतिर्दोषसंघातहारिणी परिकीर्तिता ॥ २२० ॥ विद्याप्रदश्च सृष्ट्यंतो वर्णिनां शुद्धचेतसाम् ॥ स्थित्यंतः स्याद्गृहस्थाना
मेवं काम्याविरूपतः ॥ २२१ ॥ संहारांतो मुनींद्राणां विरक्तानां च सर्वशः ॥ पुनः स्थितिक्रमेणार्णान्मनोरंगुलिषु न्यसेत ॥ २२२ ॥

पुनश्चक्रैश्च पूर्वोक्तैः पंचागं करयोर्न्यसेत् ॥ ततो मूलेन पुटितान्मातृकार्णान्सबिंदुकान् ॥ २२३ ॥ विन्यसेन्मातृकान्यासस्थानेषु प्रणतः सुधीः ॥ ततस्तारपुटं मूलं व्यापकत्वेन विन्यसेत् ॥ २२४ ॥ संहारसृष्टिभेदेन दशतत्त्वानि विन्यसेत् ॥ नमोंतमूलमंत्रार्णपदायाम्यानि चात्मने ॥ २२५ ॥ मत्यंतानि च तत्त्वानि पृथिव्याद्यानि च क्रमात्॥पृथ्वी जलं तथा वह्निर्वायुराकाशमेव च ॥ २२६॥ अहंकारो महत्तत्वं प्रकृतिं पुरुषं परम् ॥ प्रविन्यसेन्मस्तके च नेत्रयोः श्रोत्रयोर्नसोः॥ २२७ ॥ वदने हृदये नाभौ लिंगे जान्वोश्च पादयोः॥प्रणवांतरितान्वर्णान्हृदंतान्विन्यसेन्मनोः ॥२२८ ॥ सृष्टिन्यासोऽयमाख्यातः स्थितिन्यासं शृणु द्विज ॥ हृदि नाभौ ध्वजे जान्वोः पादयोर्मस्तके पुनः ॥ २२९ ॥ नेत्रयोः कर्णयोर्घ्राणे वदने विन्यसेत्क्रमात् ॥ पदोर्जान्वोर्लिंगदेशे नाभौ हृदि मुखे नसोः ॥२३०॥ कर्णयोर्नेत्रयोर्मूर्ध्नि संहाराख्योऽयमीरितः ॥ सृष्ट्यंतो वर्णिनां न्यासः स्थित्यंतो गृहमेधिनाम् ॥ २३१॥ यतेर्वैराग्ययुक्तस्य संहारांतः प्रकीर्तितः ॥ चतुर्द्धा वर्णिनां चैव गृहस्थानां च पंचधा॥ २३२॥ यतीनां च त्रिधा न्यासः प्रोक्तोऽयं क्रमतः शुभः ॥ केचिद्विरक्ते गृहगे संहारांतं विदुर्बुधाः ॥२३३ ॥ विभूतिपंजरं न्यासं कुर्यादिष्टाप्तये ततः॥मनोर्दशावृत्तिमयं कृष्णसांनिध्यकारकम्॥ ॥२३४॥ आधारे च ध्वजे नाभौ हृदि कंठ मुखे शये॥ ऊर्वोश्च कंधरायां च नाभौ कुक्षौ तथा हृदि॥२३५॥ स्तनयोः पार्श्वयोः श्रोण्योर्मस्तके वदने तथा ॥ नेत्रयोः कर्णयोर्नासापुटयोश्च कपोलयोः॥२३६॥ एवं दक्षिणदोर्मूलसंध्यग्रेष्वंगुलीषु च ॥ततः शिरसि तत्पूर्वाद्याशासु स्वकलासु च॥२३७॥ दोष्णोः सक्थ्नोः शिरोक्ष्यास्यकंठहृज्जठरेषु च ॥ मूलाधारे लिंगदेशे जानुनोः पादयोस्तथा ॥ २३८॥ श्रोत्रगंडांसवक्षोजपार्श्वलिंगेषु विन्यसेत् ॥ ऊर्वोर्जान्वोर्जंघयोश्च पादयोर्विन्यसेत्क्रमात् ॥ २३९ ॥ विभूतिपंजराख्योऽयं न्यासः सर्वार्थसिद्धिदः ॥ अनेन न्यासवर्येण साक्षात्कृष्णतनुर्भवेत् ॥ २४० ॥ मूर्तिपंजरनामानं न्यासं पूर्वोदितं न्यसेत् ॥ ततो दशांगपंचांगौ न्यासवर्यौ न्यसेत्क्रमात् ॥ २४१ ॥ हृदि मूर्ध्नि शिखायां च सर्वांगे दिक्षु पार्श्वयोः ॥ कट्यां पृष्ठे तथा मूर्ध्नि विन्यसेद्वैष्णवोत्तमः ॥ २४२ ॥ पंचांगानि न्यसेद्भूयश्चक्रैः प्राग्वत्समाहितः ॥ अन्योऽप्यष्टादशार्णोक्तः कर्तव्यो न्याससंचयः ॥ २४३ ॥ ततः किरीटमंत्रेण व्यापकं रचयेत्सुधीः ॥ वेणुबिल्वादिमुद्रांश्च दर्शयेत्साधकोत्तमः ॥ २४४ ॥ सुदर्शनस्य मंत्रेण कुर्याद्दिग्बंधनं ततः ॥ अनंगुष्ठाश्च ऋजवः करशाखा भवंति चेत् ॥ २४५ ॥ हृन्मुद्रेयं समाख्याता शिरोमुद्रा तथा भवेत् ॥ अधोंगुष्ठा तु या मुष्टिः शिखामुद्रेयमीरिता ॥ प्रसारितकरांगुल्योर्वर्ममुद्रेयमीरिता ॥ २४६ ॥ नाराचमुष्ट्या धृतबाहुयुग्मांगुष्ठतर्जन्युदितो ध्वनिस्तु ॥ विष्वग्विमुक्ता कथितास्त्रमुद्रा यत्राक्षिणी तर्जनिमध्यमे च ॥ २४७ ॥ ओष्ठे वामकरांगुष्ठो लग्नस्तस्य कनिष्ठिका ॥ दक्षिणांगुष्ठसंसक्ता

तत्कनिष्ठा प्रसारिता ॥ २४८ ॥ तर्जनी मध्यमानामा किंचित्संकुच्य चालिता ॥ वेणुमुद्रेयमुदिता सुगुप्ता प्रेयसी हरेः ॥ नोच्यंते तत्र सिद्धत्वान्मालाश्रीवत्सकौस्तुभाः ॥ २४९ ॥ वामांगुष्ठं समुद्रं तमपरकरांगुष्ठकेनाथ बद्ध्वा संपीड्याग्रं च दक्षांगुलिभिरपि च तां वामहस्तांगुलीभिः॥ गाढं बद्ध्वा स्वकीये हृदयसरसिजे स्थापयेत्कामबीजं प्रोच्चार्यैषा तु गोप्या सकलसुखकरी बिल्वमुद्रा मुनींद्रैः॥२५०॥ कायेन मनसा वाचा यत्पापं समुपार्जितम् ॥ मुद्राया ज्ञानमात्रेण सर्वं नाशमुपैष्यति ॥ २५१ ॥ ध्यानं जपस्त्रिकालार्चा कार्या पूर्वोदिता मनोः॥ सर्वेष्वेकः क्रमः प्रोक्तो दशार्णाष्टादशार्णयोः॥ २५२ ॥ एवं सिद्धे मनौ मंत्री प्रयोगान्कर्तुमर्हति ॥ उद्दंडबाहुदोर्दंडधृतगोवर्द्धनाचलम् ॥२५३॥ अन्यहस्तांगुलीव्यक्तस्वरवंशार्पिताननम्॥ध्यायन्कृष्णं जपेन्मंत्रं व्रजेच्छत्रं विना सुधीः॥२५४॥वर्षवाताशनिभ्योऽपि भयं तस्य न जायते ॥ मोघमेघौघव्राताद्गतेन्द्रं तं स्मरन्हुनेत् ॥ २५५ ॥ लोणैरयुतसंख्यैः स्यादनावृष्टिर्न संशयः ॥ क्रीडंतमर्कजातीरे मज्जनस्नापनादिभिः ॥ २५६ ॥ तच्छीकरजलासारैः सिच्यमानं प्रियाजनैः ॥ ध्यात्वायुतं पयः सिक्तैर्हुनेद्वा नीरतर्पणैः ॥२५७॥ वृष्टिर्भवत्यकालेऽपि महती नात्र संशयः॥सदाहमोहैरार्तस्य विस्फोटकज्वरादिभिः ॥२५८॥ अमुमेव स्मरन्मूर्ध्नि जपेच्छांतिर्भवेत्क्षणात् ॥ अथवा गरुडारूढं प्रद्युम्नबलसंयुतम् ॥ २५९ ॥ निजज्वरनिष्पिष्टज्वराभिष्टुतमच्युतम् ॥ ध्यात्वा मूर्ध्नि जपेन्मंत्रं ज्वरमुक्तो भवेज्ज्वरी ॥ २६० ॥ ध्यात्वैवमग्नावभ्यर्च्य यथोक्तैश्चतुरंगुलैः ॥ जुहुयादमृताखण्डैरयुतं ज्वरशांतये ॥ २६१ ॥ शिलीमुखविनिर्भिन्नभीष्मतापहरं हरिम् ॥ ध्यात्वा जपेत्स्पृशन्नार्तं पाणिभ्यां ज्वरशांतये ॥ २६२ ॥ सांदीपनाय ददतं पुत्रं ध्यात्वायुतं हुनेत् ॥ यथोक्तैरमृताखंडैरपमृत्युनिवृत्तये ॥ २६३ ॥ सपार्थं मृतपुत्रायार्पयंतं च द्विजन्मने ॥ सुतं ध्यात्वा जपेल्लक्षं पुत्रपौत्रादिवृद्धये ॥ २६४ ॥ पुत्रजीवफलैर्हुत्वायुतं मधुरसंप्लुतैः ॥ तत्काष्ठैरेधिते वह्नौ सुतान्दीर्घायुषो लभेत् ॥ २६५ ॥ क्षीरद्रुक्वाथसंपूर्णमभ्यर्च्य कलशं निशि ॥ प्रातर्जप्त्वायुतं नारीमभिषिंचेद्द्विषड्दिनम् ॥ २६६ ॥ एवं कृते तु वंध्यापि लभेत्पुत्रांश्चिरायुषः ॥ प्रातर्वाचंयमाश्वत्थदलसंपुटकं जलम्॥२६७॥ अष्टोत्तरशतं जप्तं मासं पुत्रार्थिनी पिबेत् ॥ सर्वलक्षणसंपन्नं वंध्यापि लभते सुतम् ॥२६८॥ जित्वा कृत्यां काशिराजप्रेषितां च निजारिणः॥तेजसा तस्य नगरं दहंतं भावयन्हरिम् ॥ २६९ ॥ हुनेत्सप्तदिनं मंत्री सुस्नेहाक्तैश्च सर्षपैः ॥ कृत्याकर्तारमेवास्मै कुपिता नाशयेद्ध्रुवम् ॥ २७० ॥ बदरीद्रुमसंकीर्णे स्थितं दिव्याश्रमे शुभे ॥ स्पृशंतं करपद्माभ्यां घंटाकर्णकलेवरम् ॥ २७१ ॥ ध्यात्वैवं जुहुयाल्लक्षं तिलैस्त्रिमधुराप्लुतैः ॥ महापापयुतोऽप्येवं पूतो भवति तत्क्षणात् ॥ २७२॥ द्यूतासक्तौ रुक्मिबलौ द्वेषयंतं हरिं स्मरन् ॥ जुहुयाद्विष्टयोर्द्विष्ट्यै गुलिका गोमयोद्भवाः ॥ २७३॥ नित्यं सहस्रं समाबाम्मिथो

विद्वेषयेदरीन् ॥ वर्षंतं गरुडारूढं ज्वलदग्निमुखैः शरैः ॥ २७४ ॥ धावंतं रिपुसंघातमनुधावतमच्युतम् ॥ ध्यात्वा सप्तसहस्रं तु जपे
न्मंत्रमनन्यधीः ॥ २७५ ॥ उच्चाटनं भवत्येव शत्रूणां सप्तभिर्दिनैः ॥ ध्यायन्नुत्क्षिप्तवत्सं तु कपित्थफलहारिणम् ॥ २७६ ॥ प्रजपेदयुतं शत्रुमुच्चा
टयति तत्क्षणात् ॥ आत्मानं कंसमथनं ध्यायन्मंचान्निपातितम् ॥२७७॥ कंसात्मानं व्यकर्षन्तं गतासुं तं जपेन्मनुम् ॥ रिपुजन्मर्क्षवृक्षोत्थसमि
द्भिरयुतं निशि ॥२७८॥ जुहुयादेवमुग्रोऽपि सपत्नो निधनं व्रजेत् ॥ अथवा निंबतैलाक्तैर्हुनेदेधोभिरक्षजैः ॥२७९॥ अयुतं नियतो रात्रौ मारये
दचिरादरीन् ॥ निशाद्विष्टदलव्योषकार्पासास्थिकरैर्निशि ॥ २८० ॥ हुनेदेरंडतैलाक्तैः श्मशाने रिपुशांतये ॥ न शस्तं मारणं कर्म कुर्याच्चेदयुतं
हुनेत् ॥ २८१ ॥ पायसैर्वा हुनेत्तावच्छांतये शांतमानसः ॥ पारिजातहरं कृष्णं ध्यायन् लक्षं जपेन्मनुम् ॥ २८२ ॥ सर्वत्रैव जयस्तस्य न कदापि
पराजयः ॥ व्याख्यामुद्राकरं कृष्णं रथस्थं भावयञ्जपेत् ॥२८३॥ पार्थे दिशंतं गीतार्थं धर्मवृद्ध्यै सुमानवः ॥ पालाशपुष्पैर्मध्वक्तैर्लक्षं विद्याप्तये
हुनेत् ॥ २८४ ॥ राष्ट्रपूर्ग्रामवस्तूनां शरीरस्यापि रक्षणे ॥ विश्वरूपधरं प्रोद्यद्भानुकोटिसमप्रभम् ॥ २८५ ॥ अग्नीषोमात्मकं कृष्णं द्रुतचामीकरप्र
भम् ॥ अर्कोग्निद्योतितास्यांघ्रिमंकज दिव्यभूषणम् ॥ २८६ ॥ नानायुधधरं प्राप्तं विश्वाकाशावकाशकम् ॥ ध्यात्वा लक्ष जपेन्मन्त्रं रक्षणाय समा
हितः ॥ २८७ ॥ रक्तैर्वन्यप्रसूनैर्यो दिनादौ पूजयेद्धरिम् ॥ दिनमध्योक्तविधिना जपेदष्टोत्तरं शतम् ॥ २८८ ॥ सहस्रमंडलान्मन्त्री वशयेन्मुखरा
न्द्विजान् ॥ जातिपुष्पैः क्षत्रियांश्च गोपवेषधरं स्मरन् ॥ २८९ ॥ ध्यायन् क्रीडारतं कृष्णं रक्तैरश्वारिपुष्पकैः ॥ वशयेद्वैश्यजातीयान् शूद्रान्नीलो
त्पलैः स्मरन् ॥ २९० ॥ गीतनृत्यरतं श्वेतपुष्पैः साज्यैश्च तंदुलैः ॥ हुत्वान्वहं सप्तदिनं भस्म भाले च मूर्द्धनि ॥ २९१ ॥ धारयन्वशयेत्कांतां
सापि तद्वत्पतिं ध्रुवम् ॥ तांबूलं कुसुमं वासोऽजनं चंदनमेव च ॥ २९२ ॥ सहस्रं मनुना जप्तं दद्याद्यस्मै नराय च ॥ सोऽचिरादेष वशगः
सपुत्रपशुबांधवः ॥ २९३ ॥ वृन्दारण्यस्थितं ध्यायन्बल्लवीसंयुतं हरिम् ॥ अपामार्गसमिद्भिस्तु हुत्वा तु वशयेज्जगत् ॥ २९४ ॥ संप्राप्य सद्गुरो
र्दीक्षां कृष्णं यो विधिनामुना ॥ अर्चयेद्वैष्णवश्रेष्ठः सोऽष्टसिद्धीश्वरो भवेत् ॥ २९५॥ तस्य दर्शनमात्रेण वादिनो निष्प्रभाः स्मृताः ॥ वसेत्सर
स्वती वक्त्रे गृहे चापि सभासदः ॥ २९६ ॥ भुक्त्वा नानाविधान्भोगानंते विष्णुपदं व्रजेत् ॥ २९७ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे तृतीयपादे
कृष्णमन्त्रनिरूपणं नामाशीतितमोऽध्यायः ॥ ८० ॥ श्रीसनत्कुमार उवाच ॥ अथ कृष्णस्य मंत्राणां वक्ष्ये भेदान् मुनीश्वर ॥ यान्समा
राध्य मनुजाः साधयंतीष्टमात्मनः ॥ १ ॥ शक्तिश्रीमारपूर्वश्च श्रीशक्तिस्मरपूर्वकः ॥ मारशक्तिरमापूर्वो दशार्णो मनवस्त्रयः ॥ २ ॥ मुनिः स्यान्ना







रद॑श्छन्दो गायत्री देवता पुनः ॥ कृष्णो गोविंदनामात्र सर्वकामप्रदो नृणाम्॥ ३ ॥चक्रैः पूर्ववदंगानि त्रयाणामपि कल्पयेत् ॥ ततः किरीटमनुना व्यापकं हि समाचरेत् ॥ ४ ॥ सुदर्शनस्य मनुना कुर्याद्दिग्बंधनं तथा ॥ विंशत्यर्णोक्तवत्कुर्यादाद्ये ध्यानार्चनादिकम् ॥ ५ ॥ द्वितीये तु दशार्णोक्तं ध्यानपूजादिकं चरेत् ॥ तृतीये तु हरिं ध्यायेत्समाहितमनाः सुधीः ॥ ६ ॥ शखचक्रधनुर्बाणपाशांकुशधरारुणम् ॥ दोर्भ्यां धृतं धमंतं च वेणुं कृष्णदिवाकरम् ॥ ७ ॥ एवं ध्यात्वा जपेन्मंत्रान्पञ्चलक्षं पृथक् सुधीः ॥ जुहुयात्तद्दशांशेन पायसेन ससर्पिषा ॥ ८ ॥ एवं सिद्धे मनौ मंत्री कुर्यात्काम्यानि पूर्ववत् ॥ श्रीशक्तिकामः कृष्णाय गोविंदायाग्निसुन्दरी ॥ ९ ॥ रव्यर्णो ब्रह्मगायत्रीकृष्णा ऋष्यादयोऽस्य तु ॥ बीजै रमाब्धियुग्मार्णैः षडंगानि प्रकल्पयेत् ॥ १० ॥ विंशत्यर्णोदितजपध्यानहोमार्चनादिकम् ॥ किं बहूक्तेन मंत्रोऽयं सर्वाभीष्टफलप्रदः ॥ ११ ॥ श्रीशक्तिस्मरपूर्वोंगजन्मा शक्तिरमांतिकः ॥ दशाक्षरः स एवादौ प्रोक्तः शक्तिरमायुतः ॥ १२ ॥ मन्त्रौ षोडशरव्यर्णौ चक्रैरंगानि कल्पयेत ॥ वरदाभयहस्ताभ्यां श्लिष्यैतं स्वांगके प्रिये ॥ १३ ॥ पद्मोत्पलकरे ताभ्यां श्लिष्टं चक्रदरोज्वलम् ॥ ध्यात्वैवं प्रजपेल्लक्षदशकं तद्दशांशतः ॥ १४ ॥ आज्यैर्हुत्वा ततः सिद्धौ भवेतां मन्त्रनायकौ ॥ सर्वकामप्रदौ सर्वसंपत्सौभाग्यदौ नृणाम् ॥ १५ ॥ अष्टादशार्णः कामांतो मनुः सुतधनप्रदः ॥ नारदोऽस्य मुनिश्छंदो गायत्री देवता मनोः ॥ १६ ॥ कृष्णः कामो बीजमुक्तं शक्तिर्वह्निप्रिया मता ॥ षड्दीर्घाढ्येन बीजेन षडंगानि समाचरेत् ॥ १७ ॥ पाणौ पायसपक्वं च दक्षे हैयंगवीनकम् ॥ वामे दधद्दिव्यदिगंबरो गोपीसुतोऽवतु ॥ १८ ॥ ध्यात्वैवं प्रजपेन्मंत्रं द्वात्रिंशल्लक्षमानतः ॥ दशांशं जुहुयादग्नौ सिताढ्येन पयोऽधसा ॥ १९ ॥ पूर्वोक्तवैष्णवे पीठे यजेदष्टादशार्णवत् ॥ पद्मस्थं कृष्णमभ्यर्च्य तर्पयेत्तन्मुखांबुजे ॥ २० ॥ क्षीरेण कदलीपक्वैर्दध्ना हैयंगवेन च ॥ पुत्रार्थी तर्पयेदेवं वत्सराल्लभते सुतम् ॥ २१ ॥ यद्यदिच्छति तत्सर्वं तर्पणादेव सिद्ध्यति ॥ वाक्कामो ङेयुतं कृष्णपदं माया ततः परम् ॥ २२॥ गोविंदाय रमा पश्चाद्दशार्णं च समुद्धरेत् ॥ मनुस्त्वरयुतौ सर्गयुक्तौ भृगुतदूर्द्ध्वगौ॥ २३॥ द्वात्रिंशत्यक्षरो मन्त्रो वागीशत्वप्रदायकः ॥ ऋषिः स्यान्नारदश्छन्दो गायत्री देवता पुनः ॥ २४ ॥ विद्याप्रदश्च गोपालः कामो बीजं प्रकीर्तितम् ॥ शक्तिस्तु वाग्भवं विद्याप्राप्तये विनियोजना ॥ २५ ॥ वामोर्द्ध्वहस्ते दधतं विद्यापुस्तकमुत्तमम् ॥ अक्षमालां च दक्षोर्द्ध्वस्फाटिकीं मातृकामयीम् ॥ २६ ॥ शब्दब्रह्ममयं वेणुमधः पाणिद्वये पुनः ॥ गायत्रीगीतवसनं श्यामलं कोमलच्छविम् ॥ २७ ॥ बर्हावतंसं सर्वज्ञं सेवितं मुनिपुंगवैः ॥ ध्यात्वैवं प्रमदावेशविलासं भुवनेश्वरम् ॥ २८ ॥ वेदलक्षं जपेन्मंत्रं किंशुकैस्तद्दशांशतः ॥ हुत्वा तु पूजयेन्मन्त्री विंशत्यर्ण

विधानतः ॥२९॥ एवं यो भजते मन्त्रं भवेद्वागीश्वरस्तु सः ॥ अदृष्टान्यपि शास्त्राणि तस्य गंगातरंगवत् ॥३०॥ तारः कृष्णयुगं पश्चान्महाकृष्ण इतीरयेत् ॥ सर्वज्ञ त्वंप्रशब्दांते सीदमेऽभिश्च मारम ॥ ३१ ॥ णांते विद्येश विद्यामाशु प्रयच्छ ततश्च मे ॥ त्रयस्त्रिंशदक्षरोऽयं महाविद्याप्रदो मनुः ॥ ३२ ॥ नारदोऽस्य मुनिश्छन्दोऽनुष्टुप् कृष्णोऽस्य देवता ॥ पादैः सर्वेण पंचांगं कृत्वा ध्यायेत्ततो हरिम् ॥ ३३ ॥ दिव्योद्याने विवस्वत्प्रतिममणिमये मण्डपे योगपीठे मध्ये यः सर्ववेदांतमयसुरतरोः संनिविष्टो मुकुन्दः ॥ वेदैः कल्पद्रुरूपैः शिखरिशतसमालंबिकोशैश्चतुर्भिर्न्यायैस्तर्कैः पुराणैः स्मृतिभिरभिवृतस्तादृशैश्चामराद्यैः ॥ ३४ ॥ दद्याद्विभ्रत्कराग्रैरपि [illegible]पुष्पबाणेक्षुचापानक्षस्पृक्पूर्णकुंभौ स्मरललितवपुर्दिव्यभूषांगरागः ॥व्याख्यां वामे वितन्वन् स्फुटरुचिरपदो वेणुना विश्वमात्रे शब्दब्रह्मोद्भवेन श्रियमरुणरुचिर्वल्लवीवल्लभो नः ॥ ३५ ॥ एवं ध्यात्वा जपेल्लक्षं दशांशं पायसैर्हुनेत् ॥ अष्टादशार्णवत्कुर्याद्यजनं चास्य मन्त्रवित् ॥ ३६ ॥ तारो नमो भगवते नन्दपुत्राय संवदेत् ॥ आनन्दवपुषे दद्याद्दशार्णं तदनंतरम् ॥ ३७ ॥ अष्टाविंशतिवर्णोऽयं मंत्रः सर्वेष्टदायकः ॥ नंदपुत्रपदं ङेंतं श्यामलांगपदं तथा ॥ ३८ ॥ तथा बालवपुःकृष्णं गोविंदं च तथा पुनः ॥ दशार्णोऽतो भवेन्मंत्रो द्वात्रिंशदक्षरान्वितः ॥ ३९ ॥ अनयोर्नारदऋषिश्छंदस्तूष्णिगनुष्टुभौ ॥ देवता नन्दपुत्रस्तु विनियोगोऽखिलाप्तये ॥ ४० ॥ चक्रैः पंचांगमर्चास्यादंगदिक्पालहेतिभिः ॥ दक्षिणे रत्नचषकं वामे सौवर्णनेत्रकम् ॥ ४१ ॥ करे दधानं देवीभ्यां श्लिष्टं संचिंतयेद्विभुम् ॥ लक्षं जपो दशांशेन जुहुयात्पायसेन तु ॥ ४२ ॥ एताभ्यां सिद्धमंत्राभ्यां मंत्री कुर्यात्त्रथेप्सितम् ॥ प्रणवः कमला माया नमो भगवते ततः ॥ ४३ ॥ नंदपुत्राय तत्पश्चाद्बालान्ते वपुषे पदम् ॥ ऊनविंशतिवर्णोऽयं मुनिर्ब्रह्मा समीरितः ॥ ४४ ॥ छंदोऽनुष्टुप् देवता च कृष्णो बालवपुः स्वयम् ॥ मन्त्रोऽयं सर्वसंपत्तिसिद्धये सेव्यते बुधैः ॥ ४५ ॥ तारो हृद्भगवान्ङेंतो रुक्मिणीवल्लभाय च ॥ वह्निजायावधिः प्रोक्तो मंत्रः षोडशवर्णवान् ॥४६॥ नारदोऽस्य मुनिश्छन्दोऽनुष्टुप् च देवता मनोः ॥ रुक्मिणीवल्लभश्चंद्रदृग्वेदांगाक्षिवर्णकैः ॥पञ्चांगानि प्रकुर्वीत ततो ध्यायेत्सुरेश्वरम् ॥ ४७ ॥ तापिच्छच्छविरंकगां प्रियतमां स्वर्णप्रभामंबुजप्रोद्यद्वामभुजां स्ववामभुजयाश्लिष्यन्स्वचित्ताशया ॥ श्लिष्यंतीं स्वयमन्यहस्तविलसत्सौवर्णवेत्रश्चिरं पायान्नः सुविशुद्धपीतवसनो नानाविभूषो हरिः ॥ ४८ ॥ ध्यात्वैवं प्रजपेल्लक्षं रक्तैः पद्मैर्दशांशतः ॥ ॥ ४९ ॥ त्रिमध्वक्तैर्हुनेत्पीठे पूर्वोक्ते पूजयेद्धरिम् ॥ अंगैर्नारदमुख्यैश्च लोकेशैश्च तदायुधैः ॥ ५० ॥ एवं सिद्धो मनुर्दद्यात्सर्वान्कामांश्च मंत्रिणे ॥ लीलादंडपदाब्जोऽपि जनसंसक्तदोः पदम् ॥५१॥ दंडांते वा धरावह्निरधीशाढ्योऽथ लोहितः ॥ मेघश्यामपदं पश्चाद्भगवन् सलिलंसदृक् ॥ ५२ ॥





विन्दे इत्युक्त्वा ठद्वयं स्यादेकोनत्रिंशदर्णवान्॥नारदोऽस्य मुनिश्छंदोऽनुष्टुप् च देवता मनोः॥५३॥लीलादंडहरिः प्रोक्तो मन्वब्धियुगवह्निभिः॥वेदैः पंचां
गकं भागैर्मंत्रवर्णोत्थितैः क्रमात् ॥ ५४ ॥ संमोहयंश्च निजवामकरस्थलीलादंडेन गोपयुवतीः परसुंदरीश्च ॥ दिश्यन्निजप्रियसखांसगदक्षहस्तो देव
श्रियं निहतकंस उरुक्रमो नः ॥ ५५ ॥ लक्षं जपो दशांशेन जुहुयात्तिलतण्डुलैः ॥ त्रिमध्वक्तैस्ततोऽभ्यर्चेदंगं दिक्पालहेतिभिः ॥ ५६ ॥ लीलादंड
हरिं यो वै भजते नित्यमादरात् ॥ स सर्वैः पूज्यते लोकैस्तस्य गेहे स्थिरा रमा ॥ ५७ ॥ सद्यारूढा स्मृतिस्तोयं केशवाब्धधरायुगम् ॥ भयाग्निव
ल्लभामंत्रः सप्तार्णः सर्वसिद्धिदः ॥ ५८ ॥ ऋषिः स्यान्नारदश्छंदो उष्णिग्गोवल्लभस्य तु ॥ देवतापूर्ववच्चक्रैः पञ्चांगानि तु कल्पयेत् ॥ ५९ ॥
ध्येयो हरिः सकपिलागणमध्यसंस्थस्ता आह्वयन्दधद्दक्षिणदोस्थवेणुम् ॥ पाशं सयष्टिमपरत्र पयोदनीलः पीताम्बराहिरिपुपिच्छकृतावतंसः
॥ ६० ॥ सप्तलक्षं जपेन्मंत्रं दशांशं जुहुयात्ततः ॥ गोदुग्धैः पूजयेत्पीठे स्यादंगैः प्रथमावृतिः ॥ ६१ ॥ सुवर्णपिंगलां गौरपिंगलां रक्तपिंगलाम् ॥
गुडपिंगां बभ्रुवर्णां चोत्तमां कपिलां तथा ॥ ६२ ॥ चतुष्कपिङ्गलां पीतपिङ्गलां चोत्तमां शुभाम् ॥ गोगणाष्टकमभ्यर्च्य लोकेशानायुधैर्युतान्
॥ ६३ ॥ संपूज्यैवं मनौ सिद्धे कुर्यात्काम्यानि मंत्रवित् ॥अष्टोत्तरसहस्रं यः पयोभिर्दिनशो हुनेत् ॥ ६४ ॥ पक्षात्सगोगणो मुक्तो दशार्णे
चाप्ययं विधिः ॥तारो हृद्भगवान् ङेंतः श्रीगोविंदस्तथा भवेत् ॥६५॥ द्वादशार्णो मनुः प्रोक्तो नारदोऽस्य मुनिर्मतः॥छंदः प्रोक्तं च गायत्री श्रीगो
विन्दोऽस्य देवता ॥ चन्द्राक्षियुगभूतार्णैः सर्वैः पंचांगकल्पनम्॥ ६६॥ ध्यायेत्कल्पद्रुमूलाश्रितमणिविलसद्दिव्यसिंहासनस्थं मेघश्यामं पिशंगांशुकम
तिसुभगं शंखवेत्रे कराभ्याम् ॥ ६७ ॥ बिभ्राणं गोसहस्रैर्वृतममरपतिं प्रौढहस्तैककुंभप्रश्च्योतत्सौधधारास्नपितमभिनवांभोजपत्राभनेत्रम् ॥ ६८ ॥
रविलक्षं जपेन्मंत्रं दुग्धैर्हुत्वा दशांशतः ॥ यजेच्च पूर्ववद्गोष्ठस्थितं वा प्रतिमादिषु ॥ ६९ ॥ पूर्वोक्ते वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥ तत्रा
वाह्य यजेत्कृष्णं गुरुपूजनपूर्वकम् ॥ ७० ॥ रुक्मिणीं सत्य[illegible] च पार्श्वयोरिंद्रमग्रतः ॥ पृष्ठतः सुरभिं चेष्ट्वा केसरेष्वंगपूजनम् ॥ ७१ ॥ कालिं
द्याद्या महिष्योऽष्टौ वसुपत्रेषु संस्थिताः ॥ पीठकोणेषु वह्न्यादौ किंकिणीं च तथा पुनः ॥ ७२ ॥ दामानि पृष्ठयोर्वेणुं पुरः श्रीवत्सकौस्तुभौ ॥
अग्रतो वनमालादिर्दिक्ष्वष्टसु तथा स्थिताः ॥ ७३ ॥ पांचजन्यं गदा चक्रं वसुदेवश्च देवकी ॥ नंदगोपो यशोदा च सगोगोपालगो
पिकाः ॥ ७४ ॥ इंद्राद्याश्च स्थिता बाह्ये वज्राद्याश्च ततः परम् ॥ कुमुदः कुमुदाक्षश्च पुंडरीकोऽथ वामनः ॥ ७५ ॥ शंकुकर्णः
सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ विष्वक्सेनश्च संपूज्यः स्वात्मा चार्च्यस्ततः परम् ॥ ७६ ॥ एककालं त्रिकालं वा यो गोविंदं यजेन्नरः ॥

स चिरायुर्निरातंको धनधान्यपतिर्भवेत् ॥ ७७ ॥ स्मृतिः सद्यान्विता चक्री दक्षकर्णयुतोधरा ॥ नाथाय हृदयांतोऽयं वसुवर्णो महामनुः ॥ ७८ ॥ मुनिर्ब्रह्मास्य गायत्री छंदः कृष्णोऽस्य देवता ॥ वर्णद्वंद्वैश्च सर्वेण पंचांगान्यस्य कल्पयेत् ॥ ७९ ॥ पंचवर्षमतिलोलमंगणे धावमानमतिचंचलेक्षणम् ॥ किंकिणीवलयहारनूपुरै रंजितं नमत गोपबालकम् ॥ ८० ॥ एवं ध्यात्वा जपेदष्टलक्षं मंत्री दशांशतः ॥ ब्रह्मवृक्षसमिद्भिश्च जुहुयात्पायसेन वा ॥ ८१ ॥ प्रागुक्ते वैष्णवे पीठे मूर्तिं संकल्प्य मूलतः ॥ तत्रावाह्यार्चयेत्कृष्णं मंत्री वै स्थिरमानसः ॥ ८२ ॥ केसरेषु चतुर्दिक्षु विदिक्ष्वंगानि पूजयेत् ॥ वासुदेवं बलं दिक्षु प्रद्युम्नमनिरुद्धकम् ॥ ८३ ॥ विदिक्षु रुक्मिणीसत्यभामे वै लक्ष्मणर्क्षजे ॥ लोकेशान्सायुधान्बाह्ये एवं सिद्धो भवेन्मनुः ॥ ८४ ॥ तारः श्रीभुवनाकामो ङेंतं श्रीकृष्णमीरयेत् ॥ श्रीगोविंदं ततः प्रोच्य गोपीजनपदं ततः॥८५॥ वल्लभाय ततः पञ्चात्रयं तत्वाक्षरो मनुः ॥ मुन्यादिकं च पूर्वोक्तं सिद्धगोपालकं स्मरेत् ॥ ८६ ॥ माधवीमंडपासीनौ गरुडेनाभिपालितौ ॥ दिव्यक्रीडासु निरतौ रामकृष्णौ स्मरन् जपेत् ॥ ८७ ॥ पूजनं पूर्ववच्चास्य कर्तव्यं वैष्णवोत्तमैः ॥ चक्री मुनिस्वरोपेतः सर्गी चैकाक्षरो मनुः ॥ ८८ ॥ कृष्णेति द्व्यक्षरः प्रोक्तः कामादिः स्यात्रिवर्णकः॥ सैव ङेंतो युगार्णः स्यात्कृष्णाय नम इत्यपि॥८९॥ पंचाक्षरश्च कृष्णाय कामरुद्धस्तथा परः ॥ गोपालायाग्निजायांतो रसवर्णः प्रकीर्तितः ॥ ९० ॥ कामः कृष्णपदं ङेंतं वह्निजायांतकः परः ॥ कृष्णगोविंदकौ ङेंतौ सप्तार्णः सर्वसिद्धिदः ॥९१॥श्रीशक्तिकामाः कृष्णाय कामः सप्ताक्षरः परः ॥ कृष्णगोविंदकौ ङेंतौ हृदंतोऽन्यो नवाक्षरः ॥९२॥ ङेंतौ च कृष्णगोविंदौ तथा कामः पुटः परः ॥कामः शार्ङ्गी धरासंस्थो मन्विद्वाब्धश्च मन्मथः॥९३॥श्यामलांगाय हृदयं दशार्णः सर्वसिद्धिदः ॥ बालांते वपुषे कृष्णायाग्निजायांतिमोऽपरः॥ ॥९४॥ द्विठांते बालवपुषे कामः कृष्णाय संवदेत् ॥ ततो ध्यायन्स्वहृदये गोपीजनमनोहरम् ॥ ९५॥श्रीवृन्दाविपिनप्रतोलिषु नमत्संफुल्लवल्लीततिष्वंतर्जालविघट्टनैः सुरभिणा वातेन संसेविते ॥ कालिंदीपुलिने विहारिणमथो राधैकजीवातुकं वंदे नन्दकिशोरमिंदुवदनं स्निग्धांबुदाडंबरम् ॥ ॥ ९६॥ पूर्वोक्तवर्त्मना पूजा ज्ञेया ह्येषां मुनीश्वर ॥ देवकीसुतवर्णांते गोविंदपदमुच्चरेत् ॥ ९७ ॥ वासुदेवपदं प्रोच्य संबुद्ध्यंतं जगत्पतिम् ॥ देहि मे तनयं पश्चात्कृष्ण त्वामहमीरयेत् ॥९८॥ शरणं गत इत्यंतो मन्त्रो द्वात्रिंशदक्षरः ॥ नारदोऽस्य मुनिश्छंदो गायत्री चाप्यनुष्टुभम् ॥ देवः सुतप्रदः कृष्णः पादैः सर्वेण चांगकम्॥९९॥विजयेन युतो रथस्थितः प्रसमानीय समुद्रमध्यतः॥ प्रददत्तनयान् द्विजन्मने स्मरणीयो वसुदेवनन्दनः॥१००॥ लक्षं जपोऽयुतं होमास्तिलैर्मधुरसंप्लुतैः॥अर्चा पूर्वोदिते पीठे अंगलोकेश्वरायुधैः॥१०१॥ एवं सिद्धे मनौ मंत्री वंध्यायामपि पुत्रवान् ॥तारो माया ततः सांत





सेंदुष्वांतश्च सर्ववान्॥१०२॥सोऽहं वांह्नप्रियांतोऽयं मंत्रो वस्वक्षरः परः॥पंचब्रह्मात्मकस्यास्य मंत्रस्य मुनिसत्तम॥१०३॥ऋषिर्ब्रह्मा च परमा गायत्री छंद ईरितम्॥परंज्योतिः परं ब्रह्म देवता परिकीर्तितम्॥१०४॥प्रणवो बीजमाख्यातं स्वाहा शक्तिरुदाहृता॥स्वाहेति हृदयं प्रोक्तं सोऽहं वेति शिरो मतम्॥१०५॥हंसश्चेति शिखा प्रोक्ता हृल्लेखा कवचं स्मृतम्॥प्रणवो नेत्रमाख्यातमस्त्रं हरिहरेति च॥१०६॥स ब्रह्मा स शिवो विप्र स हरिः सैव देवराट्॥स सर्वरूपः सर्वाख्यः सोऽक्षरः परमः स्वराट्॥१०७॥एवं ध्यात्वा जपेदष्टलक्षहोमो दशांशतः॥पूजाप्रणवपीठेऽस्य सांगावरणकैर्मता॥१०८॥एवं सिद्धे मनौ ज्ञानं साधकेंद्रस्य नारद ॥ जायते तत्त्वमस्यादिवाक्योक्तं निर्विकल्पकम् ॥ १०९ ॥ कामो ङेंतो हृषीकेशो हृदयांतो गजाक्षरः ॥ऋषिर्ब्रह्मास्य गायत्री छंदो गायत्रमीरितम् ॥११०॥ देवता तु हृषीकेशो विनियोगोऽखिलाप्तये ॥कामो बीजं तथायेति शक्तिरस्य ह्युदाहृता ॥ १११ ॥बीजेनैव षडंगानि कृत्वा ध्यानं समाचरेत् ॥ पुरुषोत्तममंत्रोक्तं सर्वं वास्य प्रकीर्तितम् ॥ ११२ ॥ लक्षं जपोऽयुतं होमो घृतेनैव प्रकीर्तितः ॥ तर्पणं सर्वकामाप्त्यै प्रोक्तं संमोहिनीसुमैः ॥ ११३ ॥ श्रीबीजं च चतुर्थ्यंतः श्रीधरो ङेंतकस्तथा ॥ त्रैलोक्यमोहनः शब्दो नमोंऽतो मनुरीरितः॥ ११४ ॥ ऋषिर्ब्रह्मा च गायत्री छन्दः श्रीधरदेवता ॥ श्रीबीजं शक्तिरायेति बीजेनैव षडंगकम् ॥ ११५ ॥ पुरुषोत्तमवद्ध्यानपूजादिकमिहोदितः ॥ लक्षं जपस्तथा होम आज्येनैव दशांशतः ॥११६ ॥सुगंधश्वेतपुष्पैस्तु पूजां होमादिकं चरेत्॥एवं कृते तु विप्रेन्द्र साक्षात्स्याच्छ्रीधरः स्वयम् ॥११७॥ अच्युतानन्तगोविंदपदं ङेंतं नमोंतिमम् ॥ मंत्रोऽस्य शौनकऋषिर्विराट् छंदः प्रकीर्तितम् ॥११८॥एषां पराशर्व्यासनारदा ऋषयः स्मृताः॥विराट् छन्दः समाख्यातं परब्रह्मात्मको हरिः ॥ ११९ ॥ देवताबीजशक्ती तु पूर्वोक्ते साधकैर्मते ॥ शंखचक्रधरं देवं चतुर्बाहुं किरीटिनम् ॥ १२० ॥ सर्वैरप्यायुधैर्युक्तं गरुडोपरि संस्थितम् ॥ सनकादिमुनींद्रैस्तु सर्वदेवैरुपासितम् ॥ १२१ ॥ श्रीभूमिसहितं देवमुद्यादित्यसन्निभम् ॥ प्रातरुद्यत्सहस्रांशुमंडलोपमकुंडलम् ॥ १२२ ॥ सर्वलोकस्य रक्षार्थमनन्तं नित्यमेव हि ॥ अभयं वरदं देवं प्रयच्छंतं मुदान्वितम् ॥ १२३ ॥ एवं ध्यात्वार्चयेत्पीठे वैष्णवे सुसमाहितः ॥ आद्यावरणसंगैः स्याच्चक्रशंखगदासिभिः ॥ १२४ ॥ मुशलाब्जधनुःपाशांकुशैः प्रोक्तं द्वितीयकम्॥सनकादिकशाक्तेयव्यासनारदशौनकैः॥१२५ ॥ तृतीयं लोकपालैस्तु चतुर्थं परिकीर्तितम् ॥ लक्षं जपो दशांशेन घृतेन हवनं स्मृतम्॥ १२६ ॥ एवं सिद्धे मनौ मंत्री प्रयोगानप्युपाचरेत् ॥ श्रीवृक्षमूले देवेशं ध्यायन्वै रोगिणं स्मरन् ॥ १२७ ॥ स्पृष्ट्वा जप्त्वायुतं साध्यं स्मृत्वा वा मनसा द्विज ॥ रोगिणां रोगनिर्मुक्तिं कुर्यान्मंत्री तु मंडलात् ॥ १२८ ॥ कन्यार्थी जुहुयाल्लाजैर्बिल्वैश्चापि धनाप्तये ॥ वस्त्रार्थी गन्धकुसुमैरारोग्याय तिलैर्हुनेत् ॥ १२९ ॥

रविवारे जले स्थित्वा नाभिमात्रे जपेत्तु यः ॥ अष्टोत्तरसहस्रं वै स ज्वरं नाशयेद् ध्रुवम् ॥ १३० ॥ विवाहार्थं जपेन्मासं शशिमण्डलमध्यगम् ॥
ध्यात्वा कृष्णं लभेत्कन्यां वांछितां चापि नारद ॥ १३१ ॥ वसुदेवपदं प्रोच्य निगडच्छेदशब्दतः॥ वासुदेवाय वर्मास्त्रे स्वाहांतो मनुरीरितः॥ १३२॥
नारदोऽस्य ऋषिश्छन्दो गायत्री कृष्णदेवता ॥ वर्म वीजं शिरः शक्तिरन्यत्सर्वं दशार्णवत्॥१३३॥वालः पवनदीर्घेन्दुयुक्तो झिंटीशयुर्जलम् ॥ अत्रि
र्व्यासाय हृदयं मनुरष्टाक्षरोऽवतु ॥ १३४ ॥ ब्रह्मानुष्टुप् मुनिश्छन्दो देवः सत्यवतीसुतः ॥ आद्यं वीजं नमः शक्तिर्दीर्घाढ्यो नादिनांगकम् ॥१३५॥
व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं वामे जानुतले दधानमपरं हस्तं सुविद्यानिधिम् ॥ विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहांगद्युतिं
पाराशर्य्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये ॥१३६॥जपेदष्टसहस्राणि पायसैर्होममाचरेत् ॥ पूर्वोक्तपीठे व्यासस्य पूर्वमंगानि पूजयेत्॥ १३७॥
प्राच्यादिषु यजेत्पैलं वैशंपायनजैमिनी ॥ सुमंतुं कोणभागेषु श्रीशुकं रोमहर्षणम् ॥ १३८ ॥ उग्रश्रवसमन्यांश्च मुनीन्सेंद्रादिकायुधान् ॥ एवं सिद्ध
मनुर्मंत्री कवित्वं शोभनाः प्रजाः ॥१३९॥व्याख्यानशक्तिं कीर्तिं च लभते संपदां चयम् ॥ नृसिंहो माधवो दृष्टो लोहितो निगमादिमः ॥१४०॥
कृशानुजाया पञ्चार्णो मनुर्विषहरः परः ॥ अनंतपंक्तिपक्षीन्द्रा मुनिश्छन्दःसुरा मताः ॥ १४१ ॥ तारवह्निप्रिये वीजशक्ती मन्त्रस्य कीर्तिते ॥ज्वल
ज्वल महामंत्री स्वाहा हृदयमीरितम् ॥ १४२ ॥ गरुडेति पदस्यांते चूडाननशुचिप्रिया ॥ शिरोमन्त्रो गरुडतः शिखे स्वाहा शिखा मनुः ॥ १४३ ॥
गरुडेति पदं प्रोच्य प्रभंजययुगं वदेत् ॥ प्रभेदययुगं पश्चाद्वित्रासय विमर्दय ॥१४४॥ प्रत्येकं द्विस्ततः स्वाहा कवचस्य मनुर्मतः ॥ उग्ररूपधरांते तु
सर्वविषहरेतिच॥ १४५॥ भीषयद्वितयं प्रोच्य सर्वं दहदहेति च॥भस्मीकुरु ततः स्वाहा नेत्रमन्त्रोऽयमीरितः॥१४६॥अप्रतिहतवर्णांते वलाय प्रहते
ति च॥शासनांते तथा हुं फट् स्वाहास्त्रमनुरीरितः॥१४७॥पादे कटौ हृदि मुखे मूर्ध्नि वर्णान्प्रविन्यसेत्॥१४८॥ततस्वर्णनिभं फणींद्रनिकरैःकॢप्तांग भूषं
प्रभुं स्मर्तॄणां शमयन्तमुग्रमखिलं नृणां विषं तत्क्षणात ॥ चञ्चच्चप्रचलद्भुजंगमभयं पाण्योर्वरं विभ्रतं पक्षोच्चारितसामगीतममलं श्रीपक्षिराजं
भजे ॥ १४९ ॥ पञ्चलक्षं जपेन्मंत्रं दशांशं जुहुयात्तिलैः ॥ पूजयेन्मातृकापीठे गरुडं वेदविग्रहम् ॥ १५० ॥ चतुर्थ्यन्तः पक्षिगजः स्वाहा पीठ
मनुः स्मृतः ॥ दृष्ट्वांगं कर्णिकामध्ये नागान्यंत्रेषु पूजयेत् ॥ १५१ ॥ तद्बहिर्लोकपालांश्च वज्राद्यैर्विलसत्करान् ॥ एवं सिद्धमनुर्मंत्री
नाशयेद्गरलद्वयम् ॥ देहांते लभते चापिश्रीविष्णोः परमं पदम् ॥ १५२ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे कृष्णादि
मन्त्रभेदनिरूपणं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ सनत्कुमार उवाच ॥ किं त्वं नारद जानासि पूर्वजन्मनि यत्त्वया ॥ प्राप्तं भगवतः साक्षा

च्छूलिनो युगलात्मकम् ॥ १ ॥ कृष्णमंत्ररहस्यं च स्मर विस्मृतिमागतम् ॥ सूत उवाच ॥ इत्युक्तो नारदो विप्राः कुमारेण तु धीमता ॥
॥ २ ॥ ध्याने विवेदाशु चिरं चरितं पूर्वजन्मनः ॥ ततश्चिरं ध्यानपरो नारदो भगवत्प्रियः ॥ ३ ॥ ज्ञात्वा सर्वं सुवृत्तांतं सुप्रसन्नाननोऽब्रवीत् ॥
भगवन्सर्ववृत्तांतः पूर्वकल्पसमुद्भवः ॥ ४ ॥ मम स्मृतिमनुप्राप्तो विना युगललंभनम् ॥ तच्छ्रुत्वा वचनं तस्य नारदस्य महात्मनः ॥ ५ ॥
सनत्कुमारो भगवान् व्याजहार यथातथम् ॥ सनत्कुमार उवाच ॥ शृणु विप्र प्रवक्ष्यामि यस्मिञ्जन्मनि शूलिनः ॥ ६ ॥ प्राप्तं कृष्णरहस्यं वै
सावधानो भवाधुना ॥ अस्मात्सारस्वतात्कल्पात्पूर्वस्मिन्पंचविंशके ॥ ७ ॥ कल्पे त्वं काश्यपो जातो नारदो नाम नामतः ॥ तत्रैकदा त्वं
कैलासं प्राप्तः कृष्णस्य योगिनः ॥ ८ ॥ संप्रष्टुं परमं तत्वं शिवं कैलासवासिनम् ॥ त्वया पृष्टो महादेवो रहस्यं स्वप्रकाशितम् ॥ ९ ॥ कथया
मास तत्वेन नित्यलीलानुगं हरेः ॥ ततस्तदन्ते तु पुनस्त्वया विज्ञापितो हरः ॥ १० ॥ नित्यां लीलां हरेर्द्रष्टुं ततः प्राह सदाशिवः ॥ गोपीजन
पदस्यांते वल्लभेति पदं ततः ॥ ११ ॥ चरणाच्छरणं पश्चात्प्रपद्ये इति वै मनुः ॥ मंत्रस्यास्य ऋषिः प्रोक्तो सुरभिश्छंद एव च ॥ १२ ॥ गायत्री
देवता चास्य बल्लवीवल्लभो विभुः ॥ प्रपन्नोऽस्मीति तद्भक्तौ विनियोग उदाहृतः ॥ १३ ॥ नास्य सिद्धादिकं विप्र शोधनं न्यासकल्पनम् ॥
केवलं चिंतनं सद्यो नित्यलीलाप्रकाशकम् ॥ १४ ॥ आभ्यंतरस्य धर्मस्य साधनं वच्मि सांप्रतम् ॥ १५ ॥ संगृह्य मन्त्रं गुरुभक्तियुक्तो विचिंत्य
सर्वं मनसा तदीहितम् ॥ कृपां तदीयां निजधर्मसंस्थो विभावयन्नात्मनि तोषयेद्गुरुम् ॥ १६ ॥ सतां शिक्षेत वै धर्मान्प्रपन्नानां भयापहान् ॥
ऐहिकामुष्मिकीचिंताविधुरान् सिद्धिदायकान् ॥ १७ ॥ स्वेष्टदेवधिया नित्यं तोषयेद्वैष्णवांस्तथा ॥ भर्त्सनादिकमेतेषां न कदाचिद्विचिंतयेत् ॥ १८ ॥
पूर्वकर्मवशाद्भव्यमैहिकं भोग्यमेव च ॥ आयुष्यकं तथा कृष्णः स्वयमेव करिष्यति ॥ १९ ॥ श्रीकृष्णं नित्यलीलास्थं चिंतयेत्स्वधियानिशम् ॥
श्रीमदर्चावतारेण कृष्णं परिचरेत्सदा ॥ २० ॥ अनन्यचिंतनीयोऽसौ प्रपन्नैः शरणार्थिभिः ॥ स्थेयं च देहगेहादावुदासीनतया बुधैः ॥ २१ ॥
गुरोरवज्ञां साधूनां निंदां भेदं हरे हरौ ॥ वेदनिंदां हरेर्नामबलात्पापसमीहनम् ॥ २२ अर्थवादं हरे र्नाम्नि पाषंडं नामसंग्रहे ॥ अलसे नास्तिके
चैव हरिनामोपदेशनम् ॥ २३ ॥ नामविस्मरणं चापि नाम्न्यनादरमेव च ॥ संत्यजेद् दूरतो वत्स दोषानेतान्सुदारुणान् ॥ २४ ॥ प्रपन्नोऽस्मीति
सततं चिंतयेद्धृद्गतं हरिम् ॥ स एव पालनं नित्यं करिष्यति ममेति च ॥ २५ ॥ तवास्मि राधिकानाथ कर्मणा मनसा गिरा ॥ कृष्णकांतेति
चैवास्मि युवामेव गतिर्मम ॥ २६ ॥ दासाः सखायः पितरः प्रेयस्यश्च हरेरिह ॥ सर्वे नित्या मुनिश्रेष्ठ चिंतनीया महात्मभिः ॥ २७ ॥ गमनागमने नित्य ॥ १८० ॥

करोति वनगोष्ठयोः ॥ गोचारणं वयस्यैश्च विनासुरविघातनम् ॥ २८ ॥ सखायो द्वादशाख्याता हरेः श्रीदामपूर्वकाः ॥ राधिकायाः सुशी
लाद्याः सख्यो द्वात्रिंशदीरिताः ॥ २९ ॥ आत्मानं चिंतयेद्वत्स तासां मध्ये मनोरमाम् ॥ रूपयौवनसंपन्नां किशोरीं च स्वलंकृताम् ॥ ३० ॥
नानाशिल्पकलाभिज्ञां कृष्णभोगानुरूपिणीम् ॥ तत्सेवनसुखाह्लादभावेनातिसुनिर्वृताम् ॥ ३१ ॥ ब्राह्मं मुहूर्तमारभ्य यावदर्धनिशा भवेत् ॥ ताव
त्परिचरेत्तौ तु यथाकालानुसेवया ॥ ३२ ॥ सहस्रं च तयोर्नाम्नां पठेन्नित्यं समाहितः ॥ एतत्साधनमुद्दिष्टं प्रपन्नानां मुनीश्वर ॥ ३३ ॥ नाख्येयं
कस्यचित्तुभ्यं मया तत्त्वं प्रकाशितम् ॥ सनत्कुमार उवाच ॥ ततस्त्वं नारद पुनः पृष्टवान्वै सदाशिवम् ॥ ३४ ॥ नाम्नां सहस्रं तच्चापि प्रोक्तवां
स्तच्छृणुष्व मे ॥ ध्यात्वा वृंदावने रम्ये यमुनातीरसंगतम् ॥ ३५ ॥ कल्पवृक्षं समाश्रित्य तिष्ठंतं राधिकायुतम् ॥ पठेन्नामसहस्रं तु युगलाख्यं
महामुने ॥ ३६ ॥ देवकीनंदनः शौरिर्वासुदेवो बलानुजः ॥ गदाग्रजः कंसमोहः कंससेवकमोहनः ॥ ३७ ॥ भिन्नार्गलो भिन्नलोहः पितृबाह्यः पितृस्तुतः ॥
मातृस्तुतः शिवध्येयो यमुनाजलभेदनः ॥ ३८ ॥ व्रजवासी व्रजानंदी नंदबालो दयानिधिः ॥ लीलाबालः पद्मनेत्रो गोकुलोत्सव ईश्वरः ॥ ३९ ॥ गोपि
कानंदनः कृष्णो गोपानंदः सतां गतिः ॥ बकप्राणहरो विष्णुर्बकमुक्तिप्रदो हरिः ॥ ४० ॥ बलदोलाशयशयः श्यामलः सर्वसुंदरः ॥ पद्मनाभो
हृषीकेशः क्रीडामनुजबालकः ॥ ४१ ॥ लीलाविध्वस्तशकटो वेदमंत्राभिषेचितः ॥ यशोदानंदनः कांतो मुनिकोटिनिषेवितः ॥ ४२ ॥ नित्यं
मधुवनावासी वैकुंठः संभवः क्रतुः ॥ रमापतिर्यदुपतिर्मुरारिर्मधुसूदनः ॥ ४३ ॥ माधवो मानहारी च श्रीपतिर्भूधरः प्रभुः ॥ बृहद्वनमहा
लीलो नंदसूनुर्महासनः ॥ ४४ ॥ तृणावर्तप्राणहारी यशोदाविस्मयप्रदः ॥ त्रैलोक्यवक्त्रः पद्माक्षः पद्महस्तः प्रियंकरः ॥ ४५ ॥ ब्रह्मण्यो
धर्मगोप्ता च भूपतिः श्रीधरः स्वराट् ॥ अजाध्यक्षः शिवाध्यक्षो धर्माध्यक्षो महेश्वरः ॥ ४६ ॥ वेदांतवेद्यो ब्रह्मस्थः प्रजापतिरमोघदृक् ॥
गोपीकरावलंबी च गोपबालकसुप्रियः ॥ ४७ ॥ बालानुयायी बलवान् श्रीदामप्रिय आत्मवान् ॥ गोपीगृहांगणरतिर्भद्रः सुश्लोकमंगलः ॥ ४८ ॥
नवनीतहरो बालो नवनीतप्रियाशनः ॥ बालवृन्दी मर्कवृंदी चकिताक्षः पलायितः ॥ ४९ ॥ यशोदातर्जितः कंपी मायारुदितशोभनः ॥ दामोदरोऽप्रमे
यात्मा दयालुर्भक्तवत्सलः ॥ ५० ॥ सुबद्धोलूखले नम्रशिरा गोपीकदर्थितः ॥ वृक्षभंगी शोकभंगी धनदात्मजमोक्षणः ॥ ५१ ॥ देवर्षिवचनश्लाघी भक्त
वात्सल्यसागरः ॥ व्रजकोलाहलकरो व्रजानंदविवर्द्धनः ॥ ५२ ॥ गोपात्मा प्रेरकः साक्षी वृंदावननिवासकृत् ॥ वत्सपालो वत्सपतिर्गोपदारकमं
डनः ॥ ५३ ॥ बालक्रीडो बालरतिर्बालकः कनकांगदी ॥ पीताम्बरो हेममाली मणिमुक्ताविभूषणः ॥ ५४ ॥ किंकिणीकटकी सूत्री नूपुरी मुद्रि





कान्विनः ॥ वत्सासुरपतिध्वंसी बकासुरविनाशनः ॥ ५५ ॥ अघासुरविनाशी च विनिद्रीकृतबालकः ॥ आद्य आत्मप्रदः संगी यमुनातीरभोजनः ॥ ५६ ॥ गोपालमंडलीमध्यः सर्वगोपालभूषणः ॥ कृतहस्ततलग्रासो व्यंजनाश्रितशाखिकः ॥ ५७ ॥ कृतबाहुशृंगयष्टिगुंजालंकृतकंठकः ॥ मयूरपिच्छमुकुटो वनमालाविभूषितः ॥ ५८ ॥ गैरिकाचित्रितवपुर्नवमेघवपुः स्मरः ॥ कोटिकंदर्पलावण्यो लसन्मकरकुंडलः ॥ ५९ ॥ आजानुबाहुर्भगवान्निद्रारहितलोचनः ॥ कोटिसागरगांभीर्यः कालकालः सदाशिवः ॥ ६० ॥ विरंचिमोहनवपुर्गोपवत्सवपुर्द्धरः ॥ ब्रह्मांडकोटिजनको ब्रह्ममोहविनाशकः ॥ ६१ ॥ ब्रह्मा ब्रह्मेडितः स्वामी शक्रदर्पादिनाशनः ॥ गिरिपूजोपदेष्टा च धृतगोवर्द्धनाचलः ॥ ६२ ॥ पुरंदरेडितः पूज्यः कामधेनुप्रपूजितः ॥ सर्वतीर्थाभिषिक्तश्च गोविंदो गोपरक्षकः ॥ ६३ ॥ कालियार्तिकरः क्रूरो नागपत्नीडितो विराट् ॥ धेनुकारिः प्रलंबारिर्वृषासुरविमर्दनः ॥ ६४ ॥ मायासुरात्मजध्वंसी केशिकंठविदारकः ॥ गोपगोप्ता धेनुगोप्ता दावाग्निपरिशोषकः ॥ ६५ ॥ गोपकन्यावस्त्रहारी गोपकन्यावरप्रदः ॥ यज्ञपत्न्यन्नभोजी च मुनिमानापहारकः ॥ ६६ ॥ जलेशमानमथनो नन्दगोपालजीवनः ॥ गन्धर्वशापमोक्ता च शंखचूडशिरोहरः ॥ ६७ ॥ वंशी वटी वेणुवादी गोपीचिन्तापहारकः ॥ सर्वगोप्ता समाह्वानः सर्वगोपीमनोरथः ॥ ६८ ॥ व्यंगधर्मप्रवक्ता च गोपीमण्डलमोहनः ॥ रासक्रीडारसास्वादी रसिको राधिकाधवः ॥ ६९ ॥ किशोरीप्राणनाथश्च वृषभानुसुताप्रियः ॥ सर्वगोपीजनानंदी गोपीजनविमोहनः ॥ ७० ॥ गोपिकागीतचरितो गोपीनर्तनलालसः ॥ गोपीस्कन्धाश्रितकरो गोपिकाचुंबनप्रियः ॥ ७१ ॥ गोपिकामार्जितमुखो गोपीव्यंजनवीजितः ॥ गोपिकाकेशसंस्कारी गोपिकापुष्पसंस्तरः ॥ ७२ ॥ गोपिकाहृदयालंबी गोपीवहनतत्परः ॥ गोपिकामदहारी च गोपिकापरमार्जितः ॥ ७३ ॥ गोपिकाकृतसंनीलो गोपिकासंस्मृतप्रियः ॥ गोपिकावन्दितपदो गोपिकावशवर्तनः ॥ ७४ ॥ राधापराजितः श्रीमान्निकुञ्जेसुविहारवान् ॥ कुञ्जप्रियः कुञ्जवासी वृन्दावनविकासनः ॥ ७५ ॥ यमुनाजलसिक्तांगो यमुनासौख्यदायकः ॥ शशिसंस्तंभनः शूरः कामी कामविमोहनः ॥ ७६ ॥ कामाद्याः कामनाथश्च काममानसभेदनः ॥ कामदः कामरूपश्च कामिनीकामसंचयः ॥ ७७ ॥ नित्यक्रीडो महालीलः सर्वः सर्वगतस्तथा ॥ परमात्मा पराधीशः सर्वकारणकारणः (म्) ॥ ७८ ॥ गृहीतनारदवचा ह्यक्रूरपरिचिंतितः ॥ अक्रूरवन्दितपदो गोपिकातोषकारकः ॥ ७९ ॥ अक्रूरवाक्यसंग्राही मथुरावासकारणः ( म् ) ॥ अक्रूरतापशमनो रजकायुःप्रणाशनः ॥ ८० ॥ मथुरानन्ददायी च कंसवस्त्रविलुण्ठनः ॥ कंसवस्त्रपरीधानो गोपवस्त्रप्रदायकः ॥ ८१ ॥ सुदामगृहगामी च सुदामपरिपूजितः ॥ तंतुवाय

कंसप्रीतः कुब्जाचंदनलेपनः ॥ ८२ ॥ कुब्जारूपप्रदो विज्ञो मुकुंदो विष्टरश्रवाः ॥ सर्वज्ञो मथुरालोकी सर्वलोकाभिनंदनः ॥ ८३ ॥ कृपा
कटाक्षदर्शी च दैत्यारिर्देवपालकः ॥ सर्वदुःखप्रशमनो धनुर्भङ्गी महोत्सवः ॥ ८४ ॥ कुवलयापीडहंता दंतस्कंधबलाग्रणीः ॥ कल्परूपधरो
धीरो दिव्यवस्त्रानुलेपनः ॥ ८५ ॥ मल्लरूपो महाकालः कामरूपी बलान्वितः ॥ कंसत्रासकरो भीमो मुष्टिकांतश्च कंसहा ॥ ८६ ॥ चाणूरघ्नो
भयहरः शलारिस्तोशलांतकः ॥ वैकुंठवासी कंसारिः सर्वदुष्टनिषूदनः ॥ ८७ ॥ देवदुंदुभिनिर्घोषी पितृशोकनिवारणः ॥ यादवेंद्रः सतांनाथो
यादवारिप्रमर्द्दनः ॥८८॥ शौरिशोकविनाशी च देवकीतापनाशनः ॥ उग्रसेनपरित्राता उग्रसेनाभिपूजितः ॥८९॥ उग्रसेनाभिषेकी च उग्रसेनदया
परः ॥ सर्वसात्वतसाक्षी च यदूनामभिनंदनः ॥ ९० ॥ सर्वमाथुरसंसेव्यः करुणो भक्तबांधवः ॥ सर्वगोपालधनदो गोपीगोपाललालसः ॥ ९१ ॥
शौरिदत्तोपवीती च उग्रसेनदयाकरः ॥ गुरुभक्तो ब्रह्मचारी निगमाध्ययने रतः ॥ ९२ ॥ संकर्षणसहाध्यायी सुदामसुहृदेव च ॥ विद्यानिधिः
कलाकोशो मृतपुत्रप्रदस्तथा ॥ ९३ ॥ चक्री पांचजनी चैव सर्वनारकिमोचनः ॥ यमार्चितः परो देवो नामोच्चारवसो (शो)ऽच्युतः ॥९४॥ कुब्जा
विलासी सुभगो दीनबंधुरनूपमः ॥ अक्रूरगृहगोप्ता च प्रतिज्ञापालकः शुभः ॥ ९५ ॥ जरासंधजयी विद्वान् यवनांतो द्विजाश्रयः ॥ मुचुकुंदप्रियकरो
जरासंधपलायितः ॥ ९६ ॥ द्वारकाजनको गूढो ब्रह्मण्यः सत्यसंगरः ॥ लीलाधरः प्रियकरो विश्वकर्मा यशःप्रदः ॥ ९७ ॥ रुक्मिणीप्रियसंदेशो
रुक्मशोकविवर्द्धनः ॥ चैद्यशोकालयः श्रेष्ठो दुष्टराजन्यनाशनः ॥ ९८ ॥ रुक्मिवैरूप्यकरणो रुक्मिर्णीवचने रतः ॥ बलभद्रवचोग्राही
मुक्तरुक्मी जनार्दनः ॥ ९९ ॥ रुक्मिणीप्राणनाथश्च सत्यभामापतिः स्वयम् ॥ भक्तपक्षी भक्तिवश्यो ह्यक्रूरमणिदायकः ॥ १०० ॥
शतधन्वाप्राणहारी ऋक्षराजसुताप्रियः ॥ सत्राजित्तनयाकांतो मित्रविंदापहारकः ॥ १०१ ॥ सत्यापतिर्लक्ष्मणाजित्पूज्यो भद्राप्रियंकरः ॥ नरका
सुरघाती च लीलाकन्याहरो जयी ॥ १०२ ॥ मुरारिर्मदनेशोऽपि धरित्रीदुःखनाशनः ॥ वैनतेयी स्वर्गगामी अदित्य कुंडलप्रदः ॥ १०३ ॥
इंद्रार्चितो रमाकांतो वज्रिभार्याप्रपूजितः ॥ पारिजातापहारी च शक्रमानापहारकः ॥ १०४ ॥ प्रद्युम्नजनकः सांबतातो बहुसुतो विधुः ॥ गर्गा
चार्यः सत्यगतिर्धर्माधारो धराधरः ॥ १०५ ॥ द्वारकामंडनः श्लोक्यः सुश्लोको निगमालयः ॥ पौंड्रकप्राणहारी च काशीराजशिरोहरः ॥१०६॥
अवैष्णवविप्रदाही सुदक्षिणभयावहः ॥ जरासंधविदारी च धर्मनन्दनयज्ञकृत् ॥ १०७ ॥ शिशुपालशिरश्छेदी दंतवक्त्रविनाशनः ॥ विदूरथांतकः
श्रीशः श्रीदो द्विविदनाशनः ॥ १०८ ॥ रुक्मिणीमानहारी च रुक्मिणीमानवर्द्धनः ॥ देवर्षिशापहर्ता च द्रौपदीवाक्यपालकः ॥ १०९ ॥दुर्वासो





भयहारी च पांचालीस्मरणागतः ॥ पार्थदूतः पार्थमन्त्री पार्थदुःखौघनाशनः ॥ ११० ॥ पार्थमानापहारी च पार्थजीवनदायकः ॥ पांचाली
वस्त्रदाता च विश्वपालकपालकः ॥ १११ ॥ श्वेताश्वसारथिः सत्यः सत्यसाध्यो भयापहः ॥ सत्यसंधः सत्यरतिः सत्यप्रिय उदारधीः ॥ ११२ ॥
महासेनजयी चैव शिवसैन्यविनाशनः ॥ बाणासुरभुजच्छेत्ता बाणबाहुवरप्रदः ॥ ११३ ॥ तार्क्ष्यमानापहारी च तार्क्ष्यतेजोविवर्द्धनः ॥
रामस्वरूपधारी च सत्यभामामुदावहः ॥ ११४ ॥ रत्नाकरजलक्रीडो व्रजलीलाप्रदर्शकः ॥ स्वप्रतिज्ञापरिध्वंसी भीष्माज्ञापरिपालकः ॥ ११५ ॥
वीरायुधहरः कालः कालिकेशो महाबलः ॥ बर्बरीषशिरोहारी बर्बरीषशिरःप्रदः ॥ ११६ ॥ धर्मपुत्रजयी शूरदुर्योधनमदांतकः ॥ गोपिकाप्री
तिनिर्बंधनित्यक्रीडो व्रजेश्वरः ॥ ११७ ॥ राधाकुंडरतिर्धन्यः सदांदोलसमाश्रितः ॥ सदामधुवनानन्दी सदावृंदावनप्रियः ॥ ११८ ॥
अशोकवनसन्नद्धः सदातिलकसंगतः ॥ सदागोवर्द्धनरतिः सदा गोकुलवल्लभः ॥ ११९ ॥ भांडीरवटसंवासी नित्यं वंशीवटस्थितः ॥ नन्द
ग्रामकृतावासो वृषभानुग्रहप्रियः ॥ १२० ॥ गृहीतकामिनीरूपो नित्यं रासविलासकृत् ॥ वल्लवीजनसंगोप्ता वल्लवीजनवल्लभः ॥ १२१ ॥ देवशर्म
कृपाकर्ता कल्पपादपसंस्थितः ॥ शिलानुगन्धनिलयः पादचारी घनच्छविः ॥ १२२ ॥ अतसीकुसुमप्रख्यः सदा लक्ष्मीकृपाकरः ॥ त्रिपुरारि
प्रियकरो ह्युग्रधन्वापराजितः ॥ १२३ ॥ षड्धुरध्वंसकर्ता च निकुंभप्राणहारकः ॥ वज्रनाभपुरध्वंसी पौंड्रकप्राणहारकः ॥ १२४ ॥ बहुला
श्वप्रीतिकर्ता द्विजवर्यप्रियंकरः॥ शिवसंकटहारी च वृकासुरविनाशनः ॥ १२५ ॥ भृगुसत्कारकारी च शिवसात्त्विकताप्रदः ॥ गोकर्णपूजकः सांब
कुष्ठविध्वंसकारणः ॥ १२६ ॥ वेदस्तुतो वेदवेत्ता यदुवंशविवर्द्धनः॥ यदुवंशविनाशी च उद्धवोद्धारकारकः ॥१२७॥ राधा च राधिका चैव आनंदा
वृषभानुजा॥वृन्दावनेश्वरी पुण्या कृष्णमानसहारिणी॥१२८॥प्रगल्भा चतुरा कामा कामिनी हरिमोहिनी॥ललिता मधुरा माध्वी किशोरी कनकप्रभा
॥१२९॥जितचंद्रा जितमृगा जितसिंहा जितद्विपा ॥ जितरंभा जितपिका गोविंदहृदयोद्भवा॥१३०॥जितबिंबा जितशुका जितपद्मा कुमारिका॥
श्रीकृष्णाकर्षणा देवी नित्यं युग्मस्वरूपिणी॥१३१॥नित्यं विहारिणी कांता रसिका कृष्णवल्लभा ॥आमोदिनी मोदवती नंदनंदनभूषिता॥१३२॥
दिव्यांबरा दिव्यहारा मुक्तामणिविभूषिता॥ कुञ्जप्रिया कुञ्जवासा कुञ्जनायकनायिका ॥१३३॥चारुरूपा चारुवक्त्रा चारुहेमांगदा शुभा ॥ श्रीकृष्ण
वेणुसंगीता मुरलीहारिणी शिवा ॥ १३४ ॥ भद्रा भगवती शांता कुमुदा सुन्दरी प्रिया ॥ कृष्णक्रीडा कृष्णरतिः श्रीकृष्णसहचारिणी ॥ १३५ ॥
वंशीवटप्रियस्थाना युग्मायुग्मस्वरूपिणी ॥ भांडीरवासिनी शुभ्रा गोपीनाथप्रिया सखी ॥ १३६ ॥ श्रुतिनिःश्वसिता दिव्या गोविंदरस

दायिनी ॥ श्रीकृष्णप्रार्थनीशाना महानन्दप्रदायिनी ॥ १३७ ॥ वैकुंठजनसंसेव्या कोटिलक्ष्मीसुखावहा ॥ कोटिकंदर्पलावण्या रतिकोटि
रतिप्रदा ॥ १३८ ॥ भक्तिग्राह्या भक्तिरूपा लावण्यसरसी उमा ॥ ब्रह्मरुद्रादिसंराध्या नित्यं कौतूहलान्विता ॥ १३९ ॥ नित्यलीला नित्यकामा
नित्यशृंगारभूषिता ॥ नित्यवृन्दावनरसा नन्दनन्दनसंयुता ॥ १४० ॥ गोपिकामण्डलीयुक्ता नित्यं गोपालसंगता ॥ गोरसक्षेपणी शूरा सानन्दा
नन्ददायिनी ॥ १४१ ॥ महालीला प्रकृष्टा च नागरी नगचारिणी ॥ नित्यमाघूर्णिता पूर्णा कस्तूरीतिलकान्विता ॥ १४२ ॥ पद्मा
श्यामा मृगाक्षी च सिद्धिरूपा रसावहा ॥ कोटिचन्द्रानना गौरी कोटिकोकिलसुस्वरा ॥ १४३ ॥ शीलसौंदर्यनिलया नन्दनन्दनलालिता ॥
अशोकवनसंवासा भांडीरवनसङ्गता ॥ १४४ ॥ कल्पद्रुमतलाविष्टा कृष्णा विश्वा हरिप्रिया ॥ अजागम्या भवागम्या गोवर्द्धनकृतालया॥ १४५ ॥
यमुनातीरनिलया शश्वद्गोविंदजल्पिनी ॥ शश्वन्मानवती स्निग्धा श्रीकृष्णपरिवन्दिता ॥ १४६॥ कृष्णस्तुता कृष्णवृता श्रीकृष्णहृदयालया॥
देवद्रुमफला सेव्या वृन्दावनरसालया ॥ १४७ ॥ कोटितीर्थमयी सत्या कोटितीर्थफलप्रदा ॥ कोटियोगसुदुष्प्राप्या कोटियज्ञदुरा
श्रया ॥ १४८ ॥ मनसा शशिलेखा च श्रीकोटिसुभगाऽनघा ॥ कोटिमुक्तसुखा सौम्या लक्ष्मीकोटिविलासिनी ॥ १४९ ॥ तिलोत्तमा
त्रिकालस्था त्रिकालज्ञाप्यधीश्वरी ॥ त्रिवेदज्ञा त्रिलोकज्ञा तुरीयांतनिवासिनी ॥ १५० ॥ दुर्गाराध्या रमाराध्या विश्वाराध्या चिदात्मिका ॥
देवाराध्या पराराध्या ब्रह्माराध्या परात्मिका ॥ १५१ ॥ शिवाराध्या प्रेमसाध्या भक्ताराध्या रसात्मिका ॥ कृष्णप्राणार्पिणी भामा शुद्ध
प्रेमविलासिनी ॥ १५२ ॥ कृष्णाराध्या भक्तिसाध्या भक्तवृन्दनिषेविता ॥ विश्वाधारा कृपाधारा जीवधारातिनायिका ॥ १५३ ॥
शुद्धप्रेममयी लज्जा नित्यसिद्धा शिरोमणिः ॥ दिव्यरूपा दिव्यभोगा दिव्यवेषा मुदान्विता ॥ १५४ ॥ दिव्यांगनावृन्दसारा नित्यनूतन
यौवना ॥ परब्रह्मावृता ध्येया महारूपा महोज्ज्वला ॥ १५५ ॥ कोटिसूर्यप्रभा कोटिचन्द्रबिंबाधिकच्छविः ॥ कोमलामृतवागाद्या वेदाद्या
वेददुर्लभा ॥ १५६ ॥ कृष्णासक्ता कृष्णभक्ता चन्द्रावलिनिषेविता ॥ कलाषोडशसंपूर्णा कृष्णदेहार्द्धधारिणी ॥ १५७ ॥ कृष्णबुद्धिः कृष्णसारा
कृष्णरूपविहारिणी ॥ कृष्णकान्ता कृष्णधना कृष्णमोहनकारिणी॥ १५८॥ कृष्णदृष्टिः कृष्णगोत्री कृष्णदेवी कुलोद्वहा ॥ सर्वभूतस्थितावात्मा
सर्वलोकनमस्कृता ॥ १५९ ॥ कृष्णदात्री प्रेमधात्री स्वर्णगात्री मनोरमा ॥ नगधात्री [illegible] त्री महादेवी शुभंकरी ॥ १६० ॥ श्रीशेषदेवज
ननी अवतारगणप्रसूः ॥ उत्पलांकारविंदांका प्रसादांका द्वितीयका ॥ १६१ ॥ रथांका [illegible] ा च कुंडलांकपदस्थिता ॥ छत्रांका विद्युदंका



च पुष्पमालांकितापि च ॥ १६२ ॥ दंडांका मुकुटांका च पूर्णचन्द्रा शुकांकिता ॥ ।हारपाका च वृन्दाकुंजविहारिणी ॥ १६३ ॥
कृष्णप्रबोधनकरी कृष्णशेषान्नभोजिनी ॥ पद्मकेसरमध्यस्था संगीतागमवेदिनी ॥ १६४ ।टिकल्पांतभ्रूभंगा अप्राप्तप्रलयाच्युता ॥ सर्वसत्त्व
निधिः पद्मशंखादिनिधिसेविता ॥ १६५ ॥ अणिमादिगुणैश्वर्या देववृन्दविमोहिनी ॥ सर्वानन्दप्रदा सर्वा सुवर्णलतिकाकृतिः ॥ १६६ ॥ कृष्णा
भिसारसंकेता मालिनी नृत्यपंडिता ॥ गोपीसिंधुसकाशाह्वा गोपमंडपशोभिनी ॥ १६७ ॥ श्रीकृष्णप्रीतिदा भीता प्रत्यंगपुलकांचिता ॥ श्रीकृष्णा
लिंगनरता गोविंदविरहाक्षमा ॥ १६८ ॥ अनंतगुणसंपन्ना कृष्णकीर्तनलालसा ॥ बीजत्रयमयी मूर्तिः कृष्णानुग्रहवांछिता ॥ १६९ ॥ विमलादि
निषेव्या च ललिताद्यार्चिता सती ॥ पद्मवृन्दस्थिता हृष्टा त्रिपुरापरिसेविता ॥ १७० ॥ वृन्तावत्यर्चिता श्रद्धा दुर्ज्ञेया भक्तवल्लभा ॥ दुर्लभा
सांद्रसौख्यात्मा श्रेयोहेतुः सुभोगदा ॥ १७१ ॥ सारंगा शारदा बोधा सद्वृंदावनचारिणी ॥ ब्रह्मानन्दा चिदानन्दा ध्यानानन्दार्द्धमात्रिका ॥
॥१७२॥ गंधर्वा सुरतज्ञा च गोविंदप्राणसंगमा ॥ कृष्णांगभूषणा रत्नभूषणा स्वर्णभूषिता॥१७३॥श्रीकृष्णहृदयावासमुक्ताकनकनालि (सि) का॥
सद्रत्नकंकणयुता श्रीमन्नीलगिरिस्थिता ॥ १७४ ॥ स्वर्णनूपुरसंपन्ना स्वर्णकिंकिणिमंडिता ॥ अशेषरासकुतुका रंभोरूस्तनुमध्यमा ॥ १७५ ॥
पराकृतिः परानन्दा परस्वर्गविहारिणी ॥ प्रसूनकबरी चित्रा महासिंदूरसुन्दरी ॥ १७६ ॥ कैशोरवयसा बाला प्रमदाकुलशेखरा ॥ कृष्णाधरसुधा
स्वादा श्यामप्रेमविनोदिनी ॥ १७७ ॥ शिखिपिच्छलसच्चूडा स्वर्णचंपकभूषिता ॥ कुंकुमालक्तकस्तूरीमंडिता चापराजिता ॥ १७८ ॥ हेमह
रान्वितापुष्पा हाराढ्या रसवत्यपि ॥ माधुर्य्यमधुरा पद्मा पद्महस्ता सुविश्रुता ॥ १७९ ॥ भ्रूभंगाभंगकोदंडकटाक्षशरसंधिनी ॥ शेषदेवा
शिरस्था च नित्यस्थलविहारिणी ॥ १८० ॥ कारुण्यजलमध्यस्था नित्यमत्ताधिरोहिणी ॥ अष्टभाषवती चाष्टनायिका लक्षणान्विता ॥ १८१ ॥
सुनीतिज्ञा श्रुतिज्ञा च सर्वज्ञा दुःखहारिणी ॥ रजोगुणेश्वरी चैव जरच्चंद्रनिभानना ॥ १८२ ॥ केतकीकुसुमाभासा सदा सिंधुवनस्थिता ॥हेमपुष्पा
धिककरा पञ्चशक्तिमयी हिता ॥ १८३ ॥ स्तनकुंभी नराढ्या च क्षीणापुण्या यशस्विनी ॥ वैराजसूयजननी श्रीशा भुवनमोहिनी ॥ १८४ ॥
महाशोभा महामाया महाकांतिर्महास्मृतिः ॥ महामोहा महाविद्या महाकीर्तिर्महारतिः ॥ १८५ ॥ महाधैर्या महावीर्या महाशक्तिर्महाद्युतिः ॥
महागौरी महासंपन्महाभोगविलासिनी ॥ १८६ ॥ समया भक्तिदाशोका वात्सल्यरसदायिनी ॥ सुहृद्भक्तिप्रदा स्वच्छा माधुर्यरसव
र्षिणी ॥१८७ ॥ भावभक्तिप्रदा शुद्धप्रेमभक्तिविधायिनी ॥ गोपरामाभिरामा च क्रीडारामा परेश्वरी ॥ १८८ ॥ नित्यरामा चात्मरामा

कृष्णरामा रमेश्वरी ॥ एकानेकजगद्व्याप्ता विश्वलीलाप्रकाशिनी ॥ १८९ ॥ सरस्वतीशा दुर्गेशा जगदीशा जगद्विधिः ॥ विष्णुवंशनिवासा च विष्णुवंशसमुद्भवा ॥ १९० ॥ विष्णुवंशस्तुता कर्त्री विष्णुवंशावनी सदा ॥ आरामस्था वनस्था च सूर्य्यपुत्र्यवगाहिनी ॥ १९१ ॥ प्रीतिस्था नित्ययंत्रस्था गोलोकस्था विभूतिदा ॥ स्वानुभूतिस्थिता व्यक्ता सर्वलोकनिवासिनी ॥ १९२ ॥ अमृता ह्यद्भुता श्रीमन्नारायणसमीडिता ॥ अक्षरापि च कूटस्था महापुरुषसंभवा ॥ १९३ ॥ औदार्यभावसाध्या च स्थूलसूक्ष्मातिरूपिणी ॥ शिरीषपुष्पमृदुला गांगेयमुकुरप्रभा ॥ १९४ ॥ नीलोत्पलजिताक्षी च सद्रत्नकवरान्विता ॥ प्रेमपर्यंकनिलया तेजोमंडलमध्यगा ॥ १९५ ॥ कृष्णांगगोपनाऽभेदा लीलावरणनायिका ॥ सुधासिंधुसमुल्लासामृतास्यंदविधायिनी ॥ १९६ ॥ कृष्णचित्ता रासचित्ता प्रेमचित्ता हरिप्रिया ॥ अचिंतनगुणग्रामा कृष्णलीला मलापहा ॥ १९७ ॥ राससिंधुशशांका च रासमंडलमंडिनी ॥ नतव्रता सिंहरीच्छा सुमूर्तिः सुरवंदिता ॥ १९८ ॥ गोपीचूडामणिर्गोपीगणेड्या विरजाधिका ॥ गोपप्रेष्ठा गोपकन्या गोपनारी सुगोपिका ॥ १९९ ॥ गोपधामा सुदामांबा गोपाली गोपमोहिनी ॥ गोपभूषा कृष्णभूषा श्रीवृन्दावनचंद्रिका ॥ २०० ॥ वीणादिघोषनिरता रासोत्सवविकासिनी ॥ कृष्णचेष्टा परिज्ञाता कोटिकंदर्पमोहिनी ॥ २०१ ॥ श्रीकृष्णगुणनागाढ्या देवसुंदरिमोहिनी ॥ कृष्णचंद्रमनोज्ञा च कृष्णदेवसहोदरी ॥ २०२ ॥ कृष्णाभिलाषिणी कृष्णप्रेमानुग्रहवांछिता ॥ क्षेमा च मधुरालापा भ्रुवोमाया सुभद्रिका ॥ २०३ ॥ प्रकृतिः परमानंदा नीपद्रुमतलस्थिता ॥ कृपाकटाक्षा बिंबोष्ठी रंभा चारुनितंबिनी ॥ २०४ ॥ स्मरकेलिनिधाना च गंडताटंकमंडिता ॥ हेमाद्रिकांतिरुचिरा प्रेमाढ्या मदमंथरा ॥ २०५ ॥ कृष्णचिंता प्रेमचिंता रतिचिन्ता च कृष्णदा ॥ रासचिंता भावचिंता शुद्धचिंता महारसा ॥ २०६ ॥ कृष्णादृष्टित्रुटियुगा दृष्टिपक्ष्मविनिंदिनी ॥ कन्दर्पजननी मुख्या वैकुंठगतिदायिनी ॥ २०७ ॥ रासभावा प्रियाश्लिष्टा प्रेष्ठा प्रथमनायिका ॥ शुद्धा सुधादेहिनी च श्रीरामा रसमञ्जरी ॥ २०८ ॥ सुप्रभावा शुभाचारा स्वर्णदी नर्मदांबिका ॥ गोमती चंद्रभागेड्या सरयूस्ताम्रपर्णिसूः ॥ २०९ ॥ निष्कलंकचरित्रा च निर्गुणा च निरंजना ॥ एतन्नामसहस्रं तु युग्मरूपस्य नारद ॥ २१० ॥ पठनीयं प्रयत्नेन वृन्दावनरसावहे ॥ महापापप्रशमनं वंध्यात्वविनिवर्तकम् ॥ २११ ॥ दारिद्र्यशमनं रोगनाशनं कामदं महत् ॥ पापापहं वैरिहरं राधामाधवभक्तिदम् ॥ २१२ ॥ नमस्तस्मै भगवते कृष्णायाकुंठमेधसे ॥ राधासंगसुधासिंधौ नमो नित्यविहारिणे ॥ २१३ ॥ राधादेवी जगत्कर्त्री जगत्पालनतत्परा ॥ जगल्लयविधात्री च सर्वेशी सर्वसूतिका ॥ २१४ ॥ तस्या नामसहस्रं





वे मया प्रोक्तं मुनीश्वर॥भुक्तिमुक्तिप्रदं दिव्यं किं भूयःश्रोतुमिच्छसि॥२१९॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे राधाकृष्ण सह
स्रनामकथनं नाम द्व्यशीतितमोऽध्यायः॥८२॥ श्रीशौनक उवाच॥ साधु सूत महाभाग जगदुद्धारकारकम्॥महातंत्रविधानं नः कुमारोक्तं त्वयोदितम्
॥ १ ॥ अलभ्यमेतत्तंत्रेषु पुराणेष्वपि मानद ॥ यदिहोदितमस्मभ्यं त्वयातिकरुणात्मना ॥ २ ॥ नारदो भगवान्सूत लोकोद्धरणतत्परः ॥ भूयः
पप्रच्छ किं साधो कुमारं विदुषां वरम् ॥ ३ ॥ सूत उवाच ॥ श्रुत्वा स नारदो विप्राः युग्मनामसहस्रकम् ॥ सनत्कुमारमप्याह प्रणम्य ज्ञानिनां
वरम् ॥ ४ ॥ नारद उवाच ॥ ब्रह्मंस्त्वया समाख्याता विधयस्तंत्रचोदिताः ॥ तत्रापि कृष्णमंत्राणां वैभवं ह्युदितं महत ॥ ५ ॥ या तत्र राधिका
देवी सर्वाद्या समुदाहृता ॥ तस्या अंशावताराणां चरितं मंत्रपूर्वकम् ॥ ६ ॥ तंत्रोक्तं वद सर्वज्ञ त्वामहं शरणं गतः ॥ शक्तेस्तंत्राण्यनेकानि शिवो
क्तानि मुनीश्वर ॥ ७ ॥ यानि तत्सारमुद्धृत्य साकल्येनाभिधेहि नः॥ तच्छ्रुत्वा वचनं तस्य नारदस्य महात्मनः ॥८॥ सनत्कुमारः प्रोवाच स्मृत्वा
राधापदांबुजम्॥सनत्कुमार उवाच ॥शृणु नारद वक्ष्यामि राधांशानां समुद्भवम्॥९॥शक्तीनां परमाश्चर्यं मंत्रसाधनपूर्वकम्॥ या तु राधा मया प्रोक्ता
कृष्णार्द्धांगसमुद्भवा ॥ १० ॥ गोलोकवासिनी सा तु नित्या कृष्णसहायिनी॥तेजोमंडलमध्यस्था दृश्यादृश्यस्वरूपिणी ॥ ११ ॥ कदाचित्तु
तया सार्द्धं स्थितस्य मुनिसत्तम ॥ कृष्णस्य वामभागात्तु जातो नारायणः स्वयम् ॥ १२ ॥ राधिकायाश्च वामांगान्महालक्ष्मीर्बभूव ह ॥ ततः
कृष्णो महालक्ष्मीं दत्त्वा नारायणाय च ॥ १३ ॥ वैकुंठे स्थापयामास शश्वत्पालनकर्मणि ॥ अथ गोलोकनाथस्य लोम्नां विवरतो मुने ॥ १४ ॥
जाताश्चासंख्यगोपालास्तेजसा वयसा समाः॥ प्राणतुल्यप्रियाः सर्वे बभूवुः पार्षदा विभोः ॥ १५ ॥ राधांगलोमकूपेभ्यो बभूवुर्गोपकन्यकाः ॥
राधातुल्याः सर्वतश्च राधादास्यः प्रियंवदाः ॥ १६ ॥ एतस्मिन्नंतरे विप्र सहसा कृष्णदेहतः ॥ आविर्बभूव सा दुर्गा विष्णुमाया सनातनी ॥ १७॥
देवीनां बीजरूपा च मूलप्रकृतिरीश्वरी॥परिपूर्णतमा तेजःस्वरूपा त्रिगुणात्मिका॥१८॥ सहस्रभुजसंयुक्ता नानाशस्त्रा त्रिलोचना॥या तु संसारवृक्षस्य
बीजरूपा सनातनी ॥ १९ ॥ रत्नसिंहासनं तस्यै प्रददौ राधिकेश्वरः ॥ एतस्मिन्नंतरे तत्र सस्त्रीकस्तु चतुर्मुखः ॥ २० ॥ ज्ञानिनां प्रवरः श्रीमान्
पुमानोंकारमुच्चरन् ॥ कमंडलुधरो जातस्तपस्वी नाभितो हरेः ॥ २१ ॥ स तु संस्तूय सर्वेशं सावित्र्या भार्यया सह ॥ निषसादासने रम्ये विभोस्त ॥ १८४ ॥
स्याज्ञया मुने ॥ २२ ॥ अथ कृष्णो महाभाग द्विधारूपो बभूव ह ॥ वामार्द्धांगो महादेवो दक्षार्द्धो गोपिकापतिः॥२३॥ पंचवक्त्रस्त्रिनेत्रोऽसौ वामा
र्द्धांगो मुनीश्वर॥ स्तुत्वा कृष्णं समागतो निषसाद हरेः पुरः ॥२४॥ अथ कृष्णश्चतुर्वक्त्रं प्राह सृष्टिं कुरु प्रभो ॥ सत्यलोके स्थितो नित्यं गच्छ मां

स्मर सर्वदा ॥ २५ ॥एवमुक्तस्तु हरिणा प्रणम्य जगदीश्वरम् ॥जगाम भार्यया साकं स तु सृष्टिं करोति वै॥२६॥पितास्माकं मुनिश्रेष्ठ मानसीं कल्प
दैविकीम्॥ ततः पश्चात्स्वयं कृष्णः प्राह महामते॥२७॥ दुर्गां गृहाण विश्वेश शिवलोके तपश्चर॥यावत्सृष्टिस्तदंते तु लोकान्संहर सर्वतः ॥२८॥
सोऽपि कृष्णं नमस्कृत्य शिवलोकं जगाम ह ॥ ततः कालांतरे ब्रह्मन्कृष्णस्य परमात्मनः ॥ २९ ॥ वक्त्रात्सरस्वती जाता वीणापुस्तकधारिणी ॥
तामादिदेश भगवान् वैकुंठं गच्छ मानदे ॥ ३० ॥ लक्ष्मीसमीपे तिष्ठ त्वं चतुर्भुजसमाश्रया ॥सापि कृष्णं नमस्कृत्य गता नारायणांतिकम् ॥३१॥
एवं पञ्चविधा जाता सा राधा सृष्टिकारणम् ॥ आसां पूर्णस्वरूपाणां मंत्रध्यानार्चनादिकम् ॥ ३२ ॥ वदामि शृणु विप्रेंद्र लोकानां सिद्धिदायकम्॥
तारः क्रियायुक् प्रतिष्ठा प्रीत्याढ्या च ततः परम् ॥ ३३ ॥ ज्ञानामृता क्षुधायुक्ता वह्निजायांतको मनुः ॥ सुतपास्तु ऋषिश्छन्दो गायत्री देवता
मनोः ॥ ३४ ॥ राधिका प्रणवो बीजं स्वाहा शक्तिरुदाहृता ॥ षडक्षरैः षडंगानि कुर्याद्बिन्दुविभूषितैः॥३५ ॥ ततो ध्यायन्स्वहृदये राधिकां कृष्ण
भामिनीम् ॥ श्वेतचंपकवर्णाभां कोटिचन्द्रसमप्रभाम् ॥ ३६ ॥ शरत्पार्वणचन्द्रास्यां नीलेंदीवरलोचनाम्॥सुश्रोणीं सुनितंबां च पक्वबिंबाधरांबराम्
॥ ३७ ॥ मुक्ताकुंदाभदशनां वह्निशुद्धांशुकान्विताम् ॥ रत्नकेयूरवलयहारकुण्डलशोभिताम् ॥ ३८ ॥ गोपीभिः सुप्रियाभिश्च सेवितां श्वेतचामरैः ॥
रासमंडलमध्यस्थां रत्नसिंहासनस्थिताम् ॥ ३९॥ ध्यात्वा पुष्पांजलिं क्षिप्त्वा पूजयेदुपचारकैः ॥ लक्षषट्कं जपेन्मंत्रं तद्दशांशं हुनेत्तिलैः ॥ ४० ॥
आज्याक्तैर्मातृकापीठे पूजा चावरणैः सह ॥ षट्कोणेषु षडंगानि तद्बाह्येऽष्टदले यजेत् ॥४१ ॥ मालावतीं माधवीं च रत्नमालां सुशीलिकाम् ॥ ततः
शशिकलां पारिजातां पद्मावतीं तथा ॥ ४२ ॥ सुंदरीं च क्रमात्प्राच्यां दिग्विदिक्षु ततो बहिः॥ इन्द्राद्यान्सायुधानिष्ट्वा विनियोगांस्तु साधयेत् ॥
॥ ४३ ॥राधा कृष्णप्रिया रासेश्वरी गोपीगणाधिपा ॥ निर्गुणा कृष्णपूज्या च मूलप्रकृतिरीश्वरी ॥ ४४॥ सर्वेश्वरी सर्वपूज्या वैराजजननी तथा॥
पूर्वाद्याशासु रक्षंतु पांतु मां सर्वतः सदा ॥ ४५ ॥ त्वं देवि जगतांमाता विष्णुमाया सनातनी ॥कृष्णमायादिदेवी च कृष्णप्राणाधिके शुभे॥४६॥
कृष्णभक्तिप्रदे राधे नमस्ते मंगलप्रदे ॥ इति सम्प्रार्थ्य सर्वेशीं स्तुत्वा हृदि विसर्जयेत्॥ ४७॥एवं यो भजते राधां सर्वाद्यां सर्वमंगलाम् ॥ भुक्तेह
भोगानखिलान्सोऽन्ते गोलोकमाप्नुयात्॥ ४८ ॥ अथ तुभ्यं महालक्ष्म्या विधानं वच्मि नारद॥यदाराधनतो भूयात्साधको भुक्तिमुक्तिमान्॥ ४९॥
लक्ष्मीमायाकामवाणीपूर्वा कमलवासिनी ॥ ङेंता वह्निप्रियांतोऽयं मंत्रकल्पद्रुमः परः ॥ ५० ॥ ऋषिर्नारायणश्चास्य छन्दो वि जगती तथा॥देवता
तु महालक्ष्मीर्द्विद्विवर्णैः षडंगकम् ॥ ५१॥ श्वेतचंपकवर्णाभां रत्नभूषणभूषिताम् ॥ ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम् ॥५२॥ बिभ्रतीं रत्नमालां

च कोटिचंद्रसमप्रभाम् ॥ ध्यात्वा जपेदर्कलक्षं पायसेन दशांशतः ॥५३ ॥ जुहुयादेधिते वह्नौ श्रीद्रुकाष्ठैः समर्चयेत् ॥ नवशक्तियुते पीठे ह्यंगै रावरणैः सह ॥ ५४ ॥ विभूतिरुन्नतिः कांतिः सृष्टिः कीर्तिश्च सन्नतिः ॥ व्युष्टिरुत्कृष्टिर्ऋद्धिश्च संप्रोक्ता नव शक्तयः ॥५५॥ अत्रावाह्य च मूलेन मूर्तिं संकल्प्य साधकः॥ षट्कोणेषु षडंगानि दक्षिणे तु गजाननम् ॥५६ ॥ वामे कुसुमधन्वानं वसुपत्रे ततो यजेत् ॥ उमां श्रीं भारतीं दुर्गां धरणीं वेदमातरम् ॥ ५७ ॥ देवीमुषां च पूर्वादौ दिग्विदिक्षु क्रमेण हि ॥ जह्नुसूर्यसुते पूज्ये पादप्रक्षालनोद्यते ॥ ५८ ॥ शंखपद्मनिधी पूज्यौ पार्श्वयोर्धृत चामरौ ॥ धृतातपत्रं वरुणं पूजयेत्पश्चिमे ततः ॥ ५९ ॥ संपूज्य राशीन्परितो यथास्थानं नवग्रहान् ॥ चतुर्दन्तैरावतादीन् दिग्विदिक्षु ततोऽर्चयेत ॥ ६० ॥ तद्बहिर्लोकपालांश्च तदस्त्राणि च तद्बहिः ॥ दूर्वाभिराज्यसिक्ताभिर्जुहुयादायुषे नरः ॥ ६१ ॥ गुडूचीमाज्यसंसिक्तां जुहुयात्सप्तवासरम्॥ अष्टोत्तरसहस्रं यः स जीवेच्छरदां शतम् ॥६२ ॥ हुत्वा तिलान्घृताभ्यक्तान्दीर्घमायुष्यमाप्नुयात् ॥आरभ्यार्कदिनं मंत्री दशाहं घृतसंप्लुतः॥६३ ॥ जुहुयादर्कसमिधः शरीरारोग्यसिद्धये ॥ शालिभिर्जुह्वतो नित्यमष्टोत्तरसहस्रकम् ॥ ६४ ॥ अचिरादेव महती लक्ष्मीः संजायते ध्रुवम् ॥ उपाजाजीनालिकेररजोभिर्घृतमिश्रितैः ॥ ६५ ॥ हुनेदष्टोत्तरशतं पायसाशी तु नित्यशः ॥ मण्डलाज्जायते सोऽपि कुबेर इव मानवः ॥ ६६ ॥ हविषा गुड मिश्रेण होमतो ह्यन्नवान्भवेत् ॥ जपापुष्पाणि जुहुयादष्टोत्तरसहस्रकम् ॥ ६७ ॥ तांबूलरससंमिश्रं तद्भस्मतिलकं चरेत् ॥ चतुर्णामपि वर्णानां मोहनाय द्विजोत्तमः ॥ ६८ ॥ एवं यो भजते लक्ष्मीं साधकेंद्रो मुनीश्वर॥सम्पदस्तस्य जायंते महालक्ष्मीः प्रसीदति॥६९ ॥ देहांते वैष्णवं धाम लभते नात्र संशयः॥ या तु दुर्गा द्विजश्रेष्ठ शिवलोकं गता सती ॥७०॥ सा शिवाज्ञामनुप्राप्य दिव्यलोकं विनिर्ममे॥देवीलोकेति विख्यातं सर्वलोकविलक्षणम् ॥ ७१ ॥ तत्र स्थिता जगन्माता तपोनियममास्थिता ॥विविधान् स्वावतारान्हि त्रिकाले कुरुतेऽनिशम्॥ ७२॥मायाधिका ह्लादिनीयुक् चन्द्राढ्या सर्गिणी पुनः ॥ प्रतिष्ठा स्मृतिसंयुक्ता क्षुधया सहिता पुनः ॥७३॥ ज्ञानामृता वह्निजायांतस्ताराद्यो मनुर्मनः॥ ऋषिः स्याद्वामदेवोऽस्य छंदो गायत्रमीरितम् ॥ ७४ ॥ देवता जगतामादिर्दुर्गा दुर्गतिनाशिनी ॥ ताराद्येकैकवर्णेन हृदयादित्रयं मतम् ॥ ७५ ॥त्रिभिर्विर्मेक्षणं द्वाभ्यां सर्वैरस्त्रमुदीरितम् ॥ महामरकतप्रख्यां सहस्रभुजमंडिताम् ॥ ७६ ॥ नानाशस्त्राणि दधतीं त्रिनेत्रां शशिशेखराम् ॥ कंकणांगदहाराढ्यां क्वणन्नूपुरकान्विताम् ॥ ७७ ॥ किरीटकुंडलधरां दुर्गां देवीं विचिंतयेत् ॥ ७८ ॥ वसुलक्षं जपेन्मंत्रं तिलैः समधुरैर्हुनेत् ॥ पयोऽधसा वा सहस्रं नवपद्मात्मके यजेत ॥ ७९ ॥ प्रभा माया जया सूक्ष्मा विशुद्धानंदिनी पुनः ॥ सुप्रभा विजया सर्वसिद्धिदा पीठशक्तयः ॥ ८० ॥ अग्निर्ब्रह्मप्रयप्रीयरणि० प्रजये

दिमाः ॥ प्रणवो वज्रनखदंष्ट्रायुधाय महापदात् ॥ ८१ ॥ सिंहाय वर्माखं हव प्रोक्तः सिंहमनुर्मुने ॥ दद्यादासनमेतेन मूर्तिं मूलेन कल्पयेत्
॥ ८२ ॥ अङ्गावृत्तिं पुराभ्यर्च्य शक्तीः पत्रेषु पूजयेत् ॥ जया च विजया कीर्तिः प्रीतिः पश्चात्प्रभा पुनः ॥ ८३ ॥ श्रद्धा मेधा श्रुतिश्चैव
स्वनामाद्यक्षरादिकाः ॥ पत्राग्रेष्वर्चयेदष्टावायुधानि यथाक्रमात् ॥ ८४ ॥ शंखचक्रगदाखड्गपाशांकुशशरान्धनुः ॥ लोकेश्वरांस्ततो बाह्ये तेषाम
स्त्राण्यनंतरम् ॥ ८५ ॥इत्थं जपादिभिर्मंत्री मंत्रे सिद्धे विधानवित् ॥ कुर्यात्प्रयोगानमुना यथा स्वस्वमनीषितान्॥८६॥ प्रतिष्ठाप्य विधानेन कलशा
न्नवशोभनान् ॥ रत्नहेमादिसंयुक्तान्घटेषु नवसु स्थितान् ॥ ८७ ॥ मध्यस्थे पूजयेद्देवीमितरेषु जयादिकाः ॥ संपूज्य गन्धपुष्पाद्यैरभिषिंचेन्नरा
धिपम् ॥ ८८ ॥ राजा विजयते शत्रून्योऽधिको विजयश्रियम् ॥ प्राप्नोत्यरोगो दीर्घायुः सर्वव्याधिविवर्जितः ॥ ८९ ॥ वन्ध्याभिषिक्ता विधिना
लभते तनयं वरम् ॥ मन्त्रेणानेन संजप्तमाज्यं क्षुद्रग्रहापहम् ॥ ९० ॥ गर्भिणीनां विशेषेण जप्तं भस्मादिकं तथा ॥ जृंभश्वासे तु कृष्णस्य प्रविष्टे
राधिकामुखम् ॥ ९१ ॥ या तु देवी समुद्भूता वीणापुस्तकधारिणी ॥ तस्या विधानं विप्रेंद्र शृणु लोकोपकारकम् ॥ ९२ ॥ प्रणवो वाग्भवं माया
श्रीः कामः शक्तिरीरिता ॥ सरस्वती चतुर्थ्यंता स्वाहांतो द्वादशाक्षरः ॥ ९३ ॥ मनुर्नारायण ऋषिर्विराट् छन्दः समीरितम्॥ महासरस्वती चास्य
देवता परिकीर्तिता ॥ ९४ ॥ वाग्भवेन षडंगानि कृत्वा वर्णान्न्यसेद् बुधः॥ ब्रह्मरंध्रे न्यसेत्तारं लज्जां भ्रूमध्यगां न्यसेत् ॥ ९५ ॥ मुखनासादिकर्णेषु
गुदेषु श्रीमुखार्णकान् ॥ ( ततो वाग्देवतां ध्यायेद्वीणापुस्तकधारिणीम् ॥ ९६ ॥ कर्पूरकुंदधवलां पूर्णचंद्रोज्ज्वलाननाम् ॥ हंसाधिरूढां भालें
दुदिव्यालंकारशोभिताम् ॥९७॥ जपेद्द्वादशलक्षाणि तत्सहस्रं सितांबुजैः॥ नागचंपकपुष्पैर्वा जुहुयात्साधकोत्तमः॥९८॥ मातृकोक्ते यजेत्पीठे वक्ष्य
माणक्रमेण ताम्॥ वर्णाब्जेनासनं दद्यान्मूर्तिं मूलेन कल्पयेत्॥९९॥देव्या दक्षिणतः पूज्या संस्कृता वाङ्मयी शुभा॥ प्राकृता वामतः पूज्या वाङ्मयी
सर्वसिद्धिदा ॥१००॥ पूर्वमंगानि षट्कोणे प्रज्ञाद्याः प्रयजेद्बहिः॥प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरी मतिः॥१०१॥ स्वस्तिश्चेति समाख्याता
ब्रह्माद्यास्तदनंतरम्॥ लोकेशानर्चयेद्भूयस्तदस्त्राणि च तद्बहिः॥१०२॥एवं संपूज्य वाग्देवीं साक्षाद्वाग्वल्लभो भवेत् ॥ ब्रह्मचर्यरतः शुद्धः शुद्धदंतनखा
दिकः ॥ १०३ ॥ संस्मरन् सर्ववनिताः सततं देवताधिया ॥ कवित्वं लभते धीमान् मासैर्द्वादशभिर्ध्रुवम् ॥ १०४ ॥ पीत्वा तन्मंत्रितं तोयं सहस्रं
प्रत्यहं मुने ॥ महाकविर्भवेन्मंत्री वत्सरेण न संशयः ॥ १०५ ॥ उरोमात्रोदके स्थित्वा ध्यायन्मार्तंडमंडले ॥ स्थितां देवीं प्रतिदिनं त्रिसहस्रं जपे
न्मनुम् ॥ १०६ ॥ लभते मंडलात्सिद्धिं वाचामप्रतिमां भुवि ॥ पालाशबिल्वकुसुमैर्जुहुयान्मधुरोक्षितैः ॥ १०७ ॥ समिद्भिर्वा तदुत्थाभिर्यशः

प्राप्नोति वाक्पतेः ॥ राजवृक्षसमुद्भूतैः प्रसूनैर्मधुराप्लुतैः ॥ १०८॥ तत्समिद्भिश्च जुहुयात्कवित्वमतुलं लभेत् ॥ अथ प्रवक्ष्ये विप्रेंद्र सावित्रीं ब्रह्मणः प्रियाम् ॥ १०९ ॥ यां समाराध्य ससृजे ब्रह्मा लोकांश्चराचरान् ॥ लक्ष्मी माया कामपूर्वा सावित्री ङेसमन्विता ॥ ११० ॥ स्वाहांतो मनुराख्यातः सावित्र्या वसुवर्णवान्॥ ऋषिर्ब्रह्मास्य गायत्री छंदः प्रोक्तं च देवता ॥ १११ ॥ सावित्री सर्वदेवानां सावित्री परिकीर्तिता ॥ हृदंतिकैर्ब्रह्मविष्णुरुद्रेश्वरसदाशिवैः ॥ ११२ ॥ सर्वात्मना च ङेयुक्तैरंगानां कल्पनं मतम् ॥ तप्तकांचनवर्णाभां ज्वलंतीं ब्रह्मतेजसा ॥ ११३ ॥ ग्रीष्ममध्याह्नमार्तंडसहस्रसमविग्रहाम् ॥ ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् ॥ ११४ ॥ बह्निशुद्धांशुकाधानां भक्तानुग्रहकातराम् ॥ सुखदां मुक्तिदां चैव सर्वसंपत्प्रदां शिवाम् ॥ ११५ ॥ वेदबीजस्वरूपां च ध्यायेद्वेदप्रसूं सतीम्॥ ध्यात्वैवं मण्डले विद्वान् त्रिकोणोज्ज्वलकर्णिके॥११६॥सौरे पीठे यजेदेवीं दीप्तादिनवशक्तिभिः ॥ मूलमंत्रेण क्लृप्तायां मूर्तौ देवीं प्रपूजयेत् ॥ ११७ ॥ कोणेषु त्रिषु संपूज्या ब्राह्मयाद्याः शक्तयो बहिः ॥आदित्याद्यास्ततः पूज्या उषादिसहिताः क्रमात् ॥ ११८ ॥ ततः षडंगान्यभ्यर्च्य केसरेषु यथाविधि ॥ प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वंभरां पुनः ॥११९॥ विलासिनीप्रभावत्यौ जयां शांतां यजेत्पुनः ॥ कांतिं दुर्गासरस्वत्यौ विद्यारूपां ततः परम् ॥ १२०॥ विशालसंज्ञितामीशां व्यापिनीं विमलां यजेत् ॥ तमोपहारिणीं सूक्ष्मां विश्वयोनिं जयावहाम् ॥१२१ ॥पद्मालयां परां शोभां ब्रह्मरूपां ततोऽर्चयेत् ॥ ब्राह्मयाद्याः शारणा बाह्ये पूजयेत्प्रोक्तलक्षणाः ॥१२२॥ततोऽभ्यर्च्येद् ग्रहान्बाह्ये शक्राद्यानायुधैः सह ॥ इत्थमावरणैर्देवीः दशभिः परिपूजयेत् ॥ १२३॥ अष्टलक्षं जपेन्मंत्रं तत्सहस्रं हुनेत्तिलैः ॥ सर्वपापविनिर्मुक्तो दीर्घमायुः स विंदति ॥ १२४ ॥ अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ॥ महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥ १२५ ॥ ब्रह्मवृक्षप्रसूनैस्तु जुहुयाद्ब्रह्मतेजसे ॥ बहुना किमिहोक्तेन यथावत्साधिता सती ॥ १२६ ॥ साधकानामियं विद्या भवेत्कामदुघा मुने ॥ अथ ते संप्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥१२७॥ सावित्रीपंजरं नाम सर्वरक्षाकरं नृणाम् ॥ व्योमकेशालकासक्तां सुकिरीटविराजिताम् ॥ १२८ ॥ मेघभ्रुकुटिलाक्रांतां विधिविष्णुशिवाननाम् ॥ गुरुभार्गवकर्णांतां सोमसूर्याग्निलोचनाम् ॥ १२९ ॥ इडापिंगलिकासूक्ष्मावायुनासापुटान्विताम् ॥ संध्याद्विजोष्ठपुटितां लसद्वागुपजिह्विकाम् ॥ १३० ॥ संध्यासूर्यमणिग्रीवां मरुद्बाहुसमन्वितान् ॥ पर्जन्यहृदयासक्तां वस्वाख्यप्रतिमंडलाम् ॥१३१॥ आकाशोदरविभ्रांतां नाभ्यवांतरवीथिकाम् ॥ प्रजापत्याख्यजघनां कटींद्राणीसमाश्रिताम् ॥ १३२ ॥ ऊर्वोर्मलयमेरुभ्यां शोभमानां सरिद्वराम् ॥ सुजानुजह्नुकुशिकां वैश्वदेवाख्यसंज्ञिकाम् ॥ १३३ ॥ पादांघ्रिनखलोमाख्यभूनागद्रुमलक्षिताम् ॥ ग्रहराश्यर्क्षयोगादिमूर्तावयवसंज्ञिकाम् ॥ १३४ ॥

तिथिमासर्तुपक्षाख्यैः संकेतनिमिषात्मिकाम् ॥ मायाकल्पितवैचित्र्यसंध्याख्यच्छदनावृताम् ॥ १३५ ॥ ज्वलत्कालानलप्रख्यां तडित्कोटिसम
प्रभाम् ॥ कोटिसूर्यप्रतीकाशां शशिकोटिसुशीतलाम् ॥ १३६ ॥ सुधामंडलमध्यस्थां सांद्रानंदामृतात्मिकाम् ॥ वागतीतां मनोऽगम्यां वरदां
वेदमातरम् ॥ १३७ ॥ चराचरमयीं नित्यां ब्रह्माक्षरसमन्विताम् ॥ ध्यात्वा स्वात्माविभेदेन सावित्रीपंजरं न्यसेत् ॥ १३८ ॥ पञ्जरस्य ऋषिः
सोऽहं छन्दो विकृतिरुच्यते॥ देवता च परो हंसः परब्रह्मादिदेवता ॥ १३९॥ धर्मार्थकाममोक्षाप्त्यै विनियोग उदाहृतः ॥ षडंगदेवतामन्त्रैरंगन्यासं
समाचरेत् ॥ १४०॥ त्रिधामूलेन मेधावी व्यापकं हि समाचरेत् ॥ पूर्वोक्तां देवतां ध्यायेत्साकारां गुणसंयुताम् ॥१४१ ॥ त्रिपदा हरिजा पूर्वमुखी
ब्रह्मास्त्रसंज्ञिका ॥ चतुर्विंशतितत्त्वाढ्या पातु प्राचीं दिशं मम ॥ १४२ ॥ चतुष्पदा ब्रह्मदंडा ब्रह्माणी दक्षिणानना ॥ षड्विंशतत्त्वसंयुक्ता पातु
मे दक्षिणां दिशम् ॥ १४३ ॥ प्रत्यङ्मुखी पञ्चपदी पञ्चाशत्तत्त्वरूपिणी ॥ पातु प्रतीचीमनिशं मम ब्रह्मशिरोंकिता ॥ १४४ ॥ सौम्यास्या ब्रह्म
तुर्याढ्या साथर्वांगिरसात्मिका ॥उदीचीं षट्पदा पातु षष्टितत्त्वकलात्मिका ॥१४५॥ पञ्चाशद्वर्णरचिता नवपादा शताक्षरी ॥ व्योमा संपातु मे चोर्द्ध्वं
शिरो वेदांतसंस्थिता ॥१४६ ॥ विद्युन्निभा ब्रह्मसन्ध्या मृगारूढा चतुर्भुजा ॥चापेषुचर्मासिधरा पातु मे पावकीं दिशम् ॥ १४७ ॥ ब्राह्मी कुमारी
गायत्री रक्तांगी हंसवाहिनी ॥ बिभ्रत्कमंडलुं चाक्षं स्रुवस्रुचौ पातु नैर्ऋतिम् ॥ १४८ ॥ शुक्लवर्णा च सावित्री युवती वृषवाहना ॥ कपालशूलका
क्षस्रग्धारिणी पातु वायवीम्॥ १४९ ॥ श्यामा सरस्वती वृद्धा वैष्णवी गरुडासना॥ शंखचक्राभयकरा पातु शैवीं दिशं मम ॥ १५० ॥ चतुर्भुजा
देवमाता गौरांगी सिंहवाहना ॥ वराभयखड्गचर्मभुजा पात्वधरां दिशम् ॥ १५१ ॥ तत्तत्पार्श्वे स्थिताः स्वस्ववाहनायुधभूषणाः ॥ स्वस्वदिक्षु
स्थिताः पांतु ग्रहशक्त्यंगसंयुताः ॥ १५२ ॥ मंत्राधिदेवतारूपा मुद्राधिष्ठातृदेवताः ॥ व्यापकत्वेन पांत्वस्मानापादतलमस्तकम् ॥ १५३ ॥
इदं ते कथितं सत्यं सावित्रीपंजरं मया ॥ संध्ययोः प्रत्यहं भक्त्या जपकाले विशेषतः ॥ १५४ ॥ पठनीयं प्रयत्नेन भुक्तिं मुक्तिं समिच्छता ॥
भूतिदा भुवना वाणी महावसुमती मही ॥१५५ ॥ हिरण्यजननी नन्दा सविसर्गा तपस्विनी॥यशस्विनी सती सत्या वेदविच्चिन्मयी शुभा ॥१५६॥
विश्वा तुर्या वरेण्या च निसृणी यमुना भुवा ॥ मोदा देवी वरिष्ठा च धीश्च शांतिमंती मही ॥१५७॥ धिषणा योगिनी युक्ता नदी प्रज्ञाप्रचोदनी ॥
दया च यामिनी पद्मा रोहिणी रमणी जया ॥ १५८ ॥ सेनामुखी साममयी बगला दोषवर्जिता ॥ माया प्रज्ञा परा दोग्ध्री मानिनी पोषिणी
क्रिया ॥ १५९ ॥ ज्योत्स्ना तीर्थमयी रम्या सौम्यामृतमया तथा ॥ ब्राह्मी हैमी भुजंगी च वशिनी सुंदरी वनी ॥ १६० ॥ ॐकारहंसिनी सर्वा

सुधा सा षड्गुणावती ॥ माया स्वधा रमा तन्वी रिपुघ्नी रक्षणी सती ॥ १६१ ॥ हैमी तारा विधुगतिर्विषघ्नी च वरानना ॥ अमरा तीर्थदा दीक्षा
दुर्धर्षा रोगहारिणी ॥ १६२ ॥ नानापापनृशंसघ्नी षट्पदी वज्रिणी रणी ॥योगिनी विमला सत्या अवला बलदा जया ॥१६३॥ गोमती जाह्नवी
रज्वी तपनी जातवेदसा ॥ अग्निगा वृष्टिदा ज्ञेया ऋततंत्रा ऋतात्मिका॥ १६४॥ सर्वकामदुघा सौम्या भवाहंकारवर्जिता ॥ द्विपदा या चतुष्पदा
त्रिपदा या च षट्पदा ॥१६५॥अष्टापदी नवपदी सहस्राक्षाक्षरात्मिका ॥ अष्टोत्तरशतं नाम्नां सावित्र्या यः पठेन्नरः॥१६६॥स चिरायुः सुखी पुत्री
विजयी विनयी भवेत् ॥ एतत्ते कथितं विप्र पंचप्रकृतिलक्षणम् ॥ १६७ ॥ मंत्राराधनपूर्वं च विश्वकामप्रपूरणम् ॥ १६८ ॥ इति श्रीबृहन्नारदीय
पुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे पञ्चप्रकृतिमन्त्रादिनिरूपणं नाम त्र्यशीतितमोऽध्यायः ॥८३॥सनत्कुमार उवाच ॥ कलिकल्पांतरे ब्रह्मन्
ब्रह्मणोऽव्यक्तजन्मनः॥लोकपद्मे तपस्थस्य सृष्ट्यर्थं संबभूवतुः॥ १॥विष्णुकर्णमलोद्भूतावसुरौ मधुकैटभौ॥तौ जातमात्रौ पयसि लोकप्रलयलक्षणे॥२॥
जानुमात्रे स्थितौ दृष्ट्वा ब्रह्माणं कमलस्थितम् ॥प्रवृत्तावत्तुमालक्ष्य तुष्टाव जगदंबिकाम्॥३॥ततो देवी जगत्कर्त्री शैवी शक्तिरनुत्तमा ॥ नारायणाक्षिसं
स्थाना निद्रा प्रीता बभूव ह ॥ ४ ॥ तस्या मंत्रादिकं सर्वं कथयिष्यामि तच्छृणु ॥ सारुणा क्रोधनी शांतिश्चंद्रालंकृतशेखरा ॥ ५ ॥एकाक्षरीबीज
मन्त्रऋषिः शक्तिरुदाहृता॥ गायत्री च भवेच्छन्दो देवता भुवनेश्वरी ॥६ ॥ षड्दीर्घयुक्तबीजेन कुर्यादंगानि षट् क्रमात्॥ संहारसृष्टिमार्गेण मातृका
न्यस्तविग्रहः ॥ ७ ॥ मन्त्रन्यासं ततः कुर्याद्देवताभावसिद्धये ॥ हृल्लेखां मूर्ध्नि वदने गगनां हृदयांबुजे ॥ ८ ॥ रक्तां करालिकां गुह्ये महोच्छुष्मां
पदद्वये ॥ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेपूत्तरेऽपि च ॥ ९ ॥ सद्यादिह्रस्वबीजाद्यान्वक्तव्या भूनसप्रभाः ॥ अंगानि विन्यसेत्पश्चाज्जातियुक्तानि षट्
क्रमात् ॥ १० ॥ ब्रह्माणं विन्यसेद्भाले गायत्र्या सह संयुतम् ॥ सावित्र्या सहितं विष्णुं कपोले दक्षिणे न्यसेत् ॥११॥ वागीश्वर्या समायुक्तं वामगंडे
महेश्वरम् ॥ श्रिया धनपतिं न्यस्य वामकर्णाग्रके पुनः ॥ १२ ॥ रत्या स्मरं मुखे न्यस्य पुण्यागणपतिं न्यसेत् ॥ सव्यकर्णोपरि निधाकर्णगंडांतरा
लयोः ॥ १३ ॥ न्यस्तव्यं वदने मूलं भूपश्चैत्रांस्ततो न्यसेत् ॥ कण्ठमूले स्तनद्वंद्वे वामांसे हृदयांबुजे ॥ १४ ॥ सव्यांसे पार्श्वयुगले नाभिदेशे च
देशिकः ॥ भालांश्च पार्श्वजठरे पार्श्वांसापरके हृदि ॥ १५ ॥ ब्रह्माण्याद्यास्ततो न्यस्य विधिना प्रोक्तलक्षणाः ॥ मूलेन व्यापकं देहे न्यस्य देवीं
विचिंतयेत् ॥ १६ ॥ उद्यद्दिवाकरनिभां तुंगोरोजां त्रिलोचनाम् ॥ स्मेरास्यामिंदुमुकुटां वरपाशांकुशाभयाम् ॥ १७ ॥ रदलक्षं जपेन्मंत्रं त्रिमध्वक्तै
र्हुनेत्ततः ॥ अष्टद्रव्यैर्दशांशेन ब्रह्मवृक्षसमिद्वरैः ॥ १८ ॥ द्राक्षाखर्जूरयानादशर्करानालिकेरकम् ॥ तन्दुलाज्यमिलं विप्र वक्ष्याण्यकामा

द्दतम् ॥ १९ ॥ दद्यादर्घ्यं दिनेशाय तत्र संचिन्त्य पार्वतीम् ॥ पद्ममष्टदलं बाह्ये वृत्तं षोडशभिर्दलैः ॥ २० ॥ विलिखेत्कर्णिकामध्ये षट्कोणमतिसुन्दरम् ॥ ततः संपूजयेत्पीठं नवशक्तिसमन्वितम् ॥ २१ ॥ जयाख्या विजया पश्चादजिताह्वापराजिता ॥ नित्या विलासिनी दोग्ध्री त्वघोरा मंगला नव ॥ २२ ॥ बीजाढ्यमासनं दत्त्वा मूर्तिं तेनैव कल्पयेत् ॥ तस्यां संपूजयेद्देवीमावाह्यावरणैः क्रमात् ॥ २३॥ मध्यप्राग्याम्यसौम्येषु पूजयेदंगदेवताः ॥ षट्कोणेषु यजेन्मंत्री पश्चान्मिथुनदेवताः ॥ २४ ॥ इन्द्रकोणे लसद्दंडकुंडिकाक्षगुणाभयाम् ॥ गायत्रीं पूजयेन्मंत्री ब्रह्माणमपि तादृशम् ॥ २५ ॥ रक्षःकोणे शंखचक्रगदापंकजधारिणीम् ॥ सावित्रीं पीतवसनां यजेद्विष्णुं च तादृशम् ॥ २६ ॥ वायुकोणे परश्वक्षमालाभयवरान्विताम् ॥ यजेत्सरस्वतीमच्छां रुद्रं तादृशलक्षणम् ॥ २७ ॥ वह्निकोणे यजेद्रत्नकुंभं मणिकरंडकम् ॥कराभ्यां बिभ्रतीं पीनां तुंदिलं धनदायकम् ॥ २८ ॥ आलिंग्य सव्यहस्तेन वामे तांबूलधारिणीम् ॥ धनदांकसमारूढां महालक्ष्मीं प्रपूजयेत् ॥ २९ ॥ पश्चिमे मदनं बाणपाशांकुशशरासनाम् ॥ धारयंतं जपारक्तं पूजयेद्रक्तभूषणम् ॥ ३० ॥ सव्येन पतिमाश्लिष्य वामेनोत्पलधारिणीम् ॥ पाणिना रमणांकस्थां रतिं सम्यक्समर्चयेत् ॥ ३१ ॥ ऐशान्ये पूजयेत्सम्यक् विघ्नराजं प्रियान्वितम् ॥ सृणिपाशधरं कांतं वरांगासक्तलांगुलिम् ॥ ३२ ॥ माध्वीपूर्णकपालाढ्यं विघ्नराजं दिगंबरम् ॥ पुष्करे विगलद्रत्नस्फुरच्चषकधारिणम् ॥ ३३ ॥ सिंदूरसदृशाकारामुद्दाममदविभ्रमाम् ॥ धृतरक्तोत्पलामन्यपाणिना तु ध्वजस्पृशाम् ॥ ३४ ॥ आश्लिष्टकांतामरुणां पुष्टिमर्चेद्दिगंबराम् ॥ कर्णिकायां निधी पूज्यौ षट्कोणस्याथ पार्श्वयोः ॥ ३५ ॥ अंगानि केसरेष्वेताः पश्चात्पत्रेषु पूजयेत् ॥ अनंगकुसुमा पश्चाद्द्वितीयानंगमेखला ॥ ३६ ॥ अनंगमदना तद्वदनंगमदनातुरा ॥ भुवनपाला गगनवेगा षष्ठी चैव ततः परम् ॥ ३७ ॥ शशिलेखा गगनलेखा चेत्यष्टौ यत्र शक्तयः॥ खड्गखेटकधारिण्यः श्यामाः पूज्याश्च मातरः ॥ ३८ ॥ पद्माद्बहिः समभ्यर्च्याः शक्तयः परिचारिकाः॥प्रथमानंगद्वयास्यादनंगमदना ततः॥३९॥ मदनातुरा भवनवेगा ततो भुवनपालिका॥स्यात्सर्वशिशिरानंगवेदनानंगमेखला ॥ ४० ॥ चषकं तालवृंतं च तांबूलं छत्रमुज्ज्वलम् ॥ चामरे चांशुकं पुष्पं बिभ्राणाः करपंकजैः ॥ ४१ ॥ सर्वाभरणसंदीप्तान् लोकपालान्बहिर्यजेत् ॥ वज्रादीन्यपि तद्बाह्ये देवीमित्थं प्रपूजयेत ॥ ४२ ॥ मंत्री त्रिमधुरोपेतैर्हुत्वाश्वत्थसमिद्वरैः ॥ ब्राह्मणान्वशयेच्छीघ्रं पार्थिवान्पद्महोमतः ॥ ४३ ॥ पलाशपुष्पैस्तत्पत्नीं मंत्रिणः कुमुदैरपि ॥ पंचविंशतिधा जप्तैर्जलैः स्नानं दिने दिने ॥ ४४ ॥ आत्मानमभिषिंचेद्यः सर्वसौभाग्यवान्भवेत ॥ पंचविंशतिधा जप्तं जलं प्रातः पिबेन्नरः ॥४५॥ अवाप्य महतीं प्रज्ञां कवीनामग्रणीर्भवेत्॥कर्पूरागरुसंयुक्तकुंकुमं साधु साधितम्॥४६॥





गृहीत्वा तिलकं कुर्याद्राजवश्यमनुत्तमम् ॥ शालिपिष्टमयीं कृत्वा पुत्तलीं मधुरान्विताम् ॥ ४७ ॥ जप्तां प्रतिष्ठितप्राणां भक्षयेद्रविवासरे ॥ वशं
नयति राजानं नारीं वा नरमेव च ॥ ४८ ॥ कण्ठमात्रोदके स्थित्वा वीक्ष्य तोयोद्गतं रविम् ॥ त्रिसहस्रं जपेन्मंत्रं कन्यामिष्टां लभेत्ततः ॥ ४९ ॥
अन्नं तन्मंत्रितं मंत्री भुंजीत श्रीप्रसिद्धये ॥ लिखितां भस्मना मायां ससाध्यां फलकादिषु ॥ ५० ॥ तत्कालं दर्शयेद्यंत्रं सुखं सूयेत गर्भिणी ॥
भुवनेशीयमाख्याता सहस्रभुजसंभवा ॥ ५१ ॥ भुक्तिमुक्तिप्रदा नृणां स्मर्तॄणां द्विजसत्तम ॥ ततः कल्पांतरे विप्र कदाचिन्महिषासुरः ॥ ५२ ॥
बभूव लोकपालांस्तु जित्वा भुंक्ते जगत्त्रयम् ॥ ततस्तत्पीडिता देवा वैकुंठं शरणं ययुः ॥५३॥ ततो देवी महालक्ष्मीश्चक्राद्यंगोत्थतेजसा ॥ श्रीर्बभूव
मुनिश्रेष्ठ मूर्ता व्याप्तजगत्त्रया ॥ ५४॥ स्वयं सा महिषादींस्तु निहत्य जगदीश्वरी ॥ अरविंदवनं प्राप्ता भजतामिष्टदायिनी ॥५५॥ तस्याः समर्चनं
वक्ष्ये संक्षेपेण शृणु द्विज ॥ मृत्युक्रोधेन गुरुणा बिंदुभूषितमस्तका ॥५६॥ बीजमन्त्रः श्रियः प्रोक्तो भजतामिष्टदायकः॥ ऋषिर्भृगुर्निवृच्छंदो देवता
श्रीः समीरिता ॥ ५७ ॥ षड्दीर्घयुक्तबीजेन कुर्यादंगानि षट् क्रमात् ॥ ततो ध्यायेज्जगद्वंद्यां श्रियं संपत्तिदायिनीम् ॥ ५८ ॥ कांचनाभां गजैः
श्वेतैश्चतुर्भिः स्वकरोद्धृतैः ॥ हिरण्मयामृतघटैः सिच्यमानां सरोजगाम् ॥ ५९ ॥ वराभयाब्जस्रग्घस्तां क्षौमवस्त्रां किरीटिनीम् ॥ सिद्धलक्षं जपे
न्मंत्रं तत्सहस्रं हुनेत्तथा ॥ ६० ॥ सुगंधकुसुमैरिद्धा कमलैर्मधुरप्लुतैः ॥ महालक्ष्म्युदिते पीठे मूर्तिं मूलेन कल्पयेत् ॥ ६१ ॥ यजेत्पूर्ववदं
गानि दिग्दलेष्वर्चयेत्ततः ॥ वासुदेवं संकर्षणं प्रद्युम्नमनिरुद्धकम् ॥ ६२ ॥ हिमपीततमालेंद्रनीलाभान्पीतवाससः ॥ शंखचक्रगदापद्मधारिण
स्तांश्चतुर्भुजान् ॥ ६३ ॥ विदिग्गतेषु पत्रेषु दमकादीन्यजेद्गजान् ॥ दमकं पुण्डरीकं च गुग्गुलं च कुरंटकम् ॥६४॥ यजेच्छंखनिधिं देव्या दक्षिणे
प्रमदान्वितम् ॥ मुक्तामाणिक्यसंकाशौ किंचित्स्मितमुखांबुजौ ॥ ६५ ॥ अन्योन्यालिंगनपरौ शंखपंकजधारिणौ ॥ विगलद्रत्नवर्षाभ्यां शंख
भ्यां मूर्ध्नि लांछितौ ॥ ६६ ॥ तुंदिलं कंबुकनिधिं वसुधारां घनस्तनीम् ॥ वामतः पंकजनिधिं प्रियया सहितं यजेत् ॥ ६७ ॥ सिंदूराभौ भुज
श्लिष्टौ रक्तपद्मोत्पलान्वितौ ॥ निःसरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्नि लांछितौ ॥ ६८ ॥ तुंदिलं पंकजनिधिं तस्त्वां वसुमतीमपि ॥ दलाग्रेषु यजेदेता
बलाक्याद्याः समंततः॥६९॥ बलाकी विमला चैव कमला वनमालिका ॥ विभीषिका मालिका च शांकरी वसुमालिका ॥७०॥ पंकजद्वयधारिण्यो
मुक्ताहारसमप्रभाः ॥ लोकेशान्पूजयेदंते वज्राद्यस्त्राणि तद्बहिः ॥ ७१ ॥ इत्थं यो भजते देवीं विधिना साधकोत्तमः ॥ धनधान्यसमृद्धः स्याच्छ्रि
यमाप्नोत्यनिंदिताम् ॥ ७२ ॥ वक्षःप्रमाणसलिले स्थित्वा मन्त्रमिमं जपेत् ॥ त्रिलक्षमर्कगं ध्यायन्स भवेत्कमलालयः ॥ ७३ ॥ विष्णुगेहस्थ

बिल्वस्य मूले लक्षत्रयं जपेत् ॥ साधको यः स लभते वांछितं धनसंचयम् ॥ ७४ ॥ अशोकवह्नावाज्याक्तैस्तंडुलैर्वशयेज्जगत् ॥ होमेन खादिरे वह्नौ तंडुलैर्मधुरोक्षितैः ॥ ७५ ॥ राजा वश्यो भवेच्छीघ्रं महालक्ष्मीश्च वर्द्धते ॥ बिल्वच्छायामधिवसन्बिल्वमिश्रहविष्यभुक् ॥ ७६ ॥ संवत्सरत्रयं हुत्वा तत्फलैरथवांबुजैः ॥ साधकेंद्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवम् ॥ ७७ ॥ अथ कल्पांतरे ब्रह्मन्देवराज्यविलुंपकौ ॥ जातौ शुभनिशुंभौ द्वावसुरौ लोककंटकौ ॥ ७८ ॥ ततो भ्रष्टाधिकारैस्तु शक्राद्यैः संस्तुता मुने ॥ महासरस्वती देवी तदा चावततार ह ॥ ७९ ॥ हिमालये महापुण्ये शैलोद्देशेऽतिशोभने ॥ ततः शुम्भादिकान्हत्वा दैवतैः परिपूजिता ॥८०॥वरं दत्त्वाविशद्देवी मानसं नाम वै सरः॥ तस्या मंत्रं प्रवक्ष्यामि शृणुष्वावहितो मुने॥८१॥ ज्ञानामृता शशधरा कांतभालोपशोभिता ॥ वाग्बीजं तेन चांगानि कल्पयेत्साधकोत्तमः ॥ ८२ ॥ऋषिः सदाशिवश्चास्य छंदोऽनुष्टुबुदाहृतम् ॥ देवता वाक्समाख्याता भजतामिष्टदायिनी ॥८३॥ श्वेतांबरां विसश्वेतां वीणापुस्तकधारिणीम्॥ दिव्यैराभरणैर्युक्तां ध्यायेद्देवीं निरंतराम् ॥ ८४ ॥ महासरस्वतीपीठे मूर्तिं मूलेन कल्पयेत् ॥ देवीं संपूजयेत्तस्यामंगाद्यावरणैः सह ॥ ८५ ॥ आदावंगावृतिः पश्चादंविकाद्यास्स मीरिताः ॥ द्वितीया मातृभिः प्रोक्ता तृतीयाऽष्टशक्तिभिः ॥ ८६॥ चतुर्थी पंचमी प्रोक्ता द्वात्रिंशच्छक्तिभिः पुनः॥चतुःषष्ट्या स्मृता षष्ठी शक्तिभिर्लोकनायकैः ॥ ८७॥ सप्तमी पुनरेतेषामस्त्रैः स्यादष्टमावृतिः ॥ एवं पूज्या जगद्धात्री श्रीमती वाग्भवाभिधा ॥ ८८ ॥ स्थानेषु पूर्वमुक्तेषु यजेदंगानि साधकः ॥ अम्बिका वाग्भवा दुर्गा श्रीशक्तिश्चोक्तलक्षणा ॥ ८९ ॥ ब्रह्माद्याश्च ततः पूज्याः कराली विकराल्युमा ॥ सरस्वती श्रीर्दुर्गा च लक्ष्मीश्चैव धृतिः स्मृतिः ॥ ९० ॥ श्रद्धा मेधा रतिः कांतिरार्या षोडश शक्तयः ॥ खड्गखेटकधारिण्यः श्यामाः पूज्याः स्वलंकृताः ॥ ९१ ॥ विषघ्नी पुष्टयः प्रज्ञा सिनीवाली कुहूः पुनः ॥ रुद्रवीर्या प्रभा नंदा पोषणा वृद्धिदा शुभा ॥ ९२ ॥ कालरात्रिर्महारात्रिर्भद्रकाली कपर्दिनी ॥ विकृतिर्दंडिमुंडिन्यौ सेंदुखंडा शिखण्डिनी ॥ ९३ ॥ निशुम्भशुम्भमथनी चण्डमुण्डविनाशिनी ॥ इन्द्राणी चैव रुद्राणी शंकरार्द्धशरीरिणी ॥ ९४ ॥ नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ॥ अम्बिका ह्रादिनी चैव द्वात्रिंशच्छक्तयः सिताः ॥ ९५ ॥ चक्रहस्ताः पिशाचास्याः संपूज्याश्चारुभूषणाः ॥ पिंगलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च ॥ ९६ ॥ श्रद्धा स्वाहा स्वधा भिक्षा माया संज्ञा वसुंधरा ॥ त्रिलोकधात्री गायत्री सावित्री त्रिदशेश्वरी ॥ ९७ ॥ सरूपा बहुरूपा च स्कंदमाता श्रुतप्रिया॥विमला कमला पश्चादरुणी पुनरारुणी ॥ ॥९८ ॥ प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेव च॥सन्ध्या माता सती हंसी मर्दिका वज्रिका परा ॥९९॥ देवमाता भगवती देवकी कमलासना॥

त्रिमुखी सप्तवदना सुरासुरविमर्दिनी ॥ १०० ॥ लंबोष्ठी चोर्द्ध्वकेशी च बहुशिश्रा वृकोदरी ॥रथरेखाह्वया पश्चाच्छशिरेखा तथापरा ॥ १०१ ॥
गगनवेगा पवनवेगा वेगा च तदनंतरम् ॥ ततो भुवनपालाख्या ततः स्यान्मदनातुरा ॥ १०१ ॥ अनंगानंगवदना तथैवानंगमेखला ॥ अनंग
कुसुमा विश्वरूपा सुरभयंकरी ॥१०३॥ अक्षोभ्या सत्ववाहिन्या वज्ररूपा शुचिव्रता ॥वरदाख्याथ वागीशी चतुःषष्टिस्समीरिताः ॥१०४॥चापबाण
धराः सर्वा ज्वालाजिह्वा महाप्रभाः ॥ दंष्ट्रिण्यश्चोर्द्ध्वकेश्यस्ता युद्धोपक्रांतमानसाः ॥ १०५ ॥ सर्वाभरणसंदीप्ता पूजनीयाः प्रयत्नतः ॥ लोकेशाः
पूर्ववत्पूज्यास्तद्वद्वज्रादिकान्यपि ॥ १०६ ॥ जपेत्षोडशलक्षं च तद्दशांशं हुनेत्सुधीः ॥ आज्येन खादिरे वह्नौ ततः सिद्धो भवेन्मनुः ॥ १०७ ॥
कमलैरयुतं हुत्वा राजानं वशमानयेत् ॥ उत्पलैर्जुहुतो नूनं महालक्ष्मीः प्रजायते ॥ १०८ ॥ पलाशकुसुमैर्हुत्वा वत्सरेण कविर्भवेत् ॥ राजीलवण
होमेन वनितां वशमानयेत् ॥ १०९ ॥ भूमौ भोगांस्तु भुक्त्वांते विष्णुलोकमवाप्नुयात् ॥ वाणीबीजजपाशक्तो नात्र कार्या विचारणा ॥ ११० ॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे देवीमंत्रनिरूपणं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ सनत्कुमार उवाच ॥वाग्देवता
वतारोऽन्यः कालिकेति प्रकीर्तिता ॥ तस्या मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रदं नृणाम् ॥ १ ॥ सृष्टिक्रियान्विता शांतिबिंद्वाढ्या च त्रिधा
पुनः ॥ अरुणाक्ष्यादीपिका च बिंदुयुक्ता द्विधा ततः ॥ २ ॥ मायाद्वयं ततः पश्चाद्दक्षिणे कालिके पदम् ॥ पुनश्च सप्तबीजानि स्वाहांतोऽयं
मनूत्तमः ॥ ३ ॥ भैरवोऽस्य ऋषिश्छन्द उष्णिक्काली तु देवता ॥ बीजं मायादीर्घवर्त्म शक्तिरुक्ता मुनीश्वर ॥ ४ ॥ षड्दीर्घाढ्ये बीजेन
विधाया अंगमीरितम् ॥ मातृकार्णान्दश दश हृदये भुजयोः पदोः ॥ ५ ॥ विन्यस्य व्यापकं कुर्यान्मूलमंत्रेण साधकः ॥ शिरः कृपाणमभयं वरं
हस्तैश्च बिभ्रतीम् ॥ ६ ॥ मुंडस्रङ्मस्तकां मुक्तकेशां पितृवनस्थिताम् ॥सर्वालंकृतवर्णां च श्यामांगीं कालिकां स्मरेत् ॥ ७ ॥ एवं ध्यात्वा जपेल्लक्षं
जुहुयादयुतं ततः ॥ प्रसूनैः करवीरोत्थैः पूजायंत्रमथोच्यते ॥ ८ ॥ विलिख्य पूर्वं षट्कोणं त्रिकोणत्रितयं ततः ॥ पद्ममष्टदलं वाह्ये भूपुरं तत्र पूज
येत् ॥ ९ ॥ जया च विजया चापि अजिता चापराजिता ॥ नित्या विलासिनी वापि दोग्ध्र्यघोरा च मंगला ॥१०॥ पीठस्य शक्तयो मायात्मने
हृत्पीठमंत्रकः ॥ शिवरूपशवस्थां च शिवाभिर्दिक्षु वेष्टिताम् ॥११॥ महाकालरतासक्तां ध्यात्वांगान्यर्चयेत्पुरा ॥कालीं कपालिनीं कुल्लां कुरुकुल्लां
विरोधिनीम् ॥ १२ ॥ विप्रचित्तां च षट्कोणे नवकोणे ततोऽर्चयेत् ॥ उग्रामुग्रप्रभां दीप्तां नीलाघनां बलाकिकाम् ॥ १३ ॥ मात्रां मुद्रां तथा
मित्रां पूज्याः पत्रेषु मानगः ॥ पद्मस्थाम्य प्रयत्नेन ब्राह्मी नारायणीन्यपि ॥ १४ ॥ माहेश्वरी च चामुंडा कौमारी चापराजिता ॥ वाराही नार

सिंही च पुनरेतास्तु भूपुरे ॥ १५ ॥ भैरवीं महदाद्यां तां सिंहाद्यां धूम्रपूर्विकाम् ॥ भीमोन्मत्तादिकां चापि वशीकरणभैरवीम् ॥ १६ ॥ मोहनाद्यां
समाराध्य शस्त्रादीन्यायुधान्यपि ॥ एवमाराधिता काली सिद्धा भवति मंत्रिणाम् ॥ १७ ॥ ततः प्रयोगान्कुर्वीत महाभैरवभाषितान् ॥ आत्मनो
वा परस्यार्थं क्षिप्रसिद्धिप्रदायकान्॥ १८॥स्त्रीणां प्रहारं निंदां च कौटिल्यं वाप्रियं वचः॥ आत्मनो हितमन्विच्छन् कालीभक्तो विवर्जयेत् ॥१९॥
सुदृशो मदनावासं पश्यन्यः प्रजपेन्मनुम् ॥ अयुतं सोऽचिरादेव वाक्पपतेः समतामियात् ॥२०॥ दिगम्बरो मुक्तकेशः श्मशानस्थोऽधियामिनि ॥
जपेद्योऽयुतमेतस्य भवेयुः सर्वसिद्धयः ॥ २१ ॥ शवस्य हृदये स्थित्वा निर्वासाः प्रेतभूमिगः ॥ अर्कपुष्पसहस्रेणाभ्यक्तेन स्वीयरेतसा ॥ २२ ॥
देवीं यः पूजयेद्भक्त्या जपन्नेकैकशो मनुम् ॥ सोऽचिरेणैव कालेन धरणीप्रभुतां व्रजेत्॥ २३॥ रजःकीर्णं भगं नार्या ध्यायन्यो ह्ययुतं जपेत् ॥ सक
वित्वेन रम्येण जनान्मोहयति ध्रुवम् ॥ २४ ॥ त्रिपञ्चारे महापीठे शिवस्य हृदि संस्थिताम् ॥ महाकालेन देवेन मारयुद्धं प्रकुर्वतीम् ॥ २५ ॥ तां
ध्यायन्स्मेरवदनां विदधत्सुरतं स्वयम् ॥ जपेत्सहस्रमपि यः स शंकरसमो भवेत् ॥ २६ ॥ अस्थिलोमत्वचायुक्तं मांसं मार्जारमेषयोः ॥ उष्ट्रस्य
महिषस्यापि बलिं यस्तु समर्पयेत् ॥ २७ ॥ भूताष्टम्योर्मध्यरात्रे वश्याः स्युस्तस्य जन्तवः ॥ विद्यालक्ष्मीयशःपुत्रैः स चिरं सुखमेधते ॥ २८ ॥
यो हविष्याशनरतो दिवा देवीं स्मरन् जपेत् ॥ नक्तं निधुवनासक्तो लक्षं स स्याद्धरापतिः ॥ २९ ॥ रक्ताम्भोजैर्हुनेन्मंत्री धनैर्जयति वित्तपम्॥बिल्व
पत्रैर्भवेद्राज्यं रक्तपुष्पैर्वशीकृतिः॥ ३० ॥ असृजा महिषादीनां कालिकां यस्तु तर्पयेत् ॥ तस्य स्युरचिरादेव करस्थाः सर्वसिद्धयः ॥
॥ ३१ ॥ यो लक्षं प्रजपेन्मन्त्रं शवमारुह्य मन्त्रवित् ॥ तस्य सिद्धो मनुः सद्यः सर्वेप्सितफलप्रदः ॥ ३२ ॥ तेनाश्वमेधप्रमुखैर्यागैरिष्टं
सुजन्मना ॥ दत्तं दानं तपस्तप्तं उपास्ते यस्तु कालिकाम् ॥ ३३ ॥ ब्रह्मा विष्णुः शिवो गौरी लक्ष्मीर्गणपती रविः ॥ पूजिताः सकला देवा यः
कालीं पूजयेत्सदा ॥ ३४ ॥ अथापरः सरस्वत्या ह्यवतारो निगद्यते ॥ यां निषेव्य नरा लोके कृतार्थाः स्युर्न संशयः ॥ ३५ ॥ आप्या
यिनी चन्द्रयुक्ता माया च वदनांतरे ॥ सकामिका क्षुधा शांतिश्चन्द्रालंकृतमस्तका ॥ ३६ ॥ दीपिका सासना चन्द्रयुगाद्यं मनुरीरितः ॥ मुनि
रक्षोभ्य उद्दिष्टश्छन्दस्तु बृहती मतम्॥ ३७ ॥ ताराख्या देवता बीजं द्वितीयश्च चतुर्थकम् ॥ शक्तिः षड्दीर्घयुक्तेन द्वितीयेनांगकल्पनम् ॥ ३८॥
षोढा न्यासं ततः कुर्यात्ताशयाः सर्वसिद्धिम् ॥ श्रीकण्ठादीन्न्यसेद्रुद्रान्मातृकावर्णपूर्वकान् ॥ ३९ ॥मातृकोक्तस्थले माया तृतीयक्रोधपूर्वकान् ॥
चतुर्थीनमसायुक्तान्प्रथमो न्यास ईरितः ॥ ४० ॥शवपीठसमासीनां नीलकांतिं त्रिलोचनाम् ॥ अर्द्धेन्दुशेखरां नानाभूषणाढ्यां स्मरन्न्यसेत् ॥४१॥





द्वितीये तु ग्रहन्यासं कुर्यात्तां समनुस्मरन्॥ त्रिबीजस्वरपूर्वं तु रक्तसूय हृदि न्यसेत् ॥ ४२ ॥ तथा पवर्गपूर्वं तु शुक्लं सोमं भ्रुवोर्द्वये ॥ कवर्ग
पूर्वं रक्ताभं मंगलं लोचनत्रयम् ॥ ४३ ॥ चवर्गाद्यं बुधं श्यामं न्यसेद्वक्षस्थले बुधः ॥ ट्वर्गाद्यं पीतवर्णं कण्ठकूपे बृहस्पतिम्॥४४॥ तवर्गाद्यं श्वेत
वर्णं घटिकायां तु भार्गवम् ॥ नीलवर्णं पवर्गाद्यं नाभिदेशे शनैश्चरम् ॥ ४५ ॥ शवर्गाद्यं धूम्रवर्णं ध्यात्वा राहुं मुखे न्यसेत् ॥ त्रिबीजपूर्वकश्चैवं
ग्रहन्यासः समीरितः ॥ ४६ ॥ तृतीयं लोकपालानां न्यासं कुर्यात्प्रयत्नतः ॥ मायादिबीजत्रितयपूर्वकं सर्वसिद्धये ॥ ४७ ॥ स्वमस्तके ललाटादि
दिक्ष्वष्टस्वधउर्द्धतः ॥ ह्रस्वदीर्घकादिकाष्टवर्गपूर्वान्दिशाधिपान् ॥ ४८ ॥ शिवशक्त्यभिधे न्यासं चतुर्थे तु समाचरेत् ॥ त्रिबीजपूर्वकान्न्यस्येतषट्
शिवाञ्छक्तिसंयुतान् ॥ ४९ ॥ आधारादिषु चक्रेषु स्वचक्रवर्णपूर्वकान् ॥ ब्रह्माणं डाकिनीयुक्तं वादिसांतार्णपूर्वकम् ॥ ५० ॥ मूलाधारे विन्यसेच्च
चतुर्दलसमन्वितम् ॥ श्रीविष्णुं राकिणीयुक्तबादिलांतार्णपूर्वकम् ॥ ५१ ॥ स्वाधिष्ठानाभिधे चक्रे लिंगस्थे षड्दले न्यसेत् ॥ रुद्रं तु डाकिनीयुक्तं
डादिफांतार्णपूर्वकम् ॥ ५२ ॥ चक्रे दशदले न्यस्येन्नाभिस्थे मणिपूरके ॥ ईश्वरं कादिठान्तार्णपूर्वकं शाकिनीयुतम् ॥ ५३ ॥ विन्यसेद्द्वादशदले
हृदयस्थे त्वनाहते॥सदाशिवं शाकिनीं च षोडशस्वरपूर्वकम्॥५४॥कण्ठस्थे षोडशदले विशुद्धाख्ये प्रविन्यसेत् ॥ आज्ञाचक्रे परशिवं हाकिनीसंयुतं
न्यसेत् ॥ ५५ ॥ लक्षार्णपूर्वं भ्रूमध्यसंस्थितेऽतिमनोहरे ॥ तारादिपंचमं न्यासं कुर्यात्सर्वेष्टसिद्धये॥५६॥अष्टौ वर्गान्स्वरद्वंद्वपूर्वकान् बीजसंयुतान्॥
ताराद्या न्यासपूर्वाश्च प्रयोज्या अष्टशक्तयः ॥ ५७ ॥ताराथोग्रा महोग्रापि वज्रा काली सरस्वती ॥ कामेश्वरी च चामुंडा इत्यष्टौ तारिकाः स्मृताः
॥५८ ॥ब्रह्मरंध्रे ललाटे च भ्रूमध्ये कण्ठदेशतः॥हृदि नाभौ फले मूलाधारे चेताः क्रमान्न्यसेत्॥५९॥अङ्गन्यासं ततः कुर्यात्पीठाख्यं सर्वसिद्धिदम्॥
आधारे कामरूपाख्यं बीजं ह्रस्वार्णपूर्वकम् ॥६० ॥ हृदि जालंधरं बीजं दीर्घपूर्वं प्रविन्यसेत् ॥ललाटे पूर्णगिर्याख्यं कवर्गाद्यं न्यसेत्सुधीः ॥ ६१ ॥
उड्डीयानं चवर्गाद्यं केशसन्धौ प्रविन्यसेत् ॥ कण्ठे तु मथुरापीठं दशम यादिकं न्यसेत् ॥ ६२ ॥ षोढा न्यासस्तु तारायाः प्रोक्तोऽभीष्टप्रदायकः ॥
हृदि श्रीमदेकजटां तारिणीं शिरसि न्यसेत्॥ ६३ ॥ वज्रोदके शिखां पातु उग्रतारां तु वर्मणि ॥ महोग्रा वत्सरे नेत्रे पिंगाग्रैकजटास्त्रके ॥ ६४ ॥
षड्दीर्घयुक्तमायाया एतान्यष्टौ षडंगके ॥ अंगुष्ठादिष्वंगुलीषु पूर्वं विन्यस्य यत्नतः॥ ६५ ॥ तर्जनीमध्यमाभ्यां तु कृत्वा तालत्रयं ततः॥ छोटि ॥ १९० ॥
कामुद्रया कुर्याद्दिग्बन्धं देवतां स्मरन् ॥ ६६ ॥ विद्यया तारपुटया व्यापकं सप्तधा चरेत् ॥ उग्रतारां ततो ध्यायेत्सद्यो वादेऽतिसिद्धिदाम् ॥ ६७ ॥
*लयाम्धावंबुजन्मस्थां नीलाभां दिव्यभूषणाम् ॥ कम्बुं खड्गं कपालं च नीलाब्जं दधतीं करैः॥६८॥ नागश्रेष्ठालंकृतांगीं* रक्तनेत्रत्रयां स्मरेत् ॥ जपे

लक्षचतुष्कं हि दशांशं रक्तपद्मकैः ॥ ६९ ॥ हुनेत्क्षीराज्यसंमिश्रैः शंखं संस्थाप्य संजपेत् ॥ नारीं पश्यन्स्पृशन्गच्छन्महानिशि वलिं चरेत् ॥
॥ ७० ॥ श्मशाने शून्यसदने देवागारेऽथ निर्जने ॥ पर्वते वनमध्ये वा शवमारुह्य मंत्रवित् ॥ ७१ ॥ समरे शत्रुनिहतं यद्वा षाण्मासिकं शिशुम् ॥
विद्यां साधयतः शीघ्रं साधितैवं प्रसिद्ध्यति ॥ ७२ ॥ मेधा प्रज्ञा प्रभा विद्या धीधृतिस्मृतिबुद्धयः ॥ विश्वेश्वरीति संप्रोक्ताः पीठस्य
नव शक्तयः ॥ ७३ ॥ भृगुर्मन्विंदुसंयुक्त मेघवर्त्म सरस्वती ॥ योगपीठात्मने हार्दं पीठस्य मनुरीरितः ॥ ७४ ॥ दत्त्वानेनासनं मूर्तिं मूल
मंत्रेण कल्पयेत् ॥ पूजयेद्विधिवद्देवीं तद्विधानमथोच्यते ॥ ७५ ॥ तारो माया भगो ब्रह्मा जटे सूर्यः सदीर्घकम् ॥ यक्षाधिपतये तंद्री
सोपवीतं वलिं ततः ॥ ७६ ॥ गृहयुग्मं शिवा स्वाहा बलिमंत्रोऽयमीरितः ॥ दद्यान्नित्यं वलिं तेन मध्यरात्रे चतुष्पथे ॥ ७७ ॥ जलदानादिकं मंत्रैं
विंदध्याद्दशभिस्ततः ॥ ध्रुवो वज्रोदके वर्म फट्सप्तार्णो जलग्रहे ॥ ७८ ॥ ताराद्या वह्निजायांता माया हि क्षालने मता ॥ तारो मायाः भृगुः कर्णो
विशुद्धं धर्मवर्मतः ॥ ७९ ॥ सर्वपापानि शाम्यंते छेतो नेत्रयुतं जलम् ॥ कल्पान्तनयनस्वाहा मंत्र आचमने मतः ॥ ८० ॥ ध्रुवो मणिधरीत्यंते
वज्रिण्यक्षियुता मृतिः ॥ खरिविद्याधुग्रिजश्च सर्ववांते वकोऽञ्जवान् ॥ ८१ ॥ कारिण्यंते दीर्घवर्म अस्त्रं वह्निप्रियांतिमः ॥ त्रयोविंशतिवर्णात्मा
शिखाया बंधने मनुः ॥ ८२ ॥ प्रणवो रक्षयुगलं दीर्घवर्मास्त्रठद्वयम् ॥ नवार्णेनामुना मंत्री कुर्याद्भूमिविशोधनम् ॥ ८३ ॥ नारांते सर्वविघ्नानुत्सार
येति पदं ततः ॥ हुं फट् स्वाहा गुणेंद्वर्णो मनुर्विघ्ननिवारणम् ॥ ८४ ॥ मायाबीजं जपापुष्पनिभं नाभौ विचिंतयेत्॥ तदुत्थेनाग्निना देहं दहेत्साद्धं
स्वपाप्मना ॥ ८५ ॥ ताराबीजं सुवर्णाभं चिंतयेद्धृदि मंत्रवित् ॥ पवनेन तदुत्थेन पापभस्म क्षिपेद्भुवि ॥ ८६ ॥ तुरीयं चंद्रकुंदाभं बीजं ध्यात्वा
ललाटतः॥ तदुत्थसुधयादेहं स्वयं वै देवतानिभम् ॥८७॥ अनया भूतशुद्ध्या तु देवीसादृश्यमाप्नुयात् ॥ तारोऽनंतो भृगुः कर्णो पद्मनाभयुतो वर्ला॥
॥ ८८ ॥ खे वज्ररेखे क्रोधाख्यं बीजं पावकवल्लभा ॥ अमुना द्वादशार्णेन रचयेन्मंडलं शुभम् ॥ ८९ ॥ तारो यथागता निद्रा सदृक्पेकभृगुर्विषम् ॥
सदीर्घस्मृतिरौ साक्षौ महाकालो भगान्वितः ॥९०॥ क्रोधोऽस्त्रं मनुवर्णोऽयं मनुः पुष्पादिशोधने ॥ तारः पाशः परा स्वाहा पंचार्णश्चित्तशोधने ॥
॥ ९१ ॥ मनवो दश संप्रोक्ता अर्घ्यस्थापनमुच्यते ॥ सेंदुभ्यां मासतो माया भुवं संसृज्य भूगृहम् ॥ ९२ ॥ वृतं त्रिकोणसंयुक्तं कुर्यान्मं
डलमंत्रतः ॥ यजेत्तत्राधारशक्तिं वह्निमंडलमध्यगाम् ॥ वह्निमंडलमभ्यर्च्य महाशंखं निधापयेत् ॥ ९३ ॥ वामकर्णेन्दुयुक्तेन फडंतेन विहायसा ॥
प्रक्षालितं भृगुर्दंडी त्रिमूर्तीदुयुतं पठेत् ॥ ९४ ॥ ततोऽर्चयेन्महाशंखं जपन्मंत्रचतुष्टयम् ॥ दीर्घत्रयान्विता माया काली सृष्टिः सदीर्घसः ॥ ९५ ॥







प्रतिमासंयुतं मासं यवनं हृदयं ततः ॥एकादशार्णः प्रथमो महाशंखार्चने मनुः ॥ ९६ ॥ हंसो हरिभुजंगेशयुक्तो दीर्घत्रयेंदुयुक् ॥ तारिण्यंते कपालाय
नमोंतो द्वादशाक्षरः ॥९७॥ स्वं दीर्घत्रयमन्वाढ्यमेषो वामदगन्वितः ॥लोकपालाय हृदयं तृतीयोऽयं शिवाक्षरः ॥ ९८ ॥ मायास्त्रीबीजमर्द्धेंदुयुतं
स्वं स्वर्गखादिमः ॥पालाय सर्वाधाराय सर्वः सर्वोद्भवस्तथा॥९९॥सर्वशुद्धिमयश्चेति ङेंताः सर्वासुरांतिकम् ॥ रुधिरा रतिदीर्घा च वायुः शुभ्रानिलः
सुरा ॥ १०० ॥ भाजनाय भगी सत्या विकपालाय हृन्मनुः ॥ तुर्यो रसेषु वर्णोऽयं महाशंखप्रपूजने ॥ १०१ ॥ नवार्कमंडलं चेष्ट्वा सलिलं
मूलमंत्रतः ॥ प्रपूरयेत्सुधाबुद्ध्या गंधपुष्पाक्षतादिभिः ॥ १०२ ॥ मुद्रां त्रिखंडां संदर्श्य पूजयेच्चंद्रमंडलम् ॥ वाक्सत्यपद्मागगने रेफानुग्रहबिंदु
युक् ॥ १०३ ॥ मूलमंत्रो विपद्ध्वंसमनुसर्गसमन्वितम् ॥ अष्टकृत्वोऽमुना मंत्री मंत्रयेत्प्रयतो जलम् ॥ १०४ ॥ मायया मदिशं क्षिप्त्वा खं योनिं
च प्रदर्शयेत् ॥ तत्र वृत्ताष्टषट्कोणं ध्यात्वा देवीं विचिंतयेत् ॥ १०५ ॥ पूर्वोक्तां पूजयेत्त्वेनां मूलेनाथ प्रतर्पयेत् ॥ तर्जनीमध्यमानामाकनि
ष्ठाभिर्महेश्वरीम् ॥ १०६ ॥ सांगुष्ठानिश्चतुर्वारं महाशंखस्थिते जले ॥ खंरेफमनुबिंद्वाढ्यं भृगुर्मन्विदुयुक्तया ॥ १०७ ॥ ध्रुवाद्येन नमोंतेन
तर्प्यादानंदभैरवम् ॥ ततस्तेनार्धतोयेन प्रोक्षेत्पूजनसाधनम् ॥ १०८ ॥ योनिमुद्रां प्रदर्श्यापि प्रणमेद्भवतारिणीम् ॥ विधानमर्घे संप्रोक्तं
सर्वसिद्धिप्रदायकम् ॥ १०९ ॥ पूर्वोक्ते पूजयेत्पीठे पद्मे षट्कोणकर्णिके ॥ धरागृहावृते रम्ये देवीं रम्योपचारकैः ॥ ११० ॥ महीगृहे चतुर्दिक्षु
गणेशादीन्प्रपूजयेत् ॥ पाशांकुशौ कपालं च त्रिशूलं दधतं करैः ॥१११॥ अलंकारचयोपेतं गणेशं प्राक्तमर्चयेत् ॥ कपालशूले हस्ताभ्यां दधतं
सर्पभूषणम् ॥ ११२ ॥ स्वयूथवेष्टितं रम्यं बटुकं दक्षिणेऽर्चयेत् ॥ असिशूलकपालानि डमरुं दधतं करैः ॥ ११३ ॥ कृष्णं दिगंबरं क्रूरं क्षेत्रपालं
च पश्चिमे ॥ कपालं डमरुं पाशं लिंगं शंबिभ्रतीं करैः ॥ ११४ ॥ अध्याकन्या रक्तवस्त्रा योगिनीरुत्तरे यजेत्॥ अक्षोभ्यं प्रयजेन्मूर्ध्नि देव्या
मंत्रऋषिं शुभम् ॥ ११५ ॥ अक्षोभ्यं वस्त्रपुष्पं च प्रतीच्छानलवल्लभा ॥ अक्षोभ्यपूजने मंत्रः षट्कोणेषु षडंगकम् ॥ ११६ ॥ वैरोचनं चामि
ताभं पद्मनाभाभिधं तथा ॥ शंखं पांडुरसंज्ञं च दिग्दलेषु प्रपूजयेत् ॥ ११७ ॥ लाभकां मानकां चैव पांडुरां तारकां तथा ॥ विदिग्गताब्जपत्रेषु
पूजयेदिष्टसिद्धये ॥ ११८ ॥ बिंदुनामादिवर्णाद्याः संबुद्ध्यंतास्तथाभिधाः ॥ व्रजपुष्पं प्रतीच्छाग्निप्रियांताः प्रणवादिकाः ॥ ११९ ॥ वैरोचनादि
पूजायां मनवः परिकीर्तिताः ॥ भूधरश्च चतुर्द्वार्षु पद्मांतकयमांतकौ ॥ १२० ॥ विघ्नांतकाभिधः पश्चान्नरांतक इमान्यजेत् ॥ शक्रादींश्चैव
वज्रादीन्प्रजपेत्तदनंतरम् ॥ १२१ ॥ एवं संपूजयन्देवीं पांडित्यं धनमद्भुतम् ॥ पुत्रान्पौत्राञ्छुभां कीर्तिं लभते जनवश्यताम् ॥ १२२ ॥ तारो

माया श्रीमदेकजटे नीलसरस्वती ॥ महोग्रतारे देवासः सनेत्रो गदियुग्मकम् ॥ १२३ ॥ सर्वदेवपिशाकर्मो दीर्घोग्निर्मरुसान्प्रस ॥ अभ्रगुमम जाड्यं च छेदयद्वितयं रमा ॥ १२४ ॥ मायास्त्राग्निप्रियांतोऽयं द्विपंचाशद्भिर्मनुः ॥ अनेन नित्यं पूजतिऽन्वहं देव्यै बलिं हरेत् ॥ १२५ ॥ एवं सिद्धे मनौ मंत्री प्रयोगान्विदधाति च ॥ जातमात्रस्य बालस्य दिवसत्रितयावधः ॥ १२६ ॥ जिह्वायां विलिखेन्मंत्रं मध्वाज्याभ्यां शलाकया ॥ सुवर्णकृतया यद्वा मंत्री धवलदूर्वया ॥१२७॥ गतेऽष्टमेऽब्दे बालोऽपि जायते कविरद्भुतम् ॥ तथापरैरजेयोऽपि भूपसंघैर्द्धनार्चितः ॥ १२८॥ उपरागे दतानीव नरदारुसरोजले ॥ निर्माय कीलकं तेन तैलमध्वमृतौर्लिखेत् ॥ १२९ ॥ सरोजिनीदले मंत्रं वेष्टयेन्मातृकाक्षरैः ॥ निखाय तदलं कुंडे चतुरस्रे समेखले ॥ १३० ॥ संस्थाप्य पावकं तत्र जुहुयान्मनुनामुना ॥ सहस्रं रक्तपद्मानां धेनुदुग्धजलाप्लुतम् ॥ १३१ ॥ होमांते विविधै रत्नैः फलैरपि बलिं हरेत् ॥ बलिं मंत्रेण विधिवद्बलिमंत्रः प्रकाश्यते ॥ १३२ ॥ तारः पद्मे युग तंद्री वियदीर्घं च लोहितः ॥ अग्निर्विपभगाढ्यो वदत्पद्मावतीपदम् ॥ १३३ ॥ झिंटीशाद्योनिलस्वाहा षोडशार्णो बलेर्मनुः ॥ ततो निशीथे च बलिं पूर्वोक्तमनुना हरेत् ॥ १३४ ॥ एवं कृते पंडितानां स जयी कविराड् भवेत् ॥ निवासो भारतीलक्ष्म्योर्जनतारञ्जनक्षमः ॥ १३५ ॥शताभिजप्त्या यो मंत्री रोचनां मस्तके धरेत् ॥ यं यं पश्यति तस्यासौ दासवज्जायते क्षणात् ॥ १३६ ॥ श्मशानांगारमाश्रित्य पूर्वायां कुजवासरे ॥ तेन मंत्रेण संवेष्ट्य निबद्धं रक्ततंतुभिः ॥ १३७ ॥ शताभिजप्तं मूलेन निक्षिपेद्वैरिवेश्मनि ॥ उच्चाटयति सप्ताहात्सकुटुंबान्विरोधिनः ॥ १३८ ॥ क्षीराढ्यया निशामंत्रं लिखित्वा पौरुषेऽस्थनि ॥ रविवारे निशीथिन्यां सहस्रमभिमंत्रयेत् ॥ १३९ ॥ तत्क्षिप्तं शत्रुसदने मंडलाद्ध्रंशकं भवेत् ॥ क्षेत्रे क्षिप्तं सस्यहान्योजवहृत्तुरमालयेत् ॥ १४० ॥ षट्कोणांतर्लिखेन्मूलं साध्यार्णं केसरे स्वरैः ॥ बाह्येऽष्टवर्गयुक्पत्रं पद्मभूमिपरावृतम् ॥ १४१ ॥ यंत्रं भूर्जे जतुरसैर्लिखेत्पीताम्बरावृतम् ॥ पट्टसूत्रेण सन्नद्धं शिशुकंठगतं ध्रुवम्॥१४२॥ भूतभीतिहरं वामबाहौ स्त्रीणां च पुत्रदम्॥नृणां दक्षिणबाहुस्थं निर्धनानां धनप्रदम् ॥१४३॥ ज्ञानदं ज्ञानमिच्छूनां राज्ञां तु विजयप्रदम् ॥ १४४ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे यक्षिणीमन्त्रभेदनिरूपणंनाम पञ्चाशीतितमोऽध्यायः॥८५॥सनत्कुमार उवाच ॥ सरस्वत्यवतारास्ते कथिताः सिद्धिदा नृणाम् ॥अथ लक्ष्म्यवतारांस्ते वक्ष्ये सर्वार्थसिद्धिदान्॥ १ ॥ वाणीमन्मथशक्त्याख्यं बीजत्रितयमीरितम् ॥ ऋषिः स्याद्दक्षिणामूर्तिः पंक्तिश्छंदः प्रकीर्तितम् ॥ २॥देवता त्रिपुरा बाला मध्यांते शक्तिबीजके ॥ नाभेरापादमाद्यं तु नाभ्यंतं हृदयात्परम्॥३॥मूर्ध्नो हृदंतं तार्तीयं क्रमाद्देहेषु विन्यसेत्॥आद्यं वामकरे दक्षकरे तदुभयोः परम्॥४॥ पुनर्बीजत्रयं न्यस्य





मूर्ध्नि गुह्ये च वक्षसि॥नव योन्याभिधं न्यासे नवकृत्वो मनुं न्यसेत् ॥ ५ ॥ कर्णयोश्चिबुके न्यस्येच्छंखयोर्मुखपंकजे ॥ नेत्रयोर्नासिकायां च स्कंधयो
रुदरे तथा ॥ ६ ॥ न्यसेत्कूर्परयोर्नाभौ जानुनोर्लिंगमस्तके ॥ पादयोरपि गुह्ये च पार्श्वयोर्हृदये पुनः ॥ ७ ॥ स्तनयोः कंठदेशे च वामांगादिषु
विन्यसेत् ॥ वाग्भवाद्यां रतिं गुह्ये प्रीतिमित्यादिकां हृदि ॥ ८ ॥ कामबीजादिकान्पश्येद्भ्रूमध्ये तु मनोभवाम् ॥ पुनर्वागकात्ममाद्यास्तिस्रएव च
विन्यसेत् ॥ ९ ॥ अमृतेशीं च योगेशीं विश्वयोनिं तृतीयकाम् ॥ मूर्ध्नि वक्रे हृदि न्यस्येद्गुह्ये चरणयोरपि॥१०॥कामेशी पंचबीजाढ्यां स्मरात्पञ्च
न्यसेत्क्रमात् ॥ मायाकामौ च वाग्लक्ष्मी कामेशी पंचबीजकम् ॥ ११ ॥ मनोभवश्च मकरध्वजकंदर्पमन्मथाः ॥ कामदेवः स्मरः पंच कीर्तिता
न्याससिद्धिदाः ॥ १२ ॥ शिरःपन्मुखगुह्येषु हृदये बाणदेवताः ॥ द्राविण्याद्याः क्रमान्न्यस्येद्बाणेशीबीजपूर्वकाः ॥ १३ ॥ द्रांद्रीं क्लींजूंस इति वै
बाणेशीबीजकं च कम् ॥ द्राविणी क्षोभिणी वशीकरण्याकर्षणी तथा ॥१४॥संमोहनी च बाणानां देवताः पञ्च कीर्तिताः॥तार्तीयवाग्मध्यगेन कामेन
स्यात्षडंगकम् ॥ १५ ॥ षड्दीर्घस्वरयुक्तेन ततो देवीं विचिंतयेत् ॥ ध्यायेद्रक्तसरोजस्थां रक्तवस्त्रां त्रिलोचनाम् ॥ १६ ॥ उद्यदर्कनिभां विद्यां
मालाभयवरोद्वहाम् ॥ लक्षत्रयं जपेन्मंत्रं दशांशं किंशुकोद्भवैः ॥ १७ ॥ पुष्पैर्हयारिजैर्वापि जुहुयान्मधुरान्वितैः ॥ नवयोन्यात्मकं यंत्रं वहिरष्टदला
वृतम् ॥१८॥ केसरेषु स्वरान्न्यस्येद्वर्गान्नष्टौदलेष्वपि॥ दलाग्रेषु त्रिशूलानि पद्म तु मातृकावृतम् ॥१९॥ एवं विलिखितं यंत्रे पीठशक्तीः प्रपूजयेत् ॥
इच्छा ज्ञाना क्रिया चैव कामिनी कामदायिनी ॥२०॥ रती रतिप्रिया नंदा मनोन्मन्यपि चोदिताः॥पीठशक्तीरिमा इष्ट्वा पीठं तन्मनुना दिशेत् ॥
॥ २१ ॥ व्योमपूर्वं तु तार्तीयं सदाशिवमहापदम् ॥ प्रेतपद्मासनं ङेंतं नमोंतः पीठमन्त्रकः ॥ २२॥ षोडशार्णस्ततो मूर्तौ कृतायां मूलमंत्रतः ॥
आवाह्य प्रजपेद्देवीमुपचारैः पृथग्विधैः ॥ २३ ॥ देवीमिष्ट्वा मध्ययोनौ त्रिकोणे रतिपूर्विकाम् ॥ वामकोणे रतिं दक्षे प्रीतिमग्रे मनोभवाम् ॥ २४ ॥
योन्यन्तर्वह्निकोणादवंगान्यग्रेर्विदिक्ष्वपि ॥ मध्ययोनेर्बहिः पूर्वादिषु चाग्रे स्मरानपि ॥ २५ ॥ बाणदेवीस्तद्वदेव शक्तीरष्टसु योनिषु॥ सुभगाख्या
भगा पश्चात्तृतीया भगसर्पिणी ॥ २६ ॥ भगमाला तथानंगा नगाद्या कुसुमापरा ॥ अनंगमेखलानंगमदनेत्यष्टशक्तयः ॥ २७ ॥ पद्मकेशरगा ब्राह्मी
मुखाः पत्रेषु भैरवाः ॥ दीर्घाद्या मातरः पूज्या ह्रस्वाद्याश्चाष्टभैरवाः ॥ २८ ॥ दलाग्रेष्वष्टपीठानि कामरूपाख्यमादिमम् ॥ मलयं कोल्लगि
र्याख्यं चौहाराख्यं कुलांतकम् ॥ २९ ॥ जालंधरं तथोन्नासं कोटपीठमथाष्टमम् ॥ भूगृहे दशदिक्ष्वर्चेद्वेतुकं त्रिपुरांतकम् ॥ ३० ॥ वैतालमग्नि
जिह्वं च कमलांतकपालिनौ ॥ एकपादं भीमरूपं विमलं हाटकेश्वरम् ॥ ३१ ॥ शकायानायुधैः सार्द्धं स्वस्वदिक्षु समर्चयेत् ॥ तद्बहिर्दिक्षु वडुकं

योगिनीं क्षेत्रनायकम् ॥ ३२ ॥ गणेशं विदिशास्वर्चेद्वसून्सूर्याञ्छिवांस्तथा॥भूतांश्चेत्थं भजन्बालामीशः स्याद्धनविद्ययोः॥३३॥रक्तांभोजैर्हुतैर्नार्यो वश्याः स्युः सर्षपैर्नृपाः ॥ नंद्यावर्तै राजवृक्षैः कुंदैः पाटलचंपकैः ॥ ३४ ॥ पुष्पैर्बिल्वफलैर्वापि होमाल्लक्ष्मीः स्थिरा भवेत् ॥ अपमृत्युं जयेन्मन्त्री गुडूच्या दुग्धयुक्तया ॥ ३५ ॥ यथोक्तदूर्वाहोमेन नीरोगायुः समश्नुते ॥ ज्ञानं कवित्वं लभते चन्द्रागुरुसुरैर्हुतैः॥३६॥पलाशपुष्पैर्वाग्मिसद्धिरन्नाप्तिश्चान्नहोमतः ॥ सुरभिक्षीरदध्यक्तॉल्लाजान्हुत्वा रुजो जयेत् ॥ ३७ ॥ रक्तचन्दनकर्पूरकचूरागुरुरोचनाः ॥ चन्दनं केशरं मांसीं क्रमाद्धागैर्नियोजयेत् ॥३८॥ भूमिचंद्रैकनन्दाब्धिदिक्सप्तनिगमोन्मितैः॥श्मशाने कृष्णभूतस्य निशि नीहारपाथसा ॥ ३९ ॥ कुमार्या पेषयेत्तानि मंत्रेणाथाभिमंत्र्य च ॥ विदध्यात्तिलकं तेन दर्शनाद्वशयेज्जनान्॥४०॥ गजसिंहादिभूतानि राक्षसाञ्छाकिनीरपि॥प्रयोजनानां सिद्ध्यै तु देव्याः शापं निवर्त्य च ॥ ४१ ॥ विधायोत्कीलितां पश्चाज्जपमस्य समाचरेत् ॥ यो जपेदादिमे बीजे वराहभृगुपावकान्॥४२ ॥ मध्यमादौ नभोहंसौ मध्यमांते तु पावकम् ॥ आदावंते च तार्तीयकमात्स्वं धूम्रकेतनम् ॥ ४३ ॥ एवं जप्त्वा शतं विद्या शापहीना फलप्रदा ॥ यद्वाद्ये चरमे बीजे नैव रेफं वियोजयेत् ॥ ४४ ॥ शापोद्धारप्रकारोऽन्यो यद्वायं कीर्तितो बुधैः ॥ आद्यमाद्यं हि तार्तीयं कामः कामोऽथ वाग्भवम् ॥ ४५ ॥ अंत्यमंत्यमनंगश्च नवार्णः कीर्तितो मनुः ॥ जप्तोऽयं शतधा शापं बालाया विनिवर्तयेत् ॥ ४६ ॥ चैतन्याह्लादिनीमन्त्रौ जप्तौ निष्कीलताकरौ ॥ त्रिस्वराश्चेतनं मन्त्रीधरः शांतिरनुग्रहः ॥ ४७ ॥ तारादिहृदयांतः स्यात्काम आह्लादिनीमनुः ॥ तथा त्रयाणां बीजानां दीपनैर्मनुभिस्त्रिभिः ॥ ४८ ॥ सुदीप्तानि विधायादौ जपेत्तानीष्टसिद्धये ॥ वदयुग्मं सदीर्घांबु स्मृतिबालावनंगतौ॥४९॥ सत्यः सनेत्रो नस्ताद्दग्वा वाग्वर्णाद्यदीपिनी॥क्लिन्ने क्लेदिनि वैकुंठो दीर्घं स्वं सद्यगोंतिमः॥५०॥ निद्रा सचंद्रा कुर्वीत शिवार्णा मध्यदीपिनी॥तारो मोक्षं च कुरुते नायं वर्णास्यदीपिनी ॥ ५१ ॥ दीपिनीमंतरा बाला साधितापि न सिद्ध्यति ॥ वागंत्यकामान् प्रजयेदरीणां क्षोभहेतवे ॥ ५२ ॥ कामवागंत्यबीजानि त्रैलोक्यस्य वशीकृतौ ॥ कामांत्यवाणीबीजानि मुक्तये नियतो जपेत् ॥ ५३ ॥ पूजारंभे तु बालायास्त्रिविधानर्चयेद्गुरून् ॥ दिव्यौघश्चैव सिद्धौघो मानवौघ इति त्रिधा ॥ ५४ ॥ परप्रकाशः परमेशानः परशिवस्तथा ॥ कामेश्वरस्ततो मोक्षः षष्ठः कामोऽमृतोंऽतिमः॥५५॥एते दशैव दिव्यौघा आनन्दपदपश्चिमाः॥ईशानाख्यस्तत्पुरुषोऽघोराख्यो वामदेवकः ॥५६ ॥ सद्योजात इमे पंच सिद्धौघाख्याः स्मृता मुने ॥मानवौघाः परिज्ञेयाः स्वगुरोः सम्प्रदायतः॥५७॥नवयोन्यात्मके यन्त्रे विलिखेन्मध्ययोनितः॥प्रादक्षिण्येन बीजानि त्रिवारं साधकोत्तमः॥५८॥त्रींस्त्रीन्वर्णांस्तु गायत्र्या अष्टपत्रेषु संलिखेत्॥ बहिर्मातृकयाऽऽवेष्टच तद्बहिर्भूपुरद्व

यम्॥५९॥कामबीजलसत्कोण व्यतिभिन्न परस्परम्॥पत्रे त्रैपुरमाख्यातं जपसंपातसाधितम्॥६०॥वाहुना विधृते दद्याद्धनं कीर्तिं सुखं सुतान्॥कामांते त्रिपुरा देवी विद्महे कविषं भहिम् ॥ ६१ ॥ वकः खर्ङ्गी समारूढः सनेत्रोऽग्निश्च धीमहि ॥तत्र क्लिन्ने प्रचोदांते यादित्येषा प्रकीर्तिता॥६२॥गायत्री त्रैपुरा सर्वसिद्धिदा सुरसेविता ॥ अथ लक्ष्म्यवतारोऽन्यः कीर्त्यंते सिद्धिदो नृणाम् ॥ ६३ ॥ वेदादिर्गिरिजा पद्मा मन्मथो हृदयं भृगुः ॥ भगवति माहेश्वरी ङेन्तेऽन्नपूर्णे दहनांगना ॥६४॥ प्रोक्ता विंशतिवर्णेयं विद्या स्याद्द्रुहिणो मुनिः ॥ धृतिश्छंदोऽन्नपूर्णेशी देवता परिकीर्तिता ॥६५॥षड्दीर्घाढ्येन हृल्लेखाबीऽजेन स्यात्षडंगकम् ॥ मुखनासाक्षिकर्णांसगुदेषु नवसु न्यसेत् ॥ ६६ ॥ पदानि नव तद्वर्णसंख्येदानीमुदीर्यंते ॥ भूमिचंद्रधरे काक्षिवेदाब्धियुगबाहुभिः ॥ ६७ ॥ पदसंख्यामिता वर्णैस्ततो ध्यायेत्सुरेश्वरीम् ॥ स्वर्णाभांगां त्रिनयनां वस्त्रालंकारशोभिताम् ॥ ६८ ॥ भूरमासंयुतां देवीं स्वर्णामत्रकरांबुजाम् ॥ लक्षं जपोऽयुतं होमो घृताक्तचरुणा तथा ॥ ६९॥ जयादिनवशक्त्याढ्ये पीठे पूजा समीरिता॥ त्रिकोणा वेदपत्राष्टपत्रषोडशपत्रके ॥ ७० ॥ भूपुरेण युते यंत्रे प्रदद्यान्मायया मनुम् ॥ अग्न्यादिकोणत्रितये शिववाराहमाधवान् ॥ ७१ ॥ अर्चयेत्स्वस्वमंत्रैस्तु प्रोच्यंते मनवस्तु ते ॥ प्रणवो मनुचन्द्राढ्यं गगनं हृदयं शिवा ॥ ७२ ॥ मारुतः शिवमंत्रोऽयं सप्तार्णः शिवपूजने ॥ वाराहनारायणयोर्मंत्रौ पूर्वमुदीरयेत् ॥ ७३ ॥ षडंगानि ततोऽभ्यर्च्य वामे दक्षे धरां रमाम् ॥ यजेत्स्वस्वमनुभ्यां तु तावुच्यंते मुनीश्वर ॥ ७४ ॥ अन्नं मह्यन्नमित्युक्त्वा मे देह्यन्नाधिपोर्णकाः ॥ नयेममन्नं प्राणांते दापयानलसुंदरी ॥ ७५ ॥ द्वाविंशत्यक्षरो मंत्रो भूमीष्टो भूमिसंपुटः ॥ लक्ष्मीष्टः श्रीपुटो विप्र स्मृतिलेभनुचंद्रयुक् ॥ ७६ ॥ भुवो बीजमिति प्रोक्तं श्रीबीजं प्रागुदाहृतम् ॥ मंत्रादिस्थचतुर्बीजपूर्विकाः परिपूजयेत् ॥ ७७ ॥ शक्तीश्चतस्रो वेदास्रे परा च भुवनेश्वरी ॥ कमला सुभगा चेति त्राह्याद्या अष्टपत्रगाः ॥ ७८ ॥ षोडशारे स्मृते चत्र मानदातुष्टिपुष्टयः ॥ प्रीती रतिर्ह्रीः श्रीश्चापि स्वधा स्वाहा दशम्यथ ॥ ७९ ॥ ज्योत्स्ना हैमवती छाया पूर्णिमा संहतिस्तथा ॥ अमावास्येति संपूज्या मंत्रशे प्राणपूर्विका ॥ ८० ॥ भूपुरे लोकपालाः स्युस्तदस्त्राणि तदग्रतः ॥ इत्थं जपादिभिः सिद्धे मंत्रेऽस्मिन्धनसंचयैः ॥ ८१ ॥ कुबेरसदृशो मंत्री जायते जनवंदितः ॥ अथ लक्ष्म्यवतारोऽन्यः कीर्त्यते मुनिसत्तम ॥ ८२ ॥ प्रणवः शांतिररुणाक्रियाढ्याचन्द्रभूषिताः ॥ वगलामुखिसर्वांते इंधिकाह्लादिनीयुता ॥ ८३ ॥ पीताजरायुक्प्रतिष्ठा पुनर्दीर्घोदसंयुता ॥ वाचं मुखं पदं स्तंभयांते जिह्वापदं वदेत् ॥ ८४ ॥ कीलयेति च बुद्धिं विनाशयांते स्वबीजकम् ॥ तारोऽग्निसुंदरी मंत्रो वगलायाः प्रकीर्तितः ॥८५॥ मुनिस्तु नारदश्छदो बृहती वगलामुखी ॥ देवता नेत्रपंचेपुनवपंचदिगर्णकैः ॥ ८६॥ अंगानि

कल्पयित्वा च ध्यायेत्पीताम्बरां ततः ॥ स्वर्णासनस्थां हेमाभां स्तंभिनीमिंदुशेखराम् ॥८७ ॥दधतीं मुद्गरं पाशं वज्रं च रसनां करैः ॥ एवं ध्यात्वा
जपेल्लक्षमयुतं चंपकोद्भवैः ॥८८ ॥ कुसुमैर्जुहुयात्पीठे बालायाः पूजयेदिमाम् ॥ चंदनागुरुचंद्राद्यैः पूजार्थं यंत्रमालिखेत् ॥ ८९ ॥ त्रिकोणषड्द
लाष्टाब्जषोडशारे यजेदिमाम्॥ मंगला स्तंभिनी चैव जृंभिणी मोहिनी तथा ॥९०॥ वश्या चला वलाका च भूधरा कल्मषाभिधा॥धात्री च कलना
कालकर्षिणी भ्रामिकापि च ॥ ९१॥ मंदगापि च भोगस्था भाविका षोडशी स्मृता ॥ भूगृहस्य चतुर्दिक्षु पूर्वादिषु यजेत्क्रमात् ॥ ९२ ॥ गणेशं
बटुकं चापि योगिनीः क्षेत्रपालकम् ॥ इंद्रादींश्च ततो बाह्ये निजायुधसमन्वितान् ॥ ९३॥ इत्थं सिद्धे मनौ मंत्री स्तंभयेद्देवतादिकान्॥ पीतवस्त्रप
दासीनः पीतमाल्यानुलेपनः ॥ ९४ ॥ पीतपुष्पैर्यजेद्देवीं हारिद्रोत्थस्रजा जपेत् ॥ पीतां ध्यायन्भगवतीं पयोमध्येऽयुतं जपेत् ॥ ९५ ॥ त्रिमध्वा
ज्यतिलैर्होमो नृणां वश्यकरो मतः ॥ मधुरत्रितयाक्तैः स्यादाकर्षो लवणैर्ध्रुवम् ॥ ९६ ॥ तैलाभ्यक्तैर्निम्बपत्रैर्होमो विद्वेषकारकः ॥ ताललोण
हरिद्राभिर्द्विषां संस्तंभनं भवेत् ॥ ९७ ॥ आगारधूमं राजीश्च माहिषं गुग्गुलं निशि ॥ श्मशाने पावके हुत्वा नाशयेदचिरादरीन् ॥ ९८ ॥ गरुतो
गृध्रकाकानां कटुतैलं विभीतकम् ॥ गृहधूमं चितावह्नौ हुत्वा प्रोच्चाटयेद्रिपून् ॥ ९९ ॥ दूर्वागुडूचीलाजान्यो मधुरत्रितयान्वितान् ॥ जुहोति
सोऽखिलान् रोगान् शमयेद्दर्शनादपि ॥ १०० ॥ पर्वताग्रे महारण्ये नदीसंगे शिवालये ॥ ब्रह्मचर्यरतो लक्षं जपेदखिलसिद्धये ॥ १०१ ॥ एक
वर्णगवीदुग्धं शर्करामधुसंयुतम् ॥ त्रिशतं मंत्रितं पीतं हन्याद्विषपराभवम् ॥ १०२ ॥ श्वेतपालाशकाष्ठेन रचिते रम्यपादुके ॥ अलक्तरंजिते लक्षं
मन्त्रयेन्मनुनामुना ॥ १०३ ॥ तदारूढः पुमान् गच्छेत्क्षणेन शतयोजनम् ॥ पारदं च शिला तालं पिष्टं मधुसमन्वितम्॥१०४॥मनुना मन्त्रयेल्लक्षं
लिंपेत्तेनाखिलां तनुम् ॥ अदृश्यः स्यान्नृणामेष आश्चर्यं दृश्यतामिदम् ॥ १०५ ॥ षट्कोणं विलिखेद्बीजं साध्यनामान्वितं मनोः ॥हरितालनिशा
चूर्णैरुन्मत्तरससंयुतैः ॥ १०६ ॥ शेषाक्षरैः समानीतं धरागेहविराजितम् ॥तद्यंत्रं स्थापितप्राणं पीतसूत्रेण वेष्टयेत्॥ १०७ ॥ भ्राम्यत्कुलालचक्रस्थां
गृहीत्वा मृत्तिकां तथा ॥ रचयेद्वृषभं रम्यं यंत्रं तन्मध्यतः क्षिपेत् ॥ १०८ ॥ हरितालेन संलिप्य वृषं प्रत्यहमर्चयेत् ॥ स्तंभयेद्विद्विषां वाचं गतिं
कार्यपरंपराम् ॥ १०९॥ आदाय वामहस्तेन प्रेतभूस्थितकर्परम् ॥ अंगारेण चितास्थेन तत्र यंत्रं समालिखेत् ॥ ११० ॥ मंत्रितं निहितं भूमौ रिपूणां
स्तंभयेद्गतिम्।प्रेतवस्त्रे लिखेद्यंत्रं अंगारेणैव तत्पुनः॥१११॥मंडूकवदने न्यस्येत्पीतसूत्रेण वेष्टितम्॥पूजितं पीतपुष्पैस्तद्वाचं संस्तंभयेद्विषाम्॥ ११२॥
यद्भूमौ भविता दिव्यं तत्र यंत्रं समालिखेत् ॥ मार्जितं तद्विषां पात्रैर्दिव्यस्तम्भनकृद्भवेत् ॥११३॥ इन्द्रवारुणिकामूलं सप्तशो मनुमंत्रितम् ॥ क्षिप्तं







जले दिव्यकृतं जलस्तंभनकारकम् ॥११४॥ किं बहूक्तया साधकेन मन्त्रः सम्यगुपासितः ॥ शत्रूणां गतिबुद्ध्यादेः स्तंभनो नात्र संशयः॥११५ ॥
इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे यक्षिणीमन्त्रसाधननिरूपणं नाम षडशीतितमोऽध्यायः॥८६॥ सनत्कुमार उवाच ॥
अवतारत्रयं लक्ष्म्याः कथित ते द्विजोत्तम ॥ दुर्गायाश्चाभिधास्यामि सर्वलोकोपकारकान् ॥ १ ॥ प्रणवः श्रीः शिवायुग्मं वाणीवैरोचनीपदम् ॥
वज्राद्यं क्षुधिता सूक्ष्मा मृता स्वाग्नींदुसंयुता॥२॥प्रतिष्ठाप्य शिवा फट् च स्वाहांतोऽत्यष्टिवर्णवान्॥भैरवोऽस्य मुनिः सम्राट् छन्दो मन्त्रस्य देवता॥३॥
छिन्नमस्ता रमा बीजं स्वाहा शक्तिरुदीरिता॥ आं खड्गाय हृदाख्यातमीं खड्गाय शिरः स्मृतम् ॥ ४ ॥ ऊं वज्राय शिखा प्रोक्ता ऐं पाशाय तनुच्छ
दम् ॥ औमंकुशाय नेत्रं स्याद्विसर्गो वसुरक्षयुक् ॥ ५ ॥ मायायुग्मं चास्त्रमंगं मनवः प्रणवादिकाः ॥ स्वाहांताश्चैवमंगानि कृत्वा ध्यायेदथांबिकाम्
॥ ६ ॥ भानुमण्डलसंस्थानां प्रविकीर्णालकं शिरः ॥ छिन्नं स्वकं स्फारमुखं स्वरक्तं प्रपिबद्गलत् ॥ ७ ॥ उपरिस्थां रतासक्तरतिमन्मथयोर्निजे ॥
डाकिनीवर्णिनीसख्यौ दृष्ट्वा मोदभराकुलाम् ॥ ८ ॥ ध्यात्वैवं प्रजपेल्लक्षचतुष्कं तद्दशांशतः ॥ पालाशैर्बिल्वजैर्वापि जुहुयात्कुसुमैः फलैः ॥ ९ ॥
आधारशक्तिमारभ्य परतत्त्वांतपूजिते ॥ पीठे जयाख्या विजया जिता चापि पराजिता ॥ १० ॥ नित्या विलासिनी पष्ठी दोग्ध्य
घोरा च मंगला ॥ दिक्षु मध्ये च संपूज्या नव पीठस्य शक्तयः ॥ ११ ॥ सर्वबुद्धिप्रदे वर्णनीये सर्वभृगुः सदृक् ॥ सिद्धिप्रदे
डाकिनीये तारो वज्रः सभौतिकः ॥ १२ ॥ खड्गीशो रोचनीयेंते भगं धेहि नमोंतकः ॥ तागादिपीठमन्त्रोऽयं वेदरामाक्षगो मतः ॥ १३ ॥
समर्प्यासनमेतेन तत्र संपूजयेच्छिवाम् ॥ त्रिकोणमध्यषट्कोणपद्मभूपुरमध्यतः ॥ १४ ॥ बाह्यावरणमारभ्य पूजयेत्प्रतिलोमतः ॥भूपुरे बाह्यभागेषु
वज्रादीनि प्रपूजयेत् ॥ १५ ॥ तदंतः सुरराजादीन्पूजयेद्धरितां पतीन् ॥ भूपुरस्य चतुर्द्वार्षु द्वारपालान्यजेदथ ॥ १६ ॥ करालविकरालाख्यावं
तिकालस्तृतीयकः ॥ महाकालश्चतुर्थः स्यादथ पद्मेष्टशक्तयः ॥ १७ ॥ एकलिंगा योगिनी च डाकिनी भैरवी तथा ॥ महाभैरवकेंद्राक्षी त्वसि
तांगी तु सप्तमी ॥ १८ ॥ संहारिण्यष्टमी चेति षट्कोणेष्वंगमूर्तयः ॥ त्रिकोणगा छिन्नमस्ता पार्श्वयोस्तु सखीद्वयम् ॥ १९ ॥ डाकिनीवर्णनीसंज्ञं
तारावाभ्यां प्रपूजयेत् ॥ एवं पूजादिभिः सिद्धे मन्त्रे मंत्री मनोरथान् ॥ २० ॥ प्राप्नुयान्निखिलान्सद्यो दुर्लभांस्तत्प्रसादतः ॥ श्रीपुष्पैर्लभते ॥ १९४ ॥
लक्ष्मीं तत्फलैश्च समीहितम् ॥२१॥ वाक्सिद्धिं मालतीपुष्पैश्चंपकैर्हवनात्सुखम् ॥ घृताक्तं छागमांसं यो जुहुयात्प्रत्यहं शतम् ॥ २२ ॥ मासमेकं
तु वशगास्तस्य स्युः सर्वपार्थिवाः ॥ करवीरसुमैः श्वेतैर्लक्षसंख्यैर्जुहोति यः ॥ २३ ॥ रोगजालं पराभूय सुखी जीवेच्छतं समाः ॥ रक्तै

स्तत्संख्यया हुत्वा वशयेन्मंत्रिणो नृपान् ॥ २४ ॥ फलैर्हुत्वाप्नुयाल्लक्ष्मीमुदुंबरपलाशजैः ॥ गोमायुमांसैस्तामेव कवितां पायसांधसा ॥ २५ ॥ वंधूककुसुमैर्भाग्यं कर्णिकारैः समीहितम् ॥ तिलतंडुलहोमेन वशयेन्निखिलाञ्जनान् ॥२६॥नारीरजोभिराकृष्टैर्मृगमांसैः समीहितम्॥ स्तंभनं माहिषै मांसैः पंकजैः सघृतैरपि॥२७॥ चिताग्नौ परभृत्पक्षैर्जुहुयादरिमृत्यवे ॥ उन्मत्तकाष्ठदीप्तेऽग्नौ तत्फलं वायसच्छदैः॥२८॥ द्यूते वने नृपद्वारे समरे वैरि संकटे ॥विजयं लभते मंत्री ध्यायन्देवीं जपन्मनुम् ॥२९॥ भुक्त्यै मुक्त्यै सितां ध्यायेदुच्चाटे नीलरोचिषम्॥ रक्तां वश्ये मृतौ धूम्रां स्तंभने कनकप्र भाम्॥३०॥ निशि दद्याद्बलिं तस्यै सिद्धये मदिरादिना॥गोपनीयः प्रयोगोऽय प्रोच्यते सर्वसिद्धिदः॥३१॥भूताहे कृष्णपक्षस्य मध्यरात्रे तमोघने ॥ स्नात्वा रक्ताम्बरधरो रक्तमाल्यानुलेपनः॥३२॥आनीय पूजयेन्नारीं छिन्नमस्तास्वरूपिणीम्॥सुन्दरीं यौवनाक्रांतां नरपञ्चकगामिनीम्॥३३॥ सुस्मितां मुक्तकवरीं भूषादानप्रतोषिताम्॥ विवस्त्रां पूजयित्वैनामयुतं प्रजपेन्मनुम्॥३४॥वलिं दत्त्वा निशां नीत्वा संप्रेष्य धनतोपिताम् ॥ भोजयेद्विविधैरन्नैर्ब्राह्म णान्भोजनादिना ॥ ३५ ॥ अनेन विधिना लक्ष्मीं पुत्रान्पौत्रान्धनं यशः ॥ नारीमायुः सुखं धर्ममिष्टं च समवाप्नुयात् ॥ ३६ ॥ तस्यां रात्रौ व्रतं कार्यं विद्याकामेन मंत्रिणा ॥ मनोरथेषु चान्येषु गच्छेत्तां प्रजपन्मनुम् ॥ ३७ ॥ उषस्युत्थाय शय्यायामुपविष्टो जपेच्छतम् ॥ षण्मासाभ्यन्तरे मन्त्री कवित्वेन जयेत्कविम् ॥ ३८ ॥ शिवेन कीलिता चेयं तदुत्कीलनमुच्यते ॥ मायां तारपुटां मंत्री जपेदष्टोत्तरं शतम् ॥ ३९ ॥ मन्त्रस्यादौ तथैवांते भवेत्सिद्धिप्रदा तु सा ॥ उदिता छिन्नमस्तेयं कलौ शीघ्रमभीष्टदा ॥४०॥ अवतारांतरं देव्या वच्मि ते मुनिसत्तम ॥ ज्ञानामृतारुणा श्वेता क्रोधिनींदुसमन्विता ॥४१॥ शांतिस्तथाविधा चापि नीचसर्गान्वितास्तथा ॥ वाग्भवं कामराजाख्यं शक्तिवीजाह्वयं तथा ॥४२॥ त्रिभिर्वीजैः पंच कूटात्मिका त्रिपुरभैरवी ॥ ऋषिः स्याद्दक्षिणामूर्तिश्छन्दः पंक्तिरुदीरिता ॥ ४३ ॥ देवता देशिकैरुक्ता देवी त्रिपुरभैरवी ॥ नाभेराचरणं न्यस्य वाग्भवं मन्त्रवित्पुनः ॥ ४४ ॥ हृदयान्नाभिपर्यंतं कामवीजं प्रविन्यसेत् ॥ शिरसो हृत्प्रदेशांतं तार्तीयं विन्यसेत्ततः ॥ ४५ ॥ आद्यं द्वितीयं कर योस्तार्तीयमुभयं न्यसेत् ॥ मूलाधारे हृदि न्यस्य भूयो वीजत्रयं क्रमात्॥ ४६ ॥ नवयोन्यात्मकं न्यासं कुर्याद्बीजैस्त्रिभिः पुनः ॥ बालोदितप्रका रेण मूर्तिन्यासमथाचरेत् ॥ ४७ ॥ स्वस्वबीजादिकं पूर्वं मूर्ध्नीशानमनोभवम् ॥ न्यसेद्वक्त्रे तत्पुरुषं मकरध्वजमात्मवित् ॥ ४८ ॥ हृद्य घोरकुमारादिकंदर्पं तदनंतरम् ॥ गुह्यदेशे प्रविन्यस्येद्वामदेवादिमन्मथम् ॥ ४९ ॥ सद्योजातं कामदेवं पादयोर्विन्यसेत्ततः ॥ ऊर्द्ध्वं प्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु तान् ॥ ५० ॥ प्रविन्यसेद्य भृगुर्व्योमाग्निसंस्थितः ॥ सद्यादिपञ्चह्रस्वाद्या बीजमेषां प्रकीर्तितम्॥५१॥





षड्दीर्घयुक्तेनाद्येन बीजेनांगक्रिया मता ॥ पञ्चबाणांस्ततो न्य श्री त्रैलोक्यमोहनान् ॥ ५२ ॥ द्रामाद्यां द्राविणीं मूर्ध्नि द्रामाद्यां क्षोभणी
पदे ॥ क्लींवशीकरणीं वक्रे गुह्ये ब्लूं बीजपूर्विकाम् ॥५३॥ आकर्षणीं हृदि पुनः सर्वांतभृगुसंस्थिताम् ॥ संमोहनीं क्रमादेवं बाणन्यासोऽयमीरितः
॥ ५४ ॥ भालभ्रूमध्यवदने घंटिकाकण्ठहृत्सु च ॥ नाभ्यधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः ॥ ५५ ॥ मस्तकावधि नाभेश्च मंत्रिणा सुभगा
भगा ॥ भगसर्पिण्यथ परा भगमालिन्यनंतरम् ॥ ५६ ॥ अनंगानंगकुसुमा भूयश्चानंगमेखला ॥ अनंगमदना सर्वा मदविभ्रममंथरा ॥ ५७ ॥
प्रधानदेवता वर्णभूषणाद्यैरलंकृताः ॥ अक्षस्रक्पुस्तकाभीतिवरदाढ्यकरांबुजाः ॥ ५८ ॥ वाक्कामब्लूं स्त्रीं सरांते ताराः पंच प्रकीर्तिताः ॥ ततः
कुर्याद्भूषणाख्यं न्यासमुक्तदिशा मुने ॥ ५९ ॥एवं न्यस्तशरीरोऽसौ ध्यायेत्त्रिपुरभैरवीम् ॥ सहस्रभानुसंकाशामरुणक्षौमवासर्ग़ीम् ॥ ६० ॥
शिरोमालामसृग्लिप्तस्तनीं जपवटीं करैः ॥ विद्यामभीतिं च वरं दधतीं त्रीक्षणाननाम् ॥ ६१ ॥ दीक्षां प्राप्य जपेन्मंत्रं तत्त्वलक्षं जितेंद्रियः ॥
पुष्पैर्भानुसहस्राणि जुहुयाद्ब्रह्मवृक्षजैः ॥ ६२ ॥ त्रिमध्वक्तैः प्रसूनैर्वा करवीरसमुद्भवैः ॥ पद्मं वसुदलोपेतं नवयोन्यष्टकर्णिकम् ॥ ६३ ॥ इच्छा
दिशक्तिभिर्युक्तं भैरव्याः पीठमर्चयेत् ॥ इच्छा ज्ञाना क्रिया पश्चात्कामिनी कामदायिनी ॥६४॥ रतिप्रिया मदानन्दा नवमी स्यान्मनोन्मनी ॥
वरदाभयधारिण्यः संप्रोक्ता नव शक्तयः ॥ ६५ ॥ वाग्भवं लोहितो रायै श्रीकंठो लोहितोऽनलः ॥ दीर्घवान्यै परा पश्चादपरायाँ हसौं युतः ॥
॥ ६६ ॥ सदाशिवमहाप्रेतङेंतं पद्मासनं नमः ॥ अनेन मनुना दद्यादासनं श्रीगुरुक्रमम् ॥ ६७ ॥ प्राङ्मध्ययोन्यंतराले पूजयेत्कल्पये
त्ततः ॥ पंचभिः प्रणवैर्मूर्तिं तस्यामावाह्य देवताम् ॥ ६८ ॥ पूजयेदागमोक्तेन विधानेन समाहितः ॥ तारावाक्छक्तिकमला हसखफ्रें हसौः
स्मृताः ॥ ६९ ॥ वामकोणे यजेद्देव्या रतिमिंदुसमप्रभाम् ॥ सृणिपाशधरां सौम्यां मदविभ्रमविह्वलाम् ॥ ७० ॥ प्रीतिं दक्षिणकोणस्थां तप्त
कांचनसन्निभाम् ॥ अङ्कुशं प्रणतं दोर्भ्यां धारयन्तीं समर्चयेत् ॥ ७१ ॥अग्रे मनोभवां रक्तां रक्तपुष्पाद्यलंकृताम् ॥ इक्षुकार्मुकपुष्पेषुधारिणीं
सस्मिताननाम् ॥ ७२ ॥ अङ्गान्यभ्यर्चयेत्पश्चाद्यथापूर्वं विधानवित् ॥ दिक्ष्वग्रे च निजैर्मंत्रैः पूजयेद्बाणदेवताः ॥ ७३ ॥ हस्ताब्जैर्धृत
पुष्पेषुप्रणामामृतसप्रभाः ॥ अष्टयोनिष्वष्टशक्तीः पूजयेत्सुभगादिकाः ॥७४॥ मातरो भैरवांकस्था मदविभ्रमविह्वलाः ॥ अष्टपत्रेषु संपूज्या यथावत्कु
सुमादिभिः ॥ ७५ ॥ लोकपालांस्ततो दिक्षु तेषामस्त्राणि तद्बहिः ॥ पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वैनां परदेवताम् ॥७६॥ यो भजेदुक्तमार्गेण स भवेत्सं
पदां पदम् ॥ एवं सिद्धमनुर्मंत्री साधयेदिष्टमात्मनः ॥ ७७ ॥ जुहुयादरुणाम्भोजैरयोपेर्मधुराप्लुतैः ॥ लक्षसंख्यं तदर्धं वा प्रत्यहं भोजयेद्द्वि

जान्॥७८ ॥ वनिता युवती रम्याः प्रीणयेद्देवताधिया ॥ होमांते धनधान्याद्यैस्तोषयेद्गुरुमात्मनः ॥ ७९॥एवं कृते जगद्वश्यो रमाया भवनं भवेत् ॥ रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वा हयारिजैः ॥ ८० ॥ पुष्पैः पयोन्नैः सघृतैर्होमाद्विश्वं वशं नयेत्॥वाक्सिद्धिं लभते मन्त्री पलाशकुसुमैर्हुतैः ॥ ८१ ॥ कर्पूरागुरुसंयुक्तं गुग्गुलं जुहुयात्सुधीः ॥ ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत्कविः ॥ ८२ ॥ क्षीराक्तैरमृताखंडैर्होमः सर्वापमृत्युजित् ॥ दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ॥ ८३ ॥ गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान्वशयेद्धुतैः ॥ कह्लारैः पार्थिवान्पुष्पैस्तद्वधूः कार्णिकारजैः ॥ ८४ ॥ मल्लिकाकुसुमैर्हुत्वा राजपुत्रान्वशं नयेत् ॥ कोरंटकुसुमैर्वैश्यान्वृषलान्पाटलोद्भवैः ॥ ८५ ॥ अनुलोमां विलोमांतस्थितसाध्याह्वयान्वितम् ॥ मन्त्रमुच्चार्य जुहुयान्मंत्री मधुरलोलितैः ॥ ८६ ॥ सर्षपैर्मधुसंमिश्रैर्वशयेत्पार्थिवान् क्षणात् ॥ अनेनैव विधानेन तत्पत्नीस्तत्सुतानपि ॥ ८७ ॥ जातिविल्वभवैः पुष्पैर्मधुरत्रयसंयुतैः ॥ नरनारीनरपतीन्होमेन वशयेत्क्रमात् ॥ ८८ ॥ माल्तीबकुलोद्भूतैः पुष्पैश्चन्दनलोलितैः ॥ जुहुयात्कवितां मन्त्री लभते वत्सरांतरे ॥ ८९॥ मधुरत्रयसंयुक्तैः फलैर्बिल्वसमुद्भवैः ॥ जुहुयाद्वशयेल्लोकं श्रियं प्राप्नोति वांछिताम् ॥ ९० ॥ साज्यमन्नं प्रजुहुयाद्भवेदन्नसमृद्धिमान्॥कस्तूरीकुंकुमोपेतं कर्पूरं जुहुयाद्वशी॥९१॥कन्दर्पादधिकं सद्यः सौंदर्यमधिगच्छति॥लाजान्प्रजुहुयान्मंत्री दधिक्षीरमधुप्लुतान् ॥९२ ॥ विजित्य रोगानखिलान्स जीवेच्छरदां शतम् ॥ पादद्वयं मलयजं पादं कुंकुमकेसरम् ॥ ९३ ॥ पादं गोरोचनांतानि त्रीणि पिष्ट्वा हिमांभसा॥ विदध्यात्तिलकं भाले यान्पश्येद्यैर्विलोक्यते॥९४॥यान्स्पृशेत्स्पृश्यते यैर्वा वश्याः स्युस्तस्य तेऽचिरात्॥कर्पूरकपिचोरणि समभागानि कल्पयेत् ॥ ९५ ॥ चतुर्भुजा जटामांसी तावती रोचना मता ॥ कुंकुमं समभागं स्याद्दिग्भागं चन्दनं मतम् ॥ ९६ ॥ अगुरुर्नवभागं स्यादिति भागक्रमेण च ॥हिमाद्रिः कन्यया पिष्टमेतत्सर्वं सुसाधितम् ॥ ९७ ॥ आदाय तिलकं भाले कुर्य्याद्भूमिपतीन्नरान्॥ वनितामदगर्वाढ्या मदोन्मत्तान्मतंगजान् ॥ ९८ ॥ सिंहव्याघ्रान्महासर्पान्भूतवेतालराक्षसान् ॥दर्शनादेव वशयेत्तिलकं धारयन्नरः ॥ ९९ ॥ इत्येषा भैरवी प्रोक्ता ह्यवतारांतरं शृणु ॥ वाङ्माया कमला तारो नमोंते भगवत्यथ ॥ १०० ॥श्रीमातंगेश्वरि वदेत्सर्वजनमनोहरि ॥ सर्वादिसुखराज्यंते सर्वादिसुखरंजनी॥१०१॥ सर्वराजवशं पश्चात्करिसर्वपदं वदेत्॥स्त्रीपुरुषवशं सृष्टिविद्याक्रोधिनिकान्विता ॥ १०२ ॥ सर्वं दुष्टमृगवशं करिसर्वपदं ततः ॥ सर्वसत्त्ववशंकारि सर्वलोकं ततः परम् ॥१०३ ॥ अमुकं मे वशं पश्चादानयानलसुन्दरी ॥ अष्टाशीत्यक्षरो मन्त्रो मुन्याद्या भैरवीगताः ॥ १०४ ॥ न्यासान्मंत्री तनौ कुर्याद्वक्ष्यमाणान्यथाक्रमम् ॥शिरोललाटभ्रूमध्ये तालुकण्ठगलोरसि॥ १०५॥ अनाहते भुजद्वंद्वे जठरे नाभिमण्डले॥स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्ष





वामयोः ॥ १०६ ॥ मूलाधारे गुदे न्यस्येत्पदान्यष्टादश क्रमात् ॥ गुणैकद्विचतुःषड्भिर्वसुपर्वनवाष्टभिः ॥ १०७ ॥नंदपंक्त्यष्टवेदाग्निचन्द्रयुग्मगुणा
क्षिभिः॥यद्गुक्तिरियं प्रोक्ता मंत्रवर्णैर्यथाक्रमम् ॥१०८॥ रत्याद्या मूलहृदयक्षमध्येषु विचक्षणः ॥ वाक्शक्तिलक्ष्मीबीजाद्या मातंग्यंताः प्रविन्यसेत
॥१०९॥शिरोवदनहृद्गुह्यपादेषु विधिना न्यसेत् ॥ ह्लेखां गगनां रक्तां भूयो मन्त्री करालिकाम्॥११०॥महोच्छुष्मां स्वनामादिवर्णबीजपुरःसराः॥
मातंग्यंताः षडंगानि ततः कुर्वीत साधकः ॥१११॥ वर्णैश्चतुर्विंशतिभिर्हृत्त्रयोदशभिः शिरः ॥ शिखाष्टादशभिः प्रोक्ता वर्म तावद्भिरक्षरैः ॥११२॥
स्यात्त्रयोदशभिर्नेत्रं द्वाभ्यामस्त्रं प्रकीर्तितम् ॥ बाणन्यासं ततः कुर्याद्भैरवीप्रोक्तवर्त्मना ॥ ११३ ॥ मातंगीपदयोश्चान्यं मन्मथान्वदनांशयोः ॥
पार्श्वकटयोर्नाभिदेशे कटिपार्श्वांशके पुनः ॥ ११४ ॥ बीजत्रयादिकान्मंत्री मन्मथं मकरध्वजम् ॥ मदनं पुष्पधन्वानं पंचमं कुसुमायुधम् ॥
॥ ११५ ॥ षष्ठं कन्दर्पनामानं मनोभवरतिप्रियौ ॥ मातंग्यंतास्ततो न्यस्येत्स्थानेष्वेतेषु मंत्रवित् ॥ ११६ ॥ कुसुमा मेखला चैव मदना मदना
तुरा ॥ मदनवेगा सम्भवा च भुवनपालेंदुरेखिका ॥११७॥ अनंगपदपूर्वाश्च मातंग्यंताः समीरिताः ॥ विन्यस्तव्यास्ततो मूलेऽधिष्ठाने मणिपूरके ॥
॥ ११८ ॥ हृत्कंठास्ये भ्रुवोर्मध्ये मस्तके चापि मत्रिणा ॥ आद्ये लक्ष्मीसरस्वत्यौ रतिः प्रीतिश्च कृत्तिका ॥ ११९ ॥ शांतिः पुष्टिः पुनस्तु
ष्टिमार्तंगीपदशेखरा ॥ मूलमन्त्रं पृथङ्न्यस्येत्त्रिजमूर्द्धनि मन्त्रवित् ॥ १२० ॥ आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते ॥ कंठदेशे भ्रवोर्मध्ये विंदौ
भूयः कला पदोः ॥ १२१ ॥ निरोधिकायामर्द्धेंदुनादे नादांतयोः पुनः ॥ उन्नतांसेषु वक्त्रे च भ्रुवमण्डलके शिवे ॥ १२२ ॥ मातंग्यंताः प्रविन्यस्ये
द्वामां ज्येष्ठमतः परम्॥ रौद्रीं प्रशांतां श्रद्धाख्यां पुनर्माहेश्वरीमथ॥१२३॥ क्रियाशक्तिं सुलक्ष्मीं च मृष्टिं संज्ञां च मोहिनीम्॥प्रमथाश्वासिनीं विद्युल्लतां
चिच्छक्तिमप्यथ ॥ १२४ ॥ ततश्च सुन्दरीं निंदां नन्दवुद्धिमिमाः क्रमात ॥ शिरोभालहृदाधारेष्वेता वीजत्रयाधिकाः ॥ १२५ ॥ मातंग्याद्याः
प्रविन्यस्येद्यथावद्देशिकोत्तमः ॥ मातंगीं महदाद्यां तां महालक्ष्मीपदादिकाम् ॥ १२६ ॥ सिद्धलक्ष्मीपदाद्यां च मूलमाधारमण्डलम् ॥ न्यसेत्तेनैव
कुर्वीत व्यापकं देशिकोत्तमः ॥ १२७ ॥ एवं न्यस्तशरीरोऽसौ चिंतयेन्मंत्रदेवताम् ॥ श्यामां शुकोक्तिं शृण्वंतीं न्यस्तैकांघ्रिशिरोरुहाम् ॥१२८॥
शशिखण्डधरां वीणां वादयंतीं मधून्मदाम् ॥ रक्तांशुकां च कह्लारमालाशोभितचूलिकाम् ॥ १२९ ॥ शंखपत्रां तु मातंगीं चित्रकोद्भासिमस्त
काम् ॥ अयुतं प्रजपेन्मंत्रं तद्दशांशं मधूकजैः ॥ १३० ॥ पुष्पैस्त्रिमधुरोपेतैर्जुहुयान्मंत्रसिद्धये ॥ त्रिकोणकर्णिकं पद्ममष्टपत्रं प्रकल्पयेत् ॥
॥ १३१ ॥ अष्टपत्रावृतं बाह्ये वृतं षोडशभिर्दलैः॥ चतुरस्रीकृतं बाह्ये कान्त्या दृष्टिमनोहरम् ॥ १३२ ॥ एतस्मिन्पूजयेत्पीठे नवशक्तीः क्रमा

॥ १९६ ॥

दिमाः ॥ विभूतिपूर्वाः पूर्वोक्ता मातंगीपदपश्चिमाः ॥ १३३ ॥ सर्वांते शक्तिकमलासनाय नम इत्यथ ॥ वाक्सत्यलक्ष्मी बीजाद्य उक्तः पीठार्चने मनुः ॥ १३४ ॥ मूलेन मूर्तिं संकल्प्य तस्यामावाह्य देवताम् ॥ अर्चयेद्विधिनानेन वक्ष्यमाणेन मन्त्रवित् ॥ १३५ ॥ रत्याद्यास्त्रिषु कोणेषु पूजयेत्पूर्ववत्सुधीः ॥ हृल्लेखाः पंचपूज्या मध्ये दिक्षु च मंत्रिणा ॥ १३६ ॥ पाशांकुशाभयाभीष्टधारिण्यो भूतसप्रभाः ॥ अंगानि पूजयेत्पश्चाद्यथापूर्वं विधानवित् ॥ १३७ ॥ बाणानभ्यर्चयेद्दिक्षु पंचमं पुरतो यजेत् ॥ दलमध्येऽथ संपूज्या अनंगकुसुमादिकाः ॥ १३८ ॥ पाशांकुशाभयाभीष्टधारिण्योऽरुणविग्रहाः॥ पत्राग्रेषु पुनः पूज्या लक्ष्म्याद्या वल्लकीकराः॥ १३९॥ वहिरष्टदलेष्वर्च्या मन्मथाद्या मदोद्धताः॥ अपरांगा निषंगाद्याः पुष्पास्त्रेषुधनुर्द्धराः ॥ १४० ॥ पत्रस्था मातरः पूज्या ब्राह्म्याद्याः प्रोक्तलक्षणाः ॥ तदग्रेष्वर्चयेद्विद्वानसितांगादिभैरवान् ॥ १४१ ॥ पुनः षोडशपत्रेषु पूज्याः षोडश शक्तयः ॥ वामाद्याः कलवीणाभिर्गायंत्यः श्यामविग्रहाः ॥ १४२ ॥ चतुरस्रे चतुर्दिक्षु चतस्रः पूजयेत्पुनः ॥ मातंग्याद्या मदोन्मत्ता वीणोल्लसितपाणयः ॥ १४३ ॥ आग्नेयकोणे विघ्नेशं दुर्गां नैशाचरे यजेत् ॥ वायव्ये वटुकान् पश्चादीशाने क्षेत्रपं यजेत् ॥ १४४ ॥ लोकपाला बहिः पूज्या वज्राद्यैरायुधैः सह ॥ मंत्रेऽस्मिन्संधिते मन्त्री साधयेदिष्टमात्मनः ॥ १४५ ॥ मल्लिकाजातिपुन्नागैर्होमाद्वाग्याल्यो भवेत् ॥ फलैर्बिल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद्भवेत् ॥ १४६ ॥ राजपुत्रस्य राज्याप्तिः पंकजैः श्रियमाप्नुयात् ॥ उत्पलैर्वशयेद्विश्वं क्षारैर्मध्वाश्रितैः स्त्रियम् ॥ १४७ ॥ वंजुलस्य समिद्धोमो वृष्टिं वितनुतेऽचिरात् ॥ क्षीरार्क्तैरमृताखंडैर्होमान्नाशयति ज्वरम् ॥ १४८॥ दूर्वाभिरायुराप्नोति तन्दुलैर्धनवान्भवेत् ॥ कदंबैर्वश्यमाप्नोति सर्वं त्रिमधुरप्लुतम् ॥१४९ ॥ नंद्यावर्तभवैः पुष्पैर्होमो वाक्सिद्धिदायकः ॥ निंबप्रसूनैर्जुहुयादीप्सितश्रीसमृद्धये ॥ १५० ॥ पलाशकुसुमैर्होमात्तेजस्वी जायते नरः ॥ चन्दनागुरुकस्तूरीचन्द्रकुंकुमरोचनाः ॥ १५१ ॥ वश्याय च प्रियत्वाय हुताश्च तिलकीकृताः ॥ निर्गुंडीमूलहोमेन निगडान्मुच्यते नरः ॥ १५२ ॥ निंबतैलान्वितैर्लोणैर्होमः शत्रुविनाशनः ॥ हरिद्राचूर्णसंमिश्रैर्लवणैः स्तंभयेज्जगत् ॥१५३॥ मातंगीसिद्धविद्यैषा प्रोक्ता ते द्विजसत्तम ॥ अवतारांतरं भूयो वर्णयामि निशामय ॥ १५४ ॥ दीपिकाप्रीतिचन्द्राढ्या द्विधा चेद्रञ्जिता पुनः ॥ वतिवह्निप्रियामंत्रो धूमावत्या गजाक्षरः ॥ १५५ ॥ पिप्पलादो मुनिश्छंदो निवृद्धूमावतीश्वरी ॥ बीजेन षड्दीर्घजातियुक्तेन परिकल्पयेत् ॥ १५६ ॥ ततो धूमावतीं ध्यायेच्छत्रुनिग्रहकारिणीम् ॥ विवर्णां चंचलां दुष्टां दीर्घां च मलिनांबराम् ॥ १५७ ॥ विमुक्तकुंतलां सूक्ष्मां विधवां विरलद्विजाम् ॥ कंकध्वजरथारूढां प्रलंबितपयोधराम् ॥ १५८ ॥ सूर्पहस्तां निरूक्षांकधृतहस्तांवरान्विताम् ॥ प्रवृद्धलोमां तु भृशं कुटिलाकुटिलेक्षणाम् ॥ १५९ ॥ क्षुत्पिपासार्दितां

नित्यं भयदां कलहप्रियाम् ॥ एवंविधां तु संचिन्त्य नमः स्वाहा फडंतकम् ॥ १६०॥ बीजं साध्योपरि न्यस्य तस्मिन्स्थाप्य शवं जपेत् ॥ अव
ष्टभ्य शवं शत्रुनाम्नाथ प्रजपेन्मनुम् ॥ १६१॥ सोष्णीषकंचुको विद्वान्कृष्णे भूते दिवानिशम् ॥ उपवासी श्मशाने वा विपिने शून्यमंदिरे॥ १६२॥
मंत्रस्य सिद्ध्यै यतवाग्ध्यायन्देवीं निरंतरम् ॥ सहस्रादूर्द्ध्वतः शत्रुर्ज्वरेण परिगृह्यते ॥१६३॥ पंचगव्येन शांतिः स्याज्ज्वरस्य पयसापि वा॥मंत्राद्या
क्षरमालिख्य शत्रुनाम ततः परम् ॥ १६४ ॥ द्वितीयं मनुवर्णं च शत्रुनामैवमालिखेत् ॥ सर्वं मनुदिक्सहस्रजपाच्छवमृतिर्भवेत् ॥ १६५ ॥दग्ध्वा
कंकं श्मशानाग्नौ तद्भस्मादाय मन्त्रवित् ॥ विरोधिनाम्नाष्टशतं जप्तमुच्चाटनं रिपोः ॥ १६६ ॥ श्मशानभस्मना कृत्वा शवं तस्योपरि न्यसेत्
॥ विरोधिनामसंरुद्धं कृष्णे पक्षे समुच्चरेत ॥ १६७ ॥ महिषीक्षीरधूपं च दद्याच्छत्रुविपत्करम् ॥ एवं संक्षेपतः प्रोक्तं अवतारचतुष्टयम् ॥
॥ १६८ ॥ दुर्गाया जगदंबायाः किं पुनः प्रष्टुमिच्छसि ॥ १६९ ॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे दुर्गामन्त्रचतुष्ट
यवर्णनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ सूत उवाच ॥ श्रुत्वेत्थं यजनं विप्रा मन्त्रध्यानपुरःसरम् ॥ सर्वासामवताराणां नारदो देव
दर्शनः ॥ १ ॥ सर्वाद्याया जगन्मातुः श्रीराधायाः समर्चनम् ॥ अवतारकलानां हि पप्रच्छ विनयान्वितः॥२ ॥नारद उवाच ॥ धन्योऽस्मि
कृतकृत्योऽस्मि जातोऽहं त्वत्प्रसादतः ॥ यज्जगज्जातृमंत्राणां वैभवं श्रुतवान्मुने ॥ ३ ॥ यथा लक्ष्मीमुखानां तु अवताराः प्रकीर्तिताः ॥
तथा राधावताराणां श्रोतुमिच्छामि वैभवम् ॥ ४ ॥ यत्संख्याकाश्च यद्रूपा यत्प्रभावा विदांवर ॥ राधावतारास्तान्सत्यं कीर्तयाशेषसिद्धिदान्
॥५॥ एतच्छ्रुत्वा वचस्तस्य नारदस्य विधेः सुतः ॥ सनत्कुमारः प्रोवाच ध्यात्वा राधापदांबुजम् ॥ ६ ॥ सनत्कुमार उवाच ॥ शृणु विप्र प्रवक्ष्यामि
रहस्यातिरहस्यकम् ॥ राधावतारचरितं भजतामिष्टसिद्धिदम् ॥ ७ ॥ चन्द्रावली च ललिता द्वे सख्यौ सुप्रिये सदा ॥ मालावतीमुखाद्यानां
चन्द्रावल्यधिपा स्मृता ॥८॥ कलावतीमुखाद्यानामीश्वरी ललिता मता ॥ राधाचरणपूजायामुक्ता मालावतीमुखाः ॥९॥ ललिताधीश्वरीणां तु नामानि
शृणु सांप्रतम् ॥ कलावती मधुमती विशाखा श्यामलाभिधा ॥ १० ॥ शैब्या वृन्दा श्रीधराख्या सर्वास्तत्तुल्यविग्रहाः ॥ सुशीलाप्रमुखा
श्चान्याः सख्यो द्वात्रिंशदीरिताः ॥ ११ ॥ ताः शृणुष्व महाभाग नामतः प्रवदामि ते ॥ सुशीला शशिलेखा च यमुना माधवी रतिः ॥ १२ ॥
कदम्बमाला कुन्ती च जाह्नवी च स्वयंप्रभा ॥ चन्द्रानना पद्ममुखी सावित्री च सुधामुखी ॥ १३ ॥ शुभा पद्मा पारिजाता गौरिणी सर्वमंगला ॥
कालिका कमला दुर्गा विरजा भारती सुरा ॥१४ ॥ गंगा मधुमती चैव सुन्दरी चन्दना सती ॥ अपर्णा मनसानन्दा द्वात्रिंशद्राधिकाप्रियाः ॥ १५॥

कदाचिल्ललिता देवी पुंरूपा कृष्णविग्रहा ॥ ससर्ज षोडशकलास्ताः सर्वास्तत्समप्रभाः ॥ १६ ॥ तासां मन्त्रं तथा ध्यानं यन्त्रार्चादिक्रमं तथा ॥ वर्णये सर्वतन्त्रेषु रहस्यं मुनिसत्तम ॥ १७ ॥ वातो मरुच्चाग्निवह्नी धराक्ष्मे जलचारिणी ॥ विमुखं चरशुचिविभू वनस्वशक्तयः स्वराः ॥ १८ ॥ प्राणस्तेजः स्थिरा वायुर्वायुश्चापि प्रभा तथा ॥ ज्यकुमश्रं तथा नादो दावकः पाथ इत्यथ ॥ १९ ॥ व्योमरयः शिखी गोत्रा तोयं शून्यजवी द्युतिः ॥ भूमी रसो नमो व्याप्तं दाहश्चापि रसांबु च ॥ २० ॥ वियत्स्पर्शश्च हृद्धंसहलाग्रासो हलात्मिकाः ॥ चन्द्रावली च ललिता हंसेला नायके मते ॥ २१ ॥ ग्रासस्थिता स्वयं राधा स्वयं शक्तिस्वरूपिणी ॥ शेषास्तु षोडशकला द्वात्रिंशत्तत्कलाः स्मृताः ॥ २२ ॥ वाङ्मयं निखिलं व्याप्तमाभिरेव मुनीश्वर ॥ ललिताप्रमुखाणां तु षोडशीत्वमुपागता ॥२३॥ श्रीराधा सुन्दरी देवी तांत्रिकैः परिकीर्त्यते ॥ कुरुकुल्ला च वाराही चन्द्रालिललिते उभे ॥ २४ ॥ संभूते मन्त्रवर्गं तेऽभिधास्येऽहं यथातथम् ॥ हृत्प्राणेलाहंसदाहवह्निस्वैर्ललितेरिता ॥२५॥ त्रिविधा हंसभेदेन शृणु तां च यथाक्रमम् ॥ हंसाद्यथाऽग्रा मध्या स्यादादिमध्यस्थहंसया ॥२६॥ तृतीया प्रकृतिः सैव तुर्या तैरंत्यमायया ॥ आसु तुर्याभवन्मुक्त्यै तिस्रोऽन्याः स्युश्च संपदे ॥ २७ ॥ इति त्रिपुरसुंदर्या नित्या [illegible]रामीरिता ॥ दाहभूमीरसाक्ष्मास्वैर्वशिनीबीजमीरितम् ॥ २८ ॥ प्राणो रसाशक्तियुतः कामेश्वर्यक्षरं महत् ॥ शून्यमंबुरसावह्निस्वयोगान्मोहनीमनुः ॥ २९ ॥ व्याप्तं रसाक्ष्मास्वयुतं विमलाबीजमीरितम् ॥ ज्यानभोदाहवह्निस्वयोगैः स्यादरुणामनुः ॥ ३० ॥ जयिन्यास्तु समुद्दिष्टः सर्वत्र जयदायकः ॥ कं नभोदाहसहितं व्याप्तक्ष्मास्वयुतं मनुः ॥ ३१ ॥ सर्वेश्वर्याः समाख्यातः सर्वसिद्धिकरः परः ॥ ग्रासो नभोदाहवह्निस्वैर्युक्तः कौलिनीमनुः ॥ ३२ ॥ एतैर्मनुभिरष्टाभिः शक्तिभिर्वर्गसंयुतैः ॥ वाग्देवतातैर्न्यासः स्याद्येन देव्यात्मको भवेत् ॥ ३३ ॥ रंध्रे भाले तथाज्ञायां गले हृदि तथा न्यसेत् ॥ नाभावाधारके पादद्वये मूलाग्रकावधि ॥३४ ॥ षड्दीर्घाढ्येन बीजेन कुर्याच्चैव षडंगकम् ॥ लोहितां ललितां बाणचापपाशसृणीः करैः ॥ ३५ ॥ दधानां कामराजांके यन्त्रितां मुदितां स्मरेत् ॥ मध्यस्थदेवी त्वेकैव षोडशाकारतः स्थिता ॥ ३६ ॥ यतस्तस्मात्तनौ तस्यास्त्वन्याः पंचदशार्चयेत् ॥ ऋषिः शिवश्छंद उक्ता देवता ललितादिकाः ॥ ३७ ॥ सर्वासामपि नित्यानामावृतीर्नामसंचये ॥ पटले तु प्रयोगांश्च वक्ष्याम्यग्रे सविस्तरम् ॥ ३८ ॥ अथ षोडशनित्यासु द्वितीया या समीरिता ॥ कामेश्वरीति तां सर्वकामदां शृणु नारद ॥ ३९ ॥ शुचिः स्वेन युतस्त्वाद्यो ललिता स्याद्द्वितीयकः ॥ शून्यमग्नियुतं पश्चाद्द्योव्याप्तेन संयुतम् ॥ ४० ॥ प्राणो रसाग्निसहितः शून्ययुग्मं चरान्वितम् ॥ नभोगोत्रा पुनश्चैषां दाहेन समयोजिता ॥ ४१ ॥ अंबु स्याच्चरसंयुक्तं नवशक्तियुतं च हृत् ॥ एषा कामेश्वरी नित्या

कामदेकादशाक्षरी ॥ ४२ ॥ मूलविद्याक्षरैरेव कुर्यादंगानि षट् क्रमात् ॥ एकेन हृदयं शीर्षं तावताथो द्वयं द्वयात् ॥४३॥ चतुर्भिर्नयनं तद्वदस्त्रमे
केन कीर्तितम् ॥ दृक्श्रोत्रनासाद्वितये जिह्वाहृन्नाभिगुह्यके ॥ ४४ ॥ व्यापकत्वेन सर्वांगे मूर्द्धादिप्रपदावधि ॥ न्यसेद्विद्याक्षराण्येषु स्थानेषु तदनं
तरम् ॥ ४५ ॥ समस्तेन व्यापकं तु कुर्यादुक्तक्रमेण तु ॥ अथ ध्यानं प्रवक्ष्यामि नित्यपूजासु चोदितम् ॥ ४६ ॥ येन देवी सुप्रसन्ना ददातीष्टम
यत्नतः ॥ बालार्ककोटिसंकाशां माणिक्यमुकुटोज्ज्वलाम् ॥ ४७ ॥ हारग्रैवेयकांचीभिरूर्मिकानूपुरादिभिः ॥ मंडितां रक्तवसनां रत्नाभरणशोभि
ताम् ॥ ४८ ॥ षड्भुजां त्रीक्षणामिंदुकलाकलितमौलिकाम् ॥ पञ्चाष्टषोडशद्वंद्वषट्कोणचतुरस्रगाम् ॥४९॥ मंदस्मितलसद्वक्त्रां दयामंथरवीक्षणाम् ॥
पाशांकुशौ च पुंड्रेक्षुचापं पुष्पशिलीमुखम् ॥ ५० ॥ रत्नपात्रं सीधुपूर्णं वरदं बिभ्रतीं करैः ॥ ततः प्रयोगान्कुर्वीत सिद्धे मंत्रे तु साधकः ॥ ५१ ॥
तृतीयामथ वक्ष्यामि नाम्ना तु भगमालिनी ॥ कामेश्वर्यादिगादिः स्याद्रसश्चापस्थिरारसः ॥ ५२ ॥ धरायुक्सचरा पश्चात्स्थिरा पश्चाद्रसः स्मृतः ॥
स्थिराशून्येऽग्निसंयुक्ते रसः स्यात्तदनंतरम् ॥ ५३॥ स्थिरा भूसहिता गोत्रा सदाहोऽग्निरसः स्थिरा ॥नभश्च मरुता युक्तं रसवर्णसमन्वितम्॥५४॥ततो
रसः स्थिरा पश्चान्मरुता सह योजिता॥अंबहंसचरोऽथोक्तो रसोऽथ स्यात्स्थिरा पुनः॥५५॥स्थिराधरान्विता हंसो व्याप्तेन च चरेण च॥ रसः स्थिरा
ततो व्याप्तं भूयुतं शून्यमग्नियुक्॥५६॥रसः स्थिरा ततः साग्निशून्यं तद्वियुतो मरुत्॥ रयः शून्यं चाग्नियुतं हृदाहंसाच्च तत्परम्॥५७॥रसः स्थिरांबु
च वियत्स्वयुतं प्राण एव च॥दाहोऽग्नियुग्रसस्तस्मास्थिराक्ष्मा दाहसंयुता॥सचरः स्याज्जवीपूर्वविद्या तार्तीयतः क्रमात्॥५८॥चतुष्टयमथार्णानां रसस्त
दनु च स्थिरा॥हृदंबुयुक् क्ष्मया दाहः सचरः स्याज्जवी च हृत्॥५९॥दाहोंऽबुमरुता युक्तो व्योम्नि साग्निरसस्ततः॥स्थिरा तु मरुता युक्ता शून्यं साग्निनभ
श्वरौ॥६०॥हंसो व्याप्तमरुद्युक्तः शून्यं व्याप्तमतोंऽबु च॥दाहो गोत्राचरयुता तथा दाहस्तथा रयः॥६१॥हृद्रसहितं दाहरयौ चरसमन्वितौ॥रसः स्थिरा
ततः प्राणो रसाग्निसहितो भवेत् ॥६२॥ शून्ययुग्मं चरयुतं ततः पूर्वमतः परम् ॥ शून्ययुग्मं च गोत्रा स्याद्दाहयुक्तांबुना चरः॥६३॥प्राणो रसा
चरयुतो गोत्रव्यसिमतः परम् ॥ गोत्रादाहमरुद्युक्ता त्वंबुन्यासमतो भवेत् ॥ ६४॥ युक्तोनाभश्च भूयुक्तं वाश्वरेण समन्वितम् ॥ ग्रासो धरायुतः
पश्चाद्रसः शक्त्या समन्वितः ॥ ६५ ॥ ग्रासो भूसहितो विप्र रसो व्याप्तं ततश्च हृत् ॥दाहोनांबु च हृत्पश्चाद्रयेंऽबुमरुदन्वितः ॥६६ ॥ शून्यं
च केवलं चैव रसश्च सचरस्थिरा ॥ वियदंबुयुतं दाहस्त्वग्नियुक्सयुतः शुचिः ॥ ६७ ॥ भूमी रसाक्ष्मास्त्वयुता पंचैकांतरिताः स्थिताः ॥ तदंतरित
वीजानि स्वसंयुक्तानि पंच वै ॥ ६८ ॥ तानि क्रमाज्ज्यामचगो रमो भृश्च नमोयना ॥ हंमश्चगनो दिः व्यापनः प्राणो व्याग्निगच ॥६९॥ शून्य ॥ १९८ ॥

युग्मं चयुतं हदाहोंबुमरुद्युतः ॥ व्योमाग्निसहितं पश्चाद्रसश्च मरुता स्थिरा ॥७०॥ शून्यं साग्निनभश्चैव चरेण सहितं तथा ॥ अंबु पश्चाद्वियत्तस्मान्न भश्च मरुदन्वितम् ॥ ७१ ॥ शून्यं व्याप्तं च दद्युक्तं रयदाहस्ववह्निभिः ॥ हंसः सदाहोंबुरसा चरस्वैः संयुतो भवेत् ॥७२॥ हंसः सदाहवह्निस्वैर्युक्तं मंत्यमुदीरितम् ॥ सप्तत्रिंशच्छतार्णैः स्यान्नित्या सौभगमालिनी॥ ७३॥ अंगानि मंत्रवर्णैः स्युराद्येन हृदुदीरितम् ॥ ततश्चतुर्भिः शीर्षं स्याच्छिखा त्रिभिरुदीरिता ॥ ७४ ॥ गुणवेदाक्षरैः शेषाण्यंगानि षडिति क्रमात् ॥ अरुणामरुणाकल्पां सुंदरीं सुस्मिताननाम् ॥ ७५ ॥ त्रिनेत्रां बाहुभिः षड्भि रुपेतां कमलासनाम् ॥ कह्लारपाशपुंड्रेक्षुकोदंडान्वामबाहुभिः ॥ ७६ ॥ दधानां दक्षिणैः पद्ममंकुशं पुष्पसायकम् ॥ तथाविधाभिः परितो युतां शक्तिगणैः स्तुतैः॥७७ ॥ अक्षरोक्ताभिरन्याभिः स्मरोन्मादमदात्मभिः ॥ एषा तृतीया कथिता वनिता जनमोहिनी ॥ ७८ ॥ चतुर्थीं शृणु विप्रेन्द्र नित्यक्लिन्नासमाह्वयाम् ॥ हंसस्तु दाहवह्निस्वैर्युक्तः प्रथममुच्यते ॥७९ ॥ कामेश्वर्यास्तृतीयादिवर्णानामष्टकं भवेत् ॥ हदंबुमरुता युक्तः स एवै कादशाक्षरः ॥ ८० ॥ एकादशाक्षरी चेयं विद्यार्णैरंगकल्पनम् ॥ आद्येन मन्त्रवर्णेन हृदयं समुदीरितम् ॥ ८१ ॥ द्वाभ्यां द्वाभ्यां तु शेषाणि अंगानि परिकल्पयेत् ॥ न्यसेदंगुष्ठमूलादिकनिष्ठाग्रांतमूर्द्धगम् ॥८२॥ शेषं तद्वलये न्यस्य हृद्दृक्छ्रोत्रे नसोर्द्वयोः ॥ त्वचि ध्वजे च पायौ च पादयो र्वर्णकान्न्यसेत् ॥ ८३ ॥ अरुणामरुणाकल्पामरुणांशुकधारिणीम् ॥ अरुणस्रग्विलेपां तां चारुस्मेरमुखांबुजाम् ॥ ८४ ॥ नेत्रत्रयोल्लसद्वक्त्रां भाले घर्मांबुमौक्तिके ॥ विराजमानां मुकुटलसदर्द्धेंदुशेखराम् ॥ ८५ ॥ चतुर्भिर्बाहुभिः पाशमंकुशं पानपात्रकम् ॥ अभयं बिभ्रतीं पद्ममध्यासीनां मदालसाम् ॥ ८६ ॥ ध्यात्वैवं पूजयेन्नित्यक्लिन्नां नित्यां स्वशक्तिभिः। पुण्या चतुर्थी गदिता नित्याक्लिन्नाह्वया मुने ॥ ८७ ॥ वनिता नव नीतस्य दाविकाग्निर्जयादिना ॥ भूः स्वेन युक्ता प्रथमं प्राणो दाहेन तद्युतः ॥ ८८ ॥ रसो दाहेन तद्युक्तं प्रभादाहेन तद्युता ॥ ज्या च दाहेन तद्युक्ता नित्याक्लिन्नांतगद्वयम् ॥ ८९ ॥ एषा नवाक्षरी नित्या भेरुण्डा सर्वसिद्धिदा ॥ प्रणवं ठद्वयं त्यक्त्वा मध्यस्थैः षड्भिरक्षरैः ॥ ९० ॥ षडंगानि प्रकुर्वीत वर्णन्यासं ततः परम् ॥ रंध्राद्यास्यमुखकंठेषु हृन्नाभ्यां धारयद्वयम् ॥ ९१ ॥ न्यसेन्मंत्रार्णनवकं मातृकान्यासपूर्वकम् ॥ अथ ध्यानं प्रवक्ष्यामि देव्याः सर्वार्थसिद्धिदम् ॥ ९२ ॥तप्तकांचनसंकाशदेहां नेत्रत्रयान्विताम् ॥ चारुस्मितां चितमुखीं दिव्यालंकारभूषिताम् ॥ ९३॥ ताटंकहारकेयूररत्नस्तबक मंडिताम् ॥ रसनानूपुरोर्म्यादिभूषणैरतिसुन्दरीम् ॥ ९४ ॥ पाशांकुशौ चर्मखड्गौ गदावह्निधनुःशरान् ॥ करैर्दधानामासीना पूजायां पद्मसं स्थिताम् ॥ ९५ ॥ शक्तीश्च तत्समाकारतेजोहेतिभिरन्विताः ॥ पूजयेत्तद्वदभितः स्मितास्या विजयादिकाः ॥ ९६ ॥ पंचमीयं समाख्याता

भेरुंडाख्या मुनीश्वर ॥ यस्याः स्मरणतो नश्येद्गरलं त्रिविधं क्षणात् ॥९७॥ या तु षष्ठी द्विजश्रेष्ठ सा नित्या वह्निवासिनी ॥ तद्विधानं शृणुष्वाद्य साधकानां सुसिद्धिदम् ॥ ९८ ॥ भेरुंडाद्यमिहाद्यं स्यान्नित्यक्लिन्नाद्यनंतरम् ॥ ततोऽम्बुशून्ये हंसाग्निद्युत्तमंबुमरुद्युतम् ॥ ९९॥ हृदग्निना युतं शून्यं व्यासेन शुचिना च युक् ॥ शून्यं नभः शक्तियुतं नवार्णेयमुदाहृता ॥ १०० ॥ विद्या द्वितीयबीजेन स्वरान्दीर्घान्नियोजयेत् ॥ मायांतान्षड्विरेवां गान्याचरेत्सकरांगयोः ॥ १०१ ॥ नवाक्षराणि विद्याया नवरंध्रेषु विन्यसेत् ॥ व्यापकं च समस्तेन कुर्यादेवात्मसिद्धये ॥१०२ ॥ सर्वास्वपि च विद्यासु व्यापकन्यासमाचरेत् ॥ तप्तकांचनसंकाशां नवयौवनसुन्दरीम् ॥ १०३ ॥ चारुस्मेरमुखांभोजां विलसन्नयनत्रयाम् ॥ अष्टाभिर्बाहुभिर्युक्तां माणिक्याभरणोज्ज्वलाम् ॥ १०४ ॥ पद्मरागकिरीटांशुसंभेदारुणितांबराम् ॥ पीतकौशेयवसनां रत्नमंजीरमेखलाम् ॥ १०५ ॥ रक्तमौक्तिकसंभिन्नस्तबकाभरणोज्ज्वलाम् ॥ रत्नाब्जकंबुपुंड्रेक्षुचापपूर्णेन्दुमंडलम् ॥ १०६ ॥ दधानां बाहुभिर्वामैः कह्लारं हेमशृंगकम् ॥ पुष्पेषुं मातुलिंगं च दधानां दक्षिणैः करैः ॥ १०७ ॥ स्वस्वनामाभिरभितः शक्तिभिः परिवारिताम् ॥ एवं ध्यात्वार्चयेद्वह्निवासिनीं वह्निविग्रहाम् ॥ १०८ ॥ यस्याः स्मरणतो वश्यं जायते भुवनत्रयम् ॥ अथ या सप्तमी नित्या महावज्रेश्वरी मुने ॥ १०९ ॥ तस्या विद्यां प्रवक्ष्यामि साधकानां सुसिद्धिदाम् ॥ द्वितीयं वह्निवासिन्या नित्याक्लिन्ना चतुर्थकम् ॥ ११० ॥ पंचमं भगमालाद्यं भेरुंडाया द्वितीयकम्॥नित्यक्लिन्नाद्वितीयं च तृतीयं षष्ठसप्तमौ॥१११॥ अष्टम नवमं चापि पूर्वं स्यादंतिमं पुनः॥द्वयमेकैकमथ च द्वयद्वयमथ द्वयम्॥११२॥मायया पुटितं कृत्वा कुर्यादंगानि षट् क्रमात् ॥प्रत्येकं शक्तिपुटितैर्मंत्रार्णैर्दशभिर्न्यसेत् ॥ ११३ ॥ दृक्छ्रोत्रनासावाग्वक्षोनाभिगुह्येषु च क्रमात् ॥ रक्तां रक्तांबरां रक्तगंधमालाविभूषणाम् ॥ ११४ ॥ चतुर्भुजां त्रिनयनां माणिक्यमुकुटोज्ज्वलाम् ॥ पाशांकुशामिक्षुचापं दाडिमीशायकं तथा ॥११५॥ दधानां बाहुभिर्नेत्रैर्दयासुप्रीतिशीतलैः॥ पश्यंती साधके अत्र षट्कोणाब्जमहीपुरे ॥११६ ॥ चक्रमध्ये सुखासीनां स्मेरवक्त्रसरोरुहाम्॥ शक्तिभिः स्वस्वरूपाभिरावृतां पीतमध्यगाम्॥ ११७॥ सिंहासनेऽभितः प्रेंखत्पोतस्थाभिश्च शक्तिभिः ॥वृतां ताभिर्विनोदानि यातायातादिभिः सदा॥ ११८॥ कुर्वाणामरुणांभोधौ चिंतयेन्मन्त्रनायकम् ॥ एषा तु सप्तमी प्रोक्ता दूतीं चाप्यष्टमीं शृणु ॥ ११९ ॥ वज्रेश्वर्याद्यमाद्यं स्याद्वियदग्नियुतं ततः॥ अंबु स्यान्मरुता युक्तं गोत्रा क्ष्मासंयुता ततः॥१२०॥ स्योव्या- ॥ १९९ ॥
सेन शुचिना युतः स्यात्तदनंतरम् ॥अत्यार्णा वह्निवासिन्या दूती नित्या समीरिता: ॥१२१ ॥षड्दीर्घस्वरयुक्तेन विद्यायाः स्यात्षडंगकम् ॥ तेनैव पुटितैर्वर्णैर्न्यसेच्छ्रोत्रादिपञ्चसु ॥ १२२ ॥ षष्ठकं नासि विन्यस्य व्यापकं विद्यया न्यसेत् ॥ निदाघकालमध्याह्नदिवाकरसमप्रभाम् ॥ १२३ ॥

नवरत्नकिरीटां च त्रीक्षणामरुणांबराम् ॥ नानाभरणसंभिन्नदेहकांतिविराजिताम् ॥ १२४ ॥ शुचिस्मितामष्टभुजां स्तूयमानां महर्षिभिः ॥ पाशं
खेटं गदां रत्नचषकं वामबाहुभिः ॥ १२५ ॥ दक्षिणैरंकुशं खड्गं कट्टारं कमलं तथा ॥ दधानां साधकाभीष्टदानोद्यमसमन्विताम् ॥ १२६॥ ध्यात्वैवं
पूजयेद्देवीं दूतीं दुर्नीतिनाशिनीम् ॥ इत्येषा कथिता तुभ्यं समस्तापन्निवारिणी ॥ १२७ ॥ श्रीकरी शिवतावासकारिणी सर्वसिद्धिदा ॥ अथ ते
नामीं नित्यां त्वरितां नाम नारद ॥ १२८ ॥ प्रवक्ष्यामि यशोविद्याधनारोग्यसुखप्रदाम् ॥ आद्यं तु वह्निवासिन्या दूत्यादिस्तदनन्तरम् ॥१२९॥
हंसो धरा स्वयं युक्तस्तेजश्चरसमन्वितम् ॥ वायुः प्रभाचरयुता ग्रासशक्तिसमन्वितः ॥ १३० ॥ हदार येण दाहेन वह्निस्त्वावष्टमं तथा ॥ हंसः
क्ष्माखंयुतो ग्रासश्चरयुक्तो द्वितीयकः ॥ १३१ ॥ द्वितिर्नादयुता नित्या त्वरिता द्वादशाक्षरी ॥ विद्या चतुर्थवर्णादिसप्तभिस्त्वक्षरैस्तथा ॥ १३२ ॥
कुर्यादंगानि युग्मार्णैः षट्क्रमेण करांगयोः ॥ शिरोललाटकंठेषु हृन्नाभ्याधारके तथा ॥ १३३॥ ऊरुयुग्मे तथा जानुद्वये जंघाद्वये तथा ॥ पादयुग्मे तथा
वर्णान्मंत्रजान्दश विन्यसेत्॥ १३४॥ द्वितीयोपांत्यमध्यस्थैर्मंत्रार्णैरितरैरपि ॥ ताराद्यैः शृणु तद्ध्यानं सर्वसिद्धिविधायकम् ॥१३५॥ श्यामवर्णशुभाकारां
नवयौवनशोभिताम् ॥ द्विद्विकमादष्टनागैः कल्पिताभरणोज्ज्वलैः ॥ १३६ ॥ ताटंकमंगदं तद्वद्रसना नूपुरं च तैः ॥ विप्रक्षत्रियविट्शूद्रजातिभिर्भी
मविग्रहैः ॥ १३७ ॥ पल्लवांशुकसंवीतां शिखिपिच्छकृतैः शुभैः ॥ वलयैर्भूपितभुजां माणिक्यमुकुटोज्ज्वलाम् ॥ १३८ ॥ वर्हिवर्हकृतापीडां तच्छत्रां
तत्पताकिनीम् ॥ गुंजागुणलसद्वक्षःकुचकुंकुममंडलाम् ॥ १३९ ॥ त्रिनेत्रां चारुवदनां मंदस्मितमुखांबुजाम् ॥ पाशांकुशवराभीतिलसद्भुज
चतुष्टयाम् ॥ १४० ॥ ध्यात्वैवं तोतलां देवीं पूजयेच्छक्तिभिर्वृताम् ॥ तदग्रस्था तु फट्कारी शरचापकरोज्ज्वला ॥ १४१ ॥ प्रसीदेत्फलदाने च
साधकानां त्वरान्विता ॥ एषा तु नवमी नित्या त्वरितोक्ता मुनीश्वर॥ १४२ ॥ विघ्नदुःस्वप्रशमनी सर्वाभीष्टप्रदायिनी ॥ शुचिः स्वेन युतस्त्वाद्यो
रसावह्निसमन्वितः ॥ १४३॥ प्राणो द्वितीयः स्वयुतो वनदुच्छक्तिभिः परः ॥ इतीरिता त्र्यक्षराख्या नित्येयं कुलसुंदरी ॥ १४४ ॥ यस्याः स्मरण
मात्रेण सर्वज्ञत्वं प्रजायते ॥ त्रिभिस्तैरुदितैर्मूलवर्णैः कुर्यात्षडंगकम् ॥ १४५ ॥ आदिमध्यावसानेषु पूजाजपविधिक्रमात् ॥ प्रत्येक तैस्त्रिभिर्बीजै
र्दीर्घस्वरसमन्वितैः ॥१४६॥ कुर्यात्करांगवक्त्राणां न्यासं प्रोक्तं यथाविधि ॥ ऊर्द्धप्राग्दक्षिणोदक्च पश्चिमाधस्त्वामभिः ॥१४७॥ सुविनद्यंनरस्थैस्तन्न
दात्मसु यथाक्रमम् ॥ आधाररंध्रहृत्स्वेकं द्वितीयं लोचनत्रये॥ १४८॥ तृतीयं श्रोत्रचिबुके चतुर्थं प्राणतालुषु ॥ पंचमं चांसनाभीषु ततः पाणिपद
द्वये ॥ १४९ ॥ मूलमध्याग्रतो न्यस्येन्नवधा मूलवर्णकैः ॥ लोहितां लोहिताकारशक्तिवृंदनिषेविताम् ॥ १५० ॥ लोहितांशुकभूषास्रग्ले





पनां षण्मुखांबुजाम् ॥ अनर्घ्यरत्नघटितमाणिक्यमुकुटोज्वलाम् ॥ १६१ ॥ रत्नस्तबकसंभिन्नलसद्वक्षःस्थलां शुभाम् ॥ कारुण्यानंदपरमा
मरुणांबुजविष्टरम् ॥ १६२॥भुजैर्द्वादशभिर्युक्तां सर्वेषां सर्ववाङ्मयीम् ॥ प्रवालाक्षस्रजं पद्मं कुंडिकां रत्ननिर्मिताम् ॥ १६३ ॥ रत्नपूर्णं तु चषकं
लुंगीं व्याख्यानमुद्रिकाम् ॥ दधानां दक्षिणैर्वामैः पुस्तकं चारुणोत्पलम् ॥१६४॥ हैमीं च लेखनीं रत्नमालां कंबुवरं भुजैः ॥ अभितः स्तूयमानां
च देवगंधर्वकिन्नरैः॥१६५॥यक्षराक्षसदैत्यार्षैसिद्धविद्याधरादिभिः ॥ ध्यात्वैवमर्चयेन्नित्यां वाग्लक्ष्मीकान्तिसिद्धये ॥ १६६ ॥सितां केवलवाक्सिद्ध्यै
लक्ष्म्यै हेमप्रभामपि ॥ धूमाभां वैरिविद्विष्ट्यै मृतये निग्रहाय च ॥ १६७॥ नीलां च मूकीकरणे स्मरेत्तत्तदपेक्षया ॥ इत्येषा दशमी नित्या
प्रोक्ता ते कुलसुन्दरी ॥ १६८ ॥ नित्यानित्यां तु दशमीं त्रिकुटां वच्मि सांप्रतम् ॥ हंसश्च हृत्प्राणरसादाहकर्णैः समन्वितः ॥ १६९ ॥ विद्यया
कुलसुंदर्या योजितः संप्रदायतः ॥ नित्यानित्यत्रिवर्णेयं षड्भिः कूटाक्षरैर्युता ॥१६०॥ प्रतिलोमादिभी रूपैर्द्विसप्ततिभिदा मता ॥ यस्या भजनतः
सिद्धो नरः स्यात्खेचरः सुखी ॥ १६१ ॥ निग्रहानुग्रहौ कर्तुं क्षमः स्याद्भुवनत्रये॥दीर्घस्वरसमेताभ्यां हंसहृद्भ्यां षडंगकम् ॥१६२ ॥ भ्रूमध्ये कण्ठहृ
न्नाभिगुह्याधारेषु च क्रमात् ॥ विद्याक्षराणि क्रमशो न्यसेद्विंदुयुतानि च ॥ १६३ ॥ व्यापकं च समस्तेन विधाय विधिना पुनः ॥ ध्यायेत्समस्त
संपत्तिहेतोः सर्वात्मिकां शिवाम् ॥ १६४ ॥ उद्यद्भास्करबिंबाभां माणिक्यमुकुटोज्ज्वलाम् ॥ पद्मरागकृताकल्पामरुणांशुकधारिणीम् ॥ १६५ ॥
चारुस्मितलसद्वक्त्रषट्सरोजविराजिताम् ॥ प्रतिवक्त्रं त्रिनयनां भुजैर्द्वादशभिर्युताम् ॥ १६६ ॥ पाशाक्षगुणपुंड्रेक्षुचापखेटत्रिशूलकान् ॥ करैर्वामैर्द
धानां च अङ्कुशं पुस्तकं तथा ॥ १६७ ॥ पुष्पेषुमंबुजं चैव नृकपालाभये तथा ॥ दधानां दक्षिणैर्हस्तैर्ध्यायेद्देवीमनन्यधीः ॥ १६८ ॥ इत्येकाद
दशी प्रोक्ता द्वादशीं शृणु नारद ॥ त्वरितोयांत्यमाद्यं स्याद्युतिदोहचरस्वयुक्॥१६९॥हृच्च दाहक्ष्मास्वयुतं वज्रेशीपञ्चमं तथा॥ मरुत्स्वयुक्तो मध्याढ्यो
दशम्याः परतः पुनः॥१७० ॥भूमी रसाक्ष्मास्वयुता वज्रेशीत्यष्टमः क्रमात् ॥ षडक्षराणि त्वरिता तृतीयं तदनंतरम् ॥ १७१ ॥ द्युतिर्दाहचरस्वेन
अस्या आद्यमनन्तरम् ॥ उक्ता नीलपताकाख्या नित्या सप्तदशाक्षरी॥१७२॥द्विद्विपक्षाक्षिषड्वर्णैर्मंत्रोत्थैरंगकल्पनम् ॥ श्रोत्रादिनासायुगले वाचि
कण्ठे हृदि क्रमात् ॥१७३॥ नाभावाधारके ऽथापि पादसंधिषु च क्रमात् ॥मन्त्राक्षराणि क्रमशो न्यसेत्सप्तदशापि च॥१७४ ॥ व्यापकं च सम
स्तेन विदध्याच्च यथाविधि ॥ इन्द्रनीलनिभां भास्वन्मणिमौलिविराजिताम् ॥ १७५ ॥ पञ्चवक्त्रां त्रिनयनामरुणांशुकधारिणीम् ॥ दशहस्तां लस ॥ २०० ॥
न्मुक्तामण्याभरणमंडिताम् ॥ १७६ ॥ रत्नस्तवकसंपन्नदेहां चारुस्मिताननाम् ॥ पाशं पताकां चर्मापि शार्ङ्गचापं वरं करैः ॥ १७७ ॥ दधानां वाम

पार्श्वस्थैः सर्वाभरणभूषितैः ॥ अंकुशं च तथा शक्तिं खड्गं बाणं तथाभयम् ॥ १७८ ॥ दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरे ॥ स्वाकारवर्णवेषास्यपाण्यायुधविभूषणैः ॥ १७९ ॥ शक्तिवृन्दैर्वृतां ध्यायेद्देवीं नित्यार्चनकमे ॥ त्रिषट्कोणयुतं पद्ममष्टपत्रं ततो बहिः ॥ १८० ॥ अष्टास्रं भूपुरद्वन्द्वावृतं तत्पुरयुग्मकम् ॥ चतुर्द्वारयुतं दिक्षु शाखाभिश्च समन्वितम् ॥ १८१ ॥ कृत्वा नामावृतां शक्तिं गणैस्तत्रार्चयेच्छिवाम् ॥ एषा ते द्वादशी नित्या प्रोक्ता नीलपताकिनी ॥ १८२ ॥ समरे विजयं खड्गपादुकांजनसिद्धिदा ॥ वेतालयक्षिणीचेटपिशाचादिप्रसाधिनी ॥ ॥ १८३ ॥ निधानविलसिद्धान्नसाधिनी कामचोदिता ॥ अथ त्रयोदेशीं नित्यां वक्ष्यामि शृणु नारद ॥ १८४ ॥ रसो नभस्तथा दाहो व्याप्तङ्मात्वनपूर्विका ॥ खेन युक्ता भवेन्नित्या विजयैकाक्षरा मुने ॥ १८५ ॥ विद्याया व्यंजनैर्दीर्घस्वरयुक्तैश्चतुष्टयम् ॥ शेषाभ्यां च द्वयं कुर्यात्षडंगानि करांगयोः ॥ १८६ ॥ ज्ञानेंद्रियेषु श्रोत्रादिष्वथ चित्ते च विन्यसेत् ॥ अक्षराणि क्रमाद्बिन्दुयुतान्यन्यत्तु पूर्ववत् ॥ १८७ ॥ पञ्चवक्त्रां दशभुजां प्रतिवक्त्रं त्रिलोचनाम् ॥ भास्वन्मुकुटविन्यासचन्द्रलेखाविराजिताम् ॥ १८८ ॥ सर्वाभरणसंयुक्तां पीतांबरसमुज्ज्वलाम् ॥ उद्यद्भास्वद्बिंबतुल्यदेहकांतिं शुचिस्मिताम् ॥ १८९ ॥ शंखं पाशं खेटचापौ कह्लारं वामबाहुभिः ॥ चक्रं तथांकुशं खड्गं सायकं मातुलुंगकम् ॥ १९० ॥ दधानां दक्षिणैर्हस्तैः प्रयोगे भीमदर्शनाम् ॥ उपासनेति सौम्यां च सिंहोपरि कृतासनाम् ॥ १९१ ॥ व्याघ्रारूढाभिरभितः शक्तिभिः परिवारिताम् ॥ समरे पूजनेऽन्येषु प्रयोगेषु सुखासनाम् ॥ १९२ ॥ शक्तयश्चापि पूजायां सुखासनसमन्विताः ॥ सर्वा देव्याः समाकारमुखपाण्यायुधा अपि ॥ १९३ ॥ चतुरस्रद्वयं कृत्वा चतुर्द्वारोपशोभितम् ॥ शाखाष्टकसमोपेतं तत्र प्राग्वत्समर्चयेत् ॥ १९४ ॥ तदंतर्वृत्तयुग्मांतरष्टकोणं विधाय तु ॥ तदंतश्च तथा पद्मं षोडशच्छदसंयुतम् ॥ १९५ ॥ तथैवाष्टच्छद पद्मं विधायावाह्य तत्र ताम् ॥ तत्तच्छक्त्या वृतां सम्यगुपचारैस्तथार्चयेत् ॥ १९६ ॥ एषा त्रयोदशी प्रोक्ता वादे युद्धे जयप्रदा ॥ चतुर्दशीं प्रवक्ष्येऽथ नित्यां वै सर्वमंगलाम् ॥१९७॥ हृद्भुवनयुक्तं खं नित्या स्यात्सर्वमंगला ॥१९८॥एकाक्षर्यनया सिद्धो जायते खेचरः क्षणात् ॥ षड्दीर्घाढ्यां मूलविद्यां षडंगेषु प्रविन्यसेत् ॥१९९॥ तां नित्यां जातरूपाभां मुक्तामाणिक्यभूषणाम् ॥ माणिक्यमुकुटां नेत्रद्वयप्रेंखद्दयापराम् ॥ २००॥ द्विभुजां शासनां पद्मे त्वष्टषोडशतद्दलैः ॥ पत्रैरुपेते सचतुर्द्वारभूसद्मयुग्मके ॥ २०१ ॥ मातुलुंगफलं दक्षे दधानां करपंकजे ॥ वामेन निजभक्तानां प्रयच्छंतीं धनादिकम् ॥ २०२ ॥ स्वसमानाभिरभितः शक्तिभिः परिवारिताम् ॥ षट्सप्ततिभिरन्याभिरप्सरोत्थाभिरन्विताम् ॥ २०३ ॥ प्रयोगेष्वन्यदा नित्यं सपर्यासक्तशक्तिकाम् ॥ एषा चतुर्दशी

प्रोक्ता तथा पंचदशीं शृणु ॥ २०४॥ भूः शून्यं नभसा भूश्च रसश्चाथ स्थिरांबु च॥रयोग्निना युतीज्यांबुमरुद्युक्तारसा मरुत् ॥२०५॥नभश्च मरुता
युक्तं रसा शून्येऽपि संयुते॥गोत्रा चरेण सहिता अंबुपूर्वाक्षरस्तथा॥२०६॥अंब्वग्नी हच दाहांबुरसक्ष्मारयहत्स्वयुक्॥हंसश्च मरुता दाहः प्राणश्च मरुता
युतः ॥ २०७ ॥ दाहः साग्निप्राणचरौ ज्यामरुत्सहितारयः ॥ चरेणांबु च गोत्राहृत्साग्निज्यांबुरसा स्वयुक् ॥२०८॥ रयः साग्निज्यांबुरसा पुनरेते
जवी ततः ॥ दाहेनानेन ते द्विः स्याद्ध्रस्वो दाहमरुत्स्वयुक् ॥ २०९ ॥ हंसः सदाहवह्निस्वो दाहक्ष्मास्वयुतश्च सः ॥ सप्तदाहास्ततोऽस्याः स्युरष्ट
मायास्तु पंच ते ॥ २१० ॥ उपांत्याधः स्थितं नीलपताकाया अनंतरम् ॥ त्वरिता त्वं च भेरुंडाष्टमं च नवमं तथा ॥ २११ ॥ सा ज्वालामालिनी
नित्या त्रिषष्ट्यर्णा समीरिता ॥ एकद्वयचतुःपंचचतुष्टयदशाक्षरैः ॥ २१२ ॥ कुर्यादंगानि मूलार्णैरादितः पद्दरांगयोः ॥ शेषैस्तु व्यापकं कुर्यात्ततो
ध्यायेत्सनातनीम् ॥२१३॥ ज्वलज्ज्वलनसंकाशां माणिक्यमुकुटोज्ज्वलाम् ॥ षड्वक्त्रां द्वादशभुजां सर्वाभरणभूषिताम् ॥ २१४॥ पाशांकुशौ खड्ग
खेटौ चापबाणौ गदादरौ ॥ शूलवह्नी वराभीती दधानां करपंकजैः ॥ २१५ ॥ स्वप्रमाणाभिरभितः शक्तिभिः परिवारिताम् ॥चारुस्मितलसद्वक्त्र
सरोजां त्रीक्षणान्विताम् ॥ २१६ ॥ ध्यात्वैवमुपचारैस्तैरर्चयेत्तां तु नित्यशः ॥ चतुरस्रद्वयं कृत्वा चतुर्द्वारसमन्वितम् ॥ २१७ ॥ सशाखम
ष्टपत्राब्जमंतरा त्र्यस्रकं ततः ॥ षट्कोणं मध्यतस्त्र्यस्रं विधायात्र शिवां यजेत् ॥२१८॥ एषा पंचदशी प्रोक्ता षोडशीं शृणु नारद ॥ वायुप्रणवतत्त्वैस्तु
चित्रास्यादक्षरद्वया ॥ २१९ ॥ या सिद्धा धनधान्यात्मनिधिलाभाय कल्प्यते ॥ विद्याद्यवायुना कुर्याद्दीर्घस्वरयुजा क्रमात् ॥ २२० ॥ षडंगानि
यथापूर्वं मातृकां विद्यया न्यसेत् ॥ उद्यदादित्यबिंबाभां नवरत्नविभूषणाम् ॥ २२१ ॥ नवरत्नकिरीटां च चित्रपट्टांशुकोज्ज्वलाम् ॥ चतुर्भुजां त्रिन
यनां शुचिस्मितलसन्मुखीम् ॥ २२२ ॥ सर्वानंदमयीं नित्यां समस्तेप्सितदायिनीम् ॥ चतुर्भुजेषु वै पाशमंकुशं वरदाभये ॥२२३॥दधानां मंगलां
पद्मकर्णिकायोनिमध्यगाम् ॥ तच्छक्तिभिश्च तच्चक्रे तथैवार्चनमीरितम् ॥ २२४ ॥ प्राणदाहौ धरायुक्तो पुनराद्यं रसे मरुत् ॥ न्यासं मरुच्छक्तियुतं
भूः स्वयुक्ता ततस्त्रयम् ॥ २२५ ॥ अस्या आद्यं रसायुग्मं चरणेन प्रयोजितम् ॥ दाहेन वह्निशक्तिभ्यां युतो हंसस्ततः परम् ॥ २२६ ॥ नभो
दिर्हृत्सदाहांबुज्या शून्यं स्वेन संयुतम्॥ अंबु पश्चाद्विपयुक्तं मरुता तु नभोयुतम् ॥ २२७ ॥ शून्यं व्याप्तं भुवा हंसः पूर्वांत्यौ स्यान्मनुत्रयम् ॥
अस्याः षष्ठादिपंचार्णा दैत्यास्यादाद्य ईरितः ॥ २२८ ॥ एकादशाक्षरादंत्या द्वितीयः खंड ईरितः ॥ तृतीयः पंचविंशार्णः प्रोक्ता मंत्रा इति क्रमात् ॥
॥२२९ ॥ बाला बीजत्रयावृत्तिस्त्रिभिर्मंत्रैः षडंगकम् ॥ विकीर्णकुंतलां नम्रां रक्तामानंदविग्रहाम् ॥ २३० ॥ दधानां चिंतयेद्बाणचापपाशसृणी

करैः ॥ तत्प्रमानायुधाकारवर्णा देव्यस्तु वा ॥ २३१ ॥ ऋतुस्नाताः स्फुरद्योन्यः सदानंदारुणेक्षणाः ॥ इत्येषा कुरुकुल्लेति प्रोक्ता चंद्रावली स्वयम् ॥ २३२ ॥ वाराहीमभिधास्यामि ललितायाः परा तनुः ॥ शुचिः स्वेनाथ शून्यं स्यान्नभसाभ्ररसस्थिरा ॥ २३३ ॥ अंबु पश्चाद्द्वयः सामिर्मरुतांबुरयौ तथा ॥ इलायुतोऽग्निरेतानि पुनरंबुमरुद्युतम् ॥२३४॥ दाहांबुमरुतांहंसस्त्वग्निनैतत्त्रयं पुनः ॥अम्बुदाहौ मरुद्युक्तौ हंसोऽथ धरया नभः ॥ २३५ ॥ तेजोग्निना पुनः पंच वातः स्वेन समायुतः॥तोयं चरेण तत्पूर्वं तोयमग्नियुतं ततः ॥२३६ ॥शून्यं व्याप्तेन शुचिना शून्यं शक्त्या नभोयुतम् ॥ दाहो धरा स्वसहितस्तोयं चरसमन्वितम् ॥ २३७ ॥ एतत्पूर्वमधुः प्रोक्तं चतुष्टयमतः परम्॥ ज्याख्येन युक्ता सचरो रभश्चैतस्य पूर्वकम्॥ ॥२३८॥रसोऽग्निना पुनः प्रोक्तं चतुष्का अपयं ततः॥शुभोभ्रता चरेणापि हंसः स्वेन सपूर्वकम्॥२३९॥हंसोऽग्निना प्राक् त्रितयं हृदयं स्वसमायुतम्॥ रसश्चरेण तत्पूर्वमग्निना च रसो युतः॥२४०॥पश्चादुक्तस्त्रयं वातो धरया च नभोन्वितम्॥प्राणः स्वेन युतः पश्चाद्धृदयस्त्वयुतं रसः॥२४१॥व्याप्तमेतत्त्रयं पश्चाद्दाहेनांबु समन्वितम् ॥ गोत्राभरायुता स्पर्शो नादयुक्तो जवीयुतः ॥ २४२ ॥ दाहेन पूर्वपूर्वं च पूर्वं च मरुता युतम् ॥ शून्यं मरुत्स्वसहितं हृद्दाहेनांबुना चरः ॥ २४३ ॥ स्पर्शो मरुत्स्वसहितो हृद्दाहेनांबुसंयुतम् ॥ज्याभिः स्वसंयुतो हंसस्तथांबु मरुता सह ॥ २४४ ॥ हृद्भ्रमेण स्वेन युतं रसश्च स्वेन संयुतः॥ प्राणदाहौ धरायुक्तौ पुनस्तौ वह्निना वियत् ॥ २४५ ॥ वार्दाहयुक्तमंबु स्यादिषष्ट्यासस्वसंयुतम् ॥ पूर्वद्विरुक्तवर्णौ च शुद्धिः स्वेन युतस्तथा ॥ २४६ ॥ स्थिरा रसा वतस्वेन दावौ हंसौ धरा स्वयुक् ॥ युतिर्नादवती पश्चाद्धृदंबुमरुता युतम् ॥२४७ ॥हंसश्च मरुता विद्यः दशोत्तरशताक्षरी ॥ वाराही पंचमी विश्वविजया भद्रकौमुदी॥२४८॥वार्तालीति च विख्याता स्तंभनाद्यखिलेष्टदा॥ अंगानि कुर्यान्मंत्रार्णैः सप्तभिः षड्भिरेव च॥२४९॥दशभिः सप्तभिः सप्तसंख्यैर्जातिभिरर्दिताः॥त्रिकोणवृत्तषट्कोणवृत्तद्वयसमन्वितम् ॥२५०॥ विधाय चक्रं तत्रैव स्वनामालिख्य पूजयेत् ॥ ध्यायेच्च देवीं कीलास्यां ततः कांचनसन्निभाम् ॥ २५१ ॥ आकंठं वनिताकृपां ज्वलत्पिंगसरोरुहाम् ॥ त्रिनेत्रामष्टहस्तां च चक्रं शंखमथांकुशम्॥ २५२ ॥ पाशं च मुशलं शीर्षमभयं वरदं तथा॥ दधानां गरुडस्कन्धे सुखासीनां विचिंतयेत् ॥ २५३ ॥ नित्यपूजासु तच्छक्तीस्तत्समानाः स्मरेन्मुने ॥ प्रयोगेषु स्मरेद्देवीं सिंहस्थां व्याघ्रगामपि ॥२५४॥गजारूढां हयारूढां कूर्म्यारूढां च शक्तिभिः ॥ श्यामामप्यरुणां पीतामसितांभोजविग्रहाम् ॥ २५५ ॥तत्तत्प्रयोगेषु तथा ध्यायेत्तत्तदवाप्तये ॥अरुणां पंचमीं वश्ये पीतां स्तंभनके स्मरेत्॥२५६॥श्यामां च दुर्गमे मार्गे सितां युद्धेऽरिनष्टयं॥धूम्रामुच्चाटने ध्यायेत्साधको द्विजसत्तमः॥२५७॥एताः षोडश नित्यास्ते संप्रोक्ताः समुदारिताः॥ भजतामिष्टदाः सद्यः सर्वपापक्षयंकराः





॥२५८॥ इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे राधादिमन्त्रनिरूपणं नामाष्टाशीतितमोऽध्यायः॥८८॥सनत्कुमार उवाच॥अथा
सामावृतिस्थानां शक्तीनां समयेन च ॥ नाम्नां सहस्रं वक्ष्यामि गुरुध्यानपुरःसरम् ॥१॥ नाथा नव प्रकाशाद्याः सुभगांताः प्रकीर्तिताः ॥ भूम्यादीनि
शिवांतानि विद्धि तत्त्वानि नारद॥२॥गुरुजन्मादिपर्वाणि दर्शान्तानि च सप्त वै॥एतानि प्राक्समनोवृत्त्या चिंतयेत्साधकोत्तमः॥३॥गुरुस्तोत्रं जपेच्चापि
तद्गतेनांतरात्मना ॥ नमस्ते नाथ भगवञ्शिवाय गुरुरूपिणे ॥ ४ ॥ विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ नवाय नवरूपाय परमार्थैकरूपिणे
॥ ५ ॥ सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ स्वतंत्राय दयाक्लृप्तविग्रहाय शिवात्मने॥ ६ ॥ परतंत्राय भक्तानां भव्यानां भव्यरूपिणे॥ विवेकिनां
विवेकाय विमर्शाय विमर्शिनाम् ॥ ७ ॥ प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥ पुरस्तात्पार्श्वयोः पृष्ठे नमः कुर्यामुपर्यधः ॥ ८ ॥ सदा
मच्चित्तसदने विधेहि भवदासनम् ॥ इति स्तुत्वा गुरुं भक्त्या परां देवीं विचिंतयेत् ॥ ९ ॥ गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ॥ देवीं मंत्रमयीं
नौमि मातृकापीठरूपिणीम् ॥ १० ॥ प्रणमामि महादेवीं मातृकां परमेश्वरीम् ॥ कालहल्लोहलोल्लोहकलानाशनकारिणीम् ॥ ११॥ यदक्षरै
कमात्रेऽपि संसिद्धे स्पर्द्धते नरः ॥ रविताक्ष्यैंदुकन्दर्पैः शंकरानलविष्णुभिः ॥ १२ ॥ यदक्षरशशिज्योत्स्नामंडितं भुवनत्रयम् ॥ वन्दे सर्वेश्वरीं देवीं
महाश्रीसिद्धमातृकाम् ॥ १३ ॥ यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ॥ ब्रह्मांडादिकटाहांतं तां वन्दे सिद्धमातृकाम् ॥ १४ ॥ यदेकादशमाधारं
बीजं कोणत्रयोद्भवम् ॥ ब्रह्मांडादिकटाहांतं जगदद्यापि दृश्यते ॥ १५ ॥ अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ॥ ज्येष्ठांगबाहुहृत्कंठकटिपाद
निवासिनीम् ॥ १६ ॥ नौमीकाराक्षरोद्धारां सारात्सारां परात्पराम् ॥ प्रणमामि महादेवीं परमानंदरूपिणीम् ॥ १७ ॥ अथापि यस्या जानंति
न मनागपि देवताः ॥ केयं कस्मात्क्व केनेति सरूपारूपभावनाम् ॥१८॥ वंदे तामहमक्षय्यां क्षकाराक्षररूपिणीम् ॥ देवीं कुलकलोल्लोलप्रोल्लसन्तीं
शिवां पराम् ॥ १९ ॥ वर्गानुक्रमयोगेन यस्याख्योमाष्टकं स्थितम् ॥ वन्दे तामष्टवर्गोत्थमहासिद्ध्यादिकेश्वरीम् ॥ २० ॥ कामपूर्णजकाराख्य
सुपीठांतर्न्निवासिनीम् ॥ चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥ २१ ॥ एतत्स्तोत्रं तु नित्यानां यः पठेत्सुसमाहितः ॥ पूजादौ तस्य सर्वास्ता
वरदाः स्युर्न संशयः ॥ २२ ॥ अथ ते कवचं देव्या वक्ष्ये नवरतात्मकम् ॥ येन देवासुरनरजयी स्यात्साधकः सदा ॥ २३ ॥ सर्वतः सर्वदा
त्मानं ललिता पातु सर्वगा ॥ कामेशी पुरतः पातु भगमाली त्वनंतरम् ॥ २४ ॥ दिशं पातु तथा दक्षपार्श्वे मे पातु सर्वदा ॥ नित्यक्लिन्नाथ भेरुण्डा ॥ २०२ ॥
दिशं मे पातु कौणपीम् ॥ २५ ॥ तथैव पश्चिमं भागं रक्षताद्वह्निवासिनी ॥ महावज्रेश्वरी नित्या वायव्ये मां सदावतु ॥ २६ ॥वामपार्श्वं सदा पातु

इनीमेलरिता ततः ॥ माहेश्वरी दिशं पातु त्वरितं सिद्धिदायिनी ॥ २७ ॥ पातु मामूर्ध्वतः शश्वदेवताकुलसुंदरी ॥ अधो नीलपताकाख्या विजया सर्वतश्च माम् ॥ २८ ॥ करोतु मे मंगलानि सर्वदा सर्वमंगला ॥ देहेंद्रियमनःप्राणाञ्ज्वालामालिनिविग्रहा ॥ २९ ॥ पालयत्वनिशं चित्ता चित्तं मे सर्वदावतु ॥ कामात्क्रोधात्तथा लोभान्मोहान्मानान्मदादपि ॥ ३० ॥ पापान्मां सर्वतः शोकात्संक्षयात्सर्वतः सदा ॥ असत्यात्क्रूरचिंतातो हिंसातश्चौरतस्तथा ॥ स्तैमित्याच्च सदा पांतु प्रेरयंत्यः शुभं प्रति ॥ ३१॥ नित्याः षोडश मां पांतु गजारूढाः स्वशक्तिभिः ॥ तथा हयसमारूढाः पांतु मां सर्वतः सदा ॥३२॥ सिंहारूढास्तथा पांतु पांतु ऋक्षगता अपि ॥ रथारूढाश्च मां पांतु सर्वतः सर्वदा रणे ॥ ३३ ॥ तार्क्ष्यारूढाश्च मां पांतु तथा व्योमगताश्च ताः ॥ भूतगाः सर्वगाः पांतु पांतु देव्यश्च सर्वदा ॥ ३४ ॥ भूतप्रेतपिशाचाश्च परकृत्यादिकान् गदान् ॥ द्रावयंतु स्वशक्तीनां भूषणैरायुधैर्मम ॥ ३५ ॥ गजाश्वद्वीपिपंचास्यतार्क्ष्यारूढाखिलायुधाः ॥ असंख्याः शक्तयो देव्यः पांतु मां सर्वतः सदा ॥ ३६ ॥ सायं प्रातर्जपन्नित्याकवचं सर्वरक्षकम् ॥ कदाचिन्नाशुभं पश्येत्सर्वदानंदमास्थितः ॥ ३७ ॥ इत्येतत्कवचं प्रोक्तं ललितायाः शुभावहम् ॥ यस्य संधारणान्मर्त्यो निर्भयो विजयी सुखी ॥ ३८ ॥ अथ नाम्नां सहस्रं ते वक्ष्ये सावरणार्चनम् ॥ षोडशानामपि मुने स्वस्वक्रमगतात्मकम् ॥ ॥ ३९ ॥ ललिता चापि वा कामेश्वरी च भगमालिनी ॥ नित्यक्लिन्ना च भेरुंडा कीर्तिता वह्निवासिनी ॥ ४० ॥ वज्रेश्वरी तथा दूती त्वरिता कुलसुंदरी ॥ नित्या संवित्तथा नीलपताका विजयाह्वया ॥ ४१ ॥ सर्वमंगलिका चापि ज्वालामालिनिसंज्ञिता ॥ चित्रा चेति क्रमान्नित्याः षोडशापीष्टविग्रहाः ॥ ४२ ॥ कुरुकुल्ला च वाराही द्वे एते चेष्टविग्रहे ॥ वशिनी चापि कामेशी मोहिनी विमलारुणा ॥ ४३ ॥ तपिनी च तथा सर्वेश्वरी चाप्यथ कौलिनी ॥ मुद्राणंतनुरिष्वर्णरूपा चापार्णविग्रहा ॥ ४४ ॥पाशवर्णशरीरा चाकुर्वर्णसुवपुर्द्धरा ॥ त्रिखंडा स्थापनी सन्निरोधनी चावगुंठनी ॥ ४५ ॥ सन्निधानेषु चापाख्या तथा पाशांकुशाभिधा॥ नमस्कृतिस्तथा संक्षोभणी विद्रावणी तथा ॥ ४६ ॥ आकर्षणी च विख्याता तथैवावेशकारिणी ॥ उन्मादिनी महापूर्वा कुशाथो खेचरी मता ॥ ४७ ॥ बीजा शक्त्युत्थापना च स्थूलसूक्ष्मपराभिधा ॥ अणिमा लघिमा चैव महिमा गरिमा तथा ॥४८॥ प्राप्तिः प्रकामिता चापि चेशिता वशिता तथा॥भुक्तिः सिद्धिस्तथैवेच्छा सिद्धिरूपा च कीर्तिता ॥४९॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराहींद्राणी चामुंडा महालक्ष्मीस्वरूपिणी ॥ ५० ॥ कामा बुद्धिरहंकारशब्दस्पर्शस्वरूपिणी ॥रूपरूपा रसाह्वा च गंधवित्तधृतिस्तथा ॥ ५१ ॥ नाभबीजामृताख्या च स्मृतिर्देहात्मरूपिणी ॥ कुसुमा मेखला चापि मदना मदनातुरा ॥ ५२ ॥ रेखा संवे







गिनी चैव ह्यंकुशा मालिनीति च॥संक्षोभिणी तथा विद्राविण्याकर्षणरूपिणी ॥५३॥आह्लादिनीति च प्रोक्ता तथा समोहिनीति च॥स्तंभिनी जंभिनी
चैव वशंकर्यथ रंजिनी॥५४॥उन्मादिनी तथैवार्थसाधिनीति प्रकीर्तिता ॥ संपत्तिपूर्णा सा मंत्रमयी द्वंद्वक्षयंकरी ॥५५॥सिद्धिः संपत्प्रदा चैव प्रियमंगल
कारिणी॥कामप्रदा निगदिता तथा दुःखविमोचिनी॥५६॥मृत्युप्रशमनी चैव तथा विघ्ननिवारिणी॥अंगसुंदरिका चैव तथा सौभाग्यदायिनी ॥ ५७ ॥
ज्ञानैश्वर्यप्रदा ज्ञानमयी चैव च पंचमी ॥ विंध्यवासनका घोरस्वरूपा पापहारिणी ॥ ५८ ॥ तथानंदमयी रक्षा रूपेप्सितफलप्रदा ॥ जयिनी
विमला चाथ कामेशी वज्रिणी भगा ॥ ५९ ॥ त्रैलोक्यमोहना स्थाना सर्वाशापरिपूरणी॥सर्वसंक्षोभणगता सौभाग्यप्रदसंस्थिता ॥ ६० ॥
सर्वार्थसाधकागारा सर्वरोगहरास्थिता ॥ सर्वरक्षाकरास्थाना सर्वसिद्धिप्रदस्थिता ॥ ६१ ॥ सर्वानंदमयाधारबिंदुस्थानशिवात्मिका ॥ प्रकृष्टा च
तथा गुप्ता ज्ञेया गुप्ततरापि च ॥ ६२ ॥ संप्रदायस्वरूपा च कुलकौलनिगर्भगा ॥ रहस्यापरापराप्राकृत्तथैवा:तिरहस्यका ॥ ६३ ॥ त्रिपुरा त्रिपुरेशी
च तथैव पुरवासिनी ॥ श्रीमालिनी च सिद्धान्ता महात्रिपुरसुंदरी ॥ ६४ ॥ नवरत्नमयद्वीपनवखंडविराजिता ॥ कल्पकोद्यानसंस्था च ऋतुरूपें
द्रियार्चका ॥ ६५ ॥ कालमुद्रा मातृकाख्या रत्नदेशोपदेशिका ॥ तत्त्वाग्रहाभिधा मूर्तिस्तथैव विषयद्विपा ॥ ६६ ॥ देशकालाकारशब्दरूपा संगी
तयोगिनी ॥ समस्तगुप्तप्रकटसिद्धयोगिनिचक्रयुक् ॥ ६७ ॥ वह्निसूर्येन्दुभूताह्वा तथात्माष्टाक्षराह्वया ॥ पंचधार्चास्वरूपा च नानाव्रतसमाह्वया ॥
॥ ६८ ॥ निषिद्धाचाररहिता सिद्धचिह्नस्वरूपिणी ॥ चतुर्द्धा कूर्मभागस्था नित्याद्यर्चास्वरूपिणी ॥ ६९ ॥ दमनादिसमभ्यर्चा पट्कर्मसिद्धिदा
यिनी ॥ तिथिवारपृथग्द्रव्यसमर्चनशुभावहा ॥ ७० ॥ वायोश्यनंगकुसुमा तथैवानंगमेखला ॥ अनंगमदनानंगमदनातुरसाह्वया ॥ ७१ ॥ मददे
गिनिका चैव तथा भुवनपालिनी ॥ शशिलेखा समुद्दिष्टा गतिलेखाह्वया मता ॥ ७२ ॥ श्रद्धा प्रीती रतिश्चैव धृतिः कांतिर्मनोरमा ॥ मनो
हरा समाख्याता तथैव हि मनोरथा ॥ ७३ ॥ मदनोन्मादिनी चैव मोदिनी शंखिनी तथा ॥ शोषिणी चैव शंकारी सिंजिनी सुभगा तथा ॥७४॥
पूषाचेद्वासुमनसा रतिः प्रीतिर्धृतिस्तथा ॥ ऋद्धिः सौम्या मरीचिश्च तथैव ह्यंशुमालिनी ॥ ७५ ॥ शशिनी चांगिरा छाया तथा संपूर्णमंडला ॥
तुष्टिस्तथामृताख्या च डाकिनी साथ लोकपा ॥ ७६ ॥ वटुकेभास्वरूपा च दुर्गा क्षेत्रेशरूपिणी ॥ कामराजस्वरूपा च तथा मन्मथरूपिणी ॥
॥ ७७ ॥ कंदर्प्परूपिणी चैव तथा मकरकेतना ॥ मनोभवस्वरूपा च भारती वर्णरूपिणी ॥ ७८ ॥ मदना मोहिनी लीला जंभिनी चोद्यमा शुभा ॥
ह्लादिनी द्राविणी प्रीती रती रक्ता मनोरमा ॥७९॥ सर्वोन्मादा सर्वमुखा ह्यभंगा चामितोद्यमा ॥ अनल्पाव्यक्तविभया विविधाक्षोभविग्रहा ॥८०॥ ॥ २०३ ॥

रागशक्तिर्द्वेषशक्तिस्तथा शब्दादिरूपिणी ॥ नित्या निरंजना क्लिन्ना क्लेदिनी मदनातुरा ॥ ८१ ॥ मदद्रवा द्राविणी च द्रविणी चेति कीर्तिता ॥ मदा
विला मंगला च मन्मथानी मनस्विनी ॥८२॥ मोहा मोदा मानमयी माया मंदा मितावती ॥ विजया विमला चैव शुभा विश्वा तथैव च ॥ ८३ ॥
विभूतिर्विनता चैव विविधा विनता क्रमात् ॥ कमला कामिनी चैव किराता कीर्तिरूपिणी॥८४॥कुट्टिनी च समुद्दिष्टा तथैव कुलसुंदरी ॥ कल्याणी
कालकोला च डाकिनी शाकिनी तथा ॥ ८५ ॥ लाकिनी काकिनी चैव राकिनी काकिनी तथा ॥ इच्छाज्ञाना क्रियाख्या चाप्यायुधाष्टक
धारिणी ॥ ८६ ॥ कपर्दिनी समुद्दिष्टा तथैव कुलसुंदरी ॥ ज्वालिनी विस्फुलिंगा च मंगला सुमनोहरा ॥ ८७ ॥ कनका किनवा विद्या विविधा
च प्रकीर्तिता ॥ मेषा वृषाह्वया चैव मिथुना कर्कटा तथा ॥८८॥ सिंहा कन्या तुला कीटा चापा च मकरा तथा ॥ कुम्भा मीना च सारा च सर्व
भक्षा तथैव च ॥ ८९ ॥ विश्वात्मा विविधोद्भूतचित्ररूपा च कीर्तिता ॥ निःसपत्ना निरातंका याचनाचिंत्यवैभवा ॥ ९० ॥ रक्ता चैव ततः प्रोक्ता
विद्याप्राप्तिस्वरूपिणी ॥ ह्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा ॥९१॥ निरंजना रागवती तथैव मदनावती ॥ मेखला द्राविणी वेगवती चैव
प्रकीर्तिता ॥९२॥ कमला कामिनी कल्पा कला च कलिताद्भुता ॥ किराता च तथा काला कदना कौशिका तथा ॥९३॥ कंबुवादनिका चैव कातरा
कपटा तथा ॥ कीर्तिश्चापि कुमारी च कुंकुमा परिकीर्तिता ॥ ९४ ॥ भञ्जिनी वेगिनी नागा चपला पेशला सती ॥ रतिः श्रद्धा भोगलोला मदोन्मत्ता मन
स्विनी ॥९५॥ विह्वला कर्षिणी लोला तथा मदनमालिनी ॥ विनोदा कौतुका पुण्या पुराणा परिकीर्तिता ॥ ९६ ॥ वागीशी वरदा विश्वा विभवा
विघ्नकारिणी ॥ बीजविघ्नहरा विद्या सुमुखी सुंदरी तथा ॥ ९७ ॥ सारा च सुमना चैव तथा प्रोक्ता सरस्वती ॥ समया सर्वगा विद्धा शिवा वाणी
च कीर्तिता ॥ ९८ ॥ दूरसिद्धा तथा प्रोक्ताथो विग्रहवती मता॥ नादा मनोन्मनी प्राणप्रतिष्ठारुणवैभवा ॥ ९९ ॥ प्राणापाना समाना च व्यानो
दाना च कीर्तिता ॥नागा कूर्मा च कृकला देवदत्ता धनञ्जया ॥ १०० ॥ फट्कारी किंकराराध्या जया च विजया तथा ॥ हुंकारी खेचरी चंड
छेदिनी क्षपिणी तथा ॥ १०१ ॥ स्त्रीहुंकारी क्षेमकारी चतुरक्षररूपिणी ॥ श्रीविद्यामतवर्णांगी काली याम्या नृपार्णका ॥ १०२ ॥ भाषा सरस्वती
वाणी संस्कृता प्राकृता परा ॥ बहुरूपा चित्तरूपा रम्यानंदा च कौतुका ॥ १०३ ॥ त्रयाख्या परमात्माख्या[illegible] तथा ॥ वाक्स्वरूपा
विंदुसर्गरूपा विश्वात्मिका तथा ॥ १०४ ॥तथा त्रैपुरकंदाख्या ज्ञात्रादित्रिविधात्मिका ॥ आयुर्लक्ष्मीकीर्तिभो[illegible]ग्यदायिका ॥ १०५ ॥
ऐहिकामुष्मिकज्ञानमयी च परिकीर्तिता ॥ जीवाख्या विजयाख्या च तथैव विश्वविन्मयी॥१०६॥[illegible]मातृरूपा जगद्वपुः ॥ विश्वमो



हनिका चैव त्रिपुरामृतसंज्ञिका ॥ १०७ ॥ सर्वाप्यायनरूपा च मोहिनी क्षोभणी तथा ॥ क्लेदिनी च समाख्याता तथैव च महोदया ॥ १०८ ॥ संप
त्करी हलक्षार्णा सीमामातृतनू रतिः॥ प्रीतिर्मनोभवा चापि प्रोक्ता वाराधिपा तथा ॥१०९॥ त्रिकूटा चापि षट्कूटा पंचकूटा विशुद्धगा ॥ अनाहत
गता चैव मणिपूरकसंस्थिता ॥११० ॥ स्वाधिष्ठानसमासीनाधारस्थाज्ञासमास्थिता ॥ षट्त्रिंशत्कूटरूपा च पंचाशन्मिथुनात्मिका ॥ १११ ॥
पादुकादिकसिद्धीशा तथा विजयदायिनी ॥ कामरूपप्रदा वेतालरूपा च पिशाचिका ॥ ११२ ॥ विचित्रा विभ्रमा हंसी भीषणी जनरंजिका ॥
विशाला मदना तुष्टा कालकंठी महाभया ॥ ११३ ॥ माहेंद्री शंखिनी चैंद्री मंगला वटवासिनी ॥ मेखला सकला लक्ष्मीर्मालिनी
विश्वनायिका ॥ ११४ ॥ सुलोचना सुशोभा च कामदा च विलासिनी ॥ कामेश्वरी नंदिनी च स्वर्णरेखा मनोहरा ॥ ११५ ॥ प्रमोदा रागिणी
सिद्धा पद्मिनी च रतिप्रिया ॥ कल्याणदा कलादक्षा ततश्च सुरसुन्दरी ॥ ११६ ॥ विभ्रमा वाहका वीरा विकला कोरका कविः ॥ सिंहनादा महा
नादा सुग्रीवा मर्कटा शठा ॥ ११७ ॥ बिडालाक्षा बिडालास्या कुमारी खेचरी भवा ॥ मयूरा मंगला भीमा द्विपवक्त्रा खरानना ॥ ११८ ॥
मातंगी च निशाचारा वृषग्राहा वृकानना ॥सैरिभास्या गजमुखा पशुवक्त्रा मृगानना ॥ ११९ ॥ क्षोभका मणिभद्रा च क्रीडका सिंहचक्रका ॥
महोदरा स्थूलशिखा विकृतास्या वरानना ॥ १२०॥ चपला कुक्कुटास्या च पाविनी मदनालसा॥मनोहरा दीर्घजंघा स्थूलदन्ता दशानना॥१२१॥
सुमुखा पंडिता क्रुद्धा वराहास्या सटामुखा ॥ कपटा कौतुका काला किंकरा कितवा खला ॥१२२॥ भक्षका भयदा सिद्धा सर्वगा च प्रकीर्तिता॥
जया च विजया दुर्गा भद्रा भद्रकरी तथा ॥ १२३ ॥ अम्बिका वामदेवी च महामायास्वरूपिणी ॥ विदारिका विश्वमयी विश्वा विश्वविभ
जिता ॥ १२४ ॥ वीरा विक्षोभिणी विद्या विनोदा वीजविग्रहा ॥ वीतशोका विषग्रीवा विपुला विजयप्रदा॥१२५॥ विभवा विविधा विप्रा तथैव
परिकीर्तिता ॥ मनोहरा मंगला च मदोत्सिक्ता मनस्विनी ॥ १२६ ॥ मानिनी मधुरा माया मोहिनी च तथा स्मृता ॥ भद्रा भवानी भव्या च
विशालाक्षी शुचिस्मिता ॥ १२७ ॥ ककुभा कमला कल्पा कलाथो पूरणी तथा ॥ नित्या चाप्यमृता चैव जीविता च तथा दया ॥ १२८ ॥
अशोका ह्यमला पूर्णा पूर्णा भाग्योद्यता तथा ॥ विवेका विभवा विश्वा वितता च प्रकीर्तिता ॥ १२९ ॥ कामिनी खेचरी गर्वा पुराणा
परमेश्वरी ॥ गौरी शिवा ह्यमेया च विमला विजया परा ॥१३०॥ पवित्रा पद्मिनी विद्या विश्वेशी शिववल्लभा॥ अशेषरूपा ह्यानंदाम्बुजाक्षी चाप्य
निंदिता ॥१३१॥ वरदा वाक्यदा वाणी विविधा वेदविग्रहा ॥ विद्या वागीश्वरी सत्या संयता च सरस्वती ॥ १३२ ॥निर्मलानन्दरूपा च ह्यमृता

मानदा तथा ॥ पूषा चैव तथा पुष्टिस्तुष्टिश्चापि रतिर्धृतिः ॥ १३३ ॥ शशिनी चंद्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा॥ पूर्णा पूर्णामृता कामद,
यिनीन्दुकलात्मिका॥१३४ ॥तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः॥ सुषुम्णा भोगदा विश्वा बाधिनी धारिणी क्षमा॥१३५ ॥धूम्रार्चि
रूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी ॥ सुश्रीः स्वरूपा कपिला हव्यकव्यवहा तथा ॥ १३६ ॥ घस्मरा विश्वकवला लोलाक्षी लोलजि
ह्विका ॥ सर्वभक्षा सहस्राक्षी निःसंगा च गतिप्रिया ॥ १३७ ॥ अचिंत्याचाप्रमेया च पूर्णरूपा दुरासदा॥ सर्वा संसिद्धिरूपा च पावनीत्येकरू
पिणी ॥ १३८ ॥ तथा यामलवेधाख्या शाक्ते वेदस्वरूपिणी ॥ तथा शांभववेधा च भावनासिद्धिसूचिनी ॥१३९॥ वह्निरूपा तथा दस्रा ह्यमा
विघ्ना भुजंगमा ॥ षण्मुखा रविरूपा च माता दुर्गा दिशा तथा ॥१४०॥ धनदा केशवा चापि यमी चैव हरा शशा ॥ अश्विनी च यमी वह्नि
रूपा धात्रीति कीर्तिता ॥ १४१ ॥ चंद्रा शिवादितिर्जीवा सर्पिणी पितृरूपिणी ॥ अर्यम्णा च भगा सूर्या त्वाष्ट्रिमारुतिसंज्ञिका ॥ १४२ ॥
इंद्राग्निरूपा मित्रा चापींद्राणी निर्ऋतिर्जला ॥ वैश्वदेवी हरितभूर्वासवी वरुणा जया ॥ १४३ ॥ अहिर्बुध्न्या पूषणी च तथा कारस्करामला ॥
उदुंबरा जंबुका च खदिरा कृष्णरूपिणी ॥ १४४ ॥ वंशा च पिप्पला नागा रोहिणा च पलाशका ॥ पक्षका च तथाम्बष्ठा बिल्वा
चार्जुनरूपिणी ॥१४५ ॥ विकंकता च ककुभा सरला चापि सर्जिका ॥ वंजुला पनसार्का च शमी हलिप्रियाम्रका ॥ १४६ ॥ निम्बा मधूकसंज्ञा
चाप्यश्वत्था च गजाह्वया ॥ नागिनी सार्पिणी चैव शुनी चापि बिडालिकी ॥ १४७ ॥ छागी मार्जारिका मूषी वृषभा माहिषी तथा ॥
शार्दूली सैरिभी व्याघ्री हरिणी च मृगी शुनी ॥१४८॥ कपिरूपा च गोघंटा वानरी च नराश्विनी॥नगा गौर्हस्तिनी चेति तथा षट्चक्रवासिनी॥
॥ १४९ ॥ त्रिखंडा तीरपालाख्या भ्रामणी द्राविणी तथा ॥ सोमा सूर्या तिथिर्वारा योगार्क्षा करणात्मिका॥१५० ॥ यक्षिणी तारणा व्योमशब्दाद्या
प्राणिनी च धीः ॥ क्रोधिनी स्तंभिनी चंडोच्चंडा ब्राह्म्यादिरूपिणी ॥ १५१ ॥ सिंहस्था व्याघ्रगा चैव गजाश्वगरुडस्थिता॥ भौमाप्या तैजसी
वायुरूपिणी नाभसा तथा॥ १५२ ॥एकवक्त्रा चतुर्वक्त्रा नववक्त्रा कलानना ॥ पंचविंशतिवक्त्रा च षड्विंशद्वदना तथा ॥ १५३ ॥ ऊनपंचाशदास्या
च चतुःषष्टि मुखा तथा ॥ एकाशीतिमुखा चैव शताननसमन्विता ॥ १५४ ॥ स्थूलरूपा सूक्ष्मरूपा तेजोविग्रहधारिणी ॥ वृणावृत्तिस्वरूपा च
नाथावृत्तिस्वरूपिणी ॥ १५५ ॥ तत्त्वावृत्तिस्वरूपापि नित्यावृत्तिवपुर्धरा ॥ १५६ ॥ अंगावृत्तिस्वरूपा चाप्यायुधावृत्तिरूपिणी ॥
गुरुपंक्तिस्वरूपा च विद्यावृत्तितनुस्तथा ॥ १५७ ॥ ब्रह्माद्यावृत्तिरूपा च परा पश्यंतिका तथा ॥ मध्यमा वैखरी शीर्षकण्ठताल्वोष्ठदन्तगा॥ १५८॥

जिह्वामूलगता नासागतोरःस्थलगामिनी ॥ पदवाक्यस्वरूपा च वेदभाषास्वरूपिणी ॥ १५९ ॥ सेकाख्या वीक्षणाख्या चोपदेशाख्या तथैव च ॥ व्याकुलाक्षरसंकेता गायत्री प्रणवादिका ॥ १६० ॥ जपहोमार्चनध्यानयंत्रतर्पणरूपिणी ॥ सिद्धसारस्वता मृत्युंजया च त्रिपुरा तथा ॥ १६१ ॥ गारुडा चान्नपूर्णा चाप्यश्वारूढा नवात्मिका ॥ गौरी च देवी हृदया लक्षदा च मतंगिनी ॥ १६२ ॥ निष्कत्रयपदा चेष्टावादिनी च प्रकीर्तिता ॥राजलक्ष्मीर्महालक्ष्मीः सिद्धलक्ष्मीर्गवानना॥ १६३ ॥ इत्येवं ललितादेव्या दिव्यं नामसहस्रकम् ॥ सर्वार्थसिद्धिदं प्रोक्तं चतुर्वर्गफलप्रदम् ॥ १६४ ॥ ,एतन्नित्यमुषःकाले यो जपेच्छुद्धमानसः ॥ स योगी ब्रह्मविज्ञानी शिवयोगी तथात्मवित् ॥ १६५ ॥ द्विरावृत्त्या प्रजपतो ह्यायुरारोग्यसंपदः ॥ लोकानुरंजनं नारीनृपावर्जनकर्म च ॥ १६६ ॥ अपृथक्त्वेन सिद्धचंति साधकस्यास्य निश्चितम् ॥ त्रिरावृत्त्यास्य वै पुंसो विश्वं भूयाद्वशेऽखिलम् ॥ १६७ ॥ चतुरावृत्तितश्चास्य समीहितमनारतम् ॥ फलत्येव प्रयोगार्हो लोकरक्षाकरो भवेत् ॥ १६८ ॥ पंचावृत्त्या नरा नार्यो नृपा देवाश्च जंतवः ॥ भजंत्येनं साधकं च देव्यामाहितचेतसः ॥१६९॥ षडावृत्त्या तन्मयः स्यात्साधकश्चास्य सिद्धयः॥ अचिरेणैव देवीनां प्रसादात्संभवंति च ॥ १७० ॥ सप्तावृत्त्यारिरोगादिकृत्यापस्मारनाशनम् ॥ अष्टावृत्त्या नरो भूपान्निग्रहानुग्रहक्षमः ॥ १७१ ॥ नवावृत्त्या मन्मथाभो विक्षोभयति भूतलम् ॥ दशावृत्त्या पठेन्नित्यं वाग्लक्ष्मीकांतिसिद्धये ॥ १७२ ॥ रुद्रावृत्त्याखिलर्द्धिश्च तदायत्तं जगद्भवेत् ॥ अर्कावृत्त्या सिद्धिभिः स्याद्दिग्भिर्मर्त्यो हरोपमः ॥१७३॥ विश्वावृत्त्या तु विजयी सर्वतः स्यात्सुखी नरः ॥ शक्रावृत्त्याखिलेष्टाप्तिः सर्वतो मंगलं भवेत् ॥ १७४ ॥ तिथ्यावृत्त्याखिलानिष्टानयत्नादाप्नुयान्नरः ॥ षोडशावृत्तितो भूयान्नरः साक्षान्महेश्वरः ॥ १७५ ॥ विश्वं स्रष्टुं पालयितुं संहर्तुं च क्षमो भवेत्॥मंडलं मासमात्रं वा यो जपेद्यद्यदाशयः ॥ १७६ ॥ तत्तदेवाप्नुयात्सत्यं शिवस्य वचनं यथा ॥ इत्येतत्कथितं विप्र नित्यावृत्त्यर्चनाश्रितम् ॥ १७७॥ नाम्नां सहस्रं मनसोऽभीष्टसंपादनक्षमम् ॥ १७८ ॥इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने तृतीयपादे ललितास्तोत्रकवचसहस्रनामकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥ सनत्कुमार उवाच ॥ अथातो विप्र नित्यानां प्रयोगादिसमन्वितम् ॥ पटलं तेऽभिधास्यामि नित्याभ्यर्चनदीपकम् ॥१॥ ललितायास्त्रिभिर्वर्णैः सकलार्थोऽभिधीयते ॥ शेषेण देवीरूपेण तेन स्यादिदमीरितम्॥२॥अशेषतो जगत्कृत्स्नं हृल्लेखात्मकमुच्यते॥तस्याश्चार्थस्तु कथितः सर्वतंत्रेषु गोपितः ॥३॥व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ॥ तयोर्विमर्श ईकारो बिंदुना तन्निफालनम्॥४॥पिंडकर्तरि बीजाख्या मन्त्रा मालाभिधाः क्रमात्॥एकार्णवन्तो द्व्यर्णाश्च त्रिदिङ्मुखलघुखार्णकाः॥५॥वृत्तिजार्णाच्छिखेदंकैर्व्यत्यस्तक्रमयोगतः ॥

तैभेंदयोजनं कुर्यात्संदर्भाणामशेषतः ॥ ६ ॥ देव्यात्मकं समुदयं विश्रांतिं च शिवात्मकम् ॥ उभयात्मकमप्यात्मस्वरूपं तैश्च भावयेत् ॥ ७ ॥ काले
नान्यत्र दुःखार्त्तिवासनानाशनो ध्रुवम् ॥ पराहंतामयं सर्वस्वरूपं चात्मविग्रहम् ॥ ८ ॥ सदात्मकं स्फुरताख्यमरोषोपाधिवार्जितम् ॥ प्रकाशरूपमा
त्मत्वे वस्तु तद्भासते परम् ॥ ९ ॥ यत एवमतो लोके नास्त्यमंत्रं यदक्षरम्॥ यद्विद्येति समाख्यातं सर्वथा सर्वतः सदा ॥ १० ॥ वासरेषु तु तेष्वेवं
सर्वापत्तारकं भवेत् ॥ तद्विधानं च वक्ष्यामि सम्यगासवकल्पनम्॥ ११ ॥ गौडी पैष्टी तथा माध्वीत्येवं तत्त्रिविधं स्मृतम् ॥ गुडमुष्णोदके क्षिप्त्वा
समालोड्य विनिक्षिपेत् ॥ १२ ॥ घटे काचमये तस्मिन् धातकीसुमनोरजः ॥ खात्वा भूमौ संध्ययोस्तु करैः संक्षोभ्य भूयसा ॥ १३ ॥
मासमात्रे गते तस्मिन्निमग्ने रजसि द्रुतम् ॥ संशोध्य पूजयेत्तेन गौडी सा गुडयोगतः ॥१४॥एवं मधुसमायोगान्माध्वी पैष्टीं शृणु प्रिय ॥ अध्य
र्द्धद्विगुणे तोये श्रपयेत्तंदुलं शनैः ॥ १५ ॥ दिनत्रयोषिते तस्मिन्धात्र्यंकुररजः क्षिपेत् ॥ दिनमेकं धृते वाते निवाते स्थापयेत्ततः ॥ १६ ॥ उदकै
र्लोलितं पश्चाद्गलितं पैष्टिकं मधु ॥ वृक्षजं फलजं चेति द्विविधं क्रियते मधु ॥ १७ ॥ तन्निर्माणं शृणुष्वाद्य यदास्वादान्मनोलयः ॥ मृद्वीकां
वाथ खर्जूरफलं पुष्पमथापि वा ॥ १८ ॥ मधूकस्यांभसि क्षिप्त्वा शृतमर्द्धावशेषितम् ॥ प्राक्सृतासवलेशेन मिलितं दिवसद्वयात् ॥ १९ ॥ गालितं
स्वादु पूजार्हं मनोलयकरं शुभम् ॥ वार्क्षं तु नालिकेरं स्याद्धिंतालस्याथ तालतः ॥ २० ॥ फलकांडात्स्नुतं दुग्धं नीतं सद्यो रसावहम् ॥ नालिके
रफलांतस्थसलिले शशिना युते ॥ २१ ॥ अर्द्धपूगफलोत्थं तु रसं संक्षिप्य तापयेत् ॥ आतपे सद्य एवैतदासवं देवताप्रियम् ॥ २२ ॥
आसवैरेभिरुदितैरर्घ्यं देव्यै निवेदयेत् ॥ देवैः कृत्वा ततः सद्यो दद्यात्तत्सिद्धये द्वयम् ॥ २३ ॥ साधको नियताहारः समाधिस्थः पिबेत्सदा
॥ न कदाचित्पिबेत्सिद्धो देव्यर्थमनिवेदितम् ॥ २४॥ पानं च तावत्कुर्वीत यावता स्यान्मनोलयः ॥ ततः करोति चेत्सद्यः पातकी भवति ध्रुवम्
॥ २५ ॥ देवतागुरुशिष्टान्यं पिबन्नासवमाशया ॥ पातकी राजदंड्यश्च रिक्थोपासक एव च ॥२६ ॥ साध्यसाधकयोरेतत्काम्य एव समीरि
तम् ॥ सिद्धस्य सर्वदा प्रोक्तं यतोऽसौ तन्मयो भवेत् ॥ २७॥ पूजयेत्प्रोक्तरूपस्तु प्रोक्तरूपाश्च ताः क्रमात् ॥ उपचारैरासवैश्च मत्स्यैर्मांसैस्तु संस्कृतैः
॥ २८ ॥ अथ काम्यार्चनं वक्ष्ये प्रयोगांश्चापि नारद ॥ येषामाचरणात्सिद्धिं साधको लभते ध्रुवम् ॥ २९॥ चैत्रे दमनकैरर्चेत्पूर्णायां मदनोत्स
वम् ॥ वैशाखे मासि पूर्णायां पूजयेद्धेमपुष्पकैः ॥३०॥ज्यैष्ठ्यां फलैर्यजेद्देवीं कदलीपनसाम्रजैः ॥आषाढ्यां चन्दनैरेलाजातीकंकोलकुंकुमैः॥३१॥
श्रावण्यामागमोक्तेन विधिनार्चेत्पवित्रकैः ॥ प्रौष्ठपद्यां गन्धपुष्पैर्यजेद्वा केतकीसुमैः ॥ ३२ ॥ आश्वयुज्यां कन्यकार्चा भूषावस्त्रधनादिभिः ॥ कार्ति





क्यां कुंकुमैश्चैव निशि दीपगणैरपि ॥ ३३ ॥ सचंद्रैर्मार्गशीर्ष्यां तु नालिकेरैरपूपकैः ॥पौष्यां सशर्करागुडैर्गवां दुग्धैः समर्चयेत्॥३४ ॥ स्वर्णरौप्यैः
पंकजैस्तु माघ्यां सौगन्धि गादिभिः ॥ फाल्गुन्यां विविधैर्द्रव्यैः फलैः पुष्पैः सुगंधिभिः ॥ ३५ ॥ पर्वताग्रे यजेद्देवीं पलाशकुसुमैर्निशि ॥
सिद्धद्रव्यैश्च सप्ताहात्खेचरामलनं भवेत् ॥३६॥ अरण्ये वटमूले वा कुंजे वा धरणीभृताम्॥कदम्बजातिपुष्पाभ्यां सिद्धद्रव्यैः शिवां यजेत् ॥ ३७ ॥
मासेन सिद्धा यक्षिण्यः प्रत्यक्षा वांछितप्रदाः ॥ केतकीकुसुमैः सिद्धाश्चेटका वारिधेस्तटे ॥३८॥आज्ञामभीष्टां कुर्वन्ति रणे मायां महाद्भुताम्॥
वसूनि मालां भूषां च दद्युरस्येहयानिशम् ॥ ३९ ॥ पीठमृक्षद्रुमैः कृत्वा तत्र देवीं यजेन्निशि ॥ शाल्मलैः कुसुमैः सिद्धद्रव्यैर्मासं तु निर्भयम्
॥ ४० ॥ श्मशानदेशे विप्रेंद्र सिद्धचंत्यस्य पिशाचकाः॥अश्मपातप्रहाराद्यैर्जीयादाभिर्द्विषश्चिरम्॥४१॥निर्जने विपिने रात्रौ मासमात्रं तु निर्भयः॥
यजेद्देवीं चक्रगतां सिद्धद्रव्यसमन्विताम् ॥ ४२॥ माल्तीजातपुन्नागकेतकीमरुभिः क्रमात् ॥ तेन सिद्धचंति वेतालास्तानारुह्येच्छया चरेत् ॥४३ ॥
श्मशाने चंडिकागेहे निर्जने विपिनेऽपि वा ॥ मध्यरात्रे यजेद्देवीं कृष्णवस्त्रविभूषणैः ॥४४ ॥ कृष्णचक्रेऽतिकृष्णां तामतिक्रुद्धाशयो यजेत्॥साध्य
योनिं तदग्रे तु बलिं छिंदन्निवेदयेत् ॥ ४५ ॥ सिद्धद्रव्यसमेतं तु मासात्तद्भाललोचनात् ॥ जायन्ते भीषणाः कृत्यास्ताभ्यः सिद्धिं निवेदयेत॥४६॥
विश्वसंहारसंतुष्टाः पुनरेत्य निजेच्छया ॥ देव्या ललाटनेत्रे स्युः प्रार्थिते तु तिरोहिताः ॥ ४७ ॥ रक्तभूषांबरालेपमालाभूषितविग्रहाः ॥ उद्याने
निर्जने देवीं चक्रे संचिंत्य पूजयेत् ॥ ४८ ॥ कह्लारचंपकाशोकपाटलाशतपत्रकैः ॥ सिद्धद्रव्यसमोपेतैर्मायाः सिद्धचंति मासतः ॥ ४९ ॥ यासां
प्रसादलाभेन कामरूपो भवेन्नरः ॥ याभिर्विश्वजयी विश्वचारी विश्वविनोदवान् ॥ ५० ॥ पडाधाराब्जमध्ये तु चक्रं संचिन्त्य पूजयेत् ॥ चंद्रचं
दनकस्तूरीमृगनाभिमहोदयैः ॥ ५१ ॥ त्रिकालज्ञो भवेद्देवीं तेषु सम्यग्विचिंतयेत् ॥ पूर्णप्रतीतो भव्यानि विकलेऽभव्यमीरितम् ॥ ५२ ॥ देवीं
चक्रेण सहितां स्मरेद्भक्तियुतो नरः ॥ विवेका विभवा विश्वा वितता च प्रकीर्तिता ॥ ५३ ॥ कामिनी खेचरी गर्वा पुराणा परमेश्वरी ॥ गौरी
शिवा ह्यमेया च विमला विजया परा ॥ ५४ ॥ पवित्रा पीडनी विद्या विश्वेशी शिववल्लभा ॥ अशेषरूपा ह्यानंदांबुजाक्षी चाप्यनिंदिता ॥ ५५ ॥
वरदा वाक्यदा वाणी विविधा वेदविग्रहा॥ विद्या वागीश्वरी सत्या संयता च सरस्वती ॥५६॥निर्मलानन्दरूपा च ह्यमृता मानदा तथा॥पूषा चैव
तथा तुष्टिः पुष्टिश्चापि रतिर्धृतिः॥५७॥शशिनी चंद्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा ॥ देवीनामानि चैतानि चुलुके सलिले स्मरन् ॥ ५८ ॥
मातृकासहितां विघ्नां त्रिरावृत्त्यामृतात्मिकाम् ॥ ताडीं सारस्वतीं जिह्वां दीपाकारां स्मरन्पिबेत् ॥५९ ॥ अब्दाच्चतुर्विधं तस्य पांडित्यं भुवि जायते॥

एवं नित्यमुषःकाले यः कुर्याच्छुद्धमानसः ॥ ६० ॥ स योगी ब्रह्मविज्ञानी शिवयोगी तथात्मवित् ॥ अनुग्रहोक्तचक्रस्थां देवीं ताभिर्वृतां स्मरेत्॥६१॥ चंपकेंदीवरैर्मासादारोग्यमुपजायते ॥ ज्वरभूतग्रहोन्मादशीतकाकामलाक्षिहृत् ॥ ६२ ॥ दंतकर्णज्वरशिरःशूलगुल्मादि कुक्षिजाः ॥ व्रणप्रमेहच्छर्द्यर्शोग्रहण्यामत्रिदोषजाः ॥ ६३ ॥ सर्वे तथा शमं यांति पूजया परमेश्वरी ॥ द्रव्यं चक्रस्य निर्माणे काश्मीरं समुदीरितम् ॥ ६४ ॥ सिंदूरं गैरिकं लाक्षा दरदं चंदनद्वयम् ॥ विलद्वारे लिखेत्र्यस्रं षोडशत्र्यस्रसंयुतम् ॥ ६५ ॥ दरदेनास्य मध्यस्थां पूजयेत्परमेश्वरीम् ॥ ताभिस्तच्छक्तिभिः साकं सिद्धद्रव्यैः सुगंधिभिः ॥ ६६ ॥ कुसुमैर्मासमात्रेण नागकन्यासमन्वितम् ॥ पातालादिषु लोकेषु रमयत्यनिशं चिरम् ॥ ६७ ॥ यक्षराक्षसगंधर्वसिद्धविद्याधरांगनाः ॥पिशाचा गुह्यका वीराः किन्नरा भुजगास्तथा ॥६८॥ सिद्ध्यंति पूजनात्तत्र तथा तत्प्रोक्तकालतः ॥ किंशुकैर्भूषणावाप्तौ पाटलैर्गजसिद्धये ॥ ६९ ॥ रक्तोत्पलैरश्वसिद्धौ कुमुदैश्वरसिद्धये ॥ उत्पलैरुष्ट्रसंसिद्ध्यै तगरैः पशुसिद्धये ॥ ॥ ७० ॥ जंबीरैर्महिषावाप्त्यै लकुचैरजसिद्धये ॥ दाडिमैर्निधिसंसिद्ध्यै मधुकैर्गानसिद्धये ॥ ७१ ॥ बकुलैरंगनासिद्ध्यै कह्लारैः पुत्रसिद्धये ॥ शतपत्रैर्जयावाप्त्यै केतकैर्वाहनाप्तये ॥ ७२ ॥ सौरभाढ्यैः प्रसूनैस्तु नित्यं सौभाग्यसिद्धये ॥ पूजयेन्मासमात्रं वा द्विगुणं त्रिगुणं तु वा ॥ ७३ ॥ यावत्फलावाप्तिकांक्षी शर्कराघृतपायसैः ॥ सचक्रपरिवारां तां देवीं सलिलमध्यगाम् ॥ ७४ ॥ तर्प्पयेत्कुसुमैः सार्घ्यैः सर्वोपद्रवशान्तये ॥ घृतैः पूर्णायुषः सिद्ध्यै क्षौद्रैः सौभाग्यसिद्धये ॥ ७५ ॥ दुग्धैरारोग्यसंसिद्ध्यै त्रिभिरैश्वर्यसिद्धये ॥ नालिकेरोदकैः प्रीत्यै हिमतोयैर्नृपाप्तये ॥ सर्वार्थसिद्ध्य तोयैरभिषिंचेन्महेश्वरीम् ॥ ७६ ॥ पूगोद्याने यजेद्देवीं सिद्धद्रव्यैर्दिवानिशम् ॥ निवसंस्तत्र तत्पुष्पैर्जायते मन्मथोपमः ॥ ॥ ७७ ॥ पूर्णासु नियतं देवीं कन्यकायां समर्चयन् ॥ कृत्याः परेरिता मंत्रा विमुखांस्तान् ग्रसंति वै ॥ ७८ ॥ लिंगत्रयमयीं देवीं चक्रस्थाभिश्च शक्तिभिः ॥ पूजयन्निष्टमखिलं लभतेऽत्र परत्र च ॥ ७९ ॥ शतमानकृतैः स्वर्णपुष्पैः सौरभ्यवासितैः ॥ पूजयन्मासमात्रेण प्राग्जन्माद्यैर्विमुच्यते ॥ ८०॥ तथा रत्नैश्च नवभिर्मासं तु यदि पूजयेत् ॥ विमुक्तसर्वपापौघैस्तां च पश्यति चक्षुषा॥८१॥ अंशुकैरर्चयेद्देवीं मासमात्रं सुगंधिभिः॥ मुच्यते पापकृत्यादिदुःखौघैरितरैरपि ॥ ८२ ॥ देवीरूपं स्वमात्मानं चक्रं शक्तीः समंततः ॥ भावयन्विषयैः पुष्पैः पूजयंस्तन्मयो भवेत् ॥८३॥ षोडशानां तु नित्यानां प्रत्येक तिथयः क्रमात् ॥ तत्तत्तिथौ तद्भजनं जपहोमादिकं चरेत् ॥ ८४ ॥ घृतं च शर्करा दुग्धमपूपं कदलीफलम् ॥ क्षौद्रं गुडं नालिकेरफलं लाजा तिलं दधि ॥ ८५ ॥ पृथुकं चणकं मुद्गपायसं च निवेदयेत् ॥ कामेश्वर्यादिशक्तीनां सर्वासामपि चोदितम् ॥





॥ ८६ ॥ आद्याया ललितायास्तु सर्वाण्येतानि सर्वदा ॥ निवेदयेच्च जुहुयाद्वह्नौ दद्यान्नृणामपि ॥ ८७ ॥ तत्तद्विद्याक्षरप्रोक्तमौषधं तत्प्र
माणतः ॥ संपिष्य गुटिकीकृत्य ताभिः सर्वं च साधयेत् ॥ ८८ ॥ रविवारेऽरुणांभोजैः कुमुदैः सोमवारके ॥ भौमे रक्तोत्पलैः सौम्ये
वारे तगरसंभवैः ॥ ८९ ॥ गुरुवारे सुकह्लारैः शुक्रवारे सितांबुजैः ॥ नीलोत्पलैर्मंदवारे पूजयेदिष्टमादरात् ॥ ९० ॥ निवेदयेत्क्रमात्तेषु
रविवारादिषु क्रमात् ॥ पायसं दुग्धकदलीनवनीतसिताघृतम् ॥ ९१ ॥ एवमिष्टं समाराध्य देवीं गंधादिभिर्यजेत् ॥ ग्रहपीडां विजित्याशु
सुखानि च समश्नुते ॥ ९२ ॥ अर्धरात्रे तु साध्यां स्त्रीं स्मरन्मदनवह्निना ॥ दह्यमानां हतस्वांतां मस्तकस्थापितांजलिम् ॥ ९३ ॥
विकीर्णकेशीमालोलल्लोचनामरुणारुणाम् ॥ वायुप्रेंखत्पताकास्थपदा पद्मकलेवराम् ॥ ९४ ॥ विवेकविधुरां मत्तां मानलज्जाभयातिगाम् ॥
चिंतयन्नर्चयेच्चक्रं मध्ये देवीं दिगंबराम् ॥ ९५ ॥ जपादाडिमबंधूककिंशुकाद्यैः समर्चयेत् ॥ अन्यैः सुगंधिशेफालीकुसुमाद्यैः समर्चयेत् ॥ ९६ ॥
त्रिसप्तरात्रादायाति प्रोक्तरूपा मदाकुला ॥ यावच्छरीरपातः स्याच्छापो वानपगास्य सा ॥ ९७ ॥पद्मैरक्तैस्त्रिमध्वक्तैर्होमाल्लक्ष्मीमवाप्नुयात् ॥
तथैव कैरवे रक्तैरंगनाः स्ववशं नयेत् ॥ ९८ ॥ समानरूपवत्सायाः शुक्लाया गोः पयःप्लुतैः ॥ मल्लिकामालतीजातीशतपत्रैर्हुतैर्भवेत्
॥ ९९ ॥ कीर्तिविद्याधनारोग्यसौभाग्यवित्तपादिकम् ॥ आरग्वधप्रसूनैस्तु क्षौद्राक्तैर्हवनाद्भवेत् ॥ १०० ॥ स्वर्णादिस्तंभनं शत्रोर्नृपादीनां
क्रुधोऽपि च ॥ आज्याक्तैः करवीरोत्थैः प्रसूनैररुणैर्हुतैः ॥ १०१ ॥ रक्तांबराणि वनिता भूपामात्यवशं तथा ॥ भूपावाहनवाणिज्यसिद्ध्यश्चास्य
वांछिताः ॥ १०२ ॥ लवणैः सर्षपैर्गौरैरितरैर्वाथ होमतः ॥ सतैलाक्तैर्निशामध्ये त्वानयेद्वांछितां वधूम् ॥ १०३ ॥ तैलाक्तैर्जुहुयात्कृष्ण
दरपुष्पैर्निशांतरे ॥ मासादरातेस्तस्यार्तिर्ज्वरेण भवति ध्रुवम् ॥ १०४ ॥ आरुष्करैर्घृताभ्यक्तैस्तद्बीजैर्निशि होमतः ॥ शत्रोर्दाहव्रणानि स्युर्दुःसा
ध्यानि चिकित्सकैः ॥१०५ ॥ तथा तत्तैलसंसिक्तैर्बीजैरंकोलकैरपि ॥ मरिचैः सर्षपाज्याक्तानशि होमानुसारतः ॥ १०६ ॥ वांछितां वनितां काम
ज्वरार्तामानयेद्धुतम् ॥ शालिभिश्चाज्यसंसिक्तैर्होमाच्छालीनवाप्नुयात् ॥१०७ ॥ मुद्गैर्मुद्गं घृतैराज्यं सिद्धैरित्थं हुतैर्भवेत् ॥ साध्यर्क्षवृक्षसंभूतां पिष्टपा
दरजःकृताम् ॥ १०८ ॥ राजीमरीचिलोणोत्थां पुत्तलीं जुहुयान्निशि॥प्रपदाभ्यां च जंघाभ्यां जानुभ्यामुरुयुग्मतः ॥ १०९ ॥ नाभेरघस्ताद्धृदया 
द्भ्रिन्नेनाकण्ठतस्तथा ॥ शिरसा च सुतीक्ष्णेन च्छित्वा शस्त्रेण वै क्रमात् ॥११०॥ एवं द्वादशधा होमान्नरनारीनगाधिपाः॥ यश्या भवंति साम्राज्य
गर्तीश्चाम्य वांछया ॥ १११ ॥ ...

पाच्यतां पुनः ॥ स्पृशन्निजकराग्रेण सहस्रं प्रजपेन्मनुम् ॥ ११३ ॥अभ्यर्च्य तद् घृताभ्यक्तं भक्षयेत्तद्धिया जपन् ॥ नरनारीनृपास्तस्य वश्याः स्युर्मरणावधि ॥ ११४ ॥ शत्त्यष्टगंधं संपिष्य कन्यया शिशिरे जले ॥ तेन वै तिलकं भाले धारयन्वशयेज्जगत् ॥ ११५ ॥ शालितंदुलमादाय प्रस्थं भांडे नवे क्षिपेत् ॥ समानवर्णवत्सायां रक्तायां गोः पयस्तथा ॥ ११६ ॥ द्विगुणं तत्र निक्षिप्य श्रपयेत्संस्कृतेऽनले ॥ घृतेन सिक्तं सिक्थं तु कृत्वा तत्ससितं करे ॥ ११७ ॥ विधाय विद्यामष्टोर्द्ध्वशतं जप्त्वा हुनेत्ततः ॥ एवं होमो महालक्ष्मीमावहेत्प्रतिपत्कृतः ॥ ११८ ॥ शुक्रवारेष्वपि तथा वर्षान्नृपसमो भवेत् ॥ पंचम्यां तु विशेषेण प्राग्वद्धोमं समाचरेत् ॥ ११९ ॥ तस्यां तिथौ त्रिमध्वक्तैर्मल्लिकाद्यैः सितैर्हुनेत् ॥ अन्नाज्याभ्यां च नियतं हुत्वान्नाढ्यो भवेन्नरः ॥ १२० ॥ यद्यद्धि वांछितं वस्तु तत्तत्सर्वं तु सर्वदा ॥ घृतहोमादवाप्नोति तथैव तिलतंडुलैः ॥ १२१ ॥ अरुणैः पंकजैर्होमं कुर्वंस्त्रिमधुराप्लुतैः ॥ मंडलाल्लभते लक्ष्मीं महतीं श्लाघ्यविग्रहाम् ॥ १२२ ॥ कह्लारैः क्षौद्रसंयुक्तैः पूर्णाद्यं तद्दिनावधि ॥ जुहुयान्नित्यशो भक्त्या सहस्रं विकचैः शुभैः ॥ १२३ ॥ स तु कीर्तिं धनं पुत्रान्प्राप्नुयान्नात्र संशयः ॥ चंपकैः क्षौद्रसंसिक्तैः सहस्रहवनाद्ध्रुवम् ॥ १२४ ॥ लभते स्वर्णनिष्काणां शतं मासेन नारद ॥ पाटलैर्घृतसंसिक्तैस्त्रिसहस्रं हुतैस्तथा ॥ १२५ ॥ दर्शादि मासाल्लभते चित्राणि वसनानि च ॥ कर्पूरचंदनाद्यानि सुगन्धानि तु मासतः ॥ १२६ ॥ वस्तूनि लभते हृद्यैरन्यैर्भोगोपयोगिभिः ॥ शालिभिः क्षीरसिक्ताभिः सप्तमीषु शतं हुतम् ॥ १२७ ॥ तेन शालिसमृद्धिः स्यान्मासैः षड्भिरसंशयम् ॥ तिलैर्हुतैस्तु दिवसैर्वर्षादारोग्यमाप्नुयात् ॥ ॥ १२८ ॥ स्वजन्मर्क्षत्रिषु तथा दूर्वाभिर्ज्जुहुयान्नरः ॥ निरातंको महाभोगः शतं वर्षाणि जीवति ॥ १२९ ॥ गुडूचीतिलदूर्वाभिस्त्रिषु जन्मसु वा हुनेत् ॥ तेनायुःश्रीयशोभोगपुण्यनिध्यादिमान्भवेत् ॥ १३० ॥ घृतपायसदुग्धैस्तु हुतैस्तेषु त्रिषु क्रमात् ॥ आयुरारोग्यविभवैर्नृपामात्यो भवेत्तथा ॥ १३१ ॥ सप्तम्यां कदलीहोमात्सौभाग्यं लभतेऽन्वहम् ॥ दूर्वात्रिकैस्तु प्रादेशमानैस्त्रिस्वादुसंयुतैः ॥ ॥ १३२ ॥ जुहुयाद्दिनशो घोरे सन्निपातज्वरे तथा ॥ तद्दिनेषु जपेद्विद्यां नित्यशः सलिलं स्पृशन् ॥ १३३ ॥ सहस्रवारं तत्तोयैः स्नानं पानं समाचरेत् ॥ पाकाद्यमपि तैरेव कुर्याद्रोगविमुक्तये ॥ १३४ ॥ साध्यर्क्षवृक्षसंचूर्णं त्र्यूषणं सर्षपं तिलम् ॥ पिष्टं च साध्यपादोत्थरजसा च समन्वितम् ॥ १३५ ॥ कृत्वा पुत्तलिकां सम्यग्घृदये नामसंयुताम् ॥ प्राग्वच्छित्वायसैस्तीक्ष्णैः शस्त्रैः पुत्तलिकां हुनेत् ॥ १३६ ॥ एवं दिनैः सप्तभिस्तु साध्यो वश्यो भवेद्दृढम् ॥ तथाविधां पुत्तलिकां कुंडमध्ये निखन्य च ॥ १३७ ॥ उपर्यग्निं निधायाथ विद्यया दिनशो हुनेत् ॥ त्रिसहस्रं त्रिय







मायां सर्षपैस्तद्रसाप्लुतैः ॥ १३८ ॥ शतयोजनदूरादप्यानयेद्वनितां बलात् ॥ वशयेद्वनितां होमात्कौशिकैर्मधुमिश्रितैः ॥ १३९ ॥ नालिकेरफलोपेतैर्गुडैर्लक्ष्मीमवाप्नुयात् ॥ तथाज्यसिक्तैः कह्लारैः क्षीराक्तैररुणोत्पलैः ॥ १४० ॥ त्रिमध्वक्तैश्चंपकैश्च प्रसूनैर्बकुलोद्भवैः ॥ मधूकजैः प्रसूनैश्च हुतैः कन्यामवाप्नुयात् ॥ १४१ ॥ पुन्नागजैर्हुतैर्वस्त्राण्याज्यैरिष्टमवाप्नुयात् ॥ माहिषैर्महिषीराजैरजान् गव्यैश्च गास्तथा ॥ १४२ ॥ अवाप्नोति हुतैराज्यैः रत्नै रत्नं च साधकः ॥ शालिपिष्टमयीं कृत्वा पुत्तलीं ससितां ततः ॥ १४३ ॥ हृद्देशन्यस्तनामार्णां पचेत्तैलाज्ययोर्निशि ॥ तन्मनाश्च दिवारात्रौ विद्याजप्तां तु भक्षयेत् ॥१४४॥ सप्तरात्रप्रयोगेण नरो नारी नृपोऽपि वा ॥ दासवद्वशमायाति चित्तप्राणादि चार्पयेत् ॥ १४५ ॥ हयारिपुष्पैररुणैः सितैर्वा जुहुयात्तथा ॥ त्रिसप्तरात्रान्महतीमवाप्नोति श्रियन्नरः ॥ १४६ ॥ छागमांसैस्त्रिमध्वक्तैर्होमात्स्वर्णमवाप्नुयात् ॥ क्षीराक्तैः सस्यसंपन्नां भुवमाप्नोति मंडलात् ॥ १४७ ॥ पद्माक्षैर्हवनाल्लक्ष्मीमवाप्नोति त्रिभिर्दिनैः ॥ बिल्वैर्दशांशं जुहुयान्मंत्राद्यैः साधने जपे ॥ १४८ ॥ एवं संसिद्धमंत्रस्तु मंत्रितैश्चुलुकोदकैः ॥ फणिदष्टमृतानां तु मुखे संताड्य जीवयेत् ॥ १४९ ॥ तत्कर्णयोर्जपन्विद्यां यष्ट्या वा जपसिद्धया ॥ संताड्य शीर्षं सहसा मृतमुत्थापयेदिति ॥ १५० ॥ कृत्वा योनिं कुंडमध्ये तत्राग्नौ विधिवद्धुनेत् ॥ तिलसर्षपगोधूमशालिधान्ययवैर्हुनेत् ॥ १५१ ॥ त्रिमध्वक्तैरेकशो वा समेतैर्वा समृद्धये ॥ बकुलैश्चंपकैरब्जैः कह्लारैररुणोत्पलैः ॥ १५२ ॥ कैरवैर्मल्लिकाकुंदमरुवकैरिंदिरालये ॥ अशोकैः पाटलैर्बिल्वैर्जातीविकंकतैः सितैः ॥ १५३ ॥ नवनीलोत्पलैश्चारिपुजैः कर्णिकारजैः॥होमाल्लक्ष्मीं च सौभाग्यं निधिमायुर्यशो लभेत्॥१५४॥दूर्वां गुडूचीमश्वत्थं वटमारग्वधं तथा ॥ सितार्कप्लक्षजं हुत्वा चिरान्मुच्येत रोगतः ॥ १५५ ॥ इक्षुजंबूनालिकेरमोचाशुडसितायुतैः ॥ अचलां लभते लक्ष्मीं भोक्ता च भवति ध्रुवम् ॥ १५६ ॥ सर्षपाज्यैर्हुते मृत्युः काष्ठाग्नौ वैरिभृत्यवे ॥ चतुरंगुलजैर्होमाच्चतुरंगबले रिपोः ॥ १५७ ॥ सप्ताहाद्रोगदुःखार्तिर्भवत्येव न संशयः ॥ नित्यं नित्यार्चनं कुर्यात्तथा होमं घृतेन वै ॥ १५८ ॥ विद्याभिमंत्रितं तोयं पिबेत्प्रातस्तदाप्तये ॥ चंदनोशीरकर्पूरकस्तूरीरोचनान्वितैः ॥ १५९ ॥ काश्मीरकालागुरुभिर्मृगस्वेदमयैरपि ॥ पूजयेच्च शिवामेतैर्गंधैः सर्वार्थसिद्धये ॥ १६० ॥ सर्वाभिरपि नित्याभिः प्रातर्मातृकया समम् ॥ त्रिजप्ताभिः पिबेत्तोयं तथा वाक्सिद्धये शिवम्॥१६१॥विदध्यात्साधनं प्राग्वद्वर्णलक्षं पयोव्रतः॥त्रिस्वादुसिक्तैररुणैरंबुजैर्हवनं चरेत्॥१६२॥ जपतर्पणहोमार्चासेकसिद्धमनुर्नरः ॥ कुर्यादुक्तान्प्रयोगांश्च न चेत्तन्मनुदेवताः ॥ १६३॥ प्राणांस्तस्य ग्रसंत्येव कुपितास्तत्क्षणान्मुने॥अनया विद्यया लोके यदसाध्यं न तत्क्वचित् ॥ १६४ ॥ अरण्यवटमूले च पर्वताग्रगुहासु च ॥ उद्यानमध्यकांतारे मातृपादपमूलतः ॥ १६५ ॥ सिंधुतीरे वने रम्ये

च ॥ ३ ॥ दर्शनात्स्पर्शनात्पानात्तथा गंगेति कीर्तनात् ॥ पुमान्पुनाति पुरुषाञ्छतशोऽथ सहस्रशः ॥ ४ ॥ ज्ञानमैश्वर्यमतुलं प्रतिष्ठायुर्य
शस्तथा ॥ शुभानामाश्रमाणां च गंगादर्शनजं फलम् ॥ ५ ॥ सर्वेन्द्रियाणां चांचल्यं व्यसनानि च पातकम् ॥निर्घृणत्वं च नश्यंति गंगादर्शन
मात्रतः ॥ ६ ॥ परहिंसां च कौटिल्यं परदोषाद्यवेक्षणम्॥दांभिकत्वं नृणां गंगादर्शनादेव नश्यति ॥ ७ ॥मुहुर्मुहुस्तथा पश्येत्स्पृशेद्वापि मुहुर्मुहुः॥
भक्त्या यदिच्छति नरः शाश्वतं पदमव्ययम् ॥ ८ ॥ वापीकूपतडागादिप्रपासत्रादिभिस्तथा ॥ अन्यत्र यद्भवेत्पुण्यं तद्गंगादर्शनाद्भवेत् ॥ ९ ॥
यत्फलं जायते पुंसां दर्शने परमात्मनः ॥ तद्भवेदेव गंगाया दर्शनाद्भक्तिभावतः ॥ १० ॥ नैमिषे च कुरुक्षेत्रे नर्मदायां च पुष्करे ॥ स्नानात्संस्पर्शना
सेव्य यत्फलं लभते नरः ॥ ११ ॥ तद्गंगादर्शनादेव कलौ प्राहुर्महर्षयः ॥अथ ते स्मरणस्यापि गंगाया भूपभामिनि ॥ १२ ॥ प्रवक्ष्यामि फलं
यत्तु पुराणेषु प्रकीर्तितम् ॥ अशुभैः कर्मभिर्युक्तान्मज्जमानान्भवार्णवे ॥ १३ ॥ पततो नरके गङ्गा स्मृता दूरात्समुद्धरेत् ॥ योजनानां सहस्रेषु
गंगां स्मरति यो नरः ॥१४ ॥ अपि दुष्कृतकर्मा हि लभते परमां गतिम् ॥ स्मरणादेव गंगायाः पापसंघातपंजरम् ॥ १५ ॥ भेदं सहस्रधा याति
गिरिर्वज्रहतो यथा ॥ गच्छंस्तिष्ठन्स्वपन्ध्यायञ्जाग्रद्भुंजन् हसन् रुदन् ॥१६॥यः स्मरेत्सततं गंगां स च मुच्येत बंधनात्॥ सहस्रयोजनस्थाश्च गंगां
भक्त्या स्मरंति ये ॥ १७ ॥ गंगागंगेति चाक्रुश्य मुच्यंते तेऽपि पातकात् ॥ ये च स्मरंति वै गंगां गंगाभक्तिपराश्च ये ॥१८॥ तेऽप्यशेषैर्महापापैर्मु
च्यंते नात्र संशयः ॥ भवनानि विचित्राणि विचित्राभरणाः स्त्रियः ॥ १९ ॥ आरोग्यं वित्तसंपत्तिर्गंगास्मरणजं फलम् ॥ मनसा संस्मरेद्यस्तु गंगां
दूरस्थितो नरः ॥ २० ॥ चांद्रायणसहस्रस्य स फलं लभते ध्रुवम् ॥ गङ्गा गङ्गा जपन्नाम योजनानां शते स्थितः ॥ २१ ॥ मुच्यते सर्वपापेभ्यो
विष्णुलोकं च गच्छति ॥ कीर्तनान्मुच्यते पापाद्दर्शनान्मंगलं लभेत् ॥ २२ ॥ अवगाह्य तथा पीत्वा पुनात्यासप्तमं कुलम् ॥ सप्तावरान्परान्सप्त
सप्ताथ परतः परान् ॥ २३ ॥ गंगा तारयते पुंसां प्रसंगेनापि कीर्तिता ॥ अश्रद्धयापि गंगाया यस्तु नामानुकीर्तनम् ॥ २४ ॥ करोति पुण्य
वाहिन्याः सोऽपि स्वर्गस्य भाजनम् ॥ सर्वावस्थां गतो वापि सर्वधर्मविवर्जितः ॥२५ ॥ गंगायाः कीर्तनेनैव शुभां गतिमवाप्नुयात्॥ ब्रह्महा गुरुहा
गोघ्नः स्पृष्टो वा सर्वपातकैः ॥ २६ ॥ गंगातोयं नरः स्पृष्ट्वा मुच्यते सर्वपातकैः ॥ कदा द्रक्ष्यामि तां गंगां कदा स्नानं लभे ह्यहम्॥२७॥इति पुंसा
भिलषिता कुलानां तारयेच्छतम्॥अथ स्नानफलं देवि गंगायाः प्रवदामि ते॥२८॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥स्नातस्य गंगासलिले
सद्यः पापं प्रणश्यति ॥ २९ ॥ अपूर्वपुण्यप्राप्तिश्च सद्यो मोहिनि जायते ॥ स्नातानां शुचिभिस्तोयैर्गांगेयैः प्रयतात्मनाम् ॥ ३० ॥ व्युष्टिर्भवति

या पुंसां न मा क्रतुशतैरपि ॥ अपहत्य तमस्तीव्रं यथा भात्युदये रविः ॥३१ ॥ तथापहत्य पाप्मानं भाति गंगाजलोक्षितः॥ एकेनैवापि विधिना
स्नानेन नृपसुन्दरि ॥ ३२ ॥ अश्वमेधफलं मर्त्यो गंगायां लभते ध्रुवम् ॥ अनेकजन्मसंभूतं पुंसः पापं प्रणश्यति ॥ ३३ ॥ स्नानमात्रेण गंगायाः
सद्यः स्यात्पुण्यभाजनम् ॥ अन्यस्थानकृतं पापं गंगातीरे विनश्यति ॥३४॥ गंगातीरे कृतं पापं गङ्गास्नानेन नश्यति ॥ रात्रौ दिवा च संध्यायां
गंगायां तु प्रयत्नतः ॥ ३५ ॥ स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥ सर्वतीर्थेषु यत्पुण्यं सर्वेष्वायतनेषु च ॥ ३६ ॥ तत्फलं
लभते मर्त्यो गङ्गास्नानान्न संशयः ॥ महापातकसंयुक्तो युक्तो वा सर्वपातकैः ॥ ३७ ॥ गङ्गास्नानेन विधिवन्मुच्यते सर्वपातकैः ॥ गङ्गा
स्नानात्परं स्नानं न भूतं न भविष्यति ॥ ३८ ॥ विशेषतः कलियुगे पापं हरति जाह्नवी ॥ निहत्य कामजान्दोषान्कायवाक्चित्तसंभवान्
॥ ३९ ॥ गङ्गास्नानेन भक्त्या तु मोदते दिवि देववत् ॥ वर्षं स्नाति च गंगायां यो नरो भक्तिसंयुतः ॥ ४० ॥ तस्य स्याद्वैष्णवे लोके स्थितिः
कल्पं न संशयः ॥ आमृत्युं स्नाति गंगायां यो नरो नित्यमेव च ॥ ४१॥ समस्तपापनिर्मुक्तः समस्तकुलसंयुतः ॥ समस्तभोगसंयुक्तो विष्णुलोके
महीयते॥ ४२ ॥ परार्द्धद्वितयं यावन्नात्र कार्या विचारणा ॥ गंगायां स्नाति यो मर्त्यो नैरंतर्येण नित्यदा ॥४३ ॥ जीवन्मुक्तः स चात्रैव मृतो
विष्णुपदं व्रजेत्॥प्रातःस्नानाद्दशगुणं पुण्यं मध्यंदिने स्मृतम्॥४४॥ सायंकाले शतगुणमनन्तं शिवसन्निधौ ॥ कपिलाकोटिदानाद्धि गंगास्नानं
विशिष्यते ॥ ४५ ॥ कुरुक्षेत्रसमा गंगा यत्र तत्रावगाहिता ॥ हरिद्वारे प्रयागे च सिंधुसंगे फलाधिका ॥ ४६ ॥ ये मदीयांशुसंतप्ते जले ते स्नांति
जाह्नवि ॥ ते भित्वा मंडलं यांति मोक्षं चेति रवेर्वचः ॥ ४७ ॥ यो गृहे स्वे स्थितोऽपि त्वां स्नाने संकीर्तयिष्यति॥ सोऽपि यास्यति नाकं वै
इत्याह वरुणश्च ताम्॥४८॥इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीचरिते गंगास्नानमाहात्म्यं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥ वसुरुवाच ॥
अथ कालविशेषे तु गंगास्नानस्य ते फलम् ॥ कीर्तयिष्यामि वामोरु सावधाना निशामय ॥१ ॥ नैरंतर्येण गंगायां माघे स्नाति च यो नरः॥स
शक्रलोके सुचिरं कालं तिष्ठेत्सगोत्रजः ॥ २ ॥ ततो ब्रह्मपुरं याति कल्पकोटिशतायुतैः ॥ नैरंतर्येण विधिवद्गङ्गायां स्नाति यो नरः ॥३ ॥ षण्मास
मेककालाशी सकृदेवोत्तरायणे ॥ सोऽपि विष्णुपदं याति कुलानां शतमुद्धरन् ॥ ४ ॥ संक्रांतिषु तु सर्वासु स्नात्वा गङ्गाजले नरः ॥ विमानेनार्क
वर्णेन स व्रजेद्विष्णुमंदिरम् ॥ ५ ॥ विषुवेऽयनसंक्रांतौ विशेषात्फलमीरितम् ॥ तपःसमं कार्तिकेऽपि गङ्गास्नाने फलं विदुः ॥६॥ मेषप्रवेशार्ककाले
कार्तिक्यां वापि मोहिनि ॥ माघस्नानाधिकं प्राहुः कमलासनपूर्वकाः ॥ ७ ॥ संवत्सरस्नानजन्यं फलमक्षयके तिथौ ॥ कार्तिके वापि वैशाखे न्ति

प्राह पिता तव ॥ ८ ॥ मन्वादौ च युगादौ यत्प्रोक्तं गंगाजले फलम् ॥ स्नानेन याज्यवनिते त्रिमास्यापि च तत्फलम् ॥ ९ ॥ द्वादश्यां श्रवणर्क्षे च अष्टम्यां पुण्ययोगतः ॥ आर्द्रायां च चतुर्दश्यां गंगास्नानं सुदुर्लभम् ॥ १० ॥ पूर्णिमा माधवे पुण्या तथा कार्तिकमाघयोः ॥ अमावस्यास्तथैतेषां गंगास्नाने सुदुर्लभाः ॥ ११ ॥ कृष्णाष्टम्यां सहस्रं तु शतं स्यात्सर्वपर्वसु ॥ अमायां च तथाष्टम्यां माघासितदले सति ॥ १२ ॥ अर्धोदयं तदा पर्व किंचिन्न्यूनं महोदयः ॥ महोदये शतगुणं लक्षमर्द्धोदये स्मृतम् ॥ १३ ॥ स्नानं गंगाजले देवि ग्रहणाचन्द्रसूर्ययोः ॥ मासत्रयस्नानफलं फाल्गुनाषाढमासयोः ॥ १४ ॥ जन्मर्क्षे तु कृते स्नाने गंगायां भक्तिभावतः ॥ जन्मप्रभृति पापं वै संचितं हि विनश्यति ॥ १५ ॥ चतुर्दश्यां माघकृष्णे व्यतीपातश्च दुर्लभः ॥ कृष्णाष्टम्यां विशेषेण वैधृतिर्जाह्नवीजले ॥ १६ ॥ माघं सकलमेवापि नरो यो विधिपूर्वकम् ॥ अरुणोदयके स्नायी स तु जातिस्मरो भवेत् ॥ १७ ॥ सर्वशास्त्रार्थविज्ञानी नीरोगश्च भवेद्ध्रुवम् ॥ संक्रांत्यां पक्षयोरंते ग्रहणे चंद्रसूर्ययोः ॥ १८ ॥ गंगास्नातो नरः कामाद्ब्रह्मणः सदनं लभेत् ॥ इंदोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं ततः ॥ १९ ॥ गंगातीरे तु संप्राप्ता इंदोः कोटी रवेर्दश ॥ वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ॥ गंगायां यदि लभ्येत सूर्यग्रहशतैः समा ॥ २० ॥ ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलादवतरदसौ जाह्नवी मर्त्यलोकम् ॥ पापान्यस्यां हरति हि तिथौ सा दशेषा यगंगा पुण्यं दद्यादपि शतगुणं वाजिमेधक्रतोश्च ॥ २१ ॥ महापातकसंघानि यानि पापानि संति मे ॥ गोविंदद्वादशीं प्राप्य तानि मे हन जाह्नवि ॥ २२ ॥ मघासंज्ञेन ऋक्षेण चंद्रः संपूर्णमंडलः ॥ गुरुणा याति संयोगं तन्महत्वं तिथेः स्मृतम् ॥ २३ ॥ गंगायां यदि लभ्येत सूर्यग्रहशतैः समा ॥ अथ देशविशेषेण स्नानस्य फलमुच्यते ॥ २४ ॥ कुरुक्षेत्राद्दशगुणा यत्र तत्रावगाहिता ॥ कुरुक्षेत्राच्छतगुणा यत्र विंध्येन संयुता ॥ २५ ॥ विंध्याच्छतगुणा प्रोक्ता काशीपुर्यां तु जाह्नवी ॥ सर्वत्र दुर्लभा गंगा त्रिषु स्थानेषु चाधिका ॥ २६ ॥ गंगाद्वारे प्रयागे च गंगासागरसंगमे ॥ एषु स्नाता दिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ २७ ॥ गंगाद्वारे कुशावर्ते स्नाने पुण्यफलं शृणु ॥ सप्तानां राजसूयानां फलं स्यादश्वमेधयोः ॥ २८ ॥ उषित्वा तत्र मासार्द्धं षण्णां विश्वजितां फलम् ॥ दशायुतानां तु गवां दानपुण्यं विदुर्बुधाः ॥ २९ ॥ सरोत्तमेऽथ गोविंदं रुद्रं कनखले स्थितम् ॥ स्नात्वा वाप्येषु गंगायां पुण्यमक्षयमाप्नुयात् ॥ ३० ॥ तीर्थं च सौकरं नाम महापुण्यं शुभे शृणु ॥ यस्मिन्नाविरभूत्पूर्वं वाराहाकृतिरच्युतः ॥ ३१ ॥ शतस्याग्निचितां पुण्यं ज्योतिष्टोमद्वयस्य च ॥ अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥ ३२ ॥ तत्रैव ब्रह्मणस्तीर्थे ज्योतिष्टोमायुतस्य च ॥ अश्वमेधत्रयस्यापि स्नातः पुण्यं लभेन्नरः ॥ ३३ ॥ कुब्जाख्यं तीर्थमनघं यत्र च व्याधयोऽखिलाः ॥ नश्यंति सर्वजन्मोत्थं पातकं चापि मोहिनि

॥ ३४ ॥ अत्रान्यत्कापिलं तीर्थं यत्र स्नातो नरः शुभे ॥ कपिलाद्ययुतस्यापि दानतुल्यफलं लभेत् ॥ ३५ ॥
गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते ॥ तीर्थे कनखले स्नात्वा धूतपापो व्रजेद्दिवम् ॥ ३६ ॥ पवित्रार्थं ततस्तीर्थं सर्वतीर्थोत्तमोत्तमम् ॥ द्वयो
र्विश्वजितोस्तत्र स्नानात्पुण्यं लभेन्नरः ॥ ३७ ॥ वेणीराज्यं ततस्तीर्थं सरयूर्यत्र गंगया ॥ सुपुण्यया महापुण्या स्वसा स्वस्रेव संगता ॥ ३८ ॥ हरे
र्दक्षिणपादाब्जक्षालनादमरापगा ॥ वामपादोद्भवा वापि सरयूर्मानसप्रभुः ॥ ३९ ॥ तीर्थे तत्रार्चयन् रुद्रं विष्णुं विष्णुत्वमाप्नुयात्॥ पञ्चाश्वमेधफलदं
स्नानं तत्र प्रकीर्तितम् ॥ ४० ॥ ततस्तु गांडवं तीर्थं गंडकी यत्र संगता ॥ गोसहस्रस्य दानं च तत्र स्नानं समं द्वयम् ॥ ४१ ॥ रामतीर्थं ततः
पुण्यं वैकुंठं यत्र सन्निधौ ॥ सोमतीर्थं ततः पुण्यं यत्रासौ नकुलो मुनिः ॥४२॥समभ्यर्च्य शिवं ध्यायन्गणतां तु समाययौ ॥ चंपकाख्यं पुण्यतीर्थं
यद्गंगोत्तरवाहिनी ॥ ४३ ॥ मणिकर्णिकया तुल्यं महापातकनाशनम् ॥ कलशाख्यं ततस्तीर्थं कलशादुत्थितो मुनिः ॥ ४४ ॥ अगस्त्यः पूजय
न्यत्र रुद्रं मुनिवरोऽभवत् ॥ सोमद्वीपं महापुण्यं तीर्थं वाराणसीसमम् ॥ ४५ ॥ सोमो यत्रार्चयन्नीशं रुद्रेण शिरसा धृतः ॥ विश्वामित्रस्य
भगिनी गंगया यत्र संगता ॥ ४६ ॥ तत्राप्लुतो नरो भूयाद्वासवस्य प्रियोऽतिथिः ॥ जह्नुह्रदे महातीर्थे स्नातो मर्त्यो हि मोहिनि ॥ ४७ ॥
एकविंशतिकुल्यानां तारको भवति ध्रुवम् ॥ तस्माददितितीर्थं च यत्रावापादितिर्हरिम् ॥ ४८ ॥ कश्यपात्तत्र सुभगे स्नानमाहुर्महोदयम् ॥
शिलोच्चयं महातीर्थं यत्र तप्त्वा तपः प्रजाः ॥ ४९ ॥ तृणादिभिः सह स्वर्गं यांति तीर्थगणाश्रयात् ॥ इंद्राणीनामतीर्थं स्याद्यत्रेंद्राणी तु वास
वम् ॥ ५० ॥ तपस्तप्त्वा पतिं लेभे सेव्यमेतत्प्रयागवत् ॥ पुण्यदं स्नातकं तीर्थं विश्वामित्रस्तपश्चरन् ॥ ५१ ॥ यत्र ब्रह्मर्षितां लेभे क्षत्रियस्तीर्था
सेवया ॥ प्रद्युम्नतीर्थं तपसा ख्यातं यत्र स्मरो हरेः ॥ ५२ ॥ प्रद्युम्ननामा पुत्रोऽभूत्परं तत्र महोदयम् ॥ ततो दक्षप्रयागं तु गंगातो यमुनागत
॥ ५३ ॥ स्नात्वा तत्राक्षयं पुण्यं प्रयाग इव लभ्यते ॥५४ ॥ इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे गंगामाहात्म्ये स्थलविशेषस्नानफल
कथनं नाम चत्वारिंशत्तमोऽध्यायः ॥४०॥ वसुरुवाच ॥अथावगाहनादीनां कर्मणां फलमुच्यते ॥ सावधाना शृणुष्व त्वं ब्रह्मपुत्रि नृपप्रिये ॥ १ ॥
यैः पुण्यवाहिनी गंगा सकृद्भक्त्यावगाहिता ॥ तेषां कुलानां लक्षं तु भवात्तारयते शिवा ॥ २ ॥ सामान्यस्थानतो देवि तत्र संध्या ह्युपासिता॥पुण्यं
लक्षगुणं कर्तुं समर्था द्विजपावनी ॥ ३ ॥ दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयान्वितैः ॥ अक्षयां तु प्रकुर्वंति तृप्तिं मोहिनि दुर्लभाम् ॥ ४ ॥
यावंतश्च तिला मर्त्यैर्गृहीताः पितृकर्मणि ॥ तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ॥ ५ ॥ पितृलोकेषु ये केचित्सर्वेषां पितरः स्थिताः ॥ तर्प्य

माणाः परां तृप्तिं यांति गंगाजलैः शुभैः ॥ ६ ॥ य इच्छेत्सफलं जन्म संततिं वा शुभानने ॥ स पितॄंस्तर्पयेद्गंगामभिगम्य सुरांस्तथा ॥ ७ ॥
ये मता दुर्गता मर्त्यास्तर्पितास्तत्कुलोद्भवैः ॥ कुशैस्तिलैर्गांगजलैस्ते प्रयांति हरेः पदम् ॥ ८ ॥ स्वर्गसंस्थाश्च ये केचित्पितरः पुण्यशीलिनः ॥
ते तर्पिता गांगजलैर्मोक्षं यांति विधेर्वचः ॥ ९ ॥ मासं तर्पणमात्रेण पिंडसंपातनेन च ॥ गंगायां पितरः सर्वे सुप्रीताः सूर्यवर्चसः ॥ १० ॥ अप्सरो
गणसंयुक्तान्हेमरत्नविभूषितान् ॥ मुक्ताजालपरिच्छन्नान्वेणुवीणानिनादितान् ॥ ११ ॥ भेरीशंखमृदंगादिनिर्घोषान्स्त्रग्विभूषितान् ॥ गन्धर्वदेह
रुचिरान्दिव्यभोगसमन्वितान्॥ १२ ॥ आरुह्य तु विमानाग्र्यान्ब्रह्मलोकं प्रयांति हि ॥ गंगायां तु नरः स्नात्वा यो नित्यं लिंगमर्चयेत् ॥ १३ ॥
एकेन जन्मना मोक्षं परमाप्नोति स ध्रुवम् ॥ अग्निहोत्राणि वेदाश्च यज्ञाश्च बहुदक्षिणाः ॥ १४ ॥ गंगायां लिंगपूजायाः कोटयंशेनापि नो
समाः ॥ पितॄनुद्दिश्य वा देवान्गंगांभोभिः प्रसिंचयेत् ॥ १५ ॥ तृप्ताः स्युस्तस्य पितरो नरकस्थाश्च तत्क्षणात् ॥ मृत्कुंभात्ताम्रकुंभे
स्तु स्नानं दशगुणं स्मृतम् ॥ १६ ॥ रौप्यैः शतगुणं पुण्यं हेमैः कोटिगुणं स्मृतम् ॥ एवमर्घे च नैवेद्ये वलिपूजादिषु क्रमात् ॥ १७ ॥ पात्रा
तरविशेषेण फलं चैवोत्तरोत्तरम् ॥ विभवे सति यो मोहात्र कुर्याद्विधिविस्तरम् ॥ १८ ॥ न स तत्कर्मफलभाग्देवद्रोही प्रकीर्त्यते ॥
देवानां दर्शनं पुण्यं दर्शनात्स्पर्शनं वरम् ॥ १९ ॥ स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥ प्राहुर्गंगाजलैः स्नानं घृतस्नानसमं बुधाः ॥ २० ॥
अर्घ्यं द्रव्यविशेषेण गंगातोयेन यः सकृत् ॥ मागधप्रस्थमात्रेण ताम्रपात्रस्थितेन च ॥ २१ ॥ देवताभ्यः प्रदद्यात्तु स्वकीयपितृभिः सह ॥
पुत्रपौत्रैश्च संयुक्तः स च वै स्वर्गमाप्नुयात् ॥ आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ॥ २२ ॥ रक्तानि करवीराणि तथा वै रक्तचन्दनम् ॥
अष्टाङ्गैरेष युक्तोऽर्घो भानवे परिकीर्तितः॥२३॥विष्णोः शिवस्य सूर्यस्य दुर्गाया ब्रह्मणस्तथा ॥ गंगातीरे प्रतिष्ठां तु यः करोति नरोत्तमः॥२४॥
तथैवायतनान्येषां कारयत्यपि शक्तितः ॥ अन्यतीर्थेषु करणात्कोटिकोटिगुणं भवेत् ॥ २५ ॥ गंगातीरसमुद्भूतमृदा लिंगानि शक्तितः ॥
सलक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ॥२६॥ मंत्रैश्च पत्रपुष्पाद्यैः पूजयित्वा च शक्तितः ॥ गंगायां निक्षिपेन्नित्यं तस्य पुण्यमनंतकम् ॥२७॥
सर्वानंदप्रदायिन्यां गंगायां यो नरोत्तमः ॥ अष्टाक्षरं जपेद्भक्त्या मुक्तिस्तस्य करे स्थिता ॥ २८ ॥ नमो नारायणायेति प्रणवाद्यं नियम्य
च ॥ षण्मासं जपतः सर्वा ह्युपतिष्ठंति सिद्धयः ॥ २९ ॥ नमः शिवायेति मंत्रं सतारं विधिना तु यः ॥ चतुर्विंशतिलक्षं वै जपेत्साक्षात्स
शंकरः ॥ ३० ॥ पंचाक्षरी सिद्धविद्या शिव एव न संशयः ॥ अपवित्रः पवित्रो वा जपन्निष्पातको भवेत् ॥३१॥ पूजितायां तु गंगायां पूजिताः सर्वे

देवताः ॥ तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥ ३२ ॥ चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ॥ रत्नकुंभसितांभोजवराभयकरां शुभाम् ॥ ३३ ॥ श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ॥ सुप्रसन्नां सुवदनां करुणार्द्रहृदंबुजाम् ॥ ३४ ॥ सुधाप्लावितभूपृष्ठां त्रैलोक्यनमितां सदा ॥ ध्यात्वा जलमयीं गंगां पूजयन्पुण्यभाग्भवेत्॥३५॥मासार्द्धमपि यस्त्वेवं नैरंतर्येण पूजयेत् ॥ स एव देवसदृशो बहुकाले फलाधिकः ॥ ३६ ॥ वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ॥ क्रोधात्पीता पुनस्त्यक्ता कर्णरंध्रात्तु दक्षिणात्॥३७॥तां तत्र पूजयेद्देवीं गंगां गगनमेखलाम् ॥ अक्षयायां तु वैशाखे कार्तिकेऽपि शुभानने ॥ ३८ ॥ रात्रौ जागरणं कृत्वा यवान्नैश्च तिलैस्तथा ॥ विष्णुं गंगां च शंभुं च पूजयेद्भक्तिभावतः ॥ ३९ ॥ तथा सुगंधैः कुसुमैः कुंकुमागरुचंदनैः ॥ तुलसीबिल्वपत्राद्यैर्मातुलुंगफलादिभिः ॥ ४० ॥ धूपैर्दीपैश्च नैवेद्यैर्यथाविभवविस्तरैः ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ४१ ॥ दिव्यं विमानमास्थाय विष्णुलोके महीयते ॥ ततो महीतलं प्राप्य राजा भवति धार्मिकः ॥ ४२ ॥ भुक्त्वा विविधसौख्यानि रूपशीलगुणान्वितः ॥ देहांते ज्ञानवान्भूत्वा शिवसायुज्यमाप्नुयात् ॥ ४३ ॥ यज्ञो दानं तपो जप्यं श्राद्धं च सुरपूजनम् ॥ गंगायां तु कृतं सर्वं कोटिकोटिगुणं भवेत् ॥ ४४ ॥ यस्त्वक्षयतृतीयायां गंगातीरे ददाति वै ॥ घृतधेनुं विधानेन तस्य पुण्यफलं शृणु॥४५॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ सहस्रादित्यसंकाशः सर्वकामसमन्वितः॥४६॥ हेमरत्नमये चित्रे विमाने हंसभूषिते ॥ स्वकीयपितृभिः सार्द्धं ब्रह्मलोके महीयते ॥ ४७ ॥ ततस्तु जायते विप्रो गंगातीरे धनान्वितः ॥ अंते तु ब्रह्मविद्भूत्वा मोक्षमाप्नोत्यसंशयः ॥४८॥ तथैव गोप्रदानं च विधिना कुरुते तु यः॥ गोलोमसंख्यवर्षाणि स्वर्गलोके महीयते॥४९॥जायते च कुले पश्चाद्धनधान्यसमाकुले॥ रत्नकांचनभूपूर्णे शीलविद्यायशोन्विते ॥५०॥ स भुक्त्वा विपुलान्भोगान्पुत्रपौत्रसमन्वितः ॥ मोक्षभागी भवेन्नूनं नात्र कार्या विचारणा॥५१॥कपिला यदि दत्ता स्याद्विधिना वेदपारगे॥ नरकस्थान्पितॄन्सर्वान्स्वर्गं नयति वै तदा॥ ५२ ॥भूमिं निवर्तनमितां गंगातीरे ददाति यः॥भूमिरेणुप्रमाणाब्दं ब्रह्मविष्णुशिवातिगः॥५३ ॥जायते च पुनर्भूमौ सप्तद्वीपपतिर्भवेत्॥भेरीशंखादिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ५४ ॥ स्तुतिभिर्मागधानां च सुप्तोऽसौ प्रतिबुध्यते ॥ सर्वसौख्यान्यवाप्येह सर्वधर्मपरायणः ॥ ५५ ॥ नरकस्थान्पितॄन्सर्वान्प्रापयित्वा दिवं तथा ॥ स्वर्गस्थितान्मोक्षयित्वा स्वयं ज्ञानी च मोहिनि ॥ ५६ ॥ अंते ज्ञानासिना छित्वा अविद्यां पंचपर्विकाम् ॥ परं वैराग्यमापन्नः परं ब्रह्माधिगच्छति ॥५७॥ सप्तहस्तेन दंडेन त्रिंशद्दंडा निवर्तनम् ॥ त्रिभागहीनं गोचर्म मानमाह विधिः स्वयम्॥५८ ॥ ग्रामं गंगातटे यो वै ब्राह्मणेभ्यः प्रय

च्छति ॥ ब्रह्मविष्णुशिवप्रीत्यै दुर्गाया भास्करस्य च ॥ ५९ ॥ सर्वदानेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ तपोव्रतेषु पुण्येषु यत्फलं परिकीर्तितम् ॥६०॥सहस्रगुणितं तत्तु विज्ञेयं ग्रामदायिनः ॥ सूर्यकोटिप्रतीकाशे विमाने वैष्णवे पुरे ॥ ६१ ॥ क्रीडते शांकरे वापि स्तुतो देवादिभिर्मुदा ॥ भूमिरेण्वब्दसंख्याकं कालं स्थित्वा च तत्र सः ॥ ६२ ॥ अणिमादिगुणैर्युक्ते योगिनां जायते कुले ॥अक्षयायां तु यो देवि स्वर्णं षोडशमासिकम् ॥ ६३ ॥ ददाति द्विजमुख्याय सोऽपि लोकेषु पूज्यते ॥ अन्नदानाद्विष्णुलोकं शैवं वै तिलदानतः ॥ ६४॥ ब्राह्मं रत्नप्रदानेन गोहिरण्येन वासवम् ॥ गांधर्वं स्वर्णवासोभिः कीर्तिं कन्याप्रदानतः॥ ६५ ॥ विद्यया मुक्तिदं ज्ञानं प्राप्य यायान्निरंजनम् ॥गंगातीरे नरो यस्तु नानावृक्षैः समन्वितम्॥६६॥आरामं कारयेद्दत्तया गृहं चोपवनान्वितम् ॥ कदलीनारिकेरैश्च कपित्थाशोकचंपकैः ॥६७ ॥ पनसैर्बिल्ववृक्षैश्च कदंबाश्वत्थपाटलैः ॥आम्रैस्तालैर्नागरंगैर्वृक्षैरन्यैश्च संयुतम्॥६८॥जातीविजयसंयुक्तं तथा पाटलराजितम्॥निचितं कारयित्वैवमावासं पुष्पशोभितम्॥६९॥शिवाय विष्णवे वापि दुर्गायै भास्कराय च॥प्रयच्छति तथा भक्त्या सर्वार्थं परिकल्प्य च॥७०॥तस्य पुण्यफलं वक्ष्ये संक्षेपान्नतु विस्तरात्॥ यावंति तेषां वृक्षाणां पुष्पमूलफलानि च ॥ ७१ ॥ बीजानि च विचित्राणि तेषां मूलानि वै तथा॥ तावत्कल्पसहस्राणि तेषां लोकेषु संस्थितिः ॥ ७२ ॥ इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे गङ्गामाहात्म्ये दानादिविधिवर्णनं नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ मोहिन्युवाच ॥ धन्याहं कृतकृत्याहं सफलं जीवितं मम ॥ यच्छ्रुतं त्वन्मुखांभोजाद्गंगामाहात्म्यमुत्तमम् ॥ १ ॥अहो गङ्गासमं तीर्थं नास्ति किंचिद्धरातले ॥ यस्याः संदर्शनादीनामीदृशं पुण्यमीरितम् ॥२ ॥ गुडधेन्वादिधेनूनां विधानं च यथाक्रमम् ॥ तथा कथय विप्रेन्द्र भक्ताहं तव सर्वदा ॥३॥ वसिष्ठ उवाच ॥ तच्छ्रुत्वा मोहिनीवाक्यं वसुस्तस्याः पुरोहितः ॥ वेदागमानां तत्त्वज्ञः स्मयमान उवाच ह ॥ ४ ॥ वसुरुवाच ॥ शृणु मोहिनि वक्ष्यामि यत्पृष्टं हि त्वया मम॥ गुडधेनुविधानं च यथा शास्त्रे प्रकीर्तितम् ॥ ५ ॥ कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ॥ गोमयेनोपलिप्तायां कुशानास्तीर्य यत्नतः ॥ ६ ॥ प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकाम् ॥ उत्तमा गुडधेनुस्तु चतुर्भारैः प्रकीर्तिता ॥ ७॥ वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥ अर्द्धभारेण वत्सः स्यात्कनिष्ठा भारकेण तु ॥ ८ ॥ चतुर्थांशेन वत्सः स्याद् गृहवित्तानुसारतः ॥ प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तयेत् ॥ ९ ॥ न सांपरायिकं तस्य दुर्मतेर्जायते फलम् ॥ धेनुवत्सौ घृतस्यैतौ सितश्लक्ष्णांबरावृतौ ॥ १० ॥ शुक्तिकर्णाविक्षुपादौ शुद्धमुक्ताफलेक्षणौ ॥ सितसूत्रशिरालौ च सितकंबलकंबलौ ॥ ११ ॥ ताम्रगंडूकपृष्ठौ तौ सितचामरलोमकौ ॥ विद्रुमकमगो

पेतौ नवनीतस्तनान्वितौ ॥१२ ॥ कांस्यदोहाविद्रनीलमणिकल्पिततारकौ ॥ सुवर्णशृंगाभरणौ शुद्धरौप्यखुरावुभौ ॥ १३ ॥ नानाफलसमायुक्तौ घ्राणगन्धकरंडकौ ॥ इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् ॥ १४ ॥ या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता ॥धेनुरूपेण सा देवी मम शांतिं प्रयच्छतु ॥ १५ ॥ देहस्था या च रुद्राणां शंकरस्य सदा प्रिया ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ १६ ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहारूपा विभावसोः ॥ चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ॥१७॥ चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीर्या धनदस्य च ॥लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे॥ १८॥ स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजा च या॥सर्वपापहरा धेनुः सा मे शांतिं प्रयच्छतु ॥ १९ ॥ एवमामंत्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥विधानमेतद्धेनूनां सर्वासामिह पठ्यते॥ २० ॥ यास्तु पापविनाशिन्यः कीर्तिता दश धेनवः ॥ तासां स्वरूपं वक्ष्यामि शास्त्रोक्तं शृणु मोहिनि ॥ २१॥प्रथमा गुडधेनुः स्याद् घृतधेनुरथापरा ॥ तिलधेनुस्तृतीया च चतुर्थी जलसंज्ञिता ॥ २२ ॥ पञ्चमी क्षीरधेनुश्च षष्ठी मधुमयी स्मृता ॥ सप्तमी शर्कराधेनुर्दधिधेनुस्तथाष्टमी ॥ २३ ॥रत्नधेनुश्च नवमी दशमी तु स्वरूपतः ॥ कुंभाः स्युर्द्रवधेनूनां चेतरासां तु राशयः ॥ २४ ॥ सुवर्णधेनुमप्यत्र केचिदिच्छंति सूरयः ॥ नवनीतेन तैलेन तथा केऽपि महर्षयः ॥ २५ ॥एतदेव विधानं स्यादेत एव ह्युपस्कराः ॥ मन्त्रावाहनसंयुक्ताः सदा पर्वणि पर्वणि ॥ २६॥ यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ॥ अनेकयज्ञफलदाः सर्वपापहराः शुभाः ॥ २७ ॥ अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः ॥ युगादौ चैव मन्वादौ चोपरागादिपर्वसु ॥ २८ ॥ गुडधेन्वादयो देया भक्तिश्रद्धासमन्वितैः ॥ तीर्थेषु स्वगृहे वापि गंगातीरे विशेषतः ॥ २९ ॥ एवं दत्वा विधानेन धेनुं द्विजवराय च ॥ प्रदक्षिणीकृत्य विप्रं दक्षिणाभिः प्रतोष्य च ॥ ३० ॥ ऋत्विजः प्रीतिसंयुक्तो नमस्कृत्य विसर्जयेत् ॥ ततः संपूजयेद्गंगां विधिना सुसमाहितः ॥ ३१ ॥ अष्टमूर्तिधरां देवीं दिव्यरूपां निरीक्ष्य च ॥ शालितंदुलप्रस्थेन द्विप्रस्थपयसा तथा ॥ ३२ ॥ पायसं कारयित्वा च दत्वा मधु घृतं तथा॥ प्रत्येकं पलमात्रं च भक्तिभावेन संयुतः ॥ ३३ ॥ तत्पायसमपूपांश्च मोदका मंडलानि च ॥ तथा गुंजार्द्धमात्रं च सुवर्णं रूप्यमेवं च ॥ ३४ ॥ चंदनागरुकर्पूरकुंकुमानि च गुग्गुलम् ॥ विल्वपत्राणि दूर्वाश्च रोचना सितचंदनम् ॥ ३५ ॥ नीलोत्पलानि चान्यानि पुष्पाणि सुरभीणि च ॥ यथाशक्ति महाभक्त्या गंगायां चैव निक्षिपेत् ॥३६ ॥ मन्त्रेणानेन सुभगे पुराणोक्तेन चापि हि॥ॐगंगायै नागयण्यै शिवायै च नमो नमः ॥३७ ॥एतदेव विधानं तु मासि मासि च मोहिनि ॥ पौर्णमास्याममायां वा कार्यं प्रातः समाहितैः ॥ ३८ ॥ वर्षं यस्तु नगे भक्त्या यथा

शक्त्यर्चयन्मुदा ॥ हविष्याशी मिताहारो ब्रह्मचर्यसमन्वितः॥३९॥दिने वापि तथा रात्रौ नियमेन च मोहिनि ॥ संवत्सरान्ते तस्यैषा गंगा दिव्य
वपुर्द्धरा ॥ ४० ॥दिव्यमाल्यांबरा चैव दिव्यरत्नविभूषिता॥प्रत्यक्षरूपा पुरतस्तिष्ठत्येव वरप्रदा ॥ ४१ ॥ एवं प्रत्यक्षरूपां तां गंगां दिव्यवपुर्द्धराम् ॥
दृष्ट्वा स्वचक्षुषा मर्त्यः कृतकृत्यो भवेच्छुभे ॥ ४२ ॥ यान्यान्कामयते मर्त्यः कामांस्तांस्तानवाप्नुयात् ॥ निष्कामस्तु लभेन्मोक्षं विप्रस्तेनैव
जन्मना ॥४३॥ एतद्विधानं च मयोदितं ते पृष्टं हि सर्वं गुडधेनुपूर्वम् ॥ गंगार्चनं मुक्तिकरं व्रतं तत् सांवत्सरं श्रीपतितुष्टिदं हि ॥ ४४ ॥
इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे गंगामाहात्म्ये गुडधेनुविधिकथनं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥ वसिष्ठ उवाच ॥
श्रुत्वा विप्र मया वसोर्वचनमाकर्ण्य गङ्गामाहात्म्यसूचकम् ॥ पुनः पप्रच्छ राजेन्द्र तं विप्रं स्वपुरोहितम् ॥ १ ॥ मोहिन्युवाच ॥ श्रुतं विप्र मया
सर्वं गोदानादि शुभावहम् ॥ अधुना श्रोतुमिच्छामि गङ्गाव्रतमनुत्तमम् ॥ २ ॥ गङ्गादीनां पूजनं च स्थापनं तत्र वा द्विज ॥ किं
फलं वद सर्वज्ञ त्वामहं शरणं गता ॥ ३ ॥ अधुना गतिदाता त्वं वर्जितायाश्च बंधुभिः ॥ पत्या विरहिता चाहं पुत्रहीना विदांवर ॥ ४ ॥
त्वामेव शरणं प्राप्ता पितुर्वचनगौरवात् ॥ तद्भवान्प्रणताया मे गंगामाहात्म्यसंयुतम् ॥ देवताराधनं ब्रूहि यच्छ्रुत्वा मुच्यते ह्यघात् ॥ ५ ॥
वसिष्ठ उवाच ॥ तच्छ्रुत्वा मोहिनीवाक्यं वसुर्विप्रः प्रतापवान् ॥ सभाज्य मोहिनीं भूप प्राह वेदविदां वरः ॥ ६ ॥ वसुरुवाच ॥ साधु पृष्टं त्वया
देवि लोकानां हितकाम्यया ॥ ७ ॥ गंगामाहात्म्यमखिलं महापापप्रणाशनम् ॥ वृषध्वजेन कथितं शिवेन दयया पुरा ॥ ८ ॥ प्रीत्या देव्याभि
पृष्टेन गंगातीरनिवासिना ॥ देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा ॥ ९॥ अपराह्णे च पितृभिः शर्वर्यां गुह्यकादिभिः ॥सर्वा वेला अतिक्रम्य
नक्तभोजनमुत्तमम् ॥१० ॥ उपवासाद्वरं भैक्ष्यं भैक्ष्याद्वरमयाचितम् ॥ अयाचिताद्वरं नक्तं तस्मान्नक्तं समाचरेत् ॥ ११ ॥ हविष्यभोजनं स्नानं
सत्यमाहारलाघवम् ॥ अग्निकार्य्यमधःशय्यां नक्ताशी षट् समाचरेत् ॥ १२ ॥ गंगातीरे माघमासे यः कुर्यान्नक्तभोजनम् ॥ शिवायतनपार्श्वे तु
कृशरं घृतसंयुतम् ॥ १३ ॥ नैवेद्यं च निवेद्यैव कृशरान्नं शिवस्य तु ॥ काष्ठमौनेन भुंजानो जिह्वालौल्यं विवर्जयेत्॥१४ ॥ पलाशपत्रे भुञ्जानः शिवं
स्मृत्वा जितेंद्रियः॥ धर्मराजस्य देव्याश्च पृथक्पिंडं प्रकल्पयेत्॥१५॥सोपवासश्चतुर्दश्यां भवेदुभयपक्षयोः ॥ पौर्णमास्यां तु गंधैश्च गंगायाः सलिले
स्तथा ॥ १६॥ शिवं संस्नाप्य पयसा मध्वाज्यदधिभिः पृथक्॥तथैव हेमपुष्पं च लिंगमूर्ध्नि विनिक्षिपेत् ॥१७॥ ततो दद्यात्तु शक्त्यैवापूपश्च घृत

पाचितम्॥तिलाढकं प्रगृह्याथ शिवलिंगोपरि क्षिपेत्॥१८॥नीलोत्पलैश्च सर्वेशं पूजयेत्पंकजैरपि॥तदलाभे तु सौवर्णैः पंकजैः पूजयेद्धरम्॥१९॥पायसं चात्र मध्वक्तं घृतयुक्तं च गुग्गुलम् ॥ घृतदीपं तथा चैव चंदनाद्यैर्विलेपनम् ॥ २० ॥ दद्याद्भक्त्या महेशाय तथा पत्रफलानि च ॥ कृष्णगोमिथुनं चैव सरूपं च निवेदयेत् ॥ २१ ॥ भोजयेद्ब्राह्मणानष्टौ मासांते तु सदक्षिणान् ॥ वर्जयेन्मधु मांसं च तं मासं ब्रह्मचर्यवान् ॥ २२ ॥ एवं कृत्वा यथोद्दिष्टमेकवारमिदं व्रतम् ॥ यमैश्च नियमैर्युक्तः श्रद्धाभक्तिपरायणः ॥ २३ ॥ इह भोगानवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ इंद्रनीलप्रतीकाशैर्विमानैः शिखिसंयुतैः ॥ २४ ॥ दिव्यरत्नमयैश्चैव दिव्यभोगसमन्वितैः ॥ गत्वा शिवपुरं रम्यं सर्वस्वकुलसंयुतः ॥ २५ ॥ सुहृद्भिर्विविधैश्चैव विविधानप्यभीप्सितान् ॥ भुक्त्वा भोगानशेषांश्च यावदाभूतसंप्लवम् ॥ २६ ॥ ततो भवति धर्मात्मा जंबूद्वीपपतिस्तथा ॥ तत्र भुंक्ते समस्ताँश्च भोगान्विगतकल्मषः ॥ २७ ॥ सुरूपः सुभगश्चैव तथा विहितशासनः ॥ सर्वरोगविनिर्मुक्तः सोऽप्येतत्फलभाग्भवेत् ॥ २८ ॥ वैशाखे शुक्लपक्षे वा चतुर्दश्यां समाहितः ॥ शाल्यन्नं क्षीरसंयुक्तं यः कुर्यान्नक्तभोजनम् ॥ २९ ॥ शिवं संपूज्य पुष्पाद्यैर्भोज्यं तु संनिवेद्य च ॥ काष्ठमौनेन भुंजानो वटकाष्ठेन वै तथा ॥३० ॥ मौनेन प्रयतो भूत्वा कुर्याद्वै दंतधावनम् ॥ शिवलिंगसमीपे तु गंगातीरे निशि स्वपेत् ॥ ३१ ॥ पौर्णमास्यां प्रभाते तु गंगायां विधिना तथा ॥ स्नात्वोपवासं संकल्प्य कुर्य्याज्जागरणं निशि ॥ ३२ लिंगं घृतेन संस्नाप्य पुष्पगंधादिभिस्तथा ॥ नैवेद्यधूपदीपैश्च संपूज्य वृषभं शुभम् ॥ ३३ ॥ सुश्वेतपुष्पवस्त्राद्यैर्हारिद्रैश्चंदनैस्तथा ॥ अलंकृत्य विधानेन शिवाय विनिवेदयेत् ॥ ३४ ॥ ब्राह्मणांश्च यथाशक्ति पायसेन तु भोजयेत् ॥ एवं सकृच्च यो भक्त्या करोति श्रद्धयान्वितः ॥ ३५ ॥ लभते दैवपादोनयुगानां द्विसहस्रकम् ॥ तपः कृत्वा तु नियमाद्यत्पुण्यं तदसंशयम् ॥ ३६ ॥ हंसकुंदप्रभायुक्तैर्विमानैश्चन्द्रसन्निभैः ॥ सुश्वेतवृषयुक्तैश्च मुक्ताजालविभूषितैः ॥ ३७ ॥ स्वकीयपितृभिः सार्द्धं प्रयातीश्वरमंदिरम् ॥ नीलोत्पलसुगंधाभिः सुरूपाभिः समंततः ॥ ३८ ॥ कांताभिर्दिव्यरूपाभिर्भुक्त्वा भोगाननेकशः ॥ अनंतकालमैश्वर्ययुक्तो भूत्वा ततो भुवि ॥ ३९ ॥ जायते स महीपालः कीर्त्यैश्वर्यसमन्वितः ॥ एकच्छत्रेण स महीं पालयत्याज्ञया सह॥४०॥अन्ते वैराग्यसंपन्नो गंगां स लभते पुनः॥स तया श्रद्धया युक्तो गंगायां मरणं लभेत्॥४१॥ तथा तत्र स्मृतिं लब्ध्वा मोक्षमाप्नोति स ध्रुवम् ॥ ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ॥ ४२ ॥ गंगातीरे तु पुरुषो नारी वा भक्तिभावतः ॥

निशायां जागरं कृत्वा गंगां दशविधैस्ततः ॥४३ ॥ पुष्पैर्गंधैश्च नैवेद्यैः फलैश्च दशसंख्यया ॥ तथैव दीपैस्तांबूलैः पूजयेच्छ्रद्धयान्वितः ॥ ४४ ॥
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ॥ दशप्रसृति कृष्णांश्च तिलान्सर्पिश्च वै जले॥४५॥ सक्तुपिंडान्गुडपिंडान्दद्याच्च दशसंख्यया॥
ततो गंगातटे रम्ये हेम्ना रूप्येण वा तथा ॥ ४६ ॥ गंगायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ॥ पद्मस्वस्तिकचिह्नस्य संस्थितस्य तथोपरि
॥ ४७ ॥वस्त्रस्रग्दामकंठस्य पूर्णकुंभस्य चोपरि ॥ संस्थाप्य पूजयेद्देवीं तदलाभे मृदादि वा ॥ ४८ ॥ अथ तत्राप्यशक्तश्चेल्लिखे[illegible]ष्टेन वै भुवि ॥
चतुर्भुजां सुनेत्रां च चन्द्रायुतसमप्रभाम् ॥ ४९ ॥ चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ॥ सुप्रसन्नां च वरदां करुणार्द्रनिजांतराम् ॥ ५० ॥
सुधाप्लावितभूपृष्ठां देवादिभिरभिष्टुताम् ॥ दिव्यरत्नपरीतां च दिव्यमाल्यानुलेपनाम् ॥ ५१ ॥ ध्यात्वा जले यथाप्रोक्तां तत्रार्चायां तु पूजयेत् ॥
वक्ष्यमाणेन मंत्रेण कुर्यात्पूजां विशेषतः ॥ ५२ ॥ पंचामृतेन च स्नानमर्चायां तु विशिष्यते ॥ प्रतिमाग्रे स्थंडिले तु गोमयेनोपलेपयेत ॥ ५३॥
नारायणं महेशं च ब्रह्माणं भास्करं तथा ॥ भगीरथं च नृपतिं हिमवंतं नगेश्वरम् ॥ ५४ ॥ गंधपुष्पादिभिश्चैव यथाशक्ति प्रपूजयेत् ॥ दशप्रस्थां
स्तिलान्दद्याद्दश विप्रेभ्य एव च ॥ ५५ ॥ दशप्रस्थान्यवान्दद्याद्दश गव्यैर्यथाहितान् ॥ मत्स्यकच्छपमंडूकमकरादिजलेचरान् ॥ ५६ ॥ कारि
तान्वै यथाशक्ति स्वर्णेन रजतेन वा ॥ तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः ॥ गंगायां प्रक्षिपेत्पूर्व्वं मंत्रेणैव तु मंत्रवित् ॥ ५७ ॥ रथयात्रादिने
तस्मिन्विभवे सति कारयेत् ॥रथारूढप्रतिकृतिं गंगायास्तूत्तरामुखाम् ॥ ५८ ॥ श्रमंत्या दर्शनं लोके दुर्लभं पापकर्मणाम् ॥ दुर्गाया रथयात्रास्ति
तथैवात्रापि कारयेत् ॥ ५९ ॥ एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ॥ दशपापैर्वक्ष्यमाणैः सद्य एव विमुच्यते ॥ ६० ॥ अदत्तानामु
पादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ ६१ ॥ पारुष्यमनृतं वापि पैशुन्यं चापि सर्वशः ॥ असंबद्धप्रला
पश्च वाचिकं स्याच्चतुर्विधम् ॥ ६२ ॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ ६३ ॥ एतै
र्दशविधैः पापैः कोटिजन्मसमुद्भवैः ॥ मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा ॥ ६४ ॥ दश त्रिंशच्च तान्पूर्वान्पितॄनेव तथापरान् ॥ उद्धर
त्येव संसारान्मंत्रेणानेन पूजिता ॥ ६५ ॥ " ॐ नमो दशहरायै नारायण्यै गंगायै नमः ॥ " इति मंत्रेण यो मर्त्यो दिने तस्मिन्दिवानिशम्
॥ ६६ ॥ जपेत्पंचसहस्राणि दशधर्मफलं लभेत् ॥ उद्धरेद्दश पूर्वाणि पराणि च भवार्णवात् ॥ ६७ ॥ वक्ष्यमाणमिदं स्तोत्रं विधिना

प्रतिगृह्य च ॥ गंगाग्रे तद्दिने जप्यं विष्णुपूजां प्रवर्तयेत् ॥ ६८ ॥ ॐ नमः शिवायै गंगायै शिवदायै नमोऽस्तु ते॥ नमोऽस्तु विष्णुरूपिण्यै गंगायै ते नमो नमः ॥ ६९॥ सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ नमोऽस्तु ते ॥ ७० ॥ स्थाणुजंगमसंभूतविषहंत्रि नमोऽस्तु ते ॥ संसारविषनाशिन्यै जीवनायै नमोनमः ॥ ७१॥ तापत्रितयहंत्र्यै च प्राणेश्वर्यै नमोनमः ॥ शांत्यै संतापहारिण्यै नमस्ते सर्वमूर्तये ॥ ७२ ॥ सर्वसंशुद्धिकारिण्यै नमः पापविमुक्तये ॥ भुक्तिमुक्तिप्रदायिन्यै भोगवत्यै नमोनमः ॥७३॥मंदाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमोनमः॥ नमस्त्रैलोक्यमूर्तायै त्रिदशायै नमोनमः ॥ ७४ ॥ नमस्ते शुक्लसंस्थायै क्षेमवत्यै नमोनमः ॥ त्रिदशासनसंस्थायै तेजोवत्यै नमोऽस्तु ते ॥ ७५ ॥ मंदायै लिंगधारिण्यै नारायण्यै नमोनमः ॥ नमस्ते विश्वमित्रायै रेवत्यै ते नमोनमः ॥ ७६ ॥ बृहत्यै ते नमो नित्यं लोकधात्र्यै नमोनमः ॥ नमस्ते विश्वमुख्यायै नंदिन्यै ते नमोनमः ॥ ७७॥ पृथ्व्यै शिवामृतायै च विरजायै नमोनमः ॥ परावरगताद्यायै तारायै ते नमोनमः ॥ ७८ ॥ नमस्ते स्वर्गसंस्थायै अभिन्नायै नमोनमः ॥ शान्तायै ते प्रतिष्ठायै वरदायै नमोनमः ॥ ७९ ॥ उस्रायै सुखजल्पायै संजीविन्यै नमोनमः ॥ ब्रह्मगायै ब्रह्मदायै दुरितघ्न्यै नमोनमः ॥ ८० ॥ प्रणतार्तिप्रभंजिन्यै जगन्मात्रे नमोनमः ॥ विलुषायै दुर्गहंत्र्यै दक्षायै ते नमोनमः ॥ ८१ ॥ सर्वापत्प्रतिपक्षायै मंगलायै नमोनमः ॥ परापरे परे तुभ्य नमो मोक्षप्रदे सदा ॥ गंगा ममाग्रतो भूयाद्गंगा मे पार्श्वयोस्तथा ॥ ८२ ॥ गंगा मे सर्वतो भूयात्त्वयि गंगेऽस्तु मे स्थितिः ॥ आदौ त्वमंते मध्ये च सर्वा त्वं गांगते शिवे ॥ ८३ ॥ त्वमेव मूलप्रकृतिस्त्वं हि नारायणः प्रभुः ॥ गंगे त्वं परमात्मा च शिवस्तुभ्यं नमोनमः ॥ ८४ ॥ इतीदं पठति स्तोत्रं नित्यं भक्तिपरस्तु यः ॥ शृणोति श्रद्धया वापि कायवाचिकसंभवैः ॥ ८५ ॥ दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥ रोगी प्रमुच्यते रोगान्मुच्येतापन्न आपदः ॥ ८६ ॥ द्विषद्भ्यो बंधनाच्चापि भयेभ्यश्च विमुच्यते ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ ८७ ॥ इदं स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ॥ नाग्निचौरभयं तत्र पापेभ्योऽपि भयं नहि ॥ ८८ ॥ तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः ॥ जपंस्तु दशकृत्वश्च दरिद्रो वापि चाक्षमः ॥ ८९ ॥ सोऽपि तत्फलमाप्नोति गंगां संपूज्य भक्तितः ॥ पूर्वोक्तेन विधानेन फलं यत्परिकीर्तितम् ॥९०॥ यथा गौरी तथा गंगा तस्माद्गौर्यास्तु पूजने॥विधिर्यो विहितः सम्यक्सोऽपि गंगाप्रपूजने॥९१॥यथा शिवस्तथा विष्णुर्यथा विष्णु

स्तथा ह्युमा ॥ उमा यथा तथा गंगा चात्र भेदो न विद्यते ॥ ९२ ॥ विष्णुरुद्रांतरं यश्च गंगागौर्यंतरं तथा ॥ लक्ष्मीगौर्यंतरं यश्च प्रब्रूते मूढधीस्तु
सः ॥ ९२ ॥ शुक्लपक्षे दिवा भूमौ गंगायामुत्तरायणे ॥ धन्या देहं विमुंचंति हृदयस्थे जनार्दने ॥ ९४ ॥ ये मुंचंति नराः प्राणान् गंगायां विधिनं
दिनि ॥ ते विष्णुलोकं गच्छंति स्तूयमाना दिविस्थितैः ॥ ९५॥ अर्द्धोदकेन जाह्नव्यां म्रियतेऽनशनेन यः॥स याति न पुनर्जन्म ब्रह्मसायुज्यमेति
च॥ ९६ ॥ या गतिर्योगयुक्तस्य सात्विकस्य मनीषिणः॥सा गतिस्त्यजतः प्राणान् गंगायां तु शरीरिणः॥९७॥अनशनं गृहीत्वा यो गंगातीरे मृतो
नरः॥सत्यमेव परं लोकमाप्नोति पितृभिः सह॥९८॥गंगायां मरणात्प्राणान्योःप्राज्ञस्त्यक्तुमिच्छति॥गतानि बहुजन्मानि यत्र यत्र मृतानि च॥९९॥
महाँश्चापि गतः कालो यत्र तत्रापि गच्छतः॥अत्रदूरे समीपे च सदृशं योजनद्वयम्॥ १००॥गंगायां मरणेनेह नात्र कार्या विचारणा॥ज्ञानतोऽज्ञानतो
वापि कामतोऽकामतोऽपि वा ॥१०१॥गंगायां तु मृतो मर्त्यः स्वर्गं मोक्षं च विंदति॥प्राणेषूत्सृज्यमानेषु यो गंगां संस्मरेन्नरः॥१०२॥स्पृशेद्वा पाप
शीलोऽपि स वै याति परां गतिम् ॥१०३ ॥ गंगां गत्वा यैः शरीरं विसृष्टं प्राप्ता धीरास्ते तु देवैः समत्वम् ॥ तस्मात्सर्वान्प्रोह्य मुक्तिप्रदान्वै सेवे
द्गंगामा शरीरस्य पातम् ॥१०४ ॥ अंतरिक्षे क्षितौ तोये पापीयानपि यो मृतः ॥ ब्रह्मविष्णुशिवैः पूज्यं पदमक्षय्यमश्नुते ॥ १०५ ॥ यो धार्मि
ष्ठश्च सप्राणः प्रयतः शिष्टसंमतः ॥ चिंतयेन्मनसा गंगां स गतिं परमां लभेत् ॥ १०६ ॥ यत्र तत्र मृतो वापि मरणे समुपस्थिते ॥ भक्त्या
गंगां स्मरन्याति शैवं वा वैष्णवं पुरम् ॥ १०७ ॥ शंभोर्जटाकलापात्तु विनिष्क्रांतातिकर्कशात् ॥ प्लावयित्वा दिवं निन्ये या पापान्सगरात्म
जान् ॥ १०८ ॥ यावंत्यस्थीनि गंगायां तिष्ठंति पुरुषस्य वै ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ १०९ ॥ गंगातोये तु यस्यास्थि नीत्वा
प्रक्षिप्यते नरैः ॥ तत्कालमादितः कृत्वा स्वर्गलोके भवेत्स्थितिः ॥ ११० ॥ गंगातोये तु यस्यास्थि प्राप्यते शुभकर्मणः ॥ न तस्य पुनरावृत्ति
र्ब्रह्मलोकात्कथंचन ॥१११॥ दशाहाभ्यंतरे यस्य गंगातोयेऽस्थि संगतम् ॥ गंगायां मरणे यादृक्तादृक्फलमवाप्नुयात् ॥ ११२ ॥ स्नात्वा ततः
पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैर्नियोज्य ॥ तदस्थिपिंडं पुटके निधाय पश्यन् दिशं प्रेतगणोपगूढाम् ॥ ११३ ॥ नमोऽस्तु धर्माय
वदन्प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ॥ स्नात्वा ततस्तीर्थवटाक्षयं च दृष्ट्वा प्रदद्यादथ दक्षिणां तु ॥ ११४ ॥ एवं कृत्वा प्रेतपुरे स्थितस्य
स्वर्गे गतिः स्यात्तु महेंद्रतुल्या ॥ ११५ ॥ प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ॥तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥ ११६ ॥

न तत्र प्रतिगृह्णीयात्प्राणैः कंठगतैरपि ॥ भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् ॥ ११७ ॥ तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥
सार्द्धहस्तशतं यावद्गर्भस्तीरं ततः परम् ॥ ११८ ॥ इति केषां मतं देवि श्रुतिस्मृतिषु संमतम् ॥ तीराद्गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ॥ ११९ ॥
तीरं त्यक्त्वा वसेत्क्षेत्रे तीरे वासो न चेष्यते ॥ एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयात् ॥ १२० ॥ गंगासीमां न लंघति पापान्यप्यखिलान्यपि ॥
तां तु दृष्ट्वा पलायंते यथा सिंहं वनौकसः ॥ १२१ ॥ यत्र गंगा महाभागे रामशंभुतपोवनम् ॥ सिद्धक्षेत्रं तु तज्ज्ञेयं समन्तात्तु त्रियोजनम् ॥ १२२ ॥
तीर्थे न प्रतिगृह्णीयात्पुण्येष्वायतनेषु च ॥ निमित्तेषु च सर्वेषु तन्निवृत्तो भवेन्नरः ॥ १२३ ॥ तीर्थे यः प्रतिगृह्णाति पुण्येष्वायतनेषु च ॥ निष्फलं
तस्य तत्तीर्थं यावत्तद्धनमुच्यते ॥ १२४ ॥ गंगाविक्रयणाद्देवि विष्णोर्विक्रयणं भवेत् ॥ जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥ १२५ ॥ गंगा
तीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः ॥ बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥ १२६ ॥ गंगापुलिनजां धूलिमास्तीर्याथ निजान् पितॄन् ॥ प्रीणयन्यो
नरः पिंडान्दद्यात्तान् स्वर्नयेदपि ॥ १२७ ॥ इदं तेऽभिहितं भद्रे गंगामाहात्म्यमुत्तमम् ॥ पठन् शृण्वन्नरो याति तद्विष्णोः परमं
पदम् ॥ १२८ ॥ नित्यं जप्यमिदं भक्त्या प्रयतैः श्रद्धयान्वितैः ॥ वैष्णवीं गतिमिच्छद्भिः शैवीं वा विधिनंदिनि ॥ १२९ ॥ इति श्रीबृहन्नार
दीयपुराणोत्तरभागे मोहिनीवसुसंवादे गंगामाहात्म्ये पूजादिकथनं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ वसिष्ठ उवाच ॥ ततस्तु मोहिनी भूप
श्रुत्वा माहात्म्यमुत्तमम् ॥ गंगायाः पापनाशिन्याः पुनः प्राह पुरोहितम् ॥ १ ॥ मोहिन्युवाच ॥ त्वया चानुगृहीतास्मि भगवन्ननुकंपया ॥ यदुक्तं
पुण्यमाख्यानं गंगायाः पापशोधनम् ॥ २ ॥ गयातीर्थं तु विख्यातं कथं लोके द्विजोत्तम ॥ तदहं श्रोतुमिच्छामि कृपां कृत्वाधुना वद ॥ ३ ॥ वसुरुवाच ॥ पितृ
तीर्थं गयानाम सर्वतीर्थवरं स्मृतम् ॥ यत्रास्ते देवदेवेशः स्वयमेव पितामहः ॥ ४ ॥ यत्रैषा पितृभिर्गीता गाथा योगमभीप्सुभिः ॥ एष्टव्या बहवः पुत्रा यद्येको
ऽपि गयां व्रजेत् ॥ ५ ॥ यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ सारात्सारतरं देवि गयामाहात्म्यमुत्तमम् ॥ ६ ॥ प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं
शृणु ॥ गयासुरोऽभवत्पूर्वं वीर्यवान्परमः स च ॥ ७ ॥ तपश्चक्रे महाघोरं सर्वभूतोपतापनम् ॥ तत्तपस्तापिता देवास्तद्वधार्थं हरिं गताः ॥ ८ ॥ शरण्यं
हरिरूचे तान्भवितव्यं शिवात्मभिः ॥ पातितस्य महान्देहे तथेत्यूचुः सुरा हरिम् ॥ ९ ॥ कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ आनीय निकटे
देशे शयनं चाकरोद्धरेः ॥ १० ॥ विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ ततो गदाधरो विष्णुर्गयायां मुक्तिदः स्मृतः ॥ ११ ॥ तस्य देहे लिंग

रूपी स्थितः शुद्धः पितामहः ॥ विष्णुवाहार्थमर्यादां पुण्यक्षेत्रं भविष्यति ॥ १२ ॥ यत्र श्राद्धं पिंडदानं स्नानादि कुरुते नरः ॥ स स्वर्गं ब्रह्मलोकं वा गच्छेन्न नरकं नरः ॥ १३ ॥ गयातीर्थं परं ज्ञात्वा योगं चक्रे पितामहः ॥ ब्राह्मणान्पूजयामास ऋषींश्च समुपागतान् ॥ १४ ॥ नदीं सरस्वतीं सृष्ट्वा स्थितो व्याप्तदिगंतरः ॥ भक्ष्यभोज्यफलादींश्च कामधेनूस्तथासृजत् ॥ १५ ॥ पंचक्रोशं गयातीर्थं ब्राह्मणेभ्यो धनं ददौ ॥ धर्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम् ॥१६॥ स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा ततः ॥ मा भूत्त्रिपुरुषी विद्या माभूत्त्रिपुरुषं धनम् ॥ १७ ॥ युष्माकं स्याद्धि विरसा नदी पाषाणपर्वतः॥स तैस्तु प्रार्थितो ब्रह्मा तीर्थानि कृतवान्प्रभुः॥ १८॥लोकाः पुण्या गयायां वै श्राद्धेन ब्रह्मलोकगाः॥युष्मान्ये पूजयिष्यंति तैरहं पूजितः सदा ॥ १९ ॥ ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥ वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥ २०॥ समुद्राः सारितः सर्वे वापीकूपह्रदास्तथा ॥ स्नातुकामा गयातीर्थं देवि यांति न संशयः ॥ २१ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥ पापं तत्संगजं सर्वं गयाश्राद्धाद्विनश्यति ॥ २२ ॥ असंस्कृता मृता ये च पशुभिः प्रहताश्च ये ॥ सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥ २३॥ गयायां पिंडदानेन यत्फलं लभते नरः ॥ न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ २४ ॥ अत्रैव श्रूयते देवि इतिहासः पुरातनः॥तं प्रवक्ष्यामि सुभगे शृणुष्वैकाग्रमानसा ॥ २५ ॥ त्रेतायुगे वै नृपतिर्बभूव विशालनामा स पुरीं विशालाम् ॥ उवास धन्यो धृतिमानपुत्रः स्वयं विशालाधिपति र्द्विजाग्र्यान् ॥२६॥ पप्रच्छ पुत्रार्थममित्रहंता तं ब्राह्मणाः प्रोचुरदीनसत्वाः ॥ राजन् पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयायां विधिवत्तु पिंडैः ॥ २७ ॥ ध्रुवं ततस्ते भविता तु वीर सहस्रदाता सकलक्षितीशः ॥ इतीरितो विप्रगणैः स हृष्टो राजा विशालाधिपतिः प्रयत्नात् ॥ २८ ॥ समस्ततीर्थप्रवरां द्विजेन गयामियात्तद्गतमानसः सन् ॥ आगत्य तीर्थप्रवरं सुतार्थी गयाशिरो यागपरः पितॄणाम् ॥ २९ ॥ पिंडप्रदानं विधिना प्रयच्छत्तावद्वियत्युत्तमसूर्तियुक्तान् ॥ पश्यन् स पुंसः सितरक्तकृष्णानुवाच राजा किमिदं भवंतः ॥ ३० ॥ संबुध्यते शंसत सर्वमेतत्कुतूहलं मे मनसि प्रवृत्तम् ॥ ॥ सित उवाच ॥ अहं सितस्ते जनकोऽस्मि राजन्नाम्ना च वर्णेन च कर्मणा च ॥ ३१ ॥ अयं च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा पापकारी॥ अतः परं शृणु प्रपितामहश्च कृष्णो नाम्ना कर्मणा वर्णतश्च ॥ ३२ ॥ एतेन कृष्णेन हता पुरा वै जन्मन्यनेका ऋषयः पुराणाः ॥ एतौ स्मृतौ द्वावपि पितृपुत्रौ अवीचिसंज्ञं नरकं प्रविष्टौ ॥ ३३ ॥ अतः परोऽयं जनकः परोऽस्य तत्कृष्णवक्रावपि दीर्घकालम् ॥ अहं च शुद्धेन निजेन

कर्मणा शक्रासनं प्राप्य सुदुर्लभं तत् ॥ ३४ ॥ त्वया पुनर्मंत्रविदा गयायां पिंडप्रदानेन बलादिमौ च ॥ मोक्षायितौ तीर्थवरप्रभावाद
वीचिसंज्ञं नरकं गतौ तौ ॥ ३५ ॥पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ॥ प्रीणयामीति यत्तोयं त्वया दत्तमरिंदम ॥ ३६ ॥
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ॥ तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः॥ ३७ ॥ तत्र पिंडप्रदानेन एतौ तव पितामहौ ॥
त्वद्गतावपि संसिद्धौ पापाद्विकृतलिंगकौ ॥ ३८ ॥ एतस्मात्कारणात्पुत्र अहमेतौ प्रगृह्य तु ॥ आगतोऽस्मि भवंतं वै द्रष्टुं यास्यामि
सांप्रतम् ॥ ३९ ॥ तीर्थप्रभावाद्यत्नेन ब्रह्मघ्नस्यापि वै पितुः ॥ गयायां पिंडदानेन कुर्यादुद्धरणं सुतः ॥ ४० ॥ इत्येवमुक्त्वा तु पिता
सितोऽस्य सार्द्धं च ताभ्यां हि पितामहाभ्याम् ॥ जगाम सद्यो हि सुतं विशालं संयोज्य चाशीर्भिरपि स्वलोकम् ॥ ४१ ॥ सकृद्गयाभिगमनं
सकृत्पिंडप्रपातनम् ॥ दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ॥ ४२ ॥क्रियते पतितानां तु गते संवत्सरे क्वचित् ॥ देशकालप्रमाणत्वाद्गया
कूपे स्वबंधुभिः॥ ४३ ॥ प्रेतराजोऽथ वणिजं कंचित्प्राह स्वमुक्तये ॥ गयातीर्थं तु दृष्ट्वा त्वं स्नात्वा शौचसमन्वितः ॥४४॥ मम नाम समुद्दिश्य
पिंडनिर्वपणं कुरु ॥ तत्र पिंडप्रदानेन प्रेतभावादहं सुखम् ॥४५ ॥ मुक्तस्तु सर्वदातॄणां प्राप्स्यामि शुभलोकताम् ॥ इत्येवमुक्त्वा वणिजं प्रेत
राजोऽनुगैः सह ॥ ४६ ॥ स्वनामानि यथान्यायं सम्यगाख्यातवान्प्रहः ॥उपार्जयित्वा प्रययौ गयाशीर्षमनुत्तमम् ॥ ४७ ॥ पांशुनिर्वपणं चक्रे
प्रेतानामनुपूर्वशः ॥ चकार वसुदानं च पितॄन्कृत्वा पुरःसरान् ॥ ४८ ॥ आत्मनोऽसौ महाबुद्धिर्विधिनापि तिलैर्विना ॥ पिंडनिर्वपणं चक्रे तथा
न्यानपि गोत्रजान् ॥ ४९ ॥ एवं दत्ते तु वै पिंडे वणिजा प्रेतभावतः ॥ विमुक्ता द्विजतां प्राप्य ब्रह्मलोकं ततो गताः ॥ ५० ॥ पायसं
खड्गमांसं च पुत्रैर्दत्तं पितृक्षयं ॥ कृष्णो लोहस्तथा छाग आनंत्याय प्रकल्पत ॥ ५१ ॥ गयायामक्षयं श्राद्धं जपहोमतपांसि च ॥
पितृक्षये हि तत्पुत्रैः कृतमानंत्यतां व्रजेत् ॥५२॥कांक्षंति पितरः पुत्रान्नरकस्य भयार्दिताः॥गयां यास्यति यः पुत्रः सोऽस्मान्संतारयिष्यति॥ ५३ ॥
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा॥ गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम्॥५४॥ब्रह्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च॥दृष्ट्वैतानि पितॄंश्चाच्य ॥ २९८ ॥
वंश्यान्विंशतिमुद्धरेत् ॥ ५५ ॥ महाकल्पकृतं पापं गयां प्राप्य विनश्यति ॥ गवि गृध्रवटे चैव श्राद्धं दत्तं महाफलम् ॥ ५६ ॥ मतंगस्य
पदं तत्र दृश्यते सर्वमानुषैः ॥ ख्यापितं धर्मसर्वस्वं लोकस्यैव निदर्शनात् ॥ ५७ ॥ तत्पंकजवनं पुण्यं पुण्यवद्भिर्निषेवितम् ॥यस्मिन्पांडुर्विशत्येव

तीर्थं सर्वनिदर्शनम् ॥ ५८ ॥ तृतीयां तथा पादे निक्षीरायाश्च मण्डले ॥ महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् ॥ ५९ ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ बहुवर्षशतं तप्तं तपस्तीर्थेषु दुष्करम् ॥ ६० ॥ अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ॥ पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ॥ ६१ ॥ नाम्ना कनकनंदेति तीर्थं तत्रैव विश्रुतम् ॥ उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् ॥ ६२ ॥ तत्र स्नात्वा दिवं यांति स्वशरीरेण मानवाः ॥ दत्तं तत्र सदा श्राद्धमक्षयं समुदाहृतम् ॥ ६३ ॥ स्नात्वा दिनत्रयं तत्र निःक्षीरायां सुलोचने ॥ मानसे सरसि स्नात्वा श्राद्धं तत्र समाचरेत् ॥ ६४ ॥ उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ यस्तत्र निर्वपेच्छ्राद्धं यथाशक्ति यथाबलम् ॥ ६५ ॥ कामान्संलभते दिव्यान्मोक्षोपायांश्च कृत्स्नशः ॥ ततो ब्रह्मसिरो गच्छेद्ब्रह्मावश्योपशोभितम् ॥ ६६ ॥ ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः ॥ ६७ ॥ यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत ॥ ततो गच्छेत्तु सुभगे धेनुकं लोकविश्रुतम् ॥ ६८ ॥ एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकाम् ॥ सर्वपापविनिर्मुक्तः सोमलोकं व्रजेद्ध्रुवम् ॥ ६९ ॥ तत्र चिह्नं महाभागे अद्यापि महदद्भुतम् ॥ कपिला सह वत्सेन पर्वते विचरत्युत ॥ ७० ॥ पदानि तत्र दृश्यंते सवत्सायाश्च मोहिनि ॥ सवत्सायाः प्रदृष्टेषु पदेषु नरपुंगवैः ॥ ७१ ॥ यत्किंचिदशुभं कर्म तेषां तन्नश्यति क्षणात् ॥ ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः ॥ ७२ ॥ स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥ ब्राह्मणानां भवेद्देवि व्रतं द्वादशवार्षिकम् ॥ ७३ ॥ इतरेषां तु वर्णानां सर्वं पापं प्रणश्यति ॥ उद्यंतं च ततो गच्छेत्पर्वतं गीतनादितम् ॥ ७४ ॥ सावित्र्यास्तु पदं यत्र दृश्यते पुण्यदं महत् ॥ तत्र संध्यामुपासीत ब्राह्मणः शंसितव्रतः ॥ ७५ ॥ उपासिता भवेत्संध्या तेन द्वादशवार्षिकी ॥ योनिद्वारं च तत्रैव विद्यते विधिनंदिनि ॥ ७६ ॥ तत्राधिगम्य मुच्येत पुरुषो योनिसंकटात् ॥ शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नृपः ॥ ७७ ॥ पुनात्यासप्तमं चैव कुलान्यत्र न संशयः ॥ ततो गच्छेच्च सुभगे धर्मपृष्ठं महाफलम् ॥ ७८ ॥ यत्र धर्मः स्थितः साक्षात्पितृलोकस्य पालकः ॥ अभिगम्य ततस्तत्र वाजिमेधफलं लभेत् ॥ ७९ ॥ ततो गच्छेत मनुजो ब्रह्मणस्तीर्थमुत्तमम् ॥ तत्राधिगम्य ब्रह्माणं राजसूयफलं लभेत् ॥ ८० ॥ फल्गुतीर्थं च विख्यातं बहुमूलफलान्वितम् ॥ कौशिकी च नदी यत्र श्राद्धं तत्राक्षयं स्मृतम् ॥ ८१ ॥ ततो महीधरं गच्छेद्धर्मज्ञेनाभिरक्षितम् ॥ राजर्षिणा पुण्यकृता गयेनानुपभुज्यते ॥ ८२ ॥ सरो गयशिरो यत्र पुण्या चैव महानदी ॥ ऋषिजुष्टं महापुण्यं तीर्थं ब्रह्मसरोवरम् ॥ ८३ ॥ अगस्त्यो

भगवान्यत्र गतो वैवस्वतं प्रति ॥ उवास सततं यत्र धर्मराजः सनातनः ॥ ८४ ॥ सर्वासां सरितां यत्र समुद्भेदो हि दृश्यते ॥ यत्र संनिहितो
नित्य महादेवः पिनाकधृक् ॥ ८५ ॥यत्राक्षयो वटो नाम वर्तते लोकविश्रुतः ॥ गयेन यजमानेन तत्रेष्टं क्रतुना पुरा ॥ ८६ ॥ आस्थिता तु सरि
च्छ्रेष्ठा गययज्ञेषु रक्षिता ॥ मुंडपृष्ठं गयां चैव रैवतं देवपर्वतम् ॥ ८७ तृतीयं क्रौंचपादं च दृष्ट्वा पापात्प्रमुच्यते ॥ शिवनद्यां शिवकरं गयायां
च गदाधरम् ॥ ८८ ॥ सर्वत्र परमात्मानं दृष्ट्वा मुच्येदघव्रजात् ॥ वाराणस्यां विशालाक्षी प्रयागे ललिता तथा ॥ ८९ ॥ गयायां मंगला नाम
कृतशौचे तु सैंहिका ॥ यद्ददाति गयास्थस्तत्सर्वमानंत्यमश्नुते ॥ ९० ॥ नंदंति पितरस्तस्य सुप्रकृष्टेन कर्मणा ॥ यद्गयास्थो ददात्यन्नं पितरस्तेन
पुत्रिणः ॥ ९१ ॥इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे गयामाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४॥ वसुरुवाच॥शृणु मोहिनि
वक्ष्यामि पुण्यं प्रेतशिलाभवम् ॥ माहात्म्यं यत्र दत्वा तु पिंडान्पितॄन्समुद्धरेत् ॥१ ॥ आच्छादितशिलापादः प्रभासेनात्रिणा ततः ॥ प्रभासो मुनि
भिस्तुष्टः शिलांगुष्ठान्निर्गतः ॥२॥ अंगुष्ठस्थित ईशोऽपि प्रभासेशः प्रकीर्तितः ॥ शिलांगुष्ठैकदेशो यः सा च प्रेतशिला स्थिता ॥ ३ ॥ पिंड
दानाद्यतस्तस्मात्प्रेतत्वान्मुच्यते नरः ॥ महानदी प्रभासात्र्योः संगमे स्नानकृन्नरः ॥ ४ ॥ वामदेवः स्वयं भूयाद्रामतीर्थं ततः स्मृतम् ॥ प्रार्थितो
ऽथ महानद्यां रामस्नातोऽभवद्यदा ॥ ५॥रामतीर्थं त्वत्रजातं सर्वलोकसुपावनम् ॥ जन्मांतरसहस्रैस्तु यत्कृतं पातकं नरैः ॥ ६ ॥ तत्सर्वं विलयं
याति रामतीर्थाभिषेचनात् ॥ मंत्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः ॥ ७ ॥ रामतीर्थे पिंडदस्तु विष्णुलोके महीयते ॥ "रामराम महाबाहो
देवानामभयंकर ॥ ८ ॥ त्वां नमस्ये तु देवेश मम नश्यतु पातकम्"॥ नमस्कृत्य प्रभासेशं भासमानं शिवं व्रजेत् ॥ ९ ॥ तं च शंभुं
नमस्कृत्य कुर्याद्याम्यबलिं ततः ॥ "आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ॥ १० ॥ पापं नाशय मे शीघ्रं मनोवाक्कायकर्म्मजम्" ॥शिलाया
जघनं भूयः समाक्रांतं यमेन च ॥ ११ ॥ धर्मराजेनाद्रिरुक्तो न गच्छेति नगः स्मृतः ॥ यमराजधर्मराजौ निश्चलायेह संस्थितौ ॥ १२ ॥
ताभ्यां बलिमकृत्वा स्याद्गयाश्राद्धमपार्थकम् ॥ "श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ ॥ १३ ॥ ताभ्यां पिंडं प्रदास्यामि स्यातामेताव
हिंसकौ" ॥ तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च॥ १४ ॥ पितॄनावाह्य तेभ्यश्च मंत्रैः पिंडांस्तु निर्वपेत् ॥ कृत्वा ध्यानं पितॄणां तु प्रयतः
प्रतपर्वते ॥ १५ ॥ प्राचीनावीतिको भूयाद्दक्षिणाभिमुखः स्मरन् ॥"कव्यवालोऽनलः सोमो यमश्चैवार्यमा तथा ॥ १६ ॥अग्निष्वात्ता बर्हिषदः

सोमपाः पितृदेवताः ॥ आगच्छंतु महाभागा युष्माभी रक्षितास्त्विह ॥ १७ ॥ मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिंडप्रदानार्थमागतोऽस्मि गयामिमाम् ॥ १८ ॥ ते सर्वे तृप्तिमायांतु श्राद्धेनानेन शाश्वतीम्" ॥ आचम्योक्काथ पंचांगं प्राणानायम्य
यत्नतः ॥ १९ ॥ पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ॥ एवं संकल्प्य विधिवच्छ्राद्धं कुर्याद्यथाक्रमम् ॥ २० ॥ पितॄनावाह्य चाभ्यर्च्य मंत्रैः
पिंडप्रदो भवेत् ॥ प्रज्वाल्य पूर्वं तत्स्थानं पंचगव्यैः पृथक् पृथक् ॥ २१ ॥ दत्वा श्राद्धं सपिंडानां तेषां दक्षिणभागतः ॥ कुशैरास्तीर्य तेषां तु
सकृद्दत्वा तिलोदकम् ॥ २२ ॥ गृहीत्वांजलिना तेभ्यः पितृतीर्थेन यत्नतः ॥ सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिंडकम् ॥ २३ ॥ तिलाज्यदधिम
ध्वादि पिंडद्रव्येषु योजयेत् ॥ संबधिनस्तिलाद्यैश्च कुशेष्वावाहयेत्ततः ॥ २४ ॥ एतांस्तु मंत्रांस्त्रीञ्छ्राद्धे स्त्रीलिंगान्वै समुच्चरेत् ॥ पिंडान्दद्याद्यथा
पूर्वं पितॄनावाह्य पूर्ववत् ॥ २५ ॥ स्वगोत्रे वा विगोत्रे वा दंपत्योः पिंडपातने॥ अपृथङ्निष्फलं श्राद्ध पिंड चोदकतर्पणम् ॥ २६ ॥ पिंडपात्रे
तिलान्दत्वा पूरयित्वा शुभोदकैः ॥ मंत्रेणानेन पिंडांस्तान्प्रदक्षिणकरं यथा ॥ २७ ॥ परिषिंचेत्त्रिधा सर्वान्प्रणिपत्य क्षमापयेत् ॥ पितॄन्विसृज्य
चाचम्य साक्षिणः श्रावयेत्सुरान्॥ २८ ॥ सर्वस्थानेषु चैवं स्यात्पिंडदानं तु मोहिनि ॥ गयायां पिंडदाने तु न च कालं विचिंतयेत् ॥ २९ ॥
अधिमासे जनिदिने ह्यस्ते च गुरुशुक्रयोः ॥ न त्यजेत्तु गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ ३० ॥ दंडं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिंडदः ॥ न्यस्य
विष्णुपदे दंडं मुच्यते पितृभिः सह ॥ ३१ ॥ पायसेन गयायां च सक्तुना पिष्टकेन वा ॥ चरुणा तंडुलाद्यैर्वा पिंडदानं विधीयते ॥ ३२ ॥ गयां
दृष्ट्वा तु सुभगे महापापोऽपि पातकी ॥ पूतः कृत्याधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ॥ ३३ ॥ अश्वमेघसहस्राणां सहस्रं यः समाचरेत् ॥ नासौ
तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ॥ ३४ ॥ गयां प्राप्यार्पयेत्पिंडान्पितॄणां चातिवल्लभान् ॥ विलंबो नैव कर्तव्यो नैव विघ्नं समाचरेत्॥३५॥
पिता पितामहश्चैव तथैव प्रपितामहः ॥ माता पितामही चैव तथैव प्रपितमही ॥ ३६ ॥ मातामहस्तत्पिता च प्रमातामहकादयः ॥ तेषां पिंडो
मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ३७ ॥ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिण्डंददाम्यहम् ॥ ३८ ॥ बंधुवर्ग
कुले ये च गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिंड ददाम्यहम् ॥३९॥ अजातदंता ये केचिद्ये च गर्भे प्रपीडिताः ॥ तेषामुद्धरणार्थाय
इमं पिंडं ददाम्यहम् ॥ ४० ॥अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे ॥ विद्युच्चौरहता ये च तेभ्यः पिंडं ददाम्यहम् ॥४१ ॥ दावदाहे मृता ये
च सिंहव्याघ्रहताश्च ये ॥ दंष्ट्रिभिः शृंगिभिर्वापि तेभ्यः पिंडं ददाम्यहम् ॥ ४२ ॥ उद्बंधनमृता ये च विषशस्त्रहताश्च ये॥ आत्मनो घातिनो ये

च तेभ्यः पिंडं ददाम्यहम्॥४३॥अरण्ये वर्त्मनि वने क्षुधया तृषया हताः ॥भूतप्रेतपिशाचैश्च तेभ्यः पिण्डं ददाम्यहम्॥४४॥रौरवे ये च तामिस्रे कालसूत्रे च ये स्थिताः॥तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम्॥४५॥अनेकयातनासंस्थाः प्रेतलोकं च ये गताः॥तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ ४६॥ दुर्गतिं समनुप्राप्य अभिशापादिना हताः ॥ तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥४७॥ नरकेषु समस्तेषु यमदूतवशं गताः॥ तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ ४८ ॥ पशुयोनिगता ये च पक्षिकीटसरीसृपाः ॥ अथवा वृक्षयोनिस्थास्तेभ्यः पिंडं ददाम्यहम् ॥ ४९ ॥ जात्यंतरसहस्रेषु ये भ्रमंति स्वकर्मणा ॥ मानुष्यं दुर्लभं येषां तेभ्यः पिंडं ददाम्यहम् ॥ ५० ॥ दिव्यंतरिक्षभूमिष्ठाः पितरो बांधवादयः ॥ असंस्कृतमृता ये च तेभ्यः पिंडं ददाम्यहम् ॥ ५१ ॥ ये केचित्प्रेतरूपेण वर्तंते पितरो मम ॥ ते सर्वे तृप्तिमायांतु पिंडेनानेन सर्वदा॥५२॥ये बांधवाबांधवा वा येऽन्यजन्मनि बांधवाः ॥ तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ५३ ॥ पितृवंशे मृता ये च मातृवंशे च ये मृताः ॥ गुरुश्वशुरबंधूनां ये चान्ये बांधवा मृताः ॥५४ ॥ ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥ क्रियालोपगता ये च जात्यंधाः पंगवश्च ये ॥५५॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ॥तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ५६ ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ॥ कुलद्वये ये मम संगताश्च तेभ्यः स्वधा पिंडमहं ददामि ॥ ५७ ॥ साक्षिणः संतु मे देवा ब्रह्मेशानादयस्तथा ॥ मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥ ५८ ॥ आगतोऽस्मि गयां देव पितृकार्ये गदाधर ॥ त्वमेव साक्षी भगवाननृणोऽहमृणत्रयात् ॥ ५९ ॥ अपरेऽह्नि शुचिर्भूत्वा गच्छेत्तु प्रेतपर्वतम् ॥ ब्रह्मकुंडे ततः स्नात्वा देवादींस्तर्पयेत्सुधीः ॥ ६० ॥ कृत्वाह्वानं पितॄणां तु प्रयतः प्रेतपर्वते ॥ पूर्ववच्चैव संकल्प्य ततः पिंडान्प्रदापयेत् ॥ ६१ ॥ स्वमंत्रैरथ संपूज्य परमाः पितृदेवताः ॥ यावंतस्तु तिलाः पुंभिर्गृहीताः पितृकर्मणि ॥ ६२ ॥ गच्छंति भीता असुरास्तावंतो गरुडादिव ॥ पूर्ववत्सकलं कर्म कुर्यात्तत्रापि मोहिनि ॥ ६३ ॥ तिलमिश्रांस्तथा सक्तून्निःक्षिपेत्प्रेतपर्वते ॥ ये केचित्प्रेतरूपेण वर्तंते पितरो मम ॥ ६४ ॥ ते सर्वे तृप्तिमायांतु सक्तुभिस्तिलमिश्रितैः ॥ आब्रह्मस्तंबपर्यंतं यत्किंचित्सचराचरम् ॥ ६५ ॥ मया दत्तेन पिंडेन तृप्तिमायांतु सर्वशः ॥ आदौ तु पंचतीर्थेषु चोत्तरे मानसे विधिः ॥ ६६ ॥ आचम्य कुशहस्तेन शिरश्चाभ्युक्ष्य वारिणा ॥ उत्तरं मानसं गत्वा मंत्रेण स्नानमाचरेत् ॥ ६७ ॥ उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ॥ सूर्यलोकादिसंप्राप्तिसिद्धये पितृमुक्तये ॥ ६८ ॥ स्नात्वाथ तर्पणं कुर्याद्देवादीनां यथाविधि ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ ६९ ॥ तृप्यंतु पितरः सर्वे मातृमातामहादयः ॥ श्राद्धं सपिंडकं कुर्यात्स्वसूत्रोक्त

विधानतः ॥७०॥ अष्टकासु च वृद्धौ च गयायां च क्षयेऽहनि ॥ मातुः श्राद्धं पृथक्कुर्यादन्यत्र स्वामिना सह ॥ ७१ ॥"ॐ नमोऽस्तु भानवे भर्त्रे
सोमभौमज्ञरूपिणे ॥ जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे" ॥ ७२ ॥ सूर्यं नत्वार्चयित्वा च सूर्यलोकं नयेत्पितॄन् ॥ मानसं हि सरो ह्यत्र तस्मादु
त्तरमानसम् ॥ ७३ ॥ उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसम् ॥ उदीचीतीर्थमित्युक्तं ततोदीच्यां विमुक्तिदम् ॥ ७४ ॥ उदीच्यां मुंडपृष्ठस्य
देवर्षिपितृतर्पणम् ॥ मध्ये कनखलं तीर्थं पितॄणां गतिदायकम् ॥ ७५ ॥ स्नातः कनकवद्भाति नरो याति पवित्रताम् ॥ अतः कनखलं लोके ख्यातं
तीर्थमनुत्तमम् ॥७६॥ तस्माद्दक्षिणभागे तु तीर्थं दक्षिणमानसम् ॥ दक्षिणे मानसे चैवं तीर्थत्रयमुदाहृतम् ॥ ७७ ॥ स्नात्वा तेषु विधानेन कुर्या
च्छ्राद्धं पृथक् पृथक्॥"दिवाकर करोमीह स्नानं दक्षिणमानसे ॥७८॥ब्रह्महत्यादिपापौघघातनाय विमुक्तये"॥अनेन स्नानपूजादि कुर्याच्छ्राद्धं सपिं
डकम् ॥ ७९ ॥"नमामि सूर्यं तृप्त्यर्थं पितॄणां तारणाय च ॥ पुत्रपौत्रधनैश्वर्यआयुरारोग्यवृद्धये"॥ ८०॥ दृष्ट्वा संपूज्य मौनार्कमिमं मंत्रमुदीरयेत॥
"कव्यवाडादयो ये च पितॄणां देवतास्तथा॥८१॥मदीयैः पितृभिः सार्द्धं तर्पिताः स्थ स्वधाभुजः"॥ फल्गुतीर्थं व्रजेत्तस्मात्सर्वतीर्थोत्तमोत्तमम्॥८२॥
मुक्तिर्भवति कर्तॄणां पितॄणां श्राद्धतः सदा ॥ ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत्पुरा ॥ ८३॥दक्षिणाग्नौ कृतं नूनं तद्भवं फल्गुतीर्थकम् ॥
यस्मिन्फलति फल्ग्वां गौः कामधेनुर्जलं मही ॥ ८४ ॥ दृष्टेरंतर्गतं यस्मात्फल्गुतीर्थं न निष्फलम् ॥ तीर्थानि यानि सर्वाणि भवनेष्वखिलेषु च
॥८५॥ तानि स्नातुं समायांति फल्गुतीर्थं न संशयः ॥गंगा पादोदकं विष्णोः फल्गुश्चादिगदाधरः ॥८६॥ हिमं च द्रवरूपेण तस्माद्गंगाधिकं विदुः॥
अश्वमेधसहस्राणां फलं फल्गुजलाप्लुवात् ॥८७॥"फल्गुतीर्थे विष्णुजले करोमि स्नानमद्य वै ॥ पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये"॥८८॥
फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत् ॥ सपिंडकं स्वसूत्रोक्तं नमेदथ पितामहम् ॥८९ ॥ "नमः शिवाय देवाय ईशानपुरुषाय च ॥ अघोर
वामदेवाय सद्योजाताय शंभवे"॥ ९० ॥ नत्वा पितामहं देवं मंत्रेणानेन पूजयेत् ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥ ९१॥आनम्य
पितृभिः सार्द्धं स्वं नयेद्वैष्णवं पदम् ॥"ॐ नमो वासुदेवाय नमः संकर्षणाय च ॥ ९२ ॥ प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे" ॥ पंचतीर्थ्यां
नरः स्नात्वा ब्रह्मलोके नयेत्पितॄन् ॥९३॥ अमृतैः पंचभिः स्नातं पुष्पवस्त्राद्यलंकृतम् ॥ न कुर्याद्यो गदापाणिं तस्य श्राद्धमपार्थकम् ॥ ९४ ॥ नाग
कूटाद्गृध्रकूटाद्विष्णोश्चोत्तरमानसात् ॥ एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते॥९५॥मुंडपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमम ॥ अत्र श्राद्धादिना सर्वे
पितरो मोक्षमाप्नुयुः ॥९६॥ शमीपत्रप्रमाणेन पिंडं दद्याद्गयाशिरे॥यन्नाम्ना पातयेत्पिंडं तं नयेद्ब्रह्म शाश्वतम्॥९७॥अव्यक्तरूपी यो देवो मुंडपृष्ठाद्रि

सिद्ध्यर्थं सलिलस्थस्य भामिनि ॥ तस्य नाभ्यामभूत्पद्मं सहस्रार्कोरुदीधितिः ॥ ६३ ॥ तस्मिन्स्वयंभूः समभूल्लोकानां प्रपितामहः ॥ तेन तप्त्वा तपस्तीव्रं पुंसोऽनुज्ञामवाप्य च ॥६४॥ लोकाश्च लोकपालाश्च कल्पिता ब्रह्मणा सति ॥ कट्यादिभिरधः सप्त सप्तोर्द्ध्वं जघनादिभिः॥६५॥चतुर्दश शिरोभिस्तु लोकैर्ब्रह्मांडमीरितम् ॥ तस्मिन्ससर्ज भूतानि स्थावराणि चराणि च ॥६६॥ ब्रह्मणो मनसो जाताश्चत्वारः सनकादयः ॥ देहाद्भावादयो देवि यैरिदं वर्द्धितं जगत ॥६७ ॥ इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तममाहात्म्ये ब्रह्माण्डोत्पत्तिवर्णनं नामाष्टपञ्चाशत्तमेऽध्यायः ॥ ५८ ॥ वसुरुवाच ॥ योऽसौ निरंजनो देवश्चित्स्वरूपी जनार्दनः ॥ ज्योतीरूपो महाभागे कृष्णस्तल्लक्षणं शृणु ॥ १ ॥ गोलोके स विभुर्नित्यं ज्योतिरभ्यंतरे स्थितः ॥ एक एव परं ब्रह्म दृश्यादृश्यस्वरूपधृक् ॥ २ ॥ तस्मिँल्लोके तु गावो हि गोपा गोप्यश्च मोहिनि ॥ वृन्दावनं पूर्वतश्च शतशृंगस्तथा सरित् ॥ ३ ॥ विरजा नाम वृक्षाश्च पक्षिणश्च पृथग्विधाः ॥ यावत्कालं तु प्रकृतिर्जागर्ति विधिनंदिनि ॥ ४ ॥ तावत्कालं तु गोलोके दृश्य एव विभुः स्थितः ॥ लये सुप्ता गवाद्यास्तु न जानंति विभुं परम् ॥ ५ ॥ ज्योतिःसमूहांतर्गतः कमनीयवपुर्द्धरः ॥ किशोरो जलदश्यामः पीतकौशांबरावृतः ॥ ६ ॥ द्विभुजो मुरलीहस्तः किरीटादिविभूषितः ॥ आस्ते कैवल्यनाथस्तु राधावक्षस्थलोज्ज्वलः ॥ ७ ॥ प्राणाधिकप्रियतमा सा राधाराधितो यया ॥ सुवर्णवर्णा देवी सा चिद्रूपा प्रकृतेः परा ॥ ८ ॥ तयोर्देहस्थयोर्नास्ति भेदो नित्यस्वरूपयोः ॥ धावल्यदुग्धयोर्यद्वत्पृथिवीगंधयोर्यथा ॥ ९ ॥ तत्कारणं कारणानां निर्देष्टुं नैव शक्यते ॥ वेदानिर्वचनीयं यत्तद्वक्तुं नैव शक्यते ॥ १० ॥ ज्योतिरंतरतः प्रोक्तं यद्रूपं श्यामसुंदरम् ॥ शिवेन दृष्टं तद्रूपं कदाचिद्ध्यानगोचरम् ॥ ११ ॥ ततः प्रभृति जानंति गोलोकाख्यानमीप्सितम् ॥ नारदाद्या विधिसुते सनकाद्याश्च योगिनः ॥ १२ ॥ श्रुतं ध्यायंति तं सर्वे न तैर्दृष्टं कदाचन ॥ साक्षाद्द्रष्टुं तु तपते शिवोऽद्यापि सनातनः ॥ १३ ॥ नैव पश्यति तद्रूपं ध्यायति ध्यानगोचरम् ॥ कदाचित्क्रीडतोर्देवि राधामाधवयोर्वपुः ॥ १४ ॥ द्विधाभूतमभूत्तत्र वामांगं तु चतुर्भुजम् ॥ समानरूपावयवं समानांबरभूषणम् ॥ १५ ॥ तद्वद्राधास्वरूपं च द्विधारूपमभूत्सति ॥ ताभ्यां दृष्टं तत्स्वरूपं साक्षात्तावपि तत्समौ ॥१६ ॥चतुर्भुजं तु यद्रूपं लक्ष्मीकांतं मनोहरम् ॥ तद्दृष्टं तु शिवाद्यैश्च भक्तवृन्दैरनेकशः ॥ १७ ॥ सकृत्तु ब्रह्मणा दृष्टं देवि रूपं चतुर्भुजम् ॥ सृष्टिकार्यप्रमुग्धेन दर्शितं कृपया स्वयम् ॥ १८ ॥ लक्ष्म्या सनत्कुमाराय वर्णितं विधिनंदिनि ॥ विष्वक्सेनाय तु्विदं स्वरूपं तत्त्वमूर्तये ॥१९॥ नारायणेन विधिजे ततो ध्यायंति सर्वशः ॥ धर्मपुत्रेण देवेशि नारदाय समीरितम् ॥ २० ॥ गोलोकवर्णनं सर्वं

राधाकृष्णमयं तथा ॥ या तु राधा विधिसुते देवी देववरार्चिता ॥ २१ ॥ सा स्वयं शिवरूपाभूत्कौतुकेन वरानने ॥ तद्दृष्ट्वा सहसाश्चर्यं कृष्णो
योगेश्वरेश्वरः ॥ २२ ॥ मूलप्रकृतिरूपं तु दध्रे तत्समयोचितम् ॥ विपरीतं वपुर्धृत्वा वामदेवो मुदान्वितः ॥ २३ ॥ ध्यायेदहर्निशं देवं दुर्गारूप
धरं हरिम् ॥ या राधा सैव लक्ष्मीस्तु सावित्री च सरस्वती ॥ २४ ॥ गंगा च ब्रह्मतनये नैव भेदोऽस्ति वस्तुतः ॥ पंचधा सा स्थिता विद्या
कामधेनुस्वरूपिणी ॥२५॥ यः कृष्णो राधिकानाथः स लक्ष्मीशः प्रकीर्तितः ॥ स एव ब्रह्मरूपश्च धर्मो नारायणस्तथा ॥ २६ ॥ एवं तु पंचधा
रूपमास्थितो भगवानजः ॥ कार्यकारणरूपोऽसौ ध्यायंति जगतीतले ॥ २७ ॥ तेन वै प्रेमसंबद्धो विषयी यः शिवः स तु ॥ राधेशं राधिकारूपं
स्वयं सच्चित्सुखात्मकम् ॥ २८ ॥ देवतेजःसमुद्भूता मूलप्रकृतिरीश्वरी ॥ कृष्णरूपा महाभागे दैत्यसंहारकारिणी ॥ २९ ॥ सती दक्षसुता भूत्वा
विषयेशं शिवं श्रिता ॥ भर्तुर्विनिंदनं श्रुत्वा सती त्यक्त्वा कलेवरम् ॥ ३० ॥ जज्ञे हिमवतः क्षेत्रे मेनायां पुनरेव च ॥ ततस्तप्त्वा तपो भद्रे शिवं
प्राप शिवप्रदा ॥ ३१ ॥ वस्तुतः कृष्णराधासौ शिवमोहनतत्परा ॥ जगदंबास्वरूपा च यतो माया स्वयं विभुः ॥ ३२ ॥ अत एव ब्रह्मसुते स्कंदो
गणपतिस्तथा॥ स्वयं कृष्णो गणपतिः स्वयं स्कंदः शिवोऽभवत् ॥ ३३ ॥ शिवमेवं वदंत्येके राधारूपं समाश्रितम् ॥ कृष्णवक्षःस्थलस्थानं तयो
र्भेदो न लक्ष्यते ॥ ३४ ॥ कृष्णो वा मूलप्रकृतिः शिवो वा राधिका स्वयम् ॥ एकं वा मिथुनं वापि न केनापीति निश्चितम्॥३५॥अनिर्देश्ये
तु यद्वस्तु तन्निर्देष्टुं न च क्षमम् ॥ उपलक्षणमेतद्धि यन्निर्देशनमैश्वरम् ॥ ३६ ॥ शास्त्रं वेदाश्च सुभगे वर्णयंति यदीश्वरम् ॥ तत्सर्वं प्राकृतं विद्धि
निर्देष्टुं शक्यमेव च ॥ ३७ ॥ अनिर्देश्यं तु यत्रैव तन्नेतीति निषिध्यते ॥निषेधशेषः स विभुः कीर्तितः शरणागतैः ॥ ३८ ॥ शास्त्रं नियामकं भद्रे
सर्वेषां कर्मणां भवेत् ॥ कर्मी तु जीवः कथित ईश्वरांशो विभुः स्वयम् ॥ ३९ ॥ प्रकृतेस्तु परो नित्यो मायया मोहितः शुभे ॥ यस्तु साक्षी
स्वयं पूर्णः सदानुशयिता स्थितः ॥ ४० ॥ न वेत्ति तं चानुशयी वेदानुशयिनं स तु ॥ शंखचक्रगदापद्मैरलंकृतभुजद्वयाः ॥ ४१ ॥ प्रपन्नास्ते तु
विज्ञेयाः द्विविधा विधिनंदिनि ॥ आर्तदृप्तविभेदेन तत्रार्ता असहा मताः ॥ ४२ ॥ दृप्ता जन्मांतरसहा निर्भयाः सदमज्जनाः ॥ ये प्रपन्ना महा
लक्ष्म्यां सखिभावं समाश्रिताः ॥ ४३ ॥ तेषां मंत्रं प्रवक्ष्यामि प्रयांति विधिबोधितम् ॥ गोपीजनपदस्यांते वल्लभेति समुच्चरेत् ॥ ४४ ॥ चरण
च्छरणं पश्चात्प्रपद्ये पदमीरयेत् ॥ षोडशार्णो मंत्रराजः साक्षाल्लक्ष्म्या प्रकाशितः ॥ ४५ ॥ पूर्वं सनत्कुमाराय शंभवे तदनंतरम् ॥ सखिभावं समा
श्रित्य गोपिकावृंदमध्यगम् ॥ ४६ ॥ आत्मानं चिंतयेद्भद्रे राधामाधवसंज्ञकम् ॥ गुरुष्वीश्वरभावेन वर्तेत प्रणतः सदा ॥४७॥ वैष्णवेषु च सत्कृत्य

तथा समतयान्यतः ॥ दिवानिशं चिंतनं च स्वामिनोः प्रेमबंधनाव ॥ कुर्यात्पर्वस्वपि सदा यात्रापर्वमहोत्सवान् ॥ ४८ ॥ इति श्रीबृहन्नारदीयपुराणोत्तरभागे वसुमोहिनीसंवादे पुरुषोत्तममाहात्म्यं नाम एकोनषष्टितमोऽध्यायः ५९ ॥ वसुरुवाच ॥ ततो गच्छेद्विधिसुते तीर्थं यज्ञांगसंभवम् ॥ इंद्रद्युम्नसरो नाम यत्रास्ते पावनं शुभम् ॥ १ ॥ तत्र गत्वा शुचिर्विद्वानाचम्य मनसा हरिम् ॥ ध्यात्वोपस्थाय च विभुं मंत्रमेनमुदीरयेत् ॥ २ ॥ "अश्वमेधांगसंभूत तीर्थ सर्वाघनाशन ॥ स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते" ॥ ३ ॥ एवमुच्चार्य विधिवत्स्नात्वा देवान् ऋषीन्पितॄन् ॥ तिलोदकेन चान्यांश्च संतर्प्याचम्य वाग्यतः ॥ ४ ॥ दत्वा पितॄणां पिंडांश्च संपूज्य पुरुषोत्तमम् ॥ दशाश्वमेधिकं सम्यक्फलं प्राप्नोति मानवः ॥ ५ ॥ सप्तावरान्सप्त परान्वंशानुद्धृत्य देववत् ॥ कामगेन विमानेन विष्णुलोकं स गच्छति ॥ ६ ॥ भुक्त्वा तत्र वरान्भोगान्यावच्चंद्रार्कतारकम् ॥ च्युतस्तस्मादिहायातो मोक्षं च लभते ध्रुवम् ॥ ७ ॥ एवं कृत्वा पंचतीर्थीमेकादश्यामुपोषितः ॥ ज्येष्ठशुक्ले पंचदश्यां यः पश्येत्पुरुषोत्तमम् ॥ ८ ॥ स पूर्वोक्तफलं प्राप्य क्रीडित्वा चाच्युतालये ॥ प्रयाति परमं स्थानं यस्मान्नावर्तते पुनः ॥ ९ ॥ पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च ॥ पुष्करिण्यस्तडागानि वाप्यः कूपास्तथा ह्रदाः ॥१०॥ नाना नद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे ॥ ज्येष्ठशुक्लदशम्यादि प्रत्यक्षं यांति सर्वदा ॥ ११ ॥ स्नानदानादिकं यस्माद्देवताप्रेक्षणे सति ॥ नृभिर्यत्क्रियते तत्र तत्सर्वं चाक्षयं भवेत् ॥१२ ॥ ज्येष्ठमासे तु दशमी शुक्लपक्षस्य मोहिनि ॥ हरते दश पापानि तस्माद्दशहरा स्मृता ॥ १३ ॥ यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां च सुव्रतः ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ १४ ॥ नरो दोलागतं दृष्ट्वा गोविंदं पुरुषोत्तमम् ॥ फाल्गुन्यां संयतो भूत्वा गोविंदस्य पुरं व्रजेत् ॥ १५ ॥ विषुवे दिवसे प्राप्ते पंचतीर्थविधानतः ॥ दृष्ट्वा संकर्षणं कृष्णां सुभद्रां च सुलोचने ॥ १६ ॥ नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम् ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥१७॥ यः पश्यति तृतीयायां कृष्णं चंदनरूषितम् ॥ वैशाखस्य सिते पक्षे स यात्यच्युतमंदिरम् ॥ १८ ॥ यदा भवेन्महाज्यैष्ठी राशिनक्षत्रयोगतः ॥ प्रयत्नेन तदा मर्त्यैर्गंतव्यं पुरुषोत्तमम् ॥ १९ ॥ कृष्णं दृष्ट्वा महाज्यैष्ठ्यां रामं भद्रां च मोहिनि ॥ नरो द्वादशयात्राणां फलं प्राप्नोति चाधिकम् ॥ २० ॥ प्रयागे च कुरुक्षेत्रे नैमिषे पुष्करे गये ॥ गंगाद्वारे च कुब्जाम्रगंगासागरसंगमे ॥ २१ ॥ कोकामुखे शूकरे च मथुरायां मरुस्थले ॥ शालग्रामे वायुतीर्थे मंदरे सिंधुसागरे ॥ २२ ॥ पिंडारके चित्रकूटे प्रभासे कनखले तथा ॥ शंखोद्धारे द्वारकायां तथा वदरिकाश्रमे ॥ २३ ॥ लोहकूटे चाश्वतीर्थे सर्वपापप्रमोचने ॥ कर्दमाले कोटितीर्थे तथा चामरकंटके ॥ २४ ॥

लोलार्के जंबुमार्गे च सोमतीर्थे पृथूदके ॥ उत्पलावर्तके चैव पृथुतुंगे सकुब्जके ॥ २५ ॥ एकाम्रके च केदारे काश्यां वा विरजे सति ॥ कालंजरे
च गोकर्णे श्रीशैले गंधमादने ॥ २६ ॥ महेंद्रे मलये विंध्ये पारियात्रे हिमाह्वये ॥ सह्ये च शुक्तिमति च गोमंते चार्बुदे तथा ॥ २७ ॥ गंगायां
च महाभागे यत्पुण्यं यामुनेषु च ॥ सारस्वतेषु गोमत्यां ब्रह्मपुत्रेषु सप्तसु ॥ २८ ॥ गोदावरी भीमरथी तुंगभद्रा च नर्मदा॥तापी पयोष्णी
कावेरी शिप्रा चर्मण्वती तथा ॥ २९ ॥ वितस्ता चंद्रभागा च शतद्रुर्बाहुदा तथा ॥ ऋषिकुल्या मरुद्वृधा विपाशा च दृषद्वती ॥ ३० ॥ सरयूर्नाक
गंगा च गंडकी च महानदी ॥ कौशिकी करतोया च त्रिस्रोता मधुवाहिनी ॥ ३१॥ महानदी वैतरणी याश्चान्या नानुकीर्तिताः ॥ तास्सर्वा न समाः
प्रोक्ताः कृष्णसंदर्शनस्य च ॥ ३२ ॥ यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ॥ तत्फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ॥ ३३ ॥ तस्मात्सर्व
प्रयत्नेन गंतव्यं पुरुषोत्तमम् ॥ महाज्यैष्ठ्यां विधिसुते सर्वकामफलेप्सुभिः ॥ ३४ ॥ दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं चापि सुभद्रया ॥ विष्णुलोकं नरो
याति समुद्धृत्य कुलं शतम्॥३५॥भुक्त्वा तत्र वरान्भोगान्यावदाभूतसंप्लवम्॥पुण्यक्षयादिहागत्य चतुर्वेदी द्विजो भवेत्॥३६॥स्वधर्मनिरतः शांतः कृष्ण
भक्तो जितेंद्रियः॥वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात्॥३७॥मासि ज्येष्ठे च संप्राप्ते नक्षत्रे चंद्रदैवते॥पौर्णमास्यां तदा स्नानं प्रशस्तं सागरांभसि
॥३८॥सर्वतीर्थमयः कूपस्तदास्ते सजलः शुचिः॥तथा भोगवती तत्र प्रत्यक्षा भवति ध्रुवम्॥३९॥ तस्माज्ज्यैष्ठ्यां समुद्धृत्य हैमादिकलशैर्जलम् ॥
कृष्णरामाभिषेकार्थं सुभद्रायाश्च मोहिनि॥॥४०॥कृत्वा सुशोभनं मंचं पताकाभिरलंकृतम् ॥ सुदृढं सुखसंचारं वस्त्रैः पुष्पैरलंकृतम्॥४१॥विस्तीर्णं
धूपितं धूपैः स्नानार्थं रामकृष्णयोः ॥ पीतवस्त्रपरिच्छन्नं मुक्ताहारावलंबितम्॥४२॥तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं सति॥ मंचे संस्थाप्य भद्रां
च जयमंगलनिःस्वनैः॥४३॥ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मोहिनि ॥अनेकशतसाहस्रैर्वृतं स्त्रीपुरुषैस्तथा ॥ ४४ ॥ गृहस्थाः स्नातकाश्चैव यतयो
ब्रह्मचारिणः ॥ स्नापयंति तदा कृष्णं मंचस्थं सहलायुधम्॥४५॥तथा समस्ततीर्थानि पूर्वोक्तानि च सुंदरि॥ मोदकैः पुष्पमिश्रैश्च स्नापयंति पृथक्
पृथक् ॥ ४६ ॥ पश्चात्पटहसंघोषैर्भेरीमुरजनिःस्वनैः ॥ काहलैस्तालशब्दैश्च मृदंगैर्झर्झरैस्तथा॥ ४७ ॥ अन्यैश्च विविधैर्वाद्यैर्घंटास्वनविमिश्रितैः॥
स्त्रीणां मंगलशब्दैश्च स्तुतिशब्दैर्मनोरमैः ॥ ४८ ॥ जयशब्दैस्तथा स्तोत्रैर्वीणावेणुनिनादितैः ॥ श्रूयते सुमहाञ्छब्दः सागरस्येव गर्जतः
॥ ४९ ॥ मुनीनां वेदघोषैश्च मंत्रघोषैस्तथापरैः ॥ नानास्तोत्ररवैः पुण्यैः सामगानोपबृंहितैः ॥ ५० ॥ श्यामावदातवेश्याभिः पीतरक्तांशु
कैस्तथा ॥ चामरै रत्नदंडैश्च वीज्येते रामकेशवौ ॥ ५१ ॥ यक्षविद्याधरैः सिद्धैर्देवगंधर्वचारणैः ॥ आदित्या वसवो रुद्राः साध्या वि श्वे मरुद्गणाः॥

॥ ५२ ॥ लोकपालास्तथान्ये च स्तुवंति पुरुषोत्तमम् ॥ नमस्ते देवदेवेश पुराणपुरुषोत्तम ॥ ५३ ॥ सर्गस्थित्यंतकृद्देव लोकनाथ जगत्पते ॥
त्रैलोक्यशरणं देवं ब्रह्मण्यं मोक्षकारणम् ॥ ५४ ॥ तं नमस्यामहे भक्त्या सर्वकामफलप्रदम् ॥ स्तुत्वैवं विबुधाः कृष्णं रामं चैव महाबलम् ॥ ५५ ॥
सुभद्रां चापि विधिजे तदाकाशे व्यवस्थिताः ॥ गायंति देवगंधर्वा नृत्यंत्यप्सरसस्तथा ॥ ५६ ॥ देवतूर्याणि वाद्यंते वाता वांति सुशीतलाः ॥ पुष्प
मिश्रं तदा मेघा वर्षंत्याकाशगोचराः ॥ ५७ ॥ जयशब्दं च कुर्वंति मुनयः सिद्धचारणाः ॥ शक्राद्या विबुधाः सर्वे ऋषयः पितरस्तथा ॥ ५८ ॥
प्रजानां पतयो नागा ये चान्ये स्वर्गवासिनः ॥ ततो मंगलसंभारैर्विधिमन्त्रपुरस्कृतम् ॥ ५९ ॥ आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ इन्द्र
विष्णू महावीर्यौ सूर्याचंद्रमसौ तथा ॥ ६० ॥ धाता चैव विधाता च तथा चैवानिलानलौ ॥ पूषा भगोऽर्यमा त्वष्टा विवस्वानंशुमांस्तथा ॥ ६१ ॥
रुद्राश्विसहितो धीमान्मित्रेण वरुणेन च ॥ रुद्रैर्वसुभिरादित्यैर्वालखिल्यैर्मरीचिजैः ॥ ६२ ॥ भृगुभिश्चांगिरोभिश्च सर्वविद्यासु निष्ठितैः ॥ पिता
महः पुलस्त्यश्च पुलहश्च महातपाः ॥ ६३ ॥ अंगिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ॥ क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ ६४ ॥ ऋतवश्च
ग्रहाश्चैव ज्योतींषि च द्विजोत्तमाः ॥ मूर्तिमत्यश्च सरितो देवाश्चैव सनातनाः ॥ ६५ ॥ सुभद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ॥ पृथिवी
द्यौर्दिशश्चैव पादपाश्च द्विजोत्तमाः ॥ ६६ ॥ अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ॥ उमा शची सिनीवाली तथा चानुमतिः कुहूः
॥ ६७ ॥ राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ॥ श्रेष्ठो गिरीणां हिमवान्नागराजश्च वामनः ॥ पारियात्रश्च विंध्यश्च मेरुश्चानेक
शृंगवान् ॥ ६८ ॥ ऐरावतः सानुचरः कलाः काष्ठास्तथैव च ॥ मासार्द्धमासा ऋतवस्तथा राज्यहनी समाः ॥ ६९ ॥ उच्चैःश्रवा हयश्रेष्ठो
नागराजश्च वामनः ॥ अरुणो गरुडश्चैव लताश्चौषधिभिः सह ॥ ७० ॥ धर्मश्च भगवान्देवः समागच्छंति सर्वतः ॥ कालो यमश्च मृत्युश्च
यमस्यानुचराश्च ये ॥ ७१ ॥ बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः ॥ ते देवस्याभिषेकार्थं समायांति ततस्ततः ॥ ७२ ॥ दिव्यसंभारसंयुक्तैः
कलशैः कांचनैस्तथा ॥ सारस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव च ॥ ७३ ॥ तोयेनाकाशगंगायाः कृष्णं रामेण संगतम् ॥ सपुष्पैः कुंभसलिलैः
स्नापयंत्यंबरे स्थिताः ॥ ७४ ॥ संचरंति विमानानि देवानामंबरे तथा ॥ उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥ ७५ ॥ दिव्यरत्नविचित्राणि
सेवितान्यप्सरोगणैः ॥ गीतैर्वाद्यैः पताकाभिः शोभितानि समंततः ॥ ७६ ॥ इति श्रीबृहन्नारदीयपुराणोत्तरभागे वसुमोहिनीसंवादे पुरुषोत्तम
माहात्म्येऽभिषेको नाम षष्टितमोऽध्यायः ॥ ६० ॥ वसुरुवाच ॥ एवं तदा विधिसुते कृष्णं रामेण संगतम् ॥ सुभद्रां च महाभागाः संस्तुवंति मुदा

न्विताः ॥१॥ देवा ऊचुः ॥ जय जय लोकपाल जय पद्मनाभ भूधरण॥जय जय चादिदेव बहुकारण॥२॥ जय जय वासुदेव जय सङ्करण सत्क
रण ॥ जय जय दिव्यमीन जय त्रिदशवर ॥३॥ जय जय जलधिशयन जय जय योगेश जय वेदधर॥जय जय विश्वमूर्ते जय चक्रधर॥४॥जय
जय भूतनाथ जय श्रीनिवास जय जय योगिवर ॥ जय जय सूर्यनेत्र जय देव वराह ॥५॥ जय जय कैटभारे जय जय वेदवर॥जयजय कूर्मरूप
जय यज्ञवर ॥ ६॥ जय जय कमलनाभ जय शैलधर ॥ जय जय योगेश जय वेगधर॥७॥जय जय विश्वमूर्ते जय चक्रधर॥ जय जय भूतनाथ
जय धरणीधर ॥ ८ ॥ जय जय शेषशायिञ्जय पीतवास ॥ जय सोमकान्त जय योगवास जय जय॥९॥दहनचक्र जय धर्मवास जय जय ॥
गुणनिधान जय श्रीनिवास जय जय॥१०॥गरुडासन जय सुखनिवास जय जय॥ जय जय धर्मकांत जय जय मतिनिवास ॥ ११ ॥ जय जय
गहनगेहनिवास ॥ जय जय योगिगम्य जय मखनिवास ॥ १२॥जय जय वेदवेद्य जय शांतिकर ॥जय जय योगिचिंत्य जय पुष्टिकर ॥ १३ ॥
जय जय ज्ञानमूर्ते जय कमलाकर॥ जय जय भाववेद्य जय मुक्तिकर॥१४॥ जय विमलदेह जय जय सत्त्वनिलय॥जय जय गुणसमूह जय जय
यज्ञकर॥१५॥ जय जय गुणविहीन जय जय मोक्षकर॥ जय जय भूहिरण्य जय जय कांतियुत ॥१६॥ जय लोकशरण जय जय लक्ष्मीपते ॥
जय पंकजाक्ष जय जय सृष्टिकर॥१७॥ जय योगयुत जयातसीकुसुमश्यामदेह॥जय जय समुद्राविष्टदेह जय लक्ष्मीपंकजभोगदेह॥१८॥जय जय
भक्तिभावन लोकगेय॥जय लोककांत जय परमशांत ॥१९॥ जय जय परमसार जयचक्रधर॥ जय भोगियुत जय नीलांबर॥२०॥जय सांख्यनुत
जय कलुषहर॥जय कृष्ण जगन्नाथ जय संकर्षणानुज॥२१॥जय जय पद्मपलाशाक्षजय वांछितफलप्रद॥जय मालावृतोरस्क जय चक्रगदाधर॥२२॥
जय पद्मालयाकांत जय विष्णो नमोऽस्तु ते॥एवं स्तुत्वा तदा देवाः शक्राद्या हृष्टमानसाः॥२३॥सिद्धचारणगंधर्वा ये चान्ये स्वर्गवासिनः ॥दृष्ट्वा
स्तुत्वा नमस्कृत्य तद्गतेनान्तरात्मना॥ २४ ॥ कृष्णं रामं सुभद्रां च यांति स्वं स्वं निवेशनम् ॥ कपिलाशतदानेन यत्फलं पुष्करे स्मृतम्॥ २५ ॥
तत्फलं कृष्णमालोक्य मंचस्थं सहलायुधम्।कन्याशतप्रदानेन यत्फलं समुदाहृतम्॥२६॥ तत्फलं कृष्णमालोक्य मंचस्थं लभते नरः ॥ शतनिष्क
सुवर्णेन भूमिदानेन यत्फलम्॥२७॥तत्फलं चान्नदानेन सर्वातिथ्येन यत्फलम्॥वृषोत्सर्गेण विधिवद् ग्रीष्मे तोयप्रदानतः॥२८॥तिलधेनुप्रदानेन गजा
श्वरथदानतः ॥ चान्द्रायणेन चीर्णेन तथा मासोपवासतः ॥ २९ ॥ यत्फलं सर्वतीर्थेषु व्रतैर्दानैश्च यत्फलम् ॥ ससुभद्रौ रामकृष्णौ तल्लभेद्वीक्ष्य
मंचगौ ॥ ३० ॥ तस्मान्नरोऽथवा नारी पश्येत्त पुरुषोत्तमम् ॥ स्नानशेषेण कृष्णस्य तोयेन यदि मोहिनि ॥ ३१ ॥ वंध्या मृतप्रजा वापि दुर्भगा
ग्रहपीडिताः ॥ राक्षसाद्यैर्गृहीता वा तथा रोगैश्च संहताः ॥ ३२ ॥ सद्यस्ताः शुद्धिमायांति विधिना ह्यभिषेचिताः ॥ प्राप्नुवंतीप्सितान्कामान्या

न्यान्वांछंति सुप्रभे ॥ ३३ ॥ पुण्यानि यानि तोयानि संत्यन्यानि धरातले ॥ तानि स्नातावशेषस्य कलां नार्हंति षोडशीम् ॥ ३४ ॥ तस्मा
त्स्नानावशेषेण जलेन जलशायिनः ॥ अभ्युक्षेत्स्वगात्राणि सर्वकामप्रदेन च ॥३५ ॥स्नातं पश्यंति ये कृष्णं व्रजंतं दक्षिणामुखम्॥ ब्रह्महत्यादिभिः
पापैर्मुच्यंते ते न संशयः ॥ ३६ ॥ शास्त्रेषु यत्फलं प्रोक्तं त्रिः प्रदक्षिणया भुवः ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ३७ ॥ तीर्थ
यात्राफलं यत्तु पृथिव्यां समुदाहृतम् ॥ दृष्ट्वा यांतं लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥३८॥गंगाद्वारे च कुब्जाम्रे कुरुक्षेत्रेऽर्कपर्वणि ॥ पुष्करादिषु
चान्येषु यत्फलं स्नानतः स्मृतम् ॥ ३९ ॥यत्फलं दक्षिणास्यं तु कृष्णं यांतं निरीक्ष्य च ॥ अथ किं बहुनोक्तेन यत्फलं पुण्यकर्मणः ॥ ४० ॥
वेदशास्त्रपुराणेषु भारते संहितादिषु ॥ तत्फलं वीक्ष्य दक्षास्यौ सुभद्रौ बलकेशवौ ॥ ४१ ॥ गुंडिचामंडपं यांतं ये पश्यंति रथे स्थितम् ॥
सभद्रं सबलं कृष्णं ते यांति भवनं हरेः ॥ ४२ ॥ गुंडिचायानसमये फाल्गुन्यां विषुवे तथा॥ सकृद्यात्रां नरः कृत्वा विष्णुलोकं प्रगच्छति ॥ ४३॥
यावतीः कुरुते मर्त्यो यात्राः श्रीपुरुषोत्तमे ॥ तावत्कल्पं विष्णुलोके वसेदिति विनिश्चयः ॥ ४४ ॥ यात्रा द्वादश संपूर्णा यदा स्युर्विधिनंदिनि॥
तदा प्रतिष्ठां कुर्वीत विधिना पापनाशिनि ॥४५॥ ज्येष्ठमासि सिते पक्षे ह्येकादश्यां समाहितः ॥ गत्वा जलाशयं पुण्यमाचम्य प्रयतः शुचिः
॥ ४६ ॥ आवाह्य सर्वतीर्थानि ध्यात्वा नारायणं तथा ॥ ततः स्नानं प्रकुर्वीत विधिबोधितवर्त्मना ॥ ४७ ॥ स्नात्वा सम्यक्ततो देवानृषींश्चापि
पितॄन्स्वकान् ॥ संतर्पयेत्तथान्यांश्च नामगोत्रोक्तिपूर्वकम् ॥ ४८ ॥ उत्तीर्य वाससी धौते निर्मले परिधाय च ॥ उपस्पृश्य विधानेन तथोप
स्थाय भास्करम् ॥ ४९॥ वेदमातरमावर्त्य पुण्यामष्टोत्तरं शतम्॥सौरमन्त्रांस्तथा चान्यांस्त्रिः परीत्य नमेद्रविम् ॥ ५० ॥ वेदोक्तं त्रिषु वर्णेषु स्नानं
जप्यमुदाहृतम् ॥ ५१ ॥ स्त्रीशूद्रयोर्वरारोहे वेदोक्तविधिवर्जितम् ॥ ततो व्रजेन्मंदिरस्थं भक्त्या श्रीपुरुषोत्तमम् ॥ ५२ ॥ प्रक्षाल्य हस्तौ पादौ च
उपस्पृश्य यथाविधि ॥घृतेन स्नापयेद्देवं क्षीरेण तदनंतरम् ॥ ५३॥ मधुगंधोदकेनापि तीर्थचंदनवारिणा ॥ ततो वस्त्रयुगं श्रेष्ठं भक्त्या तं
परिधापयेत् ॥ ५४ ॥ चंदनागुरुकर्पूरैः कुंकुमेन विलेपयेत् ॥ पूजयेत्परया भक्त्या पद्मैश्च पुरुषोत्तमम् ॥ ५५ ॥ संपूज्यैवं जगन्नाथं
भुक्तिमुक्तिप्रदं हरिम् ॥ धूपं चागुरुसंयुक्तं देहे देवस्य चाग्रतः ॥ ५६ ॥ गुग्गुलं च सुनिष्पूनं दहेद्घृतसमन्वितम् ॥ दीपं प्रज्वालये
द्भक्त्या यथाशक्ति घृतेन वै ॥ ५७ ॥ अन्यांश्च दीपकान्दद्याद्द्वादशैव समाहितः ॥ गोघृतेन तु देवेशि तिलतैलेन वा पुनः ॥ ५८ ॥ नैवेद्यं पायसा
पूपशष्कुलीवेटकानि च ॥ मोदकं फाणिकं चान्यत्फलानि च निवेदयेत् ॥ ५९ ॥ एवं पंचोपचारेण संपूज्य पुरुषोत्तमम् ॥ ॐ नमः

पुरुषोत्तमायेति जपेदष्टोत्तरं शतम् ॥ ६० ॥ ततः प्रसादयेदेवं दंडवत्प्रणिपत्य च ॥ ततोऽर्चयेद्गुरुं भक्त्या पुष्पवस्त्रानुलेपनैः ॥ ६१ ॥ नानयोरंतरं
यस्माद्विद्यते विधिनंदिनि ॥ देवस्योपरि कुर्वीत मंडपं सुसमाहितः ॥ ६२ ॥ नानापुष्पैः सुविशदं विचित्रं मंडलं पुरः ॥ कृत्वावधारणं पश्चाज्जागरं
कारयेन्निशि ॥ ६३ ॥ कथां च वासुदेवस्य गीतिकां चापि कारयेत्॥ ध्यायन्पठन्स्तुवन्देवं प्रणयेद्रजनीं बुधः॥६४॥ ततः प्रभाते विमले द्वादश्यां
द्वादशैव तु ॥ निमंत्रयेद्वृतस्नातान्ब्राह्मणान्वेदपारगान् ॥ ६५ ॥ इतिहासपुराणज्ञाञ्छ्रोत्रियान्संयतेंद्रियान् ॥ स्नात्वा सम्यग्विधानेन धौतवासा
जितेंद्रियः ॥ ६६ ॥ स्नापयेत्पूर्ववद्भक्त्या तत्रस्थं पुरुषोत्तमम्॥गंधैः पुष्पैः स्तूपहारैर्नैवेद्यैर्दीपकैस्तथा॥६७॥ उपचारैर्बहुविधैः प्रणिपातैः प्रदक्षिणैः॥
जाप्यस्तुतिनमस्कारैर्गीतवाद्यैर्मनोहरैः ॥ ६८ ॥ संपूज्यैवं जगन्नाथं ब्राह्मणान्पूजयेत्ततः ॥ द्वादशैव तु गास्तेभ्यो दत्त्वा कनकमेव च ॥ ६९ ॥
छत्रोपानद्युगं चार्प्य कांस्यपात्रं च भक्तितः ॥ ततस्तान्भोजयेद्विप्रान्भोज्यं पायसपूर्वकम् ॥ ७० ॥ पक्वान्नं भक्ष्यभोज्यं च सगुडं शर्करान्वितम्॥
ततो भुक्ता सुसंतृप्तान्ब्राह्मणान्सुस्थमानसान् ॥ ७१ ॥ द्वादशैवोदकुंभांश्च ग्राहयेत्तान्समोदकान् ॥ दक्षिणां च यथाशक्ति विष्णुतुल्यं विरिंचिजे
॥ ७२ ॥ सुवर्णवस्त्रगोधान्यैर्द्रव्यैश्चान्यैर्वरैर्बुधः ॥ संपूज्य तान्नमस्कृत्य इमं मंत्रमुदीरयेत् ॥ ७३ ॥ सर्वव्यापी जगन्नाथः शंखचक्रगदाधरः ॥
अनादिनिधनो देवः प्रीयतां पुरुषोत्तमः ॥ ७४॥ इत्युच्चार्य ततो विप्रांस्त्रिः परिक्रम्य सादरम् ॥ प्रणम्य शिरसा भक्त्या साचार्यांस्तान्विसर्जयेत्
॥ ७५ ॥ ततस्तान्ब्राह्मणान्भक्त्या चासीमांतमनुव्रजेत् ॥ अनुव्रज्य तु तान्विप्रान्नमस्कृत्य निवर्त्य च ॥७६॥ बांधवैः स्वजनैर्युक्तस्ततो भुंजीत
वाग्यतः ॥ एवं कृत्वा नरः सम्यङ् नारी वा लभते फलम्॥७७॥अश्वमेधसहस्रस्य राजसूयशतस्य च ॥ अतीतं शतमुद्धृत्य पुरुषाणां नरोत्तमः
॥ ७८ ॥ भविष्यच्च शतं देवि दिव्यरूपधरोऽव्ययः ॥ सर्वलक्षणसंपन्नः सर्वालंकारभूषितः ॥ ७९ ॥ सर्वकामसमृद्धात्मा गुणरूपवयोऽन्वितः ॥
स्तूयमानोऽथ गंधर्वैरप्सरोभिः समंततः ॥ ८० ॥ विमानेनार्कवर्णेन कामगेन स्थिरेण च ॥ पताकाध्वजयुक्तेन शतसूर्यप्रभेण च
॥ ८१ ॥ उद्योतयन्दिशः सर्वा आकाशे विगतक्लमः ॥ युवा महाबलो धीमान्विष्णुलोकं स गच्छति ॥ ८२ ॥ तत्र कल्पशतं
यावद्भुङ्क्ते भोगान्यथेप्सितान् ॥ स्तुतो मुनिवरैर्देवि तिष्ठेच्च विगतज्वरः ॥ ८३ ॥ यथा देवो जगन्नाथः शंखचक्रगदाधरः ॥ तथाऽसौ मुदितो
देवि धृत्वा रूपं चतुर्भुजम् ॥ ८४ ॥ भुक्त्वा तत्र वरान्भोगान्क्रीडित्वा सुचिरं सति ॥ तदंते ब्रह्मसदनमायात्यखिलकामदम् ॥ ८५ ॥ सिद्धवि
द्याधरैश्चापि शोभितं सुरकिन्नरैः ॥ कालं नवतिकल्पं तु तत्र भुक्त्वा सुखं नरः ॥ ८६ ॥ रुद्रलोकं समायाति सुखदं सेवितं सुरैः ॥ सिद्धविद्याधरै

यक्षैर्भूषितं दैत्यदानवैः ॥ ८७ ॥ अशीतिकल्पकालं तु तत्र भुक्त्वा सुखं नरः ॥ तदंते याति गोलोकं सर्वभोगसमन्वितम् ॥ ८८ ॥ सुरैसि
द्धाप्सरोभिश्च शोभितं सुमनोहरम् ॥ तत्र सप्ततिकल्पं तु भुक्त्वा भोगानभीप्सितान् ॥ ८९ ॥ पश्चादायाति वै लोकं प्राजापत्यमनुत्तमम् ॥
षष्टिकल्पं सुखं तत्र भुक्त्वा नानाविधं मुदा ॥ ९० ॥ तदंते शक्रभवनं नानाश्चर्यं समाव्रजेत् ॥ आगत्य तत्र पंचाशत्कल्पं भुक्त्वा सुखं
नरः ॥ ९१॥ प्रपद्यतेऽमरगृहान्विमानैः समलङ्कृतान् ॥ चत्वारिंशत्कल्पकालं भोगान्भुक्त्वा सुदुर्लभान्॥९२॥नाक्षत्रं लोकमायाति नानासौख्य
समन्वितम् ॥ तत्र भुक्त्वा वरान्भोगांस्त्रिंशत्कल्पं यथेप्सितान् ॥ ९३ ॥ तस्माद्गच्छति तं लोकं शशांकस्य विरिंचिजे ॥ यत्र तिष्ठति सोमोऽसौ सर्वं
देवैरलंकृतः ॥९४॥ तत्र विंशतिकल्पं तु भुक्त्वा भोगं सुदुर्लभम् ॥आदित्यस्य ततो लोकमायाति सुरपूजितम् ॥ ९५ ॥ तत्र भुक्त्वा शुभान्भोगन्दश
कल्पं मुनिर्वृतः ॥ तस्मादायाति भवनं गंधर्वाणां सुदुर्लभम् ॥ ९६ ॥ तत्र भोगान्समस्तांश्च कल्पमेकं यथासुखम् ॥ भुक्त्वा चायाति मेदिन्यां राजा
भवति धार्मिकः ॥ ९७ ॥ चक्रवर्ती महावीर्यो गुणैः सर्वैरलंकृतः ॥ कृत्वा राज्यं तु धर्मेण यज्ञैरिष्ट्वा सदक्षिणैः ॥९८॥तदंते योगिनां लोकं गत्वा
मोक्षप्रदं शिवम् ॥ तत्र भुक्त्वा वरान्भोगान्यावदाभूतसंप्लवम् ॥ ९९ ॥ तस्मात्पुनरिहायातो जायते योगिनां कुले ॥१०० ॥ प्रवरे वैष्णवे भद्रे दुर्लभे
साधुसंमते॥चतुर्वेदी विप्रवरो ब्रह्मयज्ञपरः सति॥१०१॥वैष्णवं योगमासाद्य कैवल्यं मोक्षमाप्नुयात्॥एवं यात्राफलं तुभ्यं प्रोक्तं श्रीपुरुषोत्तमे॥१०२॥
भुक्तिमुक्तिप्रदं नृणां किमन्यच्छ्रोतुमिच्छसि॥१०३॥इति श्रीबृहन्नारदीयपुराणोत्तरभागे मोहिनीवसुसंवादे पुरुषोत्तमक्षेत्रमाहात्म्ये पुरुषोत्तमक्षेत्रयात्रा
फलवर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ वसिष्ठ उवाच ॥ एतच्छ्रुत्वा तु भूपाल मोहिनी विधिनंदिनी ॥ पुरुषोत्तममाहात्म्यं भुक्तिमुक्तिप्रदाय
कम् ॥१॥ पुनः पप्रच्छ तं विप्रं वसुं स्वस्य पुरोहितम् ॥ मोहिन्युवाच ॥ श्रुतमत्यद्भुतं विप्र पुरुषोत्तमसंभवम् ॥२॥ माहात्म्यं चाधुना ब्रूहि प्रयाग
स्यापि सुव्रत॥तीर्थराजः प्रयागाख्यः श्रुतः पूर्वं मया गुरो॥३॥तन्माहात्म्यं ममाख्याहि तीर्थयात्राविधानयुक्॥स मान्यानां विशेषाणां तीर्थानां गमने
द्विज॥४॥यत्कर्तव्यं च विधिना नृभिर्द्धर्मपरायणैः॥तच्छ्रुत्वा स द्विजो राजन्मोहिन्या भाषितं वचः ॥५॥ सामान्यविधिपूर्वं तत्प्रयागाख्यानमब्रवीत्॥
वसुरुवाच॥शृणु भद्रे प्रवक्ष्यामि तीर्थाभिगमने विधिम्॥६॥यं समाश्रित्य मनुजो यथोक्तं फलमाप्नुयात् ॥ तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते
॥७॥अनुपोष्य त्रिरात्राणि तीर्थान्यप्यभिगम्य च॥ अदत्त्वा कांचनं गाश्च दरिद्रो जायते नरः ॥ ८ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः॥न
तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ ९ ॥ अज्ञानेनापि यस्येह तीर्थाभिगमनं भवेत् ॥ सर्वकामसमृद्धः स स्वर्गलोके महीयते ॥ १० ॥

स्थानं च लभते नित्यं धनधान्यसमाकुलम् ॥ ऐश्वर्यज्ञानसंपूर्णः सदा भवति भोगवान् ॥ ११ ॥ तारिताः पितरस्तेन नरकात्प्रपितामहाः ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ १२ ॥ विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ प्रतिग्रहादपावृत्तः संतुष्टो येन केनचित् ॥ १३ ॥
अहंकारविमुक्तश्च स तीर्थफलमाप्नुयात् ॥ अकल्पको निरारम्भो लध्वाहारो जितेंद्रियः ॥ १४ ॥ विमुक्तः सर्वसंगैस्तु स तीर्थफलभाग्भवेत् ॥
तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः ॥ १५ ॥ कृतपापो विशुध्येत्तु किं पुनः शुद्धकर्मकृत् ॥ अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः
॥ १६ ॥ हेतुनिष्ठश्च पंचैते न तीर्थफलभागिनः ॥ नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥ १७ ॥ यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां
नृणाम् ॥कामं क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत् ॥ न तेन किञ्चिदप्राप्तं तीर्थाभिगमनाद्भवेत् ॥ तीर्थानि च यथोक्तेन विधिना
संचरंति ये ॥ सर्वद्वंद्वसहा धीरास्ते नराः स्वर्गगामिनः ॥ १८ ॥ गंगादितीर्थेषु वसंति मत्स्या देवालये पक्षिगणाश्च संति ॥ भावो
ज्झितास्ते न फलं लभंते तीर्थाच्च देवायतनाच्च मुख्यात् ॥ १९ ॥ भावं ततो हृत्कमले निधाय तीर्थानि सेवेत समाहितात्मा ॥
या तीर्थयात्रा कथिता मुनींद्रैः कृता प्रयुक्ता ह्यनुमोदिता च ॥ २० ॥ तां ब्रह्मचारी विधिवत्करोति सुसंयतो गुरुणा संनियुक्तः ॥
सर्वस्वनाशेऽप्यथ चाल्पपक्षे स ब्राह्मणानग्रत एव कृत्वा ॥ २१ ॥ यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेच्च ॥ तीर्थे
ष्वलं यज्ञफलं हि यस्मात्प्रोक्तं मुनींद्रैरमलस्वभावैः ॥ २२ ॥ यस्येष्टियज्ञेष्वधिकारितास्ति वरं गृहं गृहधर्माश्च सर्वे ॥ एवं गृहस्थाश्रमसं
स्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ॥ सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वदंति केचित् ॥२३॥ यो यः कश्चित्तीर्थयात्रां तु गच्छे
त्सुसंयतः स च पूर्वं गृहेषु ॥ कृतावासः शुचिरप्रमत्तः संपूजयेद्भक्तिनम्रो [illegible] ॥ २४ । देवान्पितॄन्ब्राह्मणांश्चैव साधून्धीमान्विप्रो वित्तशक्त्या
प्रयत्नात् ॥ प्रत्यागतश्चापि पुनस्तथैव देवान्पितॄन्ब्राह्मणान्पूजयेच्च ॥२५॥ एव कुर्वतस्तस्य तीर्थाद्यदुक्तं फलं तत्स्यान्नात्र संदेहलेशः ॥ २६ ॥
गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्स सर्पिषा ॥ यात्रार्थमिति तत्प्रोक्तं [illegible] संशयः ॥ २७ ॥ प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ॥
कचानां वपनं कुर्याद् वृथा न विकचो भवेत् ॥ २८ ॥ उद्यतश्चेद्गयां गंतु [illegible] कृत्वा विधानतः ॥ वि कार्पटीवेषं कृत्वा ग्रामप्रदक्षिणाम् ॥२९॥
ततो ग्रामांतरं गत्वा श्राद्धशेषस्य भोजनम् ॥ ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥ ३० ॥ पदेपदेऽश्वमेधस्य स्यात्फलं गच्छतो गयाम् ॥
बलीवर्दसमारूढस्तीर्थं यो याति सुव्रते ॥ ३१ ॥ नरके वसते घोरे गवां क्रोधो हि दारुणः ॥ सलिलं च न गृह्णंति पितरस्तस्य देहिनः ॥ ३२ ॥

ऐश्वर्याल्लोभमोहाद्वा गच्छेद्यानेन यो नरः ॥ निष्फलं तस्य तत्तीर्थं तस्माद्यान विवर्जयेत्॥३३ ॥ गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम्॥
नरयाने तदर्द्धं स्यात्पद्भ्यां तच्च चतुर्गुणम् ॥ ३४ ॥ वर्षातपादिके छत्री दंडी शर्करकंटके ॥ शरीरत्राणकामोऽसौ सोपानत्कः सदा व्रजेत् ॥३५ ॥
तीर्थं प्राप्यानुषंगेण स्नानं तीर्थे समाचरन् ॥ स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥ ३६ ॥ षोडशांशं स लभते यः परार्थेन गच्छति ॥
अर्द्धं तीर्थफलं तस्य यः प्रसंगेन गच्छति ॥ ३७ ॥ तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ॥ अत्रार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥ ३८ ॥
सक्तुभिः पिंडदानं च संयावैः पायसेन वा ॥ बदरामलकैर्वापि पिण्याकैर्वा सुलोचने ॥ ३९ ॥ श्राद्धं तु तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ॥
श्वध्वांक्षगृध्रपापानां नैव दृष्टिहतं च यत् ॥ ४०॥ श्राद्धं तु तैर्थिकं प्रोक्तं पितॄणां तृप्तिकारकम् ॥ अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ॥४१॥
प्राप्तैरेव सदा तत्र कर्तव्यं पितृतर्पणम्॥विलंबो नैव कर्तव्यो नैव विघ्नं समाचरेत् ॥ ४२ ॥ प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ॥ यमुद्दिश्य
विशालाक्षि सोऽष्टमांशं फलं लभेत् ॥४३ ॥कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा ॥ त्वयि स्नाते तु स स्नातो यस्येदं ग्रंथिबन्धनम् ॥ ४४॥
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ ४५ ॥ भौमानामथ तीर्थानां पुण्यत्वे कारणं शृणु ॥
यथा शरीरस्योद्देशाः केचिन्मुख्यतमाः स्मृताः ॥ ४६ ॥ प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः ॥ परिग्रहान्मुनीनां च तीर्थानां पुण्यता
स्मृता ॥४७॥ गंगां संप्राप्य यो देवि मुंडनं नैव कारयेत् ॥ क्रिया तस्याक्रिया सर्वा तीर्थद्रोही भवेत्तथा ॥४८॥ गंगायां भास्करक्षेत्रे मुंडनं यो न कार
येत् ॥ स कोटिकुलसंयुक्त आकल्पं रौरवं व्रजेत् ॥ ४९ ॥ गंगां प्राप्य सरिच्छ्रेष्ठां कल्पांतपापसंचयाः ॥ केशानाश्रित्य तिष्ठंति तस्मात्तान्परिवर्ज
येत् ॥ ५० ॥ यावंति नखलोमानि गंगातोये पतंति वै ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ५१ ॥ प्रयागव्यतिरेके तु गंगायां मुंडनं न
हि ॥ योऽन्यथा कुरुते मोहात्स महारौरवं विशेत् ॥ ५२ ॥ स जीवत्पितृको यस्तु तीर्थं प्राप्य विधानवित् ॥ क्षौरं समाचरेन्नैव श्मश्रूणां वपनं
सति ॥ ५३ ॥ गयादावपि देवेशि श्मश्रूणां वपनं विना ॥ न क्षौरं मुनिभिः सर्वैर्निषिद्धं चेति कीर्तितम् ॥ ५४ ॥ सश्मश्रुकेशवपनं मुंडनं तद्विदु
र्बुधाः ॥ न क्षौरं मुंडनं सुभ्रु कीर्तितं वेदवेदिभिः॥ ५५॥ इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसुमोहिनीसंवादे प्रयागराजमाहात्म्ये
तीर्थविधिर्नाम द्विषष्टितमोऽध्यायः ॥६२॥ वसुरुवाच ॥ शृणु मोहिनि वक्ष्यामि माहात्म्यं वेदसंमतम् ॥ प्रयागस्य विधानेन स्नात्वा यत्र विशु
ध्यति ॥ १ ॥ कुरुक्षेत्रसमा गंगा यत्र तत्रावगाहिता ॥ तस्माद्दशगुणा प्रोक्ता यत्र विंध्येन संगता ॥२॥तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी ॥

काश्याः शतगुणा प्रोक्ता गंगा यत्रार्कजान्विता ॥ ३ ॥ सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी ॥ सा देवि दर्शनादेव ब्रह्महत्याविहारिणी ॥ ४ ॥
पश्चिमाभिमुखी गंगा कालिंद्या सह संगता ॥ हंति कल्पशतं पापं सा माघे देवि दुर्लभा ॥ ५ ॥ अमृतं कथ्यते भद्रे सा वेणी भुवि संगता ॥
यस्यां माघे मुहूर्तं तु देवानामपि दुर्लभम् ॥ ६ ॥ पृथिव्यां यानि तीर्थानि पुर्यः पुण्यास्तथा सति ॥ स्नातुमायांति ना वेण्यां माघे मकरभा
स्करे ॥ ७ ॥ ब्रह्मविष्णुमहादेवा रुद्रादित्यमरुद्गणाः ॥ गंधर्वा लोकपालाश्च यक्षकिन्नरगुह्यकाः ॥ ८ ॥ अणिमादिगुणोपेता ये चान्ये
तत्त्वदर्शिनः ॥ ब्रह्माणी पार्वती लक्ष्मीः शची मेधाऽदिती रतिः ॥ ९ ॥ सर्वास्ता देवपत्न्यश्च तथानागांगनाः शुभे ॥ घृताची मेनका
रंभाप्युर्वशी च तिलोत्तमा ॥ १० ॥ गणाश्चाप्सरसां सर्वे पितॄणां च गणास्तथा ॥ स्नातुमायांति ते सर्वे माघे वेण्यां विरिंचिज ॥ ११ ॥ कृते
युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः ॥ सर्वतीर्थानि कृष्णानि पापिनां संगदोषतः ॥ १२ ॥ भवंति शुक्लवर्णानि प्रयागे माघमज्जनात् ॥ मकरस्थे
रवौ माघे गोविंदाच्युत माधव ॥ १३ ॥ स्नानेनानेन मे देव यथोक्तफलदो भव ॥ इमं मंत्रं समुच्चार्य स्नायान्मौनं समाश्रितः ॥ १४ ॥ वासुदेवं
हरिं कृष्णं माधवं च स्मरेत्पुनः ॥ तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ॥ १५ ॥ षट्चव्देन फलं तद्धि मकरस्थे दिवाकरे ॥ वहिः स्नानं
तु वाप्यादौ द्वाशाव्दफलं स्मृतम् ॥ १६ ॥ तडागे द्विगुणं तद्धि नद्यादौ तच्चतुर्गुणम् ॥ दशधा देवखाते च महानद्यां च तच्छतम् ॥ १७ ॥ चतु
र्गुणशतं तच्च महानद्योस्तु संगमे ॥ सहस्रगुणितं सर्वं तत्फलं मकरे रवौ ॥ १८ ॥ गंगायां स्नानमात्रेण प्रयागे तत्प्रकीर्तितम् ॥ गंगां ये चा
वगाहंति माघे मासि सुलोचने ॥ १९ ॥ चतुर्युगसहस्रं ते न पतंति सुरालयात् ॥ शतेन गुणितं माघे सहस्रं विधिनंदिनि ॥ २० ॥
निर्दिष्टमृषिभिः स्नानं गंगायमुनसंगमे ॥ पापौघैर्भुवि भारस्य दाहायेमं प्रजापतिः ॥ २१ ॥ प्रयागं विदधे देवि प्रजानां हितकाम्यया ॥
स्नानस्थानमिदं सम्यक् सितासितजलं किल ॥ २२ ॥ पापरूपपशूनां हि ब्रह्मणा निर्मितं पुरा ॥ सितासिता तु या धारा सरस्वत्या विदर्भिता ॥
॥ २३ ॥ तं मार्गं ब्रह्मलोकस्य सृष्टिकर्त्ता ससर्ज वै ॥ ज्ञानदो मानसे माघो न तु मोक्षफलप्रदः ॥ २४ ॥ हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः ॥
वेदविद्भिर्विनिर्दिष्ट इंद्रलोकप्रदो हि सः ॥ सर्वमासोत्तमो माघो मोक्षदो वदरीवने ॥ २५ ॥ पापहा दुःखहारी च सर्वकामफलप्रदः ॥ रुद्रलोक
प्रदो माघो नार्मदे परिकीर्तितः ॥ २६ ॥ सारस्वतौघविध्वंसी सर्वलोकसुखप्रदः ॥ विशालफलदो माघो विशालाया प्रकीर्तितः ॥ २७ ॥
पापेंधनदवाग्निश्च गर्भवासविनाशनः ॥ विष्णुलोकाय मोक्षाय जाह्नवः परिकीर्तितः ॥ २८ ॥ सरयूर्गंडकी सिंधुश्चंद्रभागा च कौशिकी ॥ तापी

गोदावरी भीमा पयोष्णी कृष्णवेणिका ॥ २९ ॥ कावेरी तुंगभद्रा च यास्तथान्याः समुद्रगाः ॥ तासु स्नाथी नरो याति स्वर्गलोकं विकल्मषः ॥ ३० ॥ नैमिषे विष्णुसारूप्यं पुष्करे ब्रह्मणेऽतिकम् ॥ आखंडलस्य लोको हि कुरुक्षेत्रे च माघतः ॥ ३१ ॥ माघो देवह्रदे देवि योगसिद्धिफलप्रदः ॥ प्रभासे मकरादित्ये स्नात्वा रुद्रगणो भवेत् ॥ ३२ ॥ देविकायां देवदेहो नरो भवति माघतः ॥ माघस्नानेन विधिजे गोमत्यां न पुनर्भवः ॥ ३३ ॥ हेमकूटे महाकाले ॐकारे ह्यपरे तथा ॥ नीलकंठार्बुदे माघो रुद्रलोकप्रदो मतः ॥ ३४ ॥ सर्वासां सरितां देवि संपूरो माकरे रवौ ॥ स्नानेन सर्वकामानां प्राप्त्यै ज्ञेयो विचक्षणैः ॥ ३५ ॥ माघस्तु प्राप्यते धन्यैः प्रयागे विधिनंदिनि ॥ अपुनर्भवदं तत्र सितासितजलं यतः ॥ ३६ ॥ गायंति देवाः सततं दिविष्ठा माघः प्रयागे किल नो भविष्यति ॥ स्नाता नरा यत्र न गर्भवेदनां पश्यंति तिष्ठन्ति च विष्णुसन्निधौ ॥ ३७ ॥ तीर्थैर्व्रतैर्दानतपोभिरध्वरैः सार्द्धं विधात्रा तुलया धृतं पुरा ॥ माघः प्रयागश्च तयोर्द्वयोरभून्माघो गरीयांश्चतुराननात्मजे ॥३८॥ वातांबुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ॥ योगैश्च संयांति नरास्तु यां गतिं स्नानात्प्रयागस्य हि यांति तां गतिम् ॥ ३९ ॥स्नाता हि ये माकरभास्करोदये तीर्थे प्रयागे सुरसिंधुसंगमे ॥ तेषां गृहद्वारमलंकरोति भृंगावली कुंजरकर्णताडिता ॥ ४० ॥ यो राजसूयाख्यसमाध्वरस्य स्नानात्फलं संप्रददाति चाखिलम् ॥ पापानि सर्वाणि निहत्य लीलया नूनं प्रयागः स कथं न वर्ण्यते ॥ ४१ ॥ चतुर्वेदिषु यत्पुण्यं सत्यवादिषु चैव हि ॥ स्नात एव तदाप्नोति गंगाकालिंदिसंगमे ॥ ४२ ॥ तत्राभिषेकं कुर्वीत संगमे शंसितव्रतः ॥ तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ४३ ॥ पंचयोजनविस्तीर्णं प्रयागस्य तु मंडलम् ॥ प्रवेशादस्य भूमौ तु अश्वमेधः पदे पदे ॥ ४४ ॥ त्रीणि कुंडानि सुभगे तेषां मध्ये तु जाह्नवी ॥ प्रयागस्य प्रवेशेन पापं नश्यति तत्क्षणात् ॥ ४५ ॥ मासमेकं नरः स्नात्वा प्रयागे नियतेंद्रियः ॥ मुच्यते सर्वपापेभ्यो यथा दृष्टं स्वयंभुवा ॥ ४६ ॥ शुचिस्तु प्रयतो भूत्वाऽहिंसकः श्रद्धयान्वितः॥ स्नात्वा मुच्येत पापेभ्यो गच्छेच्च परमं पदम् ॥ ४७ ॥ नैमिषं पुष्करं चैव गोतीर्थं सिंधुसागरम् ॥ गया च धेनुकं चैव गंगासागरसंगमः ॥४८॥ एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ॥ दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथा पराः ॥ ४९ ॥ प्रयागे संस्थिता नित्यमेधमाना मनीषिणः ॥ त्रीणि यान्यग्निकुंडानि तेषां मध्ये तु जाह्नवी ॥५०॥ प्रयागाद्धि विनिष्क्रांता सर्वतीर्थपुरस्कृता ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥५१ ॥ यमुना गंगया सार्द्धं संगता लोकपावनी ॥ गंगयमुनयोर्मध्ये पृथिव्यां यत्परं स्मृतम्॥ ५२ ॥ प्रयागस्य तु तीर्थस्य कलां नार्हति षोडशीम् ॥ तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ॥ ५३ ॥ विधि

भुव्यंतरिक्षे च जाह्नव्या तानि सति च ॥ प्रयागे समाधिष्ठाय कम्बलाश्वतरावुभौ ॥ ५४ ॥ भोगवत्यथवा यथा यथा यथा प्रजापतेः ॥ तत्र वेदाश्च यज्ञाश्च मूर्तिमंतः समास्थिताः ॥ ५५ ॥ प्रजापतिमुपासंते ऋषयश्च तपोधनाः ॥ यजंति क्रतुभिर्देवास्तथा चक्रधराः सति ॥ ५६ ॥ ततः पुण्यतमो नास्ति त्रिषु लोकेषु सुंदरि ॥ प्रभावात्सर्वतीर्थेभ्यः प्रभवत्यधिकस्तथा ॥ ५७ ॥ तत्र दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् ॥ मुच्यन्ते सर्वपापेभ्यः शशांक इव राहुणा ॥ ५८॥ ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् ॥ ब्रह्मचारी वसन्मासं पितॄन्देवांश्च तर्पयन् ॥ ५९ ॥ ईप्सिताँल्लभते कामान्यत्र तत्राभिसंगतः ॥ सितासिते तु यो मज्जेदपि पापशतावृतः ॥ ६ ॥ मकरस्थे रवौ माघे न स भूयस्तु गर्भगः ॥ दुर्जया वैष्णवी माया देवैरपि सुदुस्त्यजा ॥ ६१ ॥ प्रयागे दह्यते सा तु माघे मासि विरंचिजे ॥ तेषु तेषु च लोकेषु भुक्त्वा भोगाननेकशः ॥६२॥पश्चाच्च क्रिणि लीयंते प्रयागे माघमज्जिनः ॥ उपस्पृशति यो माघे मकरार्के सितासिते ॥ ६३ ॥ तस्य पुण्यस्य संख्यां नो चित्रगुप्तोऽपि वेत्त्यलम् ॥ राजसूयसहस्रस्य वाजपेयशतस्य च ॥ फलं सितासिते माघे स्नातानां भवति ध्रुवम् ॥ ॥ आकल्पजन्मभिः पापं संचितं मनुजैस्तु यत् ॥ तद्द्वंद्वमसान्माघे स्नातानां तु सितासिते॥ ६५ ॥गंगायमुनयोश्चैव संगमो लोकवि[illegible] ॥ स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः ॥ ६६ ॥ यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः ॥ भोगकामस्य भोगाः स्युः स्या[illegible]कामिनः ॥ ६७ ॥ स्वर्गः स्यात्स्वर्गकामस्य मोक्षः स्यान्मोक्षकामिनः ॥ कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ॥ ६८ ॥ तानि [illegible] सेवन्ते प्रयागं मकरे रवौ ॥ हरिद्वारे प्रयागे च गंगासागरसंगमे ॥ ६९ ॥ स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ॥ सितासिते [illegible] सुस्नानं माघमासे सुलोचने ॥ ७० ॥ न दत्ते पुनरावृत्तिं कल्पकोटिशतैरपि ॥ सत्यवादी जितक्रोधो ह्यहिंसां परमां श्रितः ॥ ७१ ॥ धर्मानुस[illegible] तत्त्वज्ञो गोब्राह्मणहिते रतः ॥ गंगायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात्॥ ७२ ॥मनसा चिंतितान्कामांस्तत्र प्राप्नोति पुष्कलान् ॥ [illegible] सहस्रेण कुरुक्षेत्रे रविग्रहे॥७३ ॥यत्फलं लभते माघे वेण्यां तत्तु दिने दिने ॥ गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ ७४ ॥ प्रयागे माघमासे तु त्र्यहं स्नातस्य तत्फलम्॥ योगाभ्यासेन यत्पुण्यं संवत्सरशतत्रये ॥ ७५ ॥ प्रयागे माघमासे तु त्र्यहं स्नानेन यत्फलम् ॥ नाश्वमेधसह[illegible] तत्फलं लभते सति ॥ ७६ ॥ त्र्यहस्नानफलं माघे पुरा कांचनमालिनी ॥ राक्षसाय ददौ प्रीत्या तेन मुक्तः स पापकृत् ॥ ७७ ॥ त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः ॥ स्नानेन यदभूत्पुण्यं तेन देवत्वमागता ॥ ७८ ॥ रममाणा तु कैलासे गिरिजायाः प्रिया सखी ॥ जातिस्मरा तथा जाता प्रयागस्य प्रसादतः ॥ ७९ ॥ अवंतीविषये राजा वासराजोऽभवत्पुरा ॥ नर्मदातीर्थमासाद्य राजसूयं चकार सः ॥ ८० ॥ अश्वैः षोडशभिस्तत्र स्वर्णयूप

विराजितैः ॥ स्वर्णभूषणभूषाढ्यै रेजे सोऽपि यथाविधि ॥ ८१ ॥ प्रददौ धान्यराशिं च द्विजेभ्यः पर्वतोपमम् ॥ श्रद्धावान्देवताभक्तो गोप्र
दश्च सुवर्णदः ॥ ८२ ॥ ब्राह्मणो भद्रको नाम मूर्खो हीनकुलस्तथा ॥ कृषीवलोऽधमाचारः सर्वधर्मबहिष्कृतः ॥ ८३ ॥ सीरकर्मसमुद्विग्नो बंधुभिश्च
स वंचितः ॥ इतस्ततः परिक्रम्य निर्गतोऽदृष्टपीडितः ॥ ८४ ॥ दैवतो ज्ञानमाश्रित्य प्रयागं समुपागतः ॥ महामाघीं पुरस्कृत्य सस्नौ तत्र दिन
त्रयम् ॥ ८५ ॥ अनघः स्नानमात्रेण समभूत्स द्विजोत्तमः ॥ प्रयागाच्चलितस्तस्माद्ययौ यस्मात्समागतः ॥ ८६ ॥ स राजा सोऽपि वै विप्रो विपन्ना
वेकदा तदा ॥ तयोर्गतिः समा दृष्टा देवराजस्य सन्निधौ ॥ ८७ ॥ तेजो रूपं बलं स्त्रैणं देवयानं विभूषणम् ॥ माला च पारिजातस्य नृत्यं गीतं
समं तयोः ॥ ८८ ॥ इति दृष्ट्वा हि माहात्म्य क्षेत्रस्य कथमुच्यते ॥ माघः सितासिते भद्रे राजसूयसमो न च ॥ ८९ ॥ धनुर्विंशतिविस्तीर्णे सित
नीलांबुसंगमे ॥ माघादपुनरावृत्ती राजसूयात्पुनर्भवेत् ॥ ९० ॥ कंबलाश्वतरौ नागौ विपुले यमुनातटे ॥ तत्र स्नात्वा च पीत्वा च सर्वपापैः
प्रमुच्यते ॥ ९१ ॥ तत्र गत्वा च संस्थाने महादेवस्य धीमतः ॥ नरस्तारयते पुंसो दश पूर्वान्दशावरान् ॥९२॥ कूपं चैव तु तत्रास्ति प्रतिष्ठानेऽति
विश्रुतम् ॥ तत्र स्नात्वा पितॄन्देवान्संतर्प्य यतमानसः ॥ ९३ ॥ ब्रह्मचारी जितक्रोधस्त्रिरात्रं योऽत्र तिष्ठति ॥ सर्वपापविशुद्धात्मा सोऽश्वमेधफलं
लभेत् ॥९४॥ उत्तरेण प्रतिष्ठानाद्भागीरथ्याश्च पूर्वतः ॥ हंसप्रतपनं नाम तीर्थं लोकेषुविश्रुतम् ॥९५॥ अश्वमेधफलं तत्र स्नानमात्रेण लभ्यते ॥
यावच्चंद्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥ ९६ ॥ ततो भोगवतीं गत्वा वासुकेरुत्तरेण च ॥ दशाश्वमेधिकं नाम तत्तीर्थं परमं स्मृतम् ॥९७॥ तत्र
कृत्वाभिषेकं तु वाजिमेधफलं लभेत् ॥ धनाढ्यो रूपवान्दक्षो दाता भवति धार्मिकः ॥ ९८ ॥ चतुर्वेदिषु यत्पुण्यं सत्यवादिषु यत्फलम् ॥ अहिं
सायां तु यो धर्मो गमनात्तस्य तत्फलम् ॥ ९९ ॥ पायतेश्चोत्तरे कूले प्रयागस्य तु दक्षिणे ॥ ऋणमोचनक नाम तीर्थं तु परमं स्मृतम् ॥ १००॥
एकरात्रोपितः स्नात्वा ऋणैः सर्वैः प्रमुच्यते ॥ स्वर्गलोकमवाप्नोति ह्यमरश्च तथा भवेत् ॥ १०१ ॥ त्रिकालमेकस्नायी चाहारभुक्ति य आचरेत्॥
विश्वासघातपापात्तु त्रिभिर्मासैः स शुद्ध्यति ॥ १०२ ॥ कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ॥ अवगाह्य च पीत्वा च
पुनात्यासप्तमं कुलम् ॥ १०३ ॥ मकरस्थे रवौ माघे न स्नात्यनुदिते रवौ ॥ कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत् ॥ १०४ ॥ 
प्रयागे वपनं कुर्याद्गंगायां पिंडपातनम् ॥ दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥ १०५ ॥ किं गयापिंडदानेन काश्यां वा मरणेन किम् ॥
किं कुरुक्षेत्रदानेन प्रयागे मुंडनं यदि॥१०६॥संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि॥मुंडनं चोपवासं च ततो यत्नेन कारयेत्॥१०७॥प्रयागप्रातना

राणा मुडन त्वचमारयत् ॥सर्वान्केशान्समुद्धृत्य छेदयदंगुलद्वयम्॥ १०८॥केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ॥ तिष्ठंति तीर्थस्नानेन तस्मा
त्तान्यत्र वापयेत् ॥ १०९॥ अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः॥अर्द्धोदयः स विज्ञेयः सूर्यपर्वशताधिकः ॥११०॥किंचिन्न्यूने तु विधिजे महो
दय इति स्मृतः ॥ अरुणोदयवेलायां शुक्का माघस्य सप्तमी ॥ १११ ॥ प्रयागे यदि लभ्येत सहस्रार्कग्रहैः समा ॥ अयने कोटिपुण्यं स्याल्लक्षं
तु विषुवे फलम् ॥ ११२ ॥षडशीत्यां सहस्रं तु तथा विष्णुपदीषु च ॥दानं प्रयागे कर्तव्यं यथाविभवविस्तरम् ॥ ११३ ॥ तेन तीर्थफलं चैव
वर्धते विधिनंदिनि ॥ गंगायमुनयोर्मध्ये यस्तु गां वै प्रयच्छति ॥ ११४ ॥ सुवर्णं मणिमुक्तां वा यदि वान्यं प्रतिग्रहम् ॥ पाटलां कपिलां भद्रे
यस्तु तत्र प्रयच्छति ॥११५ ॥ स्वर्णशृंगीं रौप्यखुरां चैलकंठीं पयस्विनीम् ॥ सवत्सां श्रोत्रियं साधुं ग्राहयित्वा यथाविधि ॥ ११६ ॥ शुक्लां
बरधरं शांतं धर्मज्ञं वेदपारगम् ॥ सा च गौस्तस्य दातव्या गंगायमुनसंगमे ॥ ११७ ॥ वासांसि च महार्हाणि रत्नानि विविधानि च ॥ यावंतो
रोमकूपाः स्युस्तस्या गोर्वत्सकस्य च ॥ ११८ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ यत्रासौ लभते जन्म सा गौस्तत्राभिजायते
॥ ११९ ॥ न च पश्यंति नरकं दातारस्तेन कर्मणा ॥ उत्तरांश्च कुरून्प्राप्य मोदंते कालमक्षयम् ॥ १२० ॥ गवां शतसहस्रेभ्यो दद्या
देकां पयस्विनीम् ॥ पुत्रान्दारांस्तथा भृत्यान् गौरेका प्रतितारयेत् ॥ १२१ ॥ तस्मात्सर्वेषु दानेषु गोदानं तु विशिष्यते॥दुर्गमे विषमे घोरे महा
पातकसंक्रमे ॥ १२२ ॥ गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे ॥ तीर्थे न प्रतिगृह्णीयात्पुण्येष्वायतनेषु च ॥ १२३ ॥ निमित्तेषु च सर्वेषु
ह्यप्रमत्तो भवेद्विजः ॥ स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ॥ १२४ ॥ विफलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ॥ गंगायमुन
योर्मध्ये यस्तु कन्यां प्रयच्छति ॥ १२५ ॥ न स पश्यति घोरं तु नरकं तेन कर्मणा ॥ उत्तरांस्तु कुरून् गत्वा मोदते कालमक्षयम्
॥ १२६ ॥ पुत्रान्दारांश्च लभते धार्मिकान्रूपसंयुतान् ॥ अधःशिरास्ततो धूममूर्द्धबाहुः पिबेन्नरः ॥ १२७ ॥ शतं वर्षसहस्राणां स्वर्गलोके
महीयते ॥ परिभ्रष्टस्ततः स्वर्गादग्निहोत्री भवेन्नरः ॥ १२८ ॥ भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः ॥ आ प्रयागात्प्रतिष्ठानान्मत्पुरो
वासुकेर्ह्रदात् ॥ १२९ ॥ कंबलाश्वतरौ नागौ नागादबहुमूलकात् ॥ एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ॥ १३० ॥ तत्र स्नात्वा दिवं
यांति ये मृतास्तेऽपुनर्भवाः ॥ न वेदवचनाच्चैव न लोकवचनादपि॥ १३१॥मतिरुत्क्रमणीया हि प्रयागमरणं प्रति ॥ दशतीर्थसहस्राणि षष्टिकोट्य

१ निग्रहजनकं दानमित्यर्थः ।



 स्तथा पराः ॥ १३२ ॥ तत्रैव तेषां सान्निध्यं कीर्तितं विधिनंदिनि॥ या गतिर्योगयुक्तस्य सत्पथस्थस्य धीमतः ॥ १३३ ॥ सा गतिस्त्यजतः 
प्राणान् गंगायमुनसंगमे॥ बाधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ॥ १३४॥ गंगायमुनमासाद्य यस्तु प्राणान्परित्यजेत् ॥ दीप्तकांचनव
 र्णाभैर्विमानैः सूर्यकांतिभिः ॥ १३५ ॥ गंधर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ॥ ईप्सिताँल्लभते कामान्वदंतीति मुनीश्वराः ॥ १३६ ॥ गीतवा 
दित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥ यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ॥ १३७ ॥ततः [illegible]त्परिभ्रष्टः क्षीणकर्मात्र चागतः ॥ हिरण्यरत्नसं
पूर्णे समृद्धे जायते कुले ॥ १३८ ॥ तदेवसंस्मरंस्तत्र विष्णुलोकं स गच्छति ॥ वटमूलं [illegible]मासाद्य यस्तु प्राणान्परित्यजेत् ॥
॥ १३९ ॥ सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥ तत्र ते द्वादशादित्यास्तपंते रुद्रमाश्रिताः ॥ १४० ॥ निर्गच्छंति जगत्सर्वं वटमूले स
दह्यते ॥ हरिश्च भगवांस्तत्र प्रजापतिपुरस्कृतः ॥ १४१ ॥ आस्ते तत्र पुटे देवि पादांगुष्ठं [illegible]॥ उर्वशीपुलिने रम्ये विपुले हंसपां
डुरे ॥ १४२ ॥ परित्यजति यः प्राणाञ्छृणु तस्यापि यत्फलम् ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि [illegible] ॥ १४३॥वसेत्स पितृभिः सार्द्धं स्वर्गलोके
विरिंचिजे ॥ उवर्शीं च यदा पश्येद्देवलोके सुलोचने ॥ १४४ ॥ पूज्यते सततं देवर्षिगंधर्व[illegible] ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा त्विहा
गतः ॥ १४५ ॥ उर्वशीसदृशीनां तु कांतानां लभते शतम् ॥ मध्ये नारीसहस्राणां बहूनां [illegible] ॥ १४६ ॥ दशग्रामसहस्राणां भोक्ता
शास्ता च मोहिनि ॥ कांचीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते ॥ १४७ ॥भुक्त्वा तु विपुलान्[illegible]तीर्थं लभते पुनः ॥ शुक्लांबरधरो नित्यं नियतः
स जितेंद्रियः ॥ १४८ ॥ एककालं तु भुञ्जानो मासं योगपतिर्भवेत् ॥ सुवर्णालंकृतानां तु [illegible]भते शतम् ॥ १४९ ॥ पृथिव्यामासमुद्रायां
महाभोगपतिर्भवेत् ॥ धनधान्यसमायुक्तो दाता भवति नित्यशः ॥ १५० ॥ स भुक्त्वा विपुलान्भोगांस्तत्तीर्थं स्मरते पुनः ॥ कोटितीर्थं समासाद्य
यस्तु प्राणान्परित्यजेत् ॥ १५१ ॥ कोटिवर्षसहस्रान्तं स्वर्गलोके महीयते ॥ ततः स्वर्गादिहागत्य क्षीणकर्मा नरोत्तमः ॥ १५२ ॥ सुवर्णमणिमु
क्ताग्रे कुले जायेत रूपवान् ॥ अकामो वा सकामो वा गंगायां यो विपद्यते ॥ १५३॥ शक्रस्य लभत स्वर्गं नरकं तु न पश्यति ॥ हंससारसयुक्तेन
विमानेन स गच्छति ॥ १५४ ॥ अप्सरोगणसंकीर्णे सुप्तोऽसौ प्रतिबुध्यते ॥ ततः स्वर्गादिहायातः क्षीणकर्मा विरिंचिजे ॥ १५५ ॥ योगिनां
श्रीमतां चापि स्वेच्छया लभते जनिम् ॥ गङ्गायमुनयोर्मध्ये करीषाग्निं तु धारयेत् ॥ १५६ ॥ अहीनांगो ह्यरोगश्च पंचेंद्रियसमन्वितः ॥ 
यावंति लोमकूपानि तस्य गात्रे तु धीमतः ॥ १५७ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ततः स्वर्गात्परिभ्रष्टो जंबूद्वीपपति

भवेत् ॥ १९८ ॥ भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः ॥ यस्तु देहं निकृत्य स्वं शकुनिभ्यः प्रयच्छति ॥ १९९ ॥ स
वर्षशतसाहस्रं सोमलोके महीयते ॥ ततस्तस्मादिहागत्य राजा भवति धार्मिकः ॥ १६० ॥ गुणवान्रूपसंपन्नो विद्यावान्प्रियवाक्शुचिः ॥ भुक्त्वा
तु विपुलान्भोगांस्तत्तीर्थं पुनराव्रजेत् ॥ १६१ ॥ पंचयोजनविस्तीर्णे प्रयागस्य तु मंडले ॥ विप्रो यत्र कुत्राप्यनाशकं व्रतमास्थितः ॥ १६२ ॥
व्यतीतान्पुरुषान्सप्त भाविनस्तु चतुर्दश ॥ नरस्तारयते सर्वानात्मानं च समुद्धरेत् ॥ १६३ ॥ अग्नितीर्थमिति ख्यातं दक्षिणे यमुनातटे ॥ पश्चिमे
धर्मराजस्य तीर्थं तु नरकं स्मृतम् ॥ १६४ ॥ तत्र स्नात्वा दिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ यमुनोत्तरकूले तु पापघ्नानि बहून्यपि ॥ १६५ ॥
तीर्थानि संति विधिजे सेवितानि मुनीश्वरैः ॥ तेषु स्नाता दिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ १६६ ॥ गंगा च यमुना चैव उभे तुल्यफले स्मृते ॥
केवलं ज्येष्ठभावेन गंगा सर्वत्र पूज्यते ॥ १६७ ॥ यस्तु सर्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति ॥ तेन दत्तेन देवेशि योगो लभ्येत वा न वा
॥ १६८ ॥ प्रयागे तु मृतस्येदं सर्वं भवति नान्यथा ॥ देशस्थो यदि वारण्ये विदेशे यदि वा गृहे ॥ १६९ ॥ प्रयागं स्मरमाणोऽपि यस्तु प्राणा
न्परित्यजेत् ॥ ब्रह्मलोकमवाप्नोति मही यत्र हिरण्मयी ॥ १७० ॥ सर्वकामफला वृक्षास्तिष्ठंति ऋषयो गताः ॥ स्त्रीसहस्राकुले रम्ये मंदा
किन्यास्तटे शुभे ॥ १७१ ॥ क्रीड्यते सिद्धगंधर्वैः पूज्यते त्रिदशैस्तथा॥ततः पुनरिहायातो जंबूद्वीपपतिर्भवेत्॥ १७२ ॥ धर्मात्मा गुणसंपन्नस्तत्तीर्थं
लभते पुनः ॥ एतत्ते सर्वमाख्यातं माहात्म्यं च प्रयागजम् ॥ १७३ ॥ सुखदं मोक्षदं सारं किमन्यच्छ्रोतुमिच्छसि ॥१७४ ॥इति श्रीबृहन्नारदीयपुरा
णोत्तरभागे बृहदुपाख्याने वसुमोहिनीसंवादे प्रयागमाहात्म्ये त्रिषष्टितमोऽध्यायः॥६३॥इति प्रयागमाहात्म्यं समाप्तम्॥अथ कुरुक्षेत्रमाहात्म्यंप्रारभ्यते॥
मोहिन्युवाच॥वसो कृपालो धर्मज्ञ त्वया बहुविदा मम॥तीर्थराजस्य माहात्म्यं प्रयागस्य निरूपितम्॥१ ॥यत्सर्वतीर्थमुख्येषु कुरुक्षेत्रं शुभावहम्॥
पावनं सर्वलोकानां तन्ममाचक्ष्व सांप्रतम् ॥२॥ वसुरुवाच॥ शृणु मोहिनि वक्ष्यामि कुरुक्षेत्रं सुपुण्यदम्॥ यत्र गत्वा नरः स्नात्वा सर्वपापैः प्रमुच्यते
॥ ३ ॥ तत्र तीर्थान्यनेकानि सेवितानि मुनीश्वरैः ॥ तान्यहं तेऽभिधास्यामि शृण्वतां मुक्तिदानि च ॥ ४ ॥ ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं
तथा ॥ वासः पुंसां कुरुक्षेत्रे मुक्तिरुक्ता चतुर्विधा ॥ ५॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् ॥ तं देवसेवितं देशं ब्रह्मावर्तं प्रचक्षते ॥ ६ ॥ दूर
स्थोऽपि कुरुक्षेत्रे गच्छामि च वसाम्यहम् ॥ एवं वः सतत ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥७॥तत्र वै यो वसेद्धीरः सरस्वत्यास्तटे स्थितः॥ तस्य
ज्ञानं ब्रह्ममयं भविष्यति न संशयः ॥ ८ ॥ देवता ऋषयः सिद्धाः सेवंते कुरुजांगलम् ॥ तस्य संसेवनाद्देवि ब्रह्म चात्मनि पश्यति ॥ ९ ॥

मोहिन्युवाच ॥ कुरुक्षेत्रं द्विजश्रेष्ठ सर्वतीर्थाधिकं कथम् ॥ तन्मे विस्तरतो ब्रूहि त्वामहं शरणं गता ॥ १० ॥ वसुरुवाच ॥ शृणु भद्रे प्रवक्ष्यामि
कुरुक्षेत्रं महाफलम् ॥ यथा जातं नृणां पापदहनं ब्रह्मणः प्रियम् ॥ ११ ॥ आद्यं ब्रह्मसरः पुण्यं तत्र स्थाने समुद्गतम् ॥ ततो रामह्रदो जातः कुरुक्षेत्रं
ततः परम् ॥ १२ ॥ सरः संनिहितं तच्च ब्रह्मणा निर्मितं पुरा ॥ अथैषा ब्रह्मणो वेदी दिशमंतरतः स्थिता ॥ १३ ॥ ब्रह्मणात्र तपस्तप्तं सृष्टिका
मेन मोहिनि ॥ स्थितिकामेन हरिणा तपस्तप्तं च चक्रिणा ॥ १४ ॥ सरःप्रवेशात्संप्राप्तं स्थाणुत्वं शंभुनापि च ॥ पितुर्वधाच्च तप्तेन पर्शुरामेण
भामिनि ॥ १५ ॥ अब्रह्मण्यक्षत्रवधाद्वै च रक्तह्रदाः कृताः ॥ तद्रक्तेन तु संतर्प्य कृतवांस्तत्र वै तपः ॥ १६ ॥ रामतीर्थं ततः ख्यातं संजातं
पापनाशनम् ॥ मार्कंडेयेन मुनिना संतप्तं परमं तपः ॥ १७ ॥ यत्र तत्र समायाता प्लक्षजाता सरस्वती ॥ सा सभाज्य स्तुता तेन मुनिना
धार्मिकेण ह ॥ १८ ॥ सरः संनिहितं प्लाव्य पश्चिमां प्रस्थिता दिशम् ॥ कुरुणा तु ततः कृष्टं यावत्क्षेत्रं समंततः ॥ १९ ॥ पंचयोजनविस्तारं
दयासत्यक्षमोद्गमम् ॥ स्यमंतपंचकं तावत्कुरुक्षेत्रमुदाहृतम् ॥ २० ॥ अत्र स्नाता नरा देवि लभंते पुण्यमक्षयम् ॥ मृता विमानमारुह्य
ब्रह्मलोकं व्रजंति च ॥ २१ ॥ उपवासश्च दानं च होमो जप्यं सुरार्चनम् ॥ अक्षयत्वं प्रयांत्येव नात्र कार्या विचारणा ॥ २२ ॥ ब्रह्मवेद्यां
कुरुक्षेत्रे ये मृतास्तेऽपुनर्भवाः ॥ ग्रहनक्षत्रताराणां कालेन पतनाद्भयम् ॥ २३ ॥ कुरुक्षेत्रे मृतानां तु न भूयः पतनं भवेत् ॥ देवर्षिसिद्धगंधर्वास्तत्सरःसेव
नोत्सुकाः ॥ २४ ॥ यत्र नित्यं स्थिता देवि रंतुकं नामतस्ततः ॥ तस्य क्षेत्रस्य रक्षार्थं विष्णुना स्थापिताः पुरा ॥ २५ ॥ यक्षः सुचंद्रः सूर्यश्च
वासुकिः शंखुकर्णकः ॥ विद्याधरः सुकेशी च राक्षसाः स्थापिताः शुभे ॥ २६ ॥ सभृत्यैस्तेऽष्टसाहस्रैर्धनुर्बाणधरैः सदा ॥ रक्षंति च कुरुक्षेत्रं वार
यंति च पापिनः ॥ २७ ॥ रंतुकं तु समासाद्य क्षामयित्वा पुनःपुनः ॥ ततः स्नात्वा सरस्वत्यां यक्षं दृष्ट्वा प्रणम्य च ॥ २८ ॥ पुष्पं धूपं च
नैवेद्यं कृत्वैतद्वाक्यमुच्चरेत् ॥ तव प्रसादाद्यक्षेन्द्र वनानि सरितस्तथा ॥ २९ ॥ भ्रमतो मम तीर्थानि मा विघ्नं जायतां नमः ॥ इति प्रसाद्य
यक्षेशं यात्रां सम्यक्क समाचरेत् ॥ ३० ॥ वनानां चापि तीर्थानां सरितामपि मोहिनि ॥ यो नरः कुरुते यात्रां कुरुक्षेत्रस्य पुण्यदाम्
॥ ३१ ॥ न तस्य न्यूनता काचिदिह लोके परत्र च ॥ ३२ ॥ इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसुमोहिनीसंवादे
कुरुक्षेत्रमाहात्म्ये क्षेत्रप्रमाणादिनिरूपणं नाम चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥ मोहिन्युवाच ॥ वनानि कानि विप्रेंद्र तत्र संति शुभाव
हाः ॥ सरितश्च क्रमाद्यात्रां वद मे सर्वसिद्धिदाम् ॥ १ ॥ यानि तीर्थानि संत्यत्र कुरुक्षेत्रे सुपुण्यदे ॥ तानि सर्वाणि मे ब्रूहि गतिदस्त्वं गुरुः

यंतः ॥ २ ॥ वसुरुवाच ॥ शृणु मोहिनि वक्ष्यामि कुरुक्षेत्रस्य पुण्यदम् ॥ यात्राविधानं यत्कृत्वा लभते गतिमुत्तमाम् ॥ ३ ॥ वनानि सप्त संतीह कुरुक्षेत्रस्य मध्यतः ॥ तेषां नामानि वक्ष्यामि पुण्यदानां नृणामिह ॥४ ॥ काम्यकं च वनं पुण्यं तथादितिवनं महत् ॥ व्यासस्य च वनं पुण्यं फलकीवनमेव च ॥ ५ ॥ तथा सूर्यवनं चात्र पुण्यं मधुवनं च वै ॥ सीतावनं तथा ख्यातं नृणां कल्मषनाशनम् ॥ ६ ॥ वनान्येतानि सप्तात्र तेषु तीर्थान्यनेकशः ॥ सरस्वती नदी पुण्या तथा वैतरणी नदी ॥ ७ ॥ गंगा मंदाकिनी पुण्या तथैवान्या मधुस्रवा ॥ दृषद्वती कौशिकी च पुण्या हैरण्वती नदी ॥ ८ ॥ वर्षकालवहाश्चैता वर्जयित्वा सरस्वतीम् ॥ एतासामुदकं पुण्यं स्पर्शे पाने समाप्लुतौ ॥ ९ ॥ रजस्वलात्वं नैतासां पुण्यक्षेत्रप्रभावतः ॥ रंतुकं तु पुरासाद्य द्वारपालं महाबलम् ॥ १० ॥ यक्षं समभिवाद्याथ तत्र यात्रां समारभेत् ॥ ततो गच्छेन्नरः पुण्यं भद्रेऽदिति वनं महत् ॥ ११ ॥ अदित्या यत्र पुत्रार्थं सम्यक् चीर्णं महत्तपः ॥ तत्र स्नात्वा समभ्यर्च्य देवमातरमंगना ॥ १२ ॥ सूते पुत्रं महाशूरं स्वंलक्षण संयुतम् ॥ ततो गच्छेद्वरारोहे विष्णोः स्थानमनुत्तमम् ॥ १३ ॥ विमलं नाम विख्यातं यत्र सन्निहितो हरिः ॥ विमले तु नरः स्नात्वा दृष्ट्वा च विमलेश्वरम् ॥ १४ ॥ विमलः स लभेल्लोकं देवदेवस्य चक्रिणः ॥ हरिं च बलदेवं च दृष्ट्वैकासनमास्थितौ ॥ १५ ॥ मुच्यते किल्विषात्सद्यो मोहिन्यत्र न संशयः ॥ ततः पारिप्लवं गच्छेत्तीर्थं लोकेषु विश्रुतम् ॥ १६ ॥ तत्र स्नात्वा च पीत्वा यो ब्राह्मणं वेदपारगम् ॥ संतोष्य दक्षिणाद्येन ब्राह्मयज्ञफलं लभेत् ॥ १७ ॥ यत्रास्ति संगमो भद्रे कौशिक्याः पापनाशनः ॥ तत्र स्नात्वा नरो भक्त्या प्राप्नोति प्रियसंगमम् ॥ १८ ॥ ततस्तु पृथिवीतीर्थमासाद्य क्षांतिमान्नरः ॥ स्नातो भक्त्या महाभागे प्राप्नोति गतिमुत्तमाम् ॥ १९ ॥ धरण्यामपराधा ये कृताः स्युः पुरुषेण वै ॥ तान्सर्वान्क्षमते देवी तत्र स्नातस्य देहिनः ॥२० ॥ ततो दक्षाश्रमे पुण्ये दृष्ट्वा दक्षेश्वरं शिवम् ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ २१ ॥ ततः शालकिनीं गच्छेत्तत्र स्नात्वा समर्चयेत ॥ हरिं हरेण संयुक्तं वांछितार्थस्य लब्धये ॥ २२ ॥ नागतीर्थं ततः प्राप्य स्नात्वा तत्र विधानवित् ॥ सर्पिश्चास्य दधि प्राश्य नागेभ्यो ह्यभयं लभेत् ॥ २३ ॥ ततः सायमुपावृत्य रंतुकं द्वारपालकम् ॥ एकरात्रोषितस्तत्र पूजयेत्तं परेऽहनि ॥ २४ ॥ गंधाद्यैरुपचारैस्तु ब्राह्मणं प्राच्यं भोजयेत् ॥ ततः पंचनदं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ॥ २५ ॥ पंच नादाः कृता यत्र हरेणासुरभीषणाः ॥ तेन पंचनदं नाम सर्वपातकनाशनम् ॥ २६ ॥ तत्र स्नानेन दानेन निर्भयो जायते नरः ॥ कोटितीर्थं ततो गच्छेद्यत्र रुद्रेण मोहिनि ॥ २७ ॥ कोटितीर्थान्युपाहृत्य स्थापितानि महात्मना ॥ तत्र तीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरं हरम् ॥ २८ ॥ पंचयज्ञभवं पुण्यं तत्र

॥१०६॥यस्य ध्यानं नगजनियुतोऽहर्निशं वै गिरीशो भक्तिक्लिन्नो रहसि कुरुते ह्यर्द्धनारीश्वराख्यः ॥ गायत्रीं श्रीं हृदयकुहरे पद्मयोनिर्निधत्ते
नेत्रैरिन्द्रो दशशतमितैर्वीक्षते वै शचीं ताम्॥१०७॥अश्रोत्रेशो रहसि वनितां रक्षति स्वां रसज्ञो वंशीनादश्रवणजभिया कान्यवार्ता जनानाम्॥ छेदं
शोषं तदनु दहनं भेदनं प्राप्य यासीच्छ्रीगोपीशाधरजनिसुधां सादरं शीलयंती॥१०८॥याभिर्वृंदावनमनुगतो नंदसूनुः क्षपासु रेमे चंद्रांशुकलितसमुद्यो
तभद्रे निकुञ्जे॥तासां दिष्टं किमहमधुना वर्णये बल्लवीनां यासां साक्षाच्चरणजरजः श्रीशविध्याद्यलभ्यम्॥१०९॥यत्र प्राप्तास्तृणमृगखगा ये कृमिप्राणि
वृन्दा वृन्दारण्ये विधिहररमाभ्यर्हणीया भवंति॥तत्संप्राप्याद्वयपदरतो ब्रह्मभूयं गतः कौ प्रेमस्निग्धो विहरति सुखांभोधिकल्लोलमग्नः॥११०॥यत्र क्रूराः 76
सहजमसुभृद्व्रातजाता विसृज्य वैरं स्वैरं सुहृद इव तत्सौख्यमेवाश्रयंते ॥ तत्किं प्राप्य प्रभुमिव जनः संपरित्यज्य गच्छेत्क्वाप्यन्यत्र प्रभवति सुखी
कृष्णमायाकरंडे॥१११॥वृन्दारण्यं तदखिलधरापुण्यरूपं श्रयन्मे स्वांतं ध्वांतं जगदिदमधः कृत्य वर्वर्ति शश्वत्॥गोपीनाथः प्रतिपदमपि प्रेमसं
क्लिन्नचेता नीचं चोच्चं न च गणयति प्रोद्धरत्येव भक्तान्॥११२॥गोपान् गोपीः खगमृगनगागोपगोभूरजांसि स्मृत्वा दृष्ट्वा प्रणमति जने प्रेमरज्ज्वा
निबद्धः॥दास्यं भक्ते कलयतितरां तत्किमन्यं व्रजेशात्सेव्यं देवं गणय विधिजेऽहं तु जानामि नैव॥११३॥ एतत्संक्षेपतः प्रोक्तं वृन्दारण्यसमुद्भवम्॥
माहात्म्यं विधिजे तुभ्यं वक्तव्यं नावशेषितम्॥११४॥संसारभीतैर्मनुजैरेतदेव सदानघैः॥ श्रोतव्यं कीर्तनीयं च स्मर्तव्यं ध्येयमेव च॥११५॥वृन्दा
रण्यस्य माहात्म्यं यः शृणोति नरः शुचिः॥ कीर्तयेद्वापि विधिजे सोऽपि विष्णुर्न संशयः ॥ इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसु
मोहिनीसंवादे श्रीवृन्दावनमाहात्म्यं नामाशीतितमोऽध्यायः ॥ ८०॥ वसुरुवाच ॥ यदेतत्कीर्तितं देवि तीर्थमाहात्म्यमुत्तमम् ॥तल्लभस्व महाभागे
चरित्वा तीर्थमंडलम् ॥ १ ॥ अहं ब्रह्माणमामंत्र्य पितरं ते नरेश्वरि ॥ वृन्दावनमुपागम्य चरिष्यामि मृगैः सह॥२ ॥ सूत उवाच ॥ इत्युक्त्वा
मोहिनीं विप्रा वसुस्तस्याः पुरोहितः ॥ सत्कृत्य पूजितोऽभीक्ष्णं ब्रह्मलोकं ययौ तथा ॥ ३ ॥ स गत्वा तत्र धातारं ब्रह्माणं जगतां
विधिम्॥ प्रणम्य मोहिनीवृत्तं तं कार्त्स्न्येन न्यवेदयत् ॥ ४ ॥ तच्छ्रुत्वा वचनं ब्रह्मा ब्राह्मणस्य वसोर्द्विजाः ॥ प्रसन्नः प्राह तं वत्स सुकृतं हि
त्वया कृतम् ॥ ५ ॥ या मया मोहिनी विप्र देवकार्यार्थमात्मजा ॥ नियुक्ताऽकृतकार्या सा त्वया शप्ता क्षयं गता ॥ ६ ॥ भूयो ममाज्ञया वत्स
त्वया सजीविताधुना ॥ नीता कृतार्थतां तस्मात्कोऽन्यस्त्वत्तोऽधिकः कृती॥ ७॥ यत्त्वया मह्यमाख्यातं मोहिनीवृत्तमुत्तमम्॥प्रसन्नस्तेन दास्यामि

ब्रूहि तुभ्यं वरं द्विज ॥८॥ इत्युक्तः स द्विजस्तेन ब्रह्मणा लोकभाविना ॥ प्रणम्य वव्रे स वरं वृन्दारण्यनिवासनम् ॥ ९ ॥ तच्छ्रुत्वा जगतां धाता
स्मयमानचतुर्मुखः ॥ प्राह प्रपन्नार्तिहरस्तथास्त्विति मुनीश्वराः ॥ १० ॥ स प्रणम्य विधातारं वसुर्हृष्टमनास्ततः ॥वृन्दावनमुपाव्रज्य तपश्चक्रे समा
हितः ॥ ११ ॥ तपतस्तस्य तु वसोः संवत्सरगणा द्विजाः ॥व्यतीयुः पंचसाहस्रास्ततस्तुष्टो हरिः स्वयम्॥ १२ ॥ गोपैः प्रियसखैर्द्विजैर्युतोऽभ्याह
द्विजोत्तमम्॥ब्रूहि किं वृणुषे विप्र तुष्टोऽहं तपसा तव॥१३॥ ततः स वसुरुत्थाय अष्टांगालिंगितावनिः॥ प्राह वृन्दावने देव वासमिच्छामि सर्वदा
॥ १४ ॥ अथ विष्णुर्द्विजश्रेष्ठा वरं तद्वांछितं ददौ ॥ तेनाभिवंदितो भूयो ऽन्तर्धानमुपागतः ॥ १५ ॥ स द्विजस्तत्प्रभृत्येवं स्वेच्छारूपधरः
स्थितः ॥ चिंतयन्सततं देवं वृन्दारण्यकुतूहलम्॥१६॥ कदाचिद्यमुनातीरे निविष्टस्तं विचिंतयन् ॥ ददर्श नारदं प्राप्तं वृन्दारण्यं विधेः सुतम्॥१७॥
स तं दृष्ट्वा नमस्कृत्य परमं गुरुमात्मनः ॥ प्रपच्छ विविधान्धर्मान् भगवद्भक्तिवर्द्धनान् ॥ १८ ॥ स तेनैवं सुसम्पृष्टो नारदोऽ
ध्यात्मदर्शनः ॥ तस्मै प्रोवाच निखिलं भविष्यच्चरितं हरेः ॥ १९ ॥ एकदाहं गतो विप्र देवं कैलासवासिनम् ॥ द्रष्टुं प्रष्टुं भविष्यच्च वृंदावन
रहस्यकम् ॥२०॥ ततः प्रणम्य देवेशं ततः सिद्धैः समावृतम् ॥ महेशं स्वमहिम्व्याप्तसर्वब्रह्मांडगोलकम् ॥ २१ ॥ अपृच्छमीप्सितं भद्रं स मां प्राह
स्मयन्हरः ॥ वैधात्र यत्त्वया पृष्टं हरेर्वृत्तमनागतम् ॥ २२ ॥ तत्ते ब्रवीमि यत्पूर्वं श्रुतं सुरभिवक्त्रतः ॥ एकदा सुरभिर्दृष्टा मया गोलोकमध्यगा
॥ २३ ॥ स्वसंतानसमायुक्ता सुप्रीता स्निग्धमानसा ॥ ततः पृष्टा भविष्यार्थे गवां माता पयस्विनी ॥ २४ ॥ मह्यं प्रोवाच देवपं भविष्य
च्चरितं हरेः ॥ सुखमास्तेऽधुना देवः कृष्णो राधासमन्वितः ॥२५॥ गोलोकेऽस्मिन्महेशान गोपगोपीसुखावहः ॥ स कदाचिद्गोलोके माथुरे मंडले
शिव ॥ २६ ॥ आविर्भूयाद्भुतां क्रीडां वृंदारण्ये करिष्यति ॥ वृषभानुसुता राधा श्रीदामानं हरेः प्रियम् ॥ २७ ॥ सखायं विरजागेहद्वाःस्थं
क्रुद्धा शपिष्यति ॥ ततः सोऽपि महाभाग राधां प्रतिशपिष्यति ॥ २८ ॥ याहि त्वं मानुषं लोकं मिथः शापाद्वरां ततः ॥प्राप्स्यत्यथ हरिः पश्चा
द्ब्रह्मणा प्रार्थितः क्षितौ ॥ २९ ॥ भूभारहरणायैव वासुदेवो भविष्यति ॥ वसुदेवगृहे जन्म प्राप्य यादवनंदनः ॥ ३० ॥ कंसासुरभिया पश्चाद्व्रजं ॥ ३६२॥
नन्दस्य यास्यति ॥ तत्र यातो हरिः प्राप्तां पूतनां बालघातिनीम् ॥ ३१ ॥ वियोजयिष्यति प्राणैश्चक्रवातं च दानवम् ॥ वत्सासुरं महाकायं
हनिष्यति सुरार्दनम् ॥ ३२ ॥ दमित्वा कालियं नागं यमुना उच्चाटयिष्यति ॥ दुःसहं धेनुकं हत्वा बकं तद्वद्घासुरम् ॥ ३३ ॥ दावं प्रदावं च

तथा प्रलंबं च हनिष्यति ॥ ब्रह्माणमिंद्रं वरुणं प्रमत्तौ धनदात्मजौ ॥ ३४ ॥ विमदान्स विधायेशो हनिष्यति वृषासुरम् ॥ शंखचूडं केशिनं च व्योमं हत्वा व्रजे वसन् ॥ ३५ ॥ एकादश समास्तत्र गोपीभिः क्रीडयिष्यति॥ ततश्च मथुरां प्राप्य रजकं संनिहत्य च ॥ ३६ ॥ कुब्जामृज्वीं ततः कृत्वा धनुर्भंक्त्वा गजोत्तमम् ॥ हत्वा कुवलयापीडं मल्लांश्चाणूरकादिकान् ॥ ३७ ॥ कंसं स्वमातुलं कृष्णो हनिष्यति ततः परम् ॥ विमुच्य पितरौ बद्धौ यवनेशं निहत्य च ॥ ३८ ॥ जरासंधभयात्कृष्णो द्वारकायां समुष्यति ॥ रुक्मिणीं सत्यभामां च सत्यां जाम्बवतीं तथा ॥ ३९ ॥ कैकेयीं लक्ष्मणां मित्रविंदां कालिंदिकां विभुः॥ दारान्षोडशसाहस्रान्भौमं हत्वोद्वहिष्यति॥४०॥पौंड्रकं शिशुपालं च दंतवक्रं विदूरथम्॥ शाल्वं च हत्वा द्विविदं वल्वलं घातयिष्यति ॥ ४१ ॥ वज्रनाभं सुनाभं च सार्द्धं वै षट्पुरालयैः ॥ त्रिशिरं ततो दैत्यं हनिष्यति वरोर्जितम् ॥ ४२ ॥ कौरवान्पांडवांश्चापि निमित्तमितरेतरम् ॥ कृत्वा हनिष्यति शिव भूभारहरणोत्सुकः ॥ ४३ ॥ यदून्यदुभिरन्योन्यं संहृत्य स्वकुलं हरिः ॥ पुनरेतन्निजं धाम समेष्यति च सानुगः ॥ ४४ ॥ एतत्तेऽभिहितं शंभो भविष्यच्चरितं हरेः ॥ गच्छ द्रक्ष्यसि तत्सर्वं जगतीतलगं हरेः॥४५॥तच्छ्रुत्वा सुरभेर्वाक्यं भृशं प्रीतो विधातृज ॥ स्वस्थानं पुनरायातस्तुभ्यं चापि मयोदितम् ॥ ४६ ॥ त्वं च द्रक्ष्यसि कालेन चरितं गोकुलेशितुः ॥ तच्छ्रुत्वा शूलिनो वाक्यं वसुर्हृष्टतनूरुहः ॥ ४७ ॥ गायन्सायन् विभुं तंत्र्या ममयाम्यातुरं जगत् ॥ एतद्भविष्यत्कथितं मया तुभ्यं द्विजोत्तम ॥ ४८ ॥ यथा तु गौतमस्तद्वदहं चापि हिते रतः॥ सूत उवाच ॥ इत्युक्त्वा नारदस्तस्मै वसवे स द्विजन्मने ॥ ४९ ॥ जगाम वीणारणयंश्चिन्तयन्यदुनंदनम् ॥ स वसुस्तद्वचः श्रुत्वा व्रजे सुप्रीतमानसः ॥ ५० ॥ उवास सर्वदा विप्राः कृष्णक्रीडेक्षणोत्सुकः ॥ ५१ ॥ इति श्रीबृहन्नारदीयपुराणे बृहदुपाख्याने उत्तरभागे वसुमोहिनीसंवादे वसुचरित्रनिरूपणं नामैकाशीतितमोऽध्यायः॥८१॥ ऋषय ऊचुः॥ सूत साधो त्वयाख्यातं श्रीकृष्णचरितामृतम् ॥ श्रुतं कृतार्थास्तेन स्मो वयं भवदनुग्रहात् ॥ १ ॥ गते वसौ ब्रह्मलोकं मोहिनी विधिनंदिनी ॥ किं चकार ततः पश्चात्तन्नो व्याख्यातुमर्हसि ॥२॥ सूत उवाच ॥ शृणुध्वमृषयः सर्वं मोहिन्याश्चरितं शुभम् ॥ यच्चकार वसोः पश्चात्तीर्थानां परिसेवनम् ॥ ३ ॥ यथानुशिष्टा वसुना मोहिनी सा विधेः सुता ॥ जगाम विधिना तीर्थयात्रार्थं स्वर्णदीतटम् ॥ ४ ॥ तत्र गत्वा समाप्लुत्य गंगादीनि तु वैधसी ॥ चचार विधिवद्दृष्टा ब्राह्मणैः सह संगता ॥ पुरोहितेन वसुना तीर्थस्य यो विधिः ॥ कथितस्तत्प्रकारेण सेवमाना

 चचार ह ॥६॥ तेषु तीर्थेषु देवांश्च विष्ण्वादीन्पूजयंत्य समर्पयंती विप्रेभ्यो दा विविधानि च ॥ ७ ॥ गयायां विधिवद्दतुं पिंडदानं 
 चकार ह ॥ काश्यां विश्वेश्वरं प्राच्यं संप्राप्ता पुरुषोत्तमम् ॥ ८ ॥ तस्मिन् क्षेत्रे तु नैवेद्यं भुक्त्वा सा जगदीशितुः ॥ शुद्धदेहा ततः पश्चात्सं 
प्राप्ता लक्ष्मणाचलम् ॥ ९ ॥ तं समभ्यर्च्य विधिवद्दत्वा सेतुं समर्च्य च ॥ रामेश्वरं महेंद्राद्रिं भार्गवं समवंदत ॥ १० ॥ गोकर्णं च शिवक्षेत्रं
गत्वाभ्यर्च्य तमीश्वरम् ॥ प्रभासं प्रययौ विप्राः सार्द्धं तैर्द्विजसत्तमैः ॥ ११ ॥ स्नात्वा संतर्प्य देवादींस्तस्य यात्रां विधाय च ॥ द्वारकायां हरिं
दृष्ट्वा कुरुक्षेत्रं जगाम सा ॥ १२ ॥ तत्रापि विधिवद्यात्रां संविधाय नरेश्वरी ॥ गंगाद्वारमुपेयाय तत्र सस्नौ विधानतः ॥ १३ ॥ ततस्तु दृष्ट्वा कामोदां नमस्कृत्य
मुदान्विता॥बदर्याश्रममासाद्य नरनारायणावृषी ॥ १४ ॥ समभ्यर्च्याथ कामाक्षीं ययौ द्रष्टुं त्वरान्विता ॥ सिद्धनाथं नमस्कृत्य ततोऽयोध्यामुपागता
॥ १५ ॥ स्नात्वा सरय्वां विधिवत्प्राच्यं सीतापतिं ततः ॥ मध्ययात्रामुपाश्रित्य ययावमरकंटकम् ॥ १६ ॥ महेशं तत्र संपूज्य प्रतिस्रोतस्तुनर्मदाम्॥संसे
व्योंकारमीशानं दृष्ट्वा माहिष्मतीं ययौ ॥ १७ ॥ त्र्यंबकेशं ततः प्राच्यं संप्राप्ता सा त्रिपुष्करम्॥ पुष्करेषु विधानेन दत्वा दानान्यनेकशः ॥ १८ ॥
संप्राप्ता सा तु मथुरां सर्वतीर्थोत्तमोत्तमाम् ॥ विधायाभ्यंतरीं यात्रां योजनानां तु विंशतिम् ॥ १९ ॥ परिक्रम्य पुरीं पश्चाच्चतुर्व्यूहं ददर्श सा ॥
स्नात्वा विंशतितीर्थे तु समाप्याथ प्रदक्षिणाम् ॥ २० ॥ धेनूनामयुतं प्रादान्माथुरेभ्यो ह्यलंकृतम् ॥ संभोज्य तान्वरान्नेन भक्तिक्लिन्नेन चेतसा
॥ २१ ॥ नमस्कृत्य विसृज्यैतान्कालिंदीं समुपाविशत ॥ ततः प्रविष्टा सा देवीं कालिंदीमघनाशिनीम् ॥ २२ ॥ नाद्यापि निर्गता भूयो यमति
थ्यंतमास्थिता ॥ स्मार्तान्सूर्योदयं प्राप्य श्रौतानप्यरुणोदयम् ॥ २३ ॥ निशीथं वैष्णवान्विप्राः प्राप्य दूषयते व्रतान् ॥ मोहिनीवेधरहिता
मुपोष्यैकादशीं नरः ॥ २४ ॥ द्वादश्यां विष्णुमभ्यर्च्य वैकुंठं यात्यसंशयम् ॥ मोहिनी विधिजा देवी विष्णुजैकादशी द्विजाः ॥ २५ ॥ विष्णु
जास्पर्द्धया धात्रा मोहिनी सा विनिर्मिता ॥ रुक्मांगदस्तु राजर्षिर्विष्णुभक्तिपरायणः ॥ २६ ॥ न तु वारयितुं शक्ता सा तमेकादशीव्रतात् ॥
विष्णुलोकं गते तस्मिन्सभार्ये ससुते नृपे ॥ २७ ॥ स्पर्द्धंत्यैकादशीं सिद्धिं यमान्ते मोहिनी स्थिता ॥ इत्येतदुक्तं विप्रेंद्रा मोहिनीचरितं
मया ॥ २८ ॥ यदर्थं निर्मिता धात्रा तथा चात्र व्यवस्थिता ॥ नारदीयोत्तरं ह्येतत्प्रोक्तं वो भुक्तिमुक्तिदम् ॥ २९ ॥ अत्र सम्यग्घरेर्भक्तिः साध्यते 
ऽनुपदं नृणाम् ॥ नारदीयं पुराणं तु लक्षणैर्दशभिर्युतम् ॥ ३० ॥ यः शृणोति नरो भक्त्या स गच्छेद्वैष्णवं पदम् ॥ धर्मार्थकाममोक्षाणां चतुर्णां

कारणं परम् ॥ ३१ ॥ सर्वेषां च पुराणानामिदं बीजं सनातनम् ॥ प्रवृत्तं च निवृत्तं च पुराणेऽस्मिन्द्विजोत्तमाः ॥ ३२ ॥ विस्तरादुदितं सर्वं पाराशर्येण धीमता ॥ अलौकिकचरित्राढ्यं पुराणं नारदीयकम् ॥३३॥ यस्मै कस्मै न दातव्यं मह्यं व्यासेन कीर्तितम् ॥ हित्वा स्वशिष्यान्पैलादीन्मह्यं नारदसंहिताम् ॥ ३४ ॥ यो व्याचक्रे नमस्तस्मै वेदव्यासाय विष्णवे ॥ पुराणसंहितामेतां नारदाय विपश्चिते ॥३५॥ सनकाद्या महाभागा मुनयः प्रचकाशिरे ॥ हंसस्वरूपी भगवान्यदा तं ब्रह्म शाश्वतम् ॥ ३६ ॥ तदुपादिशदेतेभ्यो विज्ञानेन विजृंभितम् ॥ तदिदं भगवान्साक्षान्नारदोऽध्यात्मदर्शनः ॥ ३७ ॥ वेदव्यासाय मुनये रहस्यं निर्दिदेश ह ॥ मया प्रकाशितं ह्येतद्रहस्यं भुवि दुर्लभम् ॥ ३८ ॥ चतुर्वर्गप्रदं नृणां शृण्वतां पठतां सदा ॥ विप्रो वेदनिधिर्भूयात्क्षत्रियो जयते महीम् ॥ ३९ ॥ वैश्यो धनसमृद्धः स्याच्छूद्रो मुच्येत दुःखतः ॥ पंचविंशतिसाहस्री संहितेयं प्रकीर्तिता ॥ ४० ॥ पंचपादसमायुक्ता कृष्णद्वैपायनेन ह ॥ अस्यां वै श्रूयमाणायां सर्वसंदेहभंजनम् ॥ ४१ ॥ पुंसां सकामभक्तानां निष्कामानां विमोक्षणम् ॥ पुण्यतीर्थं समासाद्य नैमिषं पुष्करं गयाम् ॥ ४२ ॥ मथुरां द्वारकां विप्रा नरनारायणाश्रमम ॥ कुरुक्षेत्रं नर्मदां च क्षेत्रं श्रीपुरुषोत्तमम् ॥ ४३ ॥ हविष्याशी धराशायी निःसंगो विजितेंद्रियः ॥ पठित्वा संहितामेनां मुच्यते भवसागरात् ॥ ४४ ॥एकादशी व्रतानां च सरितां जाह्नवी यथा ॥ वृंदावनमरण्यानां क्षेत्राणां कौरवं यथा ॥ ४५ ॥ यथा काशी पुरीणां च तीर्थानां मथुरा यथा॥ सरसां पुष्करं विप्राः पुराणानामिदं तथा ॥ ४६ ॥ गणेशभक्ताः सौराश्च वैष्णवाः शाक्तशांभवाः ॥ सर्वेऽधिकारिणो ह्यत्र सकामाश्चाप्यकामकाः ॥४७ ॥ यं यं काममभिध्यायन्नरो नार्यथवादरात्॥ शृणोति श्रावयेद्वापि तं तं प्राप्नोति निश्चितम् ॥ ४८॥ रोगार्तो मुच्यते रोगाद्भयार्तो निर्भयो भवेत् ॥ जयकामो जयेच्छत्रून्नारदीयानुशीलनात् ॥ ४९ ॥ सृष्ट्यादौ रजसा विश्वं मध्ये सत्त्वेन पाति यः ॥ नमस्तस्मै सर्वात्मने नमः ॥ ५० ॥ ऋषयो मनवः सिद्धा लोकपालाः प्रजेश्वराः ॥ ब्रह्माद्या रचिता येन तस्मै ब्रह्मात्मने नमः ॥ ५१ ॥ यतो वाचो निवर्तंते न मनो यत्र संविशेत् ॥ तद्विद्यादात्मनो रूपं ह्यरूपस्य चिदात्मनः ॥ ५२ ॥ यस्य सत्यतया सत्यं जगदेतद्विकाशते ॥ विचित्ररूपं वंदे तं निर्गुणं तमसः परम् ॥ ५३॥ आदौ मध्ये चाप्यजनश्चांते चैकाक्षरो विभुः ॥ विभाति नानारूपेण तं वंदेऽहं निरंजनम् ॥ ५४ ॥ निरंजनात्समुत्पन्नं जगदेतच्चराचरम ॥ तिष्ठत्यप्येति वा यस्मिंस्तत्सत्यं ज्ञानमद्वयम ॥ ५५ ॥ शिवं शैवा वदंत्येनं प्रधानं

सांख्यवेदिनः ॥ योगिनः पुरुषं विप्राः कर्म मीमांसका जनाः ॥ ५६ ॥ विभुं वैशेषिकाद्याश्च चिच्छक्तिं शक्तिचिंतकाः ॥ ब्रह्माद्वितीयं तद्वंदे नानारूपक्रियास्पदम् ॥ ५७ ॥ भक्तिर्भगवतः पुंसां भगवद्रूपकारिणी ॥ तां लब्ध्वा चापरं लाभं को वांछति विना पशुम् ॥ ५८ ॥ भगवद्विमुखा ये तु नराः संसारिणो द्विजाः ॥ तेषां मुक्तिर्भवाटव्या नास्ति सत्संगमंतरा ॥ ५९ ॥ साधवः समुदाचाराः सर्वलोकहितावहाः ॥ दीनानुकंपिनो विप्राः प्रपन्नास्तारयंति हि ॥ ६० ॥ यूयं धन्यतमा लोके मुनयः साधुसंमताः ॥ यन्मुहुर्वासुदेवस्य कीर्तिपल्लवनूतनाम् ॥६१॥ धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिर्लोकमंगलम् ॥ यत्स्मारितो हरिः साक्षात्सर्वकारणकारणम्॥ ६२ ॥ ॐ॥ इति श्रीनारदीयपुराणे बृहदुपाख्याने उत्तरभागे महापुराणे एतत्पुराणश्रवणादिफलनिरूपणं नाम द्व्यशीतितमोऽध्यायः॥८२॥समाप्तमिदं सप्तमं नारदीयं महापुराणम्॥



# श्रीनारदीयमहापुराणम् : श्लोकानुक्रमणी

ऐ

छ





ह

## इतिशुभम्

# १८ महापुराण

| | |
|---|---|
| स्कन्दमहापुराण : | सात खण्ड (मूल मात्र) |
| शिवमहापुराण : | भूमिका—डा० पुष्पेन्द्र कुमार (मूल मात्र) |
| मार्कण्डेय महापुराण : | मूल, हिन्दी अनुवाद श्लोकानुक्रमणी (भूमिका—डा० राजेन्द्र नाथ शर्मा) |
| वायुमहापुराण : | मूल, श्लोकानुक्रमणी (भूमिका डा० ब्रजमोहन चतुर्वेदी) |
| वामन महापुराण : | ,, ,, (भूमिका डा० जियालाल कम्बोज) |
| कूर्म महापुराण : | ,, ,, (भूमिका डा० सी० आर० स्वामिनाथन्) |
| पद्म महापुराण : | ,, ,, |
| विष्णु महापुराण : | मूल, आंग्ल अनुवाद तथा टिप्पणी सहित : एच० एच० विल्सन |
| मत्स्य महापुराण : | ,, ,, ,, ,, (भूमिका एच० एच० विल्सन) |
| | भविष्य, ब्रह्मवैवर्त, लिंग, गरुड़, ब्रह्माण्ड, अग्नि, वाराह, भागवत, ब्रह्म आदि शेष पुराण (प्रेस में) |
| वासुकी पुराण : | डा० अनन्तराम शास्त्री |